University of Mysore
Oriental Library Publications
SANSKRIT SERIES No. 76

सर्वार्थसिद्ध्याख्यवृत्त्या सहितः

# तत्वमुक्ताकलापः

आनन्ददायिनी भावप्रकाशाभ्यां व्याख्याटिप्पणाभ्यां संवलितः

प्रथमसम्पुटम्

# TATTVAMUKTĀKALĀPA

AND

## SARVĀRTHASIDDHI WITH THE ĀNANDADĀYINĪ AND THE BHĀVAPRAKĀŚA

Vol. I

EDITED BY
D. SRINIVASACHAR, M.A.,
*Professor of Sanskrit, Maharaja's College, and Curator, Govt. Oriental Library, Mysore*
AND
VIDWAN S. NARASIMHACHAR,
*Govt. Oriental Library, Mysore*

MYSORE
PRINTED AT THE GOVERNMENT BRANCH PRESS
1933

# भूमिका

इदमिदानीं दर्शनपरिश्रमकृतादरेषु निवेदयामः ; यदुत सव्याख्यं सटिप्पणं च किमपि दर्शनग्रन्थरत्नं मुद्रणेन प्रकाशयाम इति ॥

तत्र मूलं स्रग्धरावृत्तगुम्भितं ५०० पद्यात्मकं जडजीवनायक-बुद्ध्यद्रव्यसरात्मकैः पञ्चभिर्महाप्रकरणैः प्रविभक्तशरीरं तत्वमुक्ताकलाप-नाम्ना प्रथते ॥

तद्व्याख्या च सर्वार्थसिद्धिनाम्नी तत्तन्महाप्रकरणानुगतसुसङ्गत-निखिलावान्तरप्रकरणा अवश्यापेक्षितनातिसंक्षेपनिरूपणा मूलकृतैव दयालुना प्रणायि ॥

सर्वार्थसिद्धेर्व्याख्या च प्रायः प्रतिविषयावतरणकृतक्षणा तत्तद्ग्रा-द्यन्तरवचोऽनुषङ्गप्रदर्शनकृतसुबहूपकरणा आनन्ददायिनीत्यन्वर्थं प्रथते ॥

मूलसर्वार्थसिद्ध्योष्टिप्पणं तु भावप्रकाशनामकम् ॥

तत्र तत्वमुक्ताकलापसर्वार्थसिद्ध्योः प्रणेता श्रीमान्निखिल कवितार्किकचक्रचूडामणिःवैदुष्यवैराग्यप्रमुखसद्गुणगणनिधिः निगमान्ता-चार्यापरनामा श्रीमद्वेङ्कटनाथदेशिकः ॥

आनन्ददायिन्यास्तु श्रीमन्निगमान्तगुरुवरचरणभक्त्येकधनस्य दोड्डयाचार्यापरनामधेयस्य अनेकप्रबन्धनिर्मातुः रामानुजाचार्यस्य विद्या-वंशजः नृसिंहदेवः ॥

टिप्पणस्य तु इदानीं महीशूरपुरीमध्यविद्योतमानपरकालास्थान-मलङ्कुर्वाणाः श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथ-ब्रह्मतन्त्रपरकालमहादेशिकाः ॥

तत्वमुक्ताकलापसर्वार्थसिद्ध्योः प्रणेतुराचार्यस्य वेङ्कटनाथ इत्येव पितृकृतं परिपूर्णाभिधेयं सुगृहीतं नाम ॥

निगमान्तगुरुःश्रुत्यञ्चलाचार्य इत्यादि तु बिरुदनाम्नो वेदान्ताचार्यपदस्य पर्यायतया शिष्यपरम्परया प्रवर्तितं प्रथितमास्ते ॥

वेदान्ताचार्य इति बिरुदलाभक्रमस्तु प्रसिद्धात्तदीयचरित्रादवगम्यते । 'तेन देवेन दत्तां वेदान्ताचार्यसंज्ञाम्' इति च आचार्योऽप्यनुवदति अधिकरणसारावल्याम् ॥

श्रीमतो वेङ्कटनाथगुरोः पिता अनन्तसूरिः पितामहः पुण्डरीकाक्षसूरिः । निबबन्ध च ग्रन्थादावाचार्यः—

नानासिद्धान्तनीतिश्रमविमलधियोऽनन्तसूरेस्तनूजो
वैश्वामित्रस्य पौत्रो विततमखविधेः पुण्डरीकाक्षसूरेः ।

इति । माता च तोतारम्बेति तच्छिष्यजननित्यानुसन्धेयात्—

यस्तनयस्तोतारम्बायास्तस्य मङ्गलम् ।

इति मङ्गलाशासनात् गुरुपरम्परयोपदेशाच्च ज्ञायते ॥

श्रीवेङ्कटनाथगुरोः सर्वविधगुरुर्मातुलश्च श्रीमान् धीवैभवासादितवेदान्तोदयनबिरुदः भगवतो भाष्यकारादुत्तरं मन्त्रार्थसम्प्रदायप्रवर्तकस्य आत्रेयरामानुजाचार्यस्य पौत्रः श्रीमान् आत्रेयो रामानुजाचार्यः । इदमप्यत्रैवाह गुरुः—

श्रुत्वा रामानुजाचार्यात्सदसदपि ततस्तत्त्वमुक्ताकलापं
व्यातानीद्वेङ्कटेशः ।

इति । परमगुरुश्च वात्स्यः श्रीमान् वरदाचार्य इत्यपि—

वरदगुरुकृपालम्भितोद्दामभूमा

इति पूर्वोक्तपद्यभागादवगम्यते ॥

## आचार्यावतारकालदेशौ

अस्य श्रीमतो वेङ्कटनाथगुरोः जगतीतलालङ्करणसमयः—

अब्दे सौम्ये च वारे गतवति तरणौ वृश्चिकं कृत्तिकर्क्षे
राकायां वेङ्कटेशो यतिनृपतिमतं सर्वतः स्थापयित्वा ।
वेदान्ताचार्यनाम्ना विरचितविविधानेकदिव्यप्रबन्धः
श्रीशैलाधीशघण्टाकृतिवपुरभवद्देशिकेन्द्रो दयालुः ॥

इत्याचार्यचरमश्लोकावगतः क्रैस्ताब्दानां १२७०—१३७२तमसंवत्सरान्त इति न्यायपरिशुद्ध्युपोद्धाते श्रीमन्तः शतावधानं श्रीनिवासाचार्याः। १२६८—१३६९तमसंवत्सरयोर्मध्यकाल इति पादुकासहस्रोपोद्धाते श्रीशैलताताचार्याः । आचार्यचरमश्लोकनिर्दिष्टस्य कालस्याधुनिकगणिताभिज्ञनिरूपणसंवादितयाऽमेव निर्णय उचित इति पश्यामः । अनुसन्दधते तु शिष्टाः—

श्रीधीयोग्ये शके शुक्ले उदभूद्वेङ्कटेश्वरः ।
लब्धप्राये शके सौम्ये प्रयातः परमं पदम् ॥

इति ॥ तिथिवारनक्षत्रयोगविसंवादादत्र शुक्ले इति गतसंवत्सरनिर्देशं भावयामः—

श्रीमान् वेङ्कटनाथगुरुः श्रीकाञ्चीनगरसन्निहितेन तूप्पुल् नाम्ना अग्रहारेण स्वावतारपरिभूषितेन धरणीमण्डलं मण्डयितुमारभत ॥

अप्राप्तपञ्चमवयसा चानेन महानुभावेन बहुश्रुतदुष्परिज्ञानेष्वप्यर्थेषु क्रियमाणं धीप्रचारं केनाप्यतिकुतूहलावहेन भगवत्प्रसादेनेति निश्चिन्वता वात्स्यवरदगुरुणा सबहुमानप्रसादम्—

प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः ।
भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥

इत्यनया हार्दानुग्रहविभवप्रसराभया जयाशिषा पर्यवर्ध्यत। हिततमबन्धु-वर्गगणनीयं मातुलकुलं जानता मा च भूदयं विविधशीलिजनता-लोचनपात्रं अस्यां दशायामिति परिकलयता तन्मातुले निर्विशङ्कमविकलं च आचार्यकनिर्वहणधुरन्धरे आत्रेयरामानुजाचार्ये निभृतं दुरभिभव-धीविभवोऽयं अविकलं शिक्षणीय इत्यर्पणेन चान्वगृह्यत ॥

ऊनविंशवया एव चायं गुरुः सुगृहीतधृतसाङ्गोपाङ्गत्रयीतिच्छिराः निर्विशयनिर्णीतन्यायविस्तरविमलाशयः सदैवान्यूनषोडशकल इव चन्द्रमाः प्राह्लादयत प्राज्ञपरिषदः ॥

न खल्विदं दुष्करं नाम तादृशस्य प्रथमग्रहणमात्रसमासाद्यदृढ-तरसंस्कारवैभवस्य निर्विघ्नमेवानिशं स्वोचितानाखिलान् समयान् नवनव-ग्रहणैः पावयतोऽद्भुतप्रज्ञापरिपाकसारावतारस्य पुरुषधौरेयस्य ॥

न ह्येवंविधं पुरुषप्रकाण्डमृते—

अध्यक्षं यच्छ्रुतं वा लघु भवति तदित्यादिमो वादिमोहः

तत्वोदर्का न तर्काः तदिह जगति किं मेधया साधयामः ।

इति धीरवाणी प्रमाणसंप्रदायनिर्बन्धमधिकृत्य प्रवर्तेत!

अव्याजभगवदनुग्रहनिरवग्रहजाग्रत्प्रज्ञागरीयसा ह्यनेन गुरुणा अनाकुलकलितपञ्चकालकृत्येन अविकलं सलीलमेव च न्यायविस्तरं मीमांसां मन्त्रार्थरहस्यानि च प्रवचनेनानुशीलितया अक्षरशोऽर्थतश्च अनुवादपूर्वकं प्रमाणभावेन स्वानुगुणं समर्थनेन आन्यपर्यादिना निर्वाहेण च प्रचारमनीयन्त सर्व एव प्रायः प्रबन्धाः प्राचामाचार्याणाम् । य एते—

१. न्यायतत्वम्, २. योगरहस्यं च—श्रीभाष्यकृतां प्राचार्यस्य यामुनमुनेः पितामहस्य नाथमुनेः कृती । य एव च योगनिष्ठायाश्चरमा स्थितिभूमिरित्याचक्षते गुरुपरम्पराविदः ॥

१. श्री गीतार्थसंग्रहः, २. आगमप्रामाण्यं, ३. आत्मसिद्धिः, ४. ईश्वरसिद्धिः, ५. संवित्सिद्धिः ६. महापुरुषनिर्णयः, ७. स्तोत्ररत्नम्. ८. श्रीस्तुतिः—श्रीभाष्यकृतां परमाचार्यस्य श्रीमतो यामुनमुनेः कृतयः ॥

श्रीभाष्यादिनवग्रन्थी च श्रीमतां रामानुजाचार्याणाम् ॥

त्रींश्च गुरूनेतान् विशिष्टाद्वैतसंप्रदायप्रतिष्ठापका इति तत्तत्कृतं प्रतिष्ठापनाकारं प्रदर्श्य—

नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः

त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥

इत्यभिष्टुवन्त्याचार्याः ॥

श्रीभगवद्विषयम्—श्रीकुरुकेश्वराणां कृतिः ।

श्रीभाष्यविवरणम्, षडर्थसंक्षेपः, गुरुगुणावली, तत्वसंग्रहः इत्येवमादयः षोडशप्रबन्धाः—श्रीभाष्यकृतां प्रियशिष्यस्य प्रबन्धतोऽपि मन्त्रार्थसंप्रदायप्रवर्तकस्य श्रीमतः श्रीराममिश्रमहादेशिकस्य कृतयः । यस्य च भगवद्रामानुजाचार्यशिष्यभावमजानद्भिः न्यायपरिशुद्धेरुपोद्धातलेखकैः श्रीमद्भिः शतावधानं श्रीनिवासाचार्यैः कुलपरम्परयैव श्रीराममिश्रमहादेशिकस्य श्रीभाष्यकारशिष्यत्वं तदीयनिखिलसंप्रदायप्रवर्तकतां च

आद्या श्रीभाष्यविवृतिः यतिराजनियोगतः ।

येनाकारि सुगूढार्था राममिश्रं नमामि तम् ॥

इति ॥

व्यापकत्रयसारार्थषट्कं येन प्रबन्धतः ।

प्राकाशि गुरवे तस्मै राममिश्राय मङ्गलम् ॥

इति चानुदिनमनुसंदधत्सु सत्स्वपि महात्मसु केवलया स्वमनीषिकया कमपि क्रमं परिकल्पयद्भिः निगमान्तगुरुवचोभिरेव परिस्फुटामपि यत्प्र-

बन्धस्य श्रीभाष्यव्याख्यारूपतां अनाकलय्य विवरणमिति प्रबन्धनाम कर्तृनाम च श्रीभाष्यकृतां परमगुरोर्गुरवो राममिश्राचार्या इति निरदिश्यत ॥

तत्वरत्नाकरः, भगवद्गुणदर्पणम्—श्रीपराशरभट्टारकाणां कृतिः,

प्रज्ञापरित्राणम्—श्रीवरदनारायणभट्टारकाणाम्

प्रमेयसंग्रहः—श्रीविष्णुचित्ताचार्याणाम्

न्यायसुदर्शनम्— वरदनारायणभट्टारकाणाम्

तात्पर्यतूलिका—

मानयाथात्म्यनिर्णयः—वरदविष्णुमिश्राणाम्

तत्वसारः, पुरुषनिर्णयः, तत्वनिर्णयः—वात्स्यवरदगुरूणाम्

नीतिमाला—नारायणार्याणाम्

न्यायसंग्रहः—

न्यायकुलिशम्—आत्रेय रामानुजाचार्याणाम्

प्रमेयमाला—वरदाचार्याणाम्

षाड्गुण्यविवेकः—

सङ्गतिमाला—श्रीविष्णुचित्ताचार्याणाम्

नयप्रकाशः, भावप्रबोधः, नयद्युमणिः, मुमुक्षूपायसंग्रहः— श्री-राममिश्रमहादेशिकवंश्यानां श्रीमेघनादारिसूरिणाम्

श्रुतप्रकाशिका श्रुतदीपिका वेदा. सं. तात्पर्यदीपिका—सुदर्शनाचार्याणाम् इत्येवमादयः । पुरातनं च—

१ कृतकोटिः—बोधायनमुनेः व्यासमुन्यन्तेवासिनः

२ कृतकोटिसंग्रहः—बोधायनादुत्तरस्योपवर्षाचार्यस्य

३ वाक्यम्—तच्छिष्यपरम्पराप्रविष्टस्य ब्रह्मनन्दिनः

४ वाक्यभाष्यम्—द्रमिडभाष्यापराभिधं द्रमिडाचार्यस्य

इत्येतच्चतुष्टयं श्रीभाष्यकारैरेवानूद्यते तत्र तत्र। उपनिषच्छब्दमुपादाय च सुदर्शनाचार्यैः वामनटीकानामापि निबन्धः परिगृह्यते । यद्यप्येतेषु

पूर्वोक्तं कृतकोटितत्संग्रहरूपं प्रबन्धयुगळं बोधायनोपवर्षमुनिद्वयकर्तृकतया श्रीमद्रामानुजाचार्येभ्योपि प्राचीने प्रपञ्चहृदयनाम्नि प्रधन्धे लक्षग्रन्थात्मकतया तत्संग्रहतया च निर्दिश्यते । अथापि तत्वटीकायां (द्वि. सं. ५४ पृ.) 'बोधायनटङ्कद्रमिडादिमहत्तरपरिग्रहप्राचुर्यं दर्शयति' इति; स्थलान्तरे च उपवर्षं प्रस्तुत्य 'अस्यैव बोधायन इति नाम स्यात्' इति चोक्तम्; सेश्वरमीमांसायां च यत्तूक्तमुपवर्षवृत्तौ इत्यादिना तन्मतमनूद्य निरस्तमपि; इत्येवं एकत्र बोधायनोपवर्षयोरभेदं परत्र च उपवर्षस्यान्यत्वं च गमयता निगमान्तगुरुणा बोधायनोपवर्षयोर्विषये कोऽपि संशय उद्भाव्यत इति प्रतिभायात्; तत्रेत्थं निगमान्तगुरोराशयमाकलयामः; वैजयन्तीनाम्नि हि कोशे---

हलभूतिस्तूपवर्षः कृतकोटिमुनिस्तथा ॥

इति पर्यायनिर्देशः क्रियते । तत्र चोपवर्ष एव कृतकोटिमुनिरिति निर्दिश्यते । इत्थं च कृतकोटिमुनिरिनि बोधायनावगातिर्निरुध्येत । प्रसिद्धा च वोधायनस्य कृतकोटिग्रन्थप्रणेतृता; अतः उपवर्ष एव बोधायन इत्यभ्युपगमयत्युपवर्षस्य कृतकोटिकर्तृतोक्तिरित्यवगमयितुं तत्वटीकायामचार्येण 'अस्यैव बोधायन इति नाम स्यादिति सूक्तिः प्रवर्तित स्यात्'। सेश्वरमीमांसायां च उपवर्षग्रन्थानुवादखंडने परं कृतकोटिग्रन्थसंग्रहकर्तारमुपवर्षं विषयीकृत्याप्युपपद्येते इति ॥

यद्यपि चार्षेषु ग्रन्थेषु बंहीयसी विलुप्तिरवगम्यते इत्याकलय्यानाकलय्य वा व्याससूत्रवृत्तिरूपोऽप्यार्षो निबन्ध आसीदिति विशिष्टाद्वैतिनां श्रीभाष्ये एव परमवगच्छामो नान्यत्र क्वापीति पराक्रमकलुषाशयाः प्रायः प्रपञ्चहृदयग्रन्थावलोकनेनोपशाम्येयुरपि; श्रीमच्छङ्कराचार्यप्रबन्धेषु परं नामग्राहं बोधायनमताप्रदर्शनेन विश्वासदार्ढ्यमनासादयन्त स्संशयीरन्नपि; तथाऽपि---व्याडि, विन्ध्यवासि, भवदास, कुणरवाडव,

सौनाग, बैजि, सौभव, हर्यक्ष, चन्द्राचार्य, वसुरात प्रभृतीनां निबन्धाः आर्षप्रबन्धसंक्षेपणव्याकरणप्रमुखविपुलोपकारा व्यालुप्तरूपतया प्राचीननिबन्धानूदिता यद्येतैरभ्युपगम्येरन् सत्तया विषयेण गरिम्णा च ; तत्कथमपरत्रैवंविध एव विश्वासदार्ढ्येऽप्यवष्टम्भकमवगच्छद्भिरप्यविश्वासः क्रियते इति त एव विमृशन्तु ॥

**एतत्प्रबन्धप्रवृत्तिः**

सत्स्वप्येतेषु प्राक्तनेषु प्रबन्धेषु न्यायविस्तरशास्त्रस्य विद्यास्थानेषु प्रसिद्धं परिगणनं प्रायस्सर्वेषां तत्र प्रथमपरिचयारम्भसंरम्भं प्रायः प्रधानार्थाविरोधिभूयःप्रमेयनिरूपणानि च प्रथमानानि अन्ततः तद्व्याख्यातृभिः स्वमनीषिकया श्रुतिशिरोविरोधेनैव प्रचार्यमाणतां च; विशिष्टाद्वैतसंप्रदायाचार्यैरपि प्राचीनैः स्वसिद्धान्तप्रमेयानां विप्रकीर्णतया तत्र तत्र निर्वाहेऽपि तन्निर्वाहस्यापर्याप्ततां ; प्रासङ्गिकमुख्यामुख्यनिरूपणीयभूयस्त्वं च परिचिन्तयताः श्रीमद्वेङ्कटनाथदेशिकमणिना स्वसिद्धान्तसिद्धांस्तत्तदर्थान् संग्रहेण प्रतिपादयितुं परसिद्धान्तसरणिषु प्रमाणादिबलाबलादिकं संक्षेपतश्शिक्षयितुं च निर्दोषपुष्कलार्थस्रग्धरागुम्भितः तत्वमुक्ताकलापनामा न्यबन्धि निबन्धः । अयमंशः 'आवापोद्वापतस्स्युः कति कति' 'शिष्टा जीवेशतत्वप्रमितियुत' इति श्लोकाभ्यां ग्रन्थावतरणे स्वयमेवोक्तो गुरुणा ॥

एवमप्यतिसंक्षिप्तग्रन्थभावग्रहणधारणदौष्कर्यं परिचिन्तयन् सर्वार्थसिद्धिनाम्नीं वृत्तिमपि सानुग्रहं स्वयमेव व्यधादाचार्यः । तदेतदाह प्रबन्धारम्भे स्वयमेव—

ताराकल्पे स्फुरति सुधियां तत्वमुक्ताकलापे<br>
दूराद्वृत्त्या दुरधिगमतां पश्यतां सर्वसिद्ध्यै ।<br>
नातिव्याসव्यतिकरवती नातिसंकोचखेदा<br>
वृत्तिस्सेयं विशदरुचिरा कल्प्यतेऽस्माभिरेव ॥ इति ॥

**श्रीमता वेङ्कटनाथदेशिकमणिना विरचिताः प्रबन्धाः**

१. यादवाभ्युदयः २. हंससंदेशः, ३. सुभाषितनीवी, **इति काव्यानि ॥**

संकल्पसूर्योदयः दशाङ्कं प्रबोधचन्द्रोदयप्रतिभटं **नाटकम् ॥**

१. श्री हयग्रीवस्तोत्रं, २. देवनायकपञ्चाशत्, इत्यादीनि द्वात्रिंशत् (३२) **स्तोत्राणि ॥**

१. यज्ञोपवीतप्रतिष्ठा, २. आराधनक्रमः, ३. हरिदिनतिलकम्, ४. न्यासविंशतिः, ५. न्यासदशकम्, ६. वैश्वदेवकारिका, ७. न्यासविंशतिव्याख्या, ८. श्री पाञ्चरात्ररक्षा, ९. सच्चरित्ररक्षा, १०. निक्षेपरक्षा चैत्यमी सांप्रदायिक **धर्मनिबन्धाः ॥**

शिल्पार्थसारः **शिल्पशास्त्रे** ग्रन्थः ॥

१. रसभौमामृतम्, २. वृक्षभौमामृतम् इति **वैद्यशास्त्रे** ग्रन्थौ ॥

**भूगोलनिर्णयः** पुराणानुसारी भूगोलादिप्रमाणनिर्णयप्रदर्शकः तद्व्याख्या च ॥

१. मीमांसापादुका, २. सेश्वरमीमांसा चेति **मीमांसापूर्वकाण्डव्याख्यारूपौ** प्रबन्धौ ॥

१. तत्वमुक्ताकलापः, २. तद्व्याख्या सर्वार्थसिद्धिः, ३. न्यायसिद्धाञ्जनम्, ४. न्यायपरिशुद्धिः, ५. परमतभङ्गः इति **सिद्धान्तप्रकरणग्रन्थाः ॥**

१. अधिकरणसारावलिः, २. शतदूषणी, ३. तत्वटीका ४. अधिकरणदर्पणः, ५ चकारसमर्थनम् इति **ब्रह्मसूत्रभाष्यप्रस्थानपरिष्कारकप्रबन्धाः ॥**

१. ईशावास्योपनिषद्भाष्यम् २. गीतार्थसंग्रहरक्षा ३. गीतातात्पर्यचन्द्रिका **चेत्युपनिषत्प्रस्थानपरिष्कारकाः** प्रबन्धाः ॥

**रहस्यरक्षा**—श्रीमद्यामुनाचार्यविरचितचतुश्श्लोक्याः स्तोत्र-रत्नस्य गद्यत्रयस्य च व्याख्यानरूपा ॥

**संस्कृतद्राभिडमणिप्रवालमयाः द्वात्रिंशद्रहस्यग्रन्थाः**

१. संप्रदायपरिशुद्धि, २. तत्वपदवी, ३. रहस्यपदवी, ४. तत्वनवनीतं, ५. रहस्यनवनीतं, ६. तत्वमातृका, ७. रहस्य-मातृका, ८. तत्वसंदेशः, ९. रहस्यसंदेशः, १०. रहस्यसंदेश-विवरणम्, ११. तत्वरत्नावलिः, १२. तत्वरत्नावली प्रतिपाद्य-संग्रहः, १३. रहस्यरत्नावली, १४. रहस्यरत्नावलीहृदयम्, १५. तत्व-त्रयचुलकम्, १५. रहस्यत्रयचुलकम् (सारसंक्षेपः), १७. सारदीपः, १८. रहस्यत्रयसारः, १९. सारसारः २०. अभयप्रदानसारः, २१. तत्वशिखामणिः, २२. रहस्यशिखामणिः, २३. अञ्जलि-वैभवम्, २४ प्रधानशतकम्, २५. उपकारसंग्रहः, २६. सार-संग्रहः, २७. विरोधिपरिहारः, २८. मुनिवाहनभोगः, २९. मधु-रकविहृदयम्, ३०. परमपदसोपानम्, ३१. परमतभङ्गः, ३२. हस्ति-गिरिमाहात्म्यम्, इति ॥

१. द्रमिडोपनिषत्सारः, २. द्रमिडोपनिषत्तात्पर्यरत्नावली ३. निगमपरिमलः इति दिव्यप्रबन्धभावपरीवाहविवरणरूपाः प्रबन्धाः

द्रामिडभाषापद्यरूपाः प्रबन्धाः (२४) चतुर्विंशतिः इत्येते ॥

इतोऽन्येऽपि स्युः ॥

**व्याख्यातृपरिचयः**

आनन्ददायिन्याः कर्ता नृसिंहदेवः नृसिंहराज इत्यनेन नामन्तरे-णापि व्यवह्रियते । तन्मूलकमेव आनन्ददायिन्याः नृसिंहराजीयमित्यपि नामान्तरं प्रचरति । देवराजनाम्नः पितामहस्य नामानुषङ्गो नामैकदेश-न्यायेन द्वेधा प्रवर्तमानः व्यपदेशद्वयं बाढमेवोपपादयितुमर्हति ॥

अयं च सुगृहीतनामा नृसिंहदेवः श्रीवत्सगोत्रः नरसिंहसूरेस्तनयः। तोतारम्बानाम्नी चास्य माता। देवराजसूरिःपितामहः। कौशिककुलश्रीभाष्यश्रीनिवासाचार्योऽस्य मातामहः। कौशिकः श्रीनिवासाचार्योऽस्य वेदान्तशास्त्रे गुरुः। आनन्ददायिन्यारम्भे—'आत्रेयवंशदुग्धाब्धी' त्यस्मिन् पद्ये अप्पलाचार्य इति निर्दिश्यते। स चाप्पलाचार्यः; सुराचार्येत्यादितदुत्तरार्धस्थाने—'अप्पलाचार्यवर्यं तं भजे विद्यागुरुं मम' इति पाठान्तरोपलम्भात् तदानुगुण्येन नृसिंहदेवस्य सामान्यशास्त्राध्यापक इति निश्चीयते॥

वेदान्ताचार्य इति सरान्तेषु मातुलनिर्देशात् कौशिक इति तद्गोत्रनिर्देशाच्च तत्वमुक्ताकलापादिकर्तुराचार्यस्य भागिनेयस्स्यादिति शङ्काऽप्यङ्कुरन्ती प्रबन्धादौ निगमान्तगुरुप्रबन्धव्याख्यातुः निगमान्त गुरोस्सुदूरपरभाविनो महाचार्यस्य तत्प्रबन्धानां वेदान्तविजयादीनां च निर्देशात् कौशिककुलश्रीभाष्यश्रीनिवासाचार्यस्य मातामहत्वोक्त्या महाचार्यादप्यर्वाचीनस्य देवराजस्य पितामहत्वोक्त्या च निवारणीया॥

नृसिंहदेवस्य पितामहत्वेनोक्तो देवराजश्च बिम्बतत्वप्रकाशिकाकर्ता देवराज एव स्यादिति तर्कयामः॥

नृसिंहदेवविरचिताः प्रबन्धाश्च—१. परतत्वदीपिका, २. भेदधिक्कारन्यक्कारः, ३. मणिसारधिक्कारः, ४. सिद्धान्तनिर्णयः, ५. आनन्ददायिनी, ६ निक्षेपरक्षाव्याख्या नृसिंहराजीयाख्या, ७ शतदूषणीव्याख्या नृसिंहराजीयाख्या चेत्यष्टौ प्रसिध्यन्ति। श्रीमन्निगमान्तगुरुप्रबन्धानां सर्वेषामेवानेन व्याख्या विरचिता इत्यपि वदन्ति॥

अस्य च नृसिंहदेवस्य कालविषये विशिष्य निर्णायकस्यास्माभिरनुपलम्भेऽपि मणिसारभेदधिक्कारादिग्रन्थेभ्योर्वाचीनतां निश्चिन्वन्तः

क्रैस्ताब्दानां षोडशे शतके सत्तया वैदुष्येण च प्रथितानां व्यास-तीर्थानां न्यायामृतस्य बिम्बप्रकाशिकाकर्त्रा देवराजेन नृसिंहदेवपितामहेन स्वप्रबन्धे बहुशोऽनुवादात् ततोऽप्यर्वाचीन इति निर्णयामः ॥

व्याख्यानकौशलं च नृसिंहदेवसूरेः; आनन्ददायिन्यारम्भे—

अप्रसिद्धस्य पक्षस्य विस्तरेण प्रकाशिकाम् ।
सर्वार्थसिद्धिसट्टीकां करोम्यानन्ददायिनीम्॥

इति स्वीयां प्रतिज्ञां यथावसरं निर्वहता साध्वेव गुणग्राहिरमणीयमिति नात्राधिकं वक्तव्यमस्ति ॥

भावप्रकाशश्च तत्वमुक्ताकलापसर्वार्थसिद्ध्योः तत्तत्स्थलेषु आनन्ददायिन्याप्यगतार्थेषु विषयेषु यथायथं वैशद्यातिशयमादधानः तत्र-तत्राचार्यसूक्तिषु शब्दतोऽर्थतश्च विवक्षितान् विशदरमणीयमुपहरन् प्रेक्षावतां सुबहूपकारक इति वक्तुं प्रमोदामहे ॥

### आचार्यवैदुष्यपरिचयः.

बहुविधगहनदर्शनारण्यप्रथममहामार्मिकस्य भगवतो निगमान्त-गुरोः वैदुष्यसाक्षिसहस्रे कं चिदेकं सहृदयेष्वर्पयितुं प्रवर्तामहे—

चार्वाकदर्शनमिति लोकायतदर्शनमिति च बार्हस्पत्यसूत्रोपज्ञं प्रथमानमास्ते किमपि दर्शनम् । तस्य च दर्शनस्य प्रायस्सर्वे दार्शनिका अनुवदितारो निरासकाश्च; न खलु स दृश्यते श्रूयते वा आस्तिको नास्तिको वा दार्शनिकः यश्चार्वाकदर्शनमिति कैश्चिदक्षरैरननुवदन् ससंरम्भमनिरस्यंश्च स्यात्!

### लोकायतपदप्रयोगविषयः

लोकायता वदन्त्येवं नास्ति देवो न निर्वृतिः ।
धर्माधर्मौ न विद्येते न फलं पुण्यपापयोः ॥

(हरिभद्रसूरेष्षड्दर्शसमुच्चये)

बार्हस्पत्यस्तु नास्तिकः ॥ (हेमचन्द्रीयाभिधानाचिन्तामणौ)

नास्तिको वेदनिन्दकः ॥ (मनुस्मृतौ)

इत्येवमादिभिः ग्रान्थिकव्यवहारैः लोकायतशब्दः नास्तिकजनवाचितया प्रवर्तमानो विज्ञायते ॥

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः ।

इति मनुवचनालोचनेन च नास्तिकपरिगृहीतं शास्त्रमपि हेतुशास्त्रमिति व्यपदेश्यं ज्ञायते । श्रुतिस्मृतिन्यायविरुद्धशास्त्राभिज्ञो हैतुक इति कुल्लूकभट्ट आह—

नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम् ।
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥
(महाभारत १–७–४६)

ऐक्यनानात्मसंयोगसमवायविशारदैः ।
लोकायतिकमुख्यैश्च शुश्रुवुस्स्वनमीरितम् ॥
(हरिवंश २४९–३०)

इत्यादिवचनालोचने तार्किकमात्रपरतापि विज्ञायते ॥

कच्चिन्न लोकायतिकान् ब्राह्मणांस्तात सेवसे! ।
अनर्थकुशला ह्येते बालाः पण्डितमानिनः ॥
धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते ॥
(श्रीमद्वाल्मीकिरामायणे २ का. १०० सर्गे)

इति श्रीमद्वाल्मीकिवचनालोचनेन शुष्कतार्किकपरताप्यवसीयते ॥

नच ब्राह्मणा वेदविदश्शुष्कतार्किका इति कथमिदं घटत इति शङ्कनीयम्; यतः—

बैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः ।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥

इति भर्तृहरिणा—

मीमांसा काले लोकायतीकृता ।

तामास्तिकपथे नेतुम् ॥

इति सामान्यतः कुमारिलैः ; विशिष्य च तैरेव—

रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।

क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः ॥

इति सर्वत्रानाश्वासमाशङ्क्य—

अदुष्टेन तु चित्तेन सुलभा साधुमूलता ।

इति तत्परिहारमुक्त्वा—

का वा धर्मक्रिया यस्यां दृष्टो हेतुर्न युज्यते ।

लोकायतिकमूर्खाणां नैवान्यत्कर्म विद्यते ॥

यावत्किञ्चिददृष्टार्थं तद्दृष्टार्थं हि कुर्वते ! ।

वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ॥

अल्पेनापि निमित्तेन विरोधं योजयन्ति ते ।

तेभ्यश्चेत्प्रसरो नाम दत्तो मीमांसकैः क्वचित् ॥

न च कंचन मुञ्चेयुः धर्ममार्गं हि ते तदा ! ॥

इति सर्वत्रानाश्वासं विप्रतिपत्तिं वेदश्रद्धाया अप्यन्यथासिद्धिं अन्यच्चान्यच्च शुष्कतर्कावलम्बनेन वदन्तो लोकायतिका मूर्खा एवोक्ताः । अत एव लोकायतस्य वितण्डाशास्त्रत्वव्यवहार उपपद्यते बौद्धानाम् ।

वितण्डसत्थं विञ्ञेयं यं तं लोकायतम् ।

(अभिधानप्रदीपिका)

(वितण्डाशास्त्रं विज्ञेयं यत्तल्लोकायतम् । (इति छाया)

इति । तदेतज्जयन्तभट्टोप्याह—

न च लोकायते किञ्चित्कर्तव्यमुपदिश्यते ।

वैतण्डिककथैवासौ न पुनः काश्चिदागमः ॥

इति । आगमोपज्ञमेव च प्रसरति शुष्कतार्किकब्राह्मणप्रवादः । यथा—

'किं ते कृण्वन्ति कीकटेषु गावः ? नाशिरं दुह्रे न तपन्ति गावः ।

आनो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धयानः ॥

(ऋग्वेदे अष्टक ३. अ. ३. व. २१)

व्याख्याता चेयं ऋक् (पू. मी. १–२–३९ सू.) कुमारिलैः—

अयं हि दृढेनाध्येतॄणां स्मरणेन विश्वामित्रस्यर्षे ? गम्यते । तेन किल कर्मार्थं धनं प्रार्थयमानेन इन्द्रोऽभिहितः—त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गावस्तास्तव किं कुर्वन्ति ? ते हि नास्तिकाः किं क्रतु-नेति वदन्तो न किञ्चित्कर्मानुतिष्ठन्ति । सोमसंस्कारार्थं न दुहन्ति न घर्मतपने पयोदानेन साधनी भवन्ति । तस्मात्प्रमगन्दस्य कीकटाधिपतेर्य-द्वेदो धनं तदस्माकं नैचाशाखं नगरमाभर ॥

इति । लङ्कावतारसूत्रेषु च बुद्धेन—(लं.सू.पृ. ३४६)

लोकायतमिदं सर्वं यत्तीर्थ्यैर्देश्यते मृषा ।

एकं सिद्धान्तं लोकायतविवर्जितः शिष्यवर्गस्य देशेमि ॥

(ल. सू. पृ. ३४६)

लोकायतमेवानेकैराकारैः कारणमुखशतसहस्रैर्देशयन्ति ।

(लं. सू. पृ. १७५)

लोकायतो विचित्रमन्त्रप्रतिभानो न सेवितव्यो न भक्तव्यो न पर्युपासितव्यो यं सेवमानस्य लोकामिषसंग्रहो भवति न धर्मसंग्रहः ॥(लं.सू.पृ. १७३)

शरीरबुद्धिविषयोपलब्धिमात्रं हि महामते लोकायतिकैर्देश्यते विचित्रैः पदव्यञ्जनैः ; शतसहस्रं वै लोकायतम् ॥ (लं.सू.पृ. १७४)

यथा तीर्थकराणां आत्मेन्द्रियार्थसंनिकर्षात्त्रयाणां न तथा मम ॥

(लं.सू.पृ.१७७)

संक्षेपतो ब्राह्मण यत्र विज्ञानस्यागतिर्गतिरुपपत्तिः प्रार्थनाभि-निवेशाभिषङ्गो दर्शनं दृष्टिः स्थानं परामृष्टिः विचित्रलक्षणाभिनिवेशः

संगतिः सत्वानां तृष्णीयाः कारणाभिनिवेशश्च एतद्धो ब्राह्मण त्वदीयं लोकायतं न मदीयम् ॥ (लं.सू.पृ.१७८)

इत्यादि तत्रतत्रोद्घोषितवता स्वीयं दर्शनं विहाय दर्शनसरणिस्सर्वा लोकायतव्यपदेशगोचर इति मन्यमानेन अतत्वपरवञ्चनौपयिक विचित्र-पदघटनात्मकशुष्कतर्कवाङ्मयपरत्व लोकायतशब्दस्योपपादितंभवति ॥

देशिकमणिनापि सर्वार्थसिद्धौ 'चत्वार्येव तत्वानि। अधिकानि तु तावन्मात्रविभागोद्देशादपोढानि अतिरिक्तचेतननिषेधाच्च' इति तदीय-तत्वनिर्देशमनुवदता प्रात्याक्षिकातिरिक्तप्रमेयाक्षेपाभिप्रायकवादरूपता लोकायतदर्शने प्रदर्शिता। परमतभङ्गे च—(७४ पृ) माध्यमिकभङ्गाधि-कारे 'कस्याचित् परस्परविरुद्धनानामतप्रलापेषु ऐदम्पर्यनियामकविरहात् सर्वेषामेव तेषां भ्रमादिरेव मूलं पर्यवस्यति' इति वदता आचार्येण बुद्धस्य लङ्कावतारसूत्रेषु कतिपयवाक्यानां सिद्धान्तपरतया दृश्यमानानां सत्त्वेऽपि पूर्वोत्तरनिरूपणदौष्ठुल्यविहतार्थतयाऽनुपादेयतापर्यवसानबोधनेन तत्रत्यं दर्शनान्तराणां लोकायतत्वकथनमप्यनूद्य निरस्तं भवति ॥

एवं तत्रैव (५९) आस्तिक्यावहेलनवचांस्यनुवदता च निरर्थ-कवैतण्डिककथामात्रत्वं स्पष्टमुक्तं भवति ॥

लौकायतिकपदं च लोकायतमधीते इति व्युत्पत्त्या प्रवर्तते इति क्रतूक्थादिगणे लोकायतपदं पठतः पाणिनेरभिमतमिति निर्विवादम्। लोकायतशब्दश्च लोके आयतं इति विग्रहेण सर्वजनविदितं प्रियमित्यर्थको भवति। सर्वजनप्रियता च निर्विशयपरिग्रहानुकूलप्रातिपत्तिकरत्वरूपा आमु-ष्मिकार्थकथादूरतयोपपन्ना भवितुमर्हति। 'प्रत्यक्षं तद्विशेषरूपमन्वय-व्यतिरेकदर्शनं च परिगृह्य प्रवृत्तं शास्त्रम्' इति 'अर्थकामरूपपुरुषा-र्थयुग्मानुकूलनीतिस्तेयकामशास्त्राद्यैककण्ठ्येन परमहितामिदं शास्त्रम्' इति 'धर्मविरुद्धार्थकामयोरननुतापिनः निरन्तरं तत्र प्रवृत्ता इह दर्शने समयिनः' इति च शास्त्रप्रवृत्तिक्रमं समानैदम्पर्यशास्त्रान्तरैककण्ठ्यं

शास्त्राधिकारं च तदीयमनुवदता लोकायतपदव्युत्पत्तिः पुष्कलार्थैवोपपादिता भवति । लोकायतदर्शनं च बृहस्पतेस्सूत्रनिबन्धात्मकं चार्वाकनाम्ना भाष्यप्रणयनपूर्वकं प्रचारितमिति तत्कृत एव च चार्वाकमतमिति प्रथाविशेषः । चार्वाकस्य भाष्यप्रणेतृत्वं च परमतभङ्गे उक्तमाचार्यवर्येण (५८ पृ) ॥

चार्वाकेतिहासश्च महाराष्ट्रज्ञानकोशनाम्नि भाषापदकोशे एवं दर्शितः—'अवन्तीदेशान्तर्गतक्षिप्राचामलानद्योस्संगमप्रदेशे शङ्खोद्धारनाम्नि क्षेत्रे कल्यादि युधिष्ठिरादि वा ६६०-६६१ तमे प्रभवसंवत्सरे उत्तरायणे वैशाखशुद्धपौर्णमास्यां रविवारे मध्याह्नसमये चार्वाकनाम्नः नास्तिकतत्वज्ञस्य जन्मेति; युधिष्ठिर ७२५ तमे श्रीमुखसंवत्सरे भाद्रपदशुद्धद्वादशीसोमवासरे पुष्करक्षेत्रस्थयज्ञनामकगिरौ दक्षिणायने चार्वाकस्य मरणम्' इति । जैनग्रन्थान्ते ग्रन्थनाम किमप्यानिर्दिश्य चरितमेतदुक्तं कोशकारेण संगृहीतमिति च आकरनिर्देशोऽपि कृत इव ।

संपूर्णो लोकायतसूत्रनिबन्धः केन वोपलब्ध इति न जानीमः । द्वित्राण्येव परं सूत्राणि प्राय उदाहरन्तो व्याख्यानिबन्धकाराः देहात्मवाददूषणे विजृम्भन्ते ॥

न्यायदर्शने च गौतमः 'अहेतुतो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिवत्' 'पद्मसंमीलनविकारवत्तद्विकारः' इति सूत्राभ्यां कार्यकारणभावाद्यपलापरूपस्तर्कः चार्वाकीय एवानूदितः ॥

'पृथिव्यप्तेजो वायुरिति तत्वानि' 'तेभ्यश्चैतन्यं' 'किण्वादिभ्यो मदशक्तिवत्' इति त्रीण्येव सूत्राणि प्रायो दर्शनव्याख्यानिबन्धेषूपलभ्येरन् । तत्वसंग्रहपञ्चिकायां कमलशीलेन 'तत्समुदाये विषयेन्द्रियसंज्ञा' 'परलोकस्याभावात्परलोकिनोऽभावः' 'कायादेव ततो ज्ञानम्' इति त्रीणि चान्यान्यपि सूत्राणि दर्शितानि; तेभ्यश्चैतन्यमिति सूत्रे

चैतन्यस्योत्पत्तिपक्षीयः अभिव्यक्तिपक्षीयश्च व्याख्याभेदो दर्शितः । 'अत्र सूत्रे केचिद्वृत्तिकारा आचक्षते उत्पद्यते चैतन्यमिति अन्येऽभिव्यज्यत इत्याहुः' इति । 'अतिरिक्तचेतननिषेधाच्चेति' चार्वाकवादानुवादेन आचार्यवर्येणापि 'परलोकस्याभावात्परलोकिनोऽभावः' इति सूत्रमन्तर्नीतमेव । अतिरिक्तचेतननिषेधाच्चेत्यनुवादेन अनुगतभावविरहेण परलोकानुपपत्तिः अर्थावगत्यतिरिक्तरूपशून्यस्य ज्ञानस्य मूर्छाद्यवस्थासु कललाद्यवस्थासु च सद्भावानुपपत्तिश्च चेतनसद्भावबाधिका संगृह्य प्रदर्शिता भवत्याचार्येण ॥

लोकायतगोष्ठीनिष्ठा एव जात्यपलापवादः प्राणवैश्वानरात्मवादः एकेन्द्रियवादः ज्ञानात्मवादः देहान्तात्मवादश्चेत्येते वादा आचार्येण परमतभङ्गे अनूद्य निरस्ताः ॥

यद्यपि लोकायतदर्शने अतिरिक्तचेतननिषेधेन न प्रमाणाभ्युपगमसम्भवः ज्ञानावान्तरभेदस्योपपत्तये हि इन्द्रियाभ्युपगम आवश्यकः! प्रत्यक्षमेकं चार्वाक इति च चार्वाकस्य प्रमाणाभ्युपगमकथा प्रचरति । 'रूपादिज्ञानसिद्धौ' इति श्लोकस्य व्याख्यावसरे सर्वार्थसिद्धौ च 'त्यज्यतां तर्हि वर्गद्वयमिति चार्वाकोत्थानम्' इति वदत आचार्यस्य; 'चार्वाकस्यातीन्द्रियाभावेन इन्द्रियाभावादिति भावः' इत्याशय उक्त आनन्ददायिन्याम् । इन्द्रियाभाववादश्च प्रमाणाभ्युपगमेन विरुध्यते । चार्वाकसमयाविरुद्धश्च भवतीन्द्रियाभाववादः; 'तत्समुदाये विषयेन्द्रियसंज्ञा' इति लोकायतसूत्रे इन्द्रियकण्ठोक्तेः; तथाऽपि शरीरावयवगोळकाद्यातिरिक्तमिन्द्रियं नाभ्युपैति चार्वाक इत्यतिरिक्तेन्द्रियाभावकथनोपपत्तिः । तत्सुमादाये इन्द्रियसंज्ञेति सूत्रस्वरसपर्यालोचनया दृश्यतत्समुदायातिरिक्तेन्द्रियाभावमभिप्रेत्य सर्वार्थसिद्धितद्व्याख्ययोः प्रवृत्त्युपपत्तिश्च सुलभा ॥

चार्वाकीया वादाश्च यद्यपि विशकलिततया तत्रतत्रोपलभ्य-मानाः—

न वादोपायाभ्युपगमः ।

पूर्वं नैव स्वभावतः ।

खपुष्पादिपदशक्तिग्रहवत् आकाशादिपदानां भ्रान्तिसिद्धे शक्ति-ग्रहः ।

एतावानेव लोकोऽयं यावानिन्द्रियगोचरः ।

समुदयमात्रमिदं कलेबरम् ।

ऋणं कृत्वा घृतं पिब ।

गच्छतामिह मार्गेषु व्यर्थं पाथेयकल्पनम् ।

नास्ति राजातिरिक्त ईश्वरः ।

घटपटादिकं न नित्यं नापि तुच्छं किं तु सादि निर्हेतुकजन्म च ।

आकाशस्त्वावरणाभावः स च निस्स्वभावः तुच्छतयैवोपलम्भात् ।

तस्माद्दृष्टपरित्यागाद्यददृष्टप्रवर्तनम् ।

तद्धि लोकस्य मूढत्वं चार्वाकाः प्रतिपेदिरे ॥

इत्यादिरूपाः न कथंचन परलोकिनमात्मानं सूचयन्ति ॥

छान्दोग्ये च आत्मजिज्ञासयोपगतयोरिन्द्राविरोचनयोः ‘ सुवसनौ साध्वलङ्कृतौ उदशरावेऽवेक्षेथां स आत्मेति ’ प्राथमिकोपदेशमात्रतृप्तस्य विरोचनस्य ‘ आत्मानमेवेह महयन्नात्मानं परिचरन् उभौ लोकावाप्नोतीमं चामुं च ’ इत्यसुरान् प्रत्युपदेशवाक्ये अतिरिक्तात्मनिषेध एव निगम्यते ; यद्यपि च न्यायमञ्जर्याम्—सुशिक्षितास्तु चार्वाका आहुः—‘ यावच्छरीरमेकं प्रमातृतत्वं अनुसंधानादिसमर्थमस्तु न तु शरीरादूर्ध्वं तत्—

यावज्जीवं सुखं जीवेत् नास्ति मृत्योरगोचरः ।

भस्मीभूतस्य देहस्य पुनरागमनं कुतः ? ॥

इदि देहान्तात्मवाद उपक्षिप्तः । न तु देहानास्थागन्धोऽपि सूचितः । एवं रूपोऽपि सुशिक्षितचार्वाकवादः परमतभङ्गे निरस्तः । तत्वमुक्ताकलापेऽपि---

देहान्तत्वेऽपि धर्म्ये पथि निरुपधिका विश्ववृत्तिर्न सिध्येत्
इति लोकयात्रानिर्वाहानुपपत्त्या निरासिष्यते ॥

अतो न क्वापि चार्वाकवादे आमुष्मिककथासंस्पर्शगन्धः ; तथापि सूत्रैः भाष्येण वाप्यपर्यवसितनिरूपणेन अनाकुलाक्षरग्रथनविकलाश्चार्वाकाः नास्तिको नास्तिक इति जोघुष्यमाणमयशः स्वसमयनिर्वाहेण निर्विवादपरसमयपरिग्रहेण वाप्यपरिमृजन्तो यत्रसायंगृहया वादगत्या तांस्तान् विवादान् निस्तरन्तः किं किं न शिक्ष्येरन् दृढयुक्तिशस्त्रभीता इति संभावित एव नानाजन्मपारिग्रहयोग्यावस्थोऽप्यात्मेति निर्विवादपरिग्रह इति संभावयताचार्येण---

एको ज्ञानाश्रयस्तस्मात् अनादिनिधनो नरः ।
संसारी कश्चिदेष्टव्यः यद्वा नास्तिकता परा ॥

इति सविमर्शपक्षपातं प्राथमकल्पिकमुच्यमानं कम्बलाश्वतरीयं नास्तिक्यपरिग्रहानास्थामूलकं वचनं विमृशता वेदपरिग्रहवत्सु लौकायतिकेषु सन्मार्गसौलभ्यातिशयं तर्कयमाणेन च आकाशाभ्युपगममनूद्य प्रतिबन्द्या भिन्नाभिन्नभवानुभूतार्थप्रातिसंधाताप्यभ्युपगन्तव्य इति शिक्षणे ;---

स्वक्रियादिविरोधश्च सूत्रप्रभृति दुस्तरः ।
गुरुशिष्यादिवाक्यानां परबोधार्थता यतः ॥
तेभ्यश्चैतन्यमित्यादि वदता गुरुणा स्वयम् ।
किण्वादिभ्यः प्रसिध्यन्ती मदशक्तिर्निदर्शिता ॥

प्रत्यक्षाल्लोकशब्दोक्तादाधिकं च तदायतम् ।
अभाष्यत भवत्पूर्वैः प्रत्यक्षं चार्थसाधकम् ॥
अर्थकामौ पुमर्थौ च दृष्टोपायैरुदीरितौ ।
प्रीयसे दूयसे च त्वं बिभेषि च ततस्ततः ॥
इष्टं प्राप्तुमनिष्टं च निवर्तयितुमुद्यतः ।
तत्सिद्धौ चरितार्थस्त्वं लोकवत्किं न मन्यसे ? ॥
बुभुक्षुरन्नमादत्से श्वभक्ष्यादि जहासि च ।
परोक्त्या प्रतिपद्यार्थं प्रतिब्रूषे जिगीषया ॥
तत्वधाधारणार्थं वा वादे किं न प्रवर्तसे ।
स्वयं वा मानतर्काभ्यां किं न किंचित्परीक्षसे ॥

(सर्वार्थसिद्धि ४२६–४२७)

इति जल्पकथापरिग्रहेण स्वपरिग्रहाग्रहप्रवृत्तानां वादकक्ष्याप्रदर्शनाहङ्कारनिरसनमनुकूलमभिप्रयता; शिक्षणमिदं तैः परिगृहीतं 'अस्तु तर्हि षड्धातुवादः अध्वर्युभिस्तथाध्ययनात्' इत्यभ्युपगमपर्यवसायीत्याशयेन श्रुतिप्रमाणकवादप्रवृत्तेः सर्वश्रुत्यैकरस्यप्रणयितानुगुणशिक्षणानुकूलतां मन्यमानेन 'सम्यङ्न्यायानुग्रहमात्रेण बलाबलदृष्ट्या विरोधशान्तिः' इति सुशिक्षणं सङ्ग्रहेणोपसंहृतम् ॥

आर्षानार्षन्यायविस्तारबृन्देष्वाचार्याणां चातुरीवैभवोत्था ।
शिक्षाकक्ष्या निस्तरेद्बाह्यवादान् त्रय्यन्तार्थस्थापनासार्वभौमी ॥

———

# ग्रथमस्यास्य संपुटस्य मुद्रणेऽवलम्बितानि पुस्तकानि

## तत्वमुक्ताकलापस्य

| | | | | |
|---|---|---|---|---|
| 1. | इहैव कोशागारे वर्तमानम्–आं | | 616 | संख्याङ्कम् |
| 2. | ,, | ग्र | 443 | ,, |
| 3. | ,, | ,, | 1,171 | ,, |
| 4. | ,, | ,, | 3,269 | ,, |
| 5. | ,, | ,, | 3,029 | ,, |
| 6. | ,, | आं | C 1,144 | ,, |
| 7. | ,, | ग्र | 1,166 | ,, |

## सर्वार्थसिद्धेः

| | | | | |
|---|---|---|---|---|
| 1. | इहैव कोशागारे वर्तमानम्–ग्र | | 443 | ,, |
| 2. | ,, | ,, | 1,171 | ,, |
| 3. | ,, | ,, | 3,269 | ,, |
| 4. | ,, | ,, | 3,029 | ,, |
| 5. | ,, | आं | C 1,144 | |

## आनन्ददायिन्याः

| | | | | |
|---|---|---|---|---|
| 1. | इहैव कोशागारे वर्तमानम्–आं | | 3,040 | ,, |
| 2. | ,, | ,, | B 324 | ,, |
| 3. | श्रीपरकालास्थानत आसादितम् | ग्र | | |
| 4. | ,, | आं | | |
| 5. | सरस्वतीभण्डारत आसादितम् | ,, | 7 | ,, |

भावप्रकाशग्रन्थस्तु श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकैः सानुग्रहं विलिख्य प्रेष्यमाणः यथायथं मुद्रणाय पर्यकल्प्यत ॥

मुद्रणेऽस्मिन् लेखनेन संवाचनसाहाय्यकरणादिना च उपकृतवतां अस्मत्कोशागारपण्डितानां श्री॥ उ॥ वे॥ तिरु॥ तिरु॥ श्रीनिवासगोपालाचार्याणां च उपकारं सुचिरं स्मरिष्यामः ॥

---

# सव्याख्य साटिप्पण सर्वार्थसिद्धिसहित तत्वमुक्ताकलाप
## विषयसूची

---

# जडद्रव्यपरीक्षा

## प्रबन्धावतरणम्



## द्रव्यसाधनम्

औपनिषदप्रक्रियाप्रतिपक्षनिरासः

तत्र—

विषयः पुटम्

## परमाणुकारणतावादनिरासः



## सद्द्रव्यवादसमर्थनम्

विषयः पुटम्

क्षणभङ्गनिरासः

कार्यकारणभावापलापनिरासः

तत्र—

## इन्द्रियपरीक्षा

तत्र—

## भूतपरीक्षा

## वायुपरीक्षा

तत्र—

## तेजःपरीक्षा



## तमः परीक्षा

## कालपरीक्षा

तत्र—

# सर्वार्थसिद्ध्यादिगृहीत निबन्धनामानि

---

---

# सर्वार्थसिद्ध्यादिगृहीत निबन्धनामानि

---

# तत्वमुक्ताकलापः

[4] लक्ष्मीनेत्रोत्पलश्रीसततपरिचयादेष संवर्धमानो
नाभीनाळीकरिङ्गन्मधुकरपटलीदत्तहस्तावलम्बः ।
अस्माकं संपदोघानविरलतुळसीदामसञ्जात[5]भूमा
कालिन्दीकान्तिहारी कलयतु वपुषः काळिमा कैटभारेः ॥ १

[6] नानासिद्धान्तनीतिश्रमाविमलधियोऽनन्तसूरेस्तनूजो
वैश्वामित्रस्य पौत्रो विततमखविधेः पुण्डरीकाक्षसूरेः ।
श्रुत्वा रामानुजार्यात्सदसदपि ततस्तत्वमुक्ताकलापं
व्यातानीद्वेङ्कटेशो वरदगुरुकृपालम्भितोद्दामभूमा ॥ २

[7] प्रज्ञासूच्यानुविद्धः क्षतिमनधिगतः कर्कशात्तर्कशाणात्
शुद्धो नानापरीक्षास्वशिथिलविहिते मानसूत्रे निबद्धः ।
[8] आतन्वानः प्रकाशं बहुमुखमखिलत्रासवैधुर्यधुर्यः
धार्यो हेतुर्जयादेः स्वहृदि सहृदयैस्तत्वमुक्ताकलापः ॥ ३

[9] शिष्टा [10] जीवेशतत्वप्रमितियुत[11]परोपासना मुक्तिहेतुः
शक्य[13]स्तत्तत्प्रकारावगतिविरहिभिर्नैव याथात्म्यबोधः ।
ते ते चार्था विदध्युः कुमतिविरचितास्तत्वबोधोप[14]रोधं
तस्मान्निर्धूतसर्वप्रतिमतविमतिं साधये सर्वमर्थम् ॥ ४

आवापोद्वापतस्स्युः कतिकति कविधीचित्रवत्तत्तदर्थे-
ष्वानन्त्यात् [15] अस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः ।

तत्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान् समस्तान्
पुंस्त्वे तत्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुतादिः ॥ ५

द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्व[17]माहुः
द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्य [18] मव्यक्तकालौ ।
अन्त्यं प्रत्यक्पराक्च प्रथममुभयथा तत्र जीवेशभेदात्
नित्या भूतिर्मतिश्चेत्यपरमपि जडामादिमां केचिदाहुः ॥ ६

तत्र द्रव्यं दशावत् [21]प्रकृतिरिह गुणैस्सत्वपूर्वैरुपेता
कालोऽब्दाद्याकृतिस्स्यात् अणुरवगतिमान् जीव ईशोन्य आत्मा ।
संप्रोक्ता [22] नित्यभूतिस्त्रिगुणसमधिका सत्वयुक्ता तथैव
ज्ञातुर्ज्ञेयावभासो मतिरिति कथितं संग्रहाद्द्रव्यलक्ष्म ॥ ७

[23] एकार्थप्रत्यभिज्ञा भवति दृढतरा दर्शनस्पर्शनाभ्याम्
[32] संघातादेरयोगादवगमयति सा वस्तु रूपादितोऽ[43]न्यत् ।
एकस्मिन् दूरतादेरविशदविशदप्रत्यभिज्ञादि तद्वत्
[50] नैकत्वेऽप्यक्षभेदाद्विदुरामिव मिथस्संश्रयादि [51] प्रसङ्गात् ॥ ८

[65] धर्मो निर्धर्मकश्चेत् कथमिव भविता सोऽभिलापादियोग्यो
धर्मेणान्येन योगे स च भवति तथेत्यव्यवस्थेति चेन्न ।
कश्चिद्धर्मोऽपि धर्मी स्फुट [68] मतिमथने स्वान्यनिर्वाहकत्वम्
[72] तन्निष्कर्षप्रयोगेष्वपि भवति पुनस्तस्य धर्मी विशेषः ॥ ९

[77] तच्छून्ये तस्य वृत्तिः कथमिव घटते तद्विशिष्टे तु वृत्तौ
[81] स्वाधारत्वप्रसङ्गस्तत इह न गुणो नापि धर्मीत्ययुक्तम् ।
[82] तद्वृत्तिर्धर्मिमात्रे [83] न भवति तत एवास्य तच्छून्यताऽतो
[86] नोक्तौ दोषौ स्वधीवाग्विहतिरितरथा [89] तद्वदन्येऽपि जल्पाः ॥ १०

[96] स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्राक्षसिद्धिः
[97] नाध्यक्षेणाप्रतीतेः [102] न पुनरनुमया व्याप्तिलिङ्गाद्यसिद्धेः ।
[151] सत्वाद्युन्मेषभिन्नान्महत इह तथा स्यादहङ्कारभेदः
[152] प्राच्यादक्षाणि मात्राः प्रजनयति परो मध्यमस्तूभयार्थः ॥ ११

[153] तत्राहङ्कारजन्यं भजति परिणतेश्शब्दमात्रं [155]नभस्त्वं
तद्वत्तन्मात्रपूर्वास्तदुपरि मरुदग्न्यम्बुभूम्यः क्रमात्स्युः ।
सूक्ष्मस्थूलस्वभावस्वगुणस[156]मुदयप्रक्रियातारतम्यात्
तन्मात्राभूतभेदः कललदधिनयात् कल्पितस्तत्वविद्भिः ॥ १२

[157] अद्भ्योग्निस्तेजसस्ता इति न हि वचसोर्बाधितुं युक्तमेकं
निर्वाहः कल्पभेदाद्यदि न दृढमिता[158]तत्वसृष्टयैकरूप्यात् ।
व्यष्टौ ताभ्यः कदाचित्तदुपजनिरतो व्यत्ययस्तत्समष्टौ
आदावप्सृष्टिवादः श्रुतिमितमितरं न प्रतिक्षेप्तुमीष्टे ॥ १३

[161] पृथ्व्याः स्पर्शादिभेदो द्रवमृदुकठिनीभावभे[168]दश्च दृष्टः
तद्वत्पृथ्वीजलाग्निश्वसनपरिणतिर्लाघवायेति जैनाः ।
तत्र द्रव्यैक्यमिष्टं [170] क्रमजनिविलयौ त्वागमादप्रकम्प्यौ
तर्कैकालम्बिगोष्ठ्यां भजतु बहुमतिं तादृशी लाघवोक्तिः ॥ १४

[171] तत्वेष्वाथर्वणेऽष्टौ प्रकृतय उदिताष्षोडशान्ये [172] विकाराः
निष्कर्षैदम्परेऽस्मिन् वचसि तदितरत्स[175]र्वमावर्जनीयम् ।
दृष्ट्वा सांख्यं पुराणादिकमपि बहुधा निर्वहन्त्येतदेके
चिन्तासाफल्यमान्द्याच्छ्रमब[176]हुलतयाऽप्यत्र तज्ज्ञैरुदासि ॥ १५

निश्शेषं कार्यतत्वं जनयति स परो हेतुतत्त्वै[177]श्शरीरी
तत्तत्कार्यान्तरात्मा भवति च तदसौ विश्रुतो विश्वरूपः ।

तेजोऽबन्नाभिधेये बहुभवनमभि[178]ध्यानलिङ्गं च दृष्टं
तस्मादीशाननिघ्नाः प्रकृतिविकृतयः स्वस्वकार्यप्रसूतौ ॥ १६

[179]द्वेधा भूतानि भित्त्वा पुनरपि च भिनत्त्यर्धमेकं चतुर्धा
तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं च[180]तुर्भिः ।
इत्थं पञ्चीकृतैस्तैर्जनयति स जगद्धेतुरण्डादिकार्या-
ण्यैदम्पर्यं त्रिवृत्त्वश्रुतिरधिक(रितर)गिरामक्ष[181]मैका निरोद्धुम् ॥ १७

[186]कार्यं नैवारभेरन् समधिकमणवस्सर्वतस्संप्रयुक्ताः
[188]दिक्संयोगैकदेश्यान्न घटत इह ते दिक्कृतोऽप्यंशभेदः ।
[199]बुद्धेस्त्वंशानपेक्षा स्फुरति विषयिता [204]विश्रमस्त्वस्तु दृष्टे
[206]नो चेदारम्भकांशप्रभृतिषु नियता दुर्निवाराः [207]प्रसङ्गाः ॥ १८

स्याद्भागानन्त्यसाम्ये परिमितिसमता सर्षपक्ष्माभृतोश्चेत्
मैवं भागेष्वनन्तेष्वपि समधिकता [208]स्थौल्यहेतुर्गिरेस्स्यात् ।
व्यक्त्यानन्त्येऽपि जात्योः [209]परतादितरता पक्षमासाद्यनन्तं
श्रौतोपादानसौक्ष्म्यं न भवदभिमतं तत्प्रथिम्नश्श्रुतत्वात् ॥ १९

[216]कार्योपादानभेदे न कथमधिकता गौरवादेः [221]स्वकार्यं
नान्यत्वं नामसंख्याव्यवहृतिधिषणाकार[223]कालादिभेदैः ।
द्रव्याभेदेऽप्यवस्थान्तरत इह तु ते पत्रताटङ्कवत्स्युः
[225]ना चेदंशांशिनोस्स्यात् प्रतिहतिरुभयोः स्पर्शवत्त्वाविशेषात् ॥ २०

[226]इत्थं वृत्त्यादिखेदो न भवति [229]न च नः कल्पनागौरवं स्यात्
[231]वस्त्रे दीर्घैकतन्तुभ्रमणविरचिते वस्तुधीर्नापि बाध्या ।
[232]देशाधिक्यं समेतेष्वणुषु न हि ततः स्थूलधीबाधशङ्का
[236]संसर्गादेर्विशेषादवयविपरिषद्राशिवन्यादिवादः ॥ २१

[247] द्रव्यैक्यं प्रत्यभिज्ञा प्रथयति परिमिश्रन्तरेऽन्याप्रतीतेः
[250] अंशूत्कर्षक्षयादिक्षममपि च ततो राशिवत् स्थूलमेकम् ।
नो चेत् अश्रान्तचण्डानिलजलधिधुनी [252] दन्तिदावानलाद्यैः
क्षोणीयं क्षुद्यमाना क्षणमपि चरमामण्ववस्थां न जह्यात् ॥ २२

[253] संघातो नैकभूतैरपि भवति यथा ह्येकभूतस्य[254]भागैः
देहादिः पञ्चभूतात्मक इति निगमाद्युक्तिभिश्च प्रसिद्धम् ।
न त्वेवं संकरस्स्यात् [256] व्यवहृतिनियमस्सूत्रितस्तारतम्यात्
देहादौ येन [257] भूतान्तरयुजि भवतो भौमतादिव्यवस्था ॥ २३

[259] सन्ति प्रागप्यवस्थाः सदितर(जनना)कर[263]णाप्राप्तनिष्पत्त्य(योगात्)
[264] शक्ताशक्तप्रभेदादिभिरपि यदि [267] न स्वोचितात्कार्यदृष्टेः । [दृष्टेः
[295] तस्मिन् सत्येव तस्माज्जनिरपि नियता [296] तन्निमित्तादिनीतेः
[305] व्यक्तिर्व्यक्तानवस्थां भजति [306] न च कृतामात्थ[307]नैवं कृतौ नः ॥२४

[320] वस्तुस्थैर्यं [325] विरुद्धानुपहितविषया साधयेत् प्रत्यभिज्ञा
[341] नैकस्मिन् शक्त्यशक्ती [342] कृतितदितरयोस्साह्यभेदेन सिद्धेः ।
[349] एकस्मिन् कालभेदाद्भवति च सहकार्यन्वयानन्वयादिः
नो चेन्नो देशभेदादपि सुपरिहरः [350] तेन नैकं क्वचित्स्यात् ॥ २५

[351] तत्त्वेदन्त्वे हि कालान्तरघटनमये नैककाले घटेतां
[352] कालद्वैतेऽनवस्थादि [353] अत इह न मितिः प्रत्यभिज्ञेति चेन्न ।
[355] स्वस्य स्वाभावकाले विहतिनियमनात् [357] स्वेन चात्रैककाल्यात्
[358] काले कालानपेक्षे कथमपि सुवचौ नानवस्था[359] विरोधौ ॥ २६

प्रत्यक्षं वर्तमानं प्रथयति यदिहावर्तमानाद्विभक्तं
तस्मात्तेनैव सर्वं क्षणिकं [360] इति न सत् तावदित्यप्रतीतेः ।

तत्कालासत्त्वमेव ह्यपनयति सतो वर्तमानत्वबोधः
कालेऽन्यत्रापि सत्त्वं प्रमितमिति कथं तद्विरोधप्रसङ्गः ॥ २७

[369] उत्पन्नानां विनाशे ध्रुवभवितृतया हेत्वपेक्षाविहीने
[372] जन्मन्येवोपरोधात् क्षणिकमिह जगत्सर्वमित्यप्यसारम् ।
लिङ्गं ह्येष्यत्त्वमात्रं जननविधुरता तत्क्षणानुक्षणत्वे
तत्त्वं तज्जन्यता वा तदिदमनियमासिद्धिबाधादिदूष्यम् ॥ २८

[378] कालानन्तर्यसाम्ये क्षणिकवपुषि ते देशकालाद्युपाधौ
सर्वे पूर्वे भवेयुस्तदुपरि भवतां कारणानि[380]क्षणानाम् ।
संतानैक्यव्यवस्था [381]निजफलनियतिर्वासनानां च न स्यात्
कार्पासे रक्ततादि क्रमविपरिणमत्संस्कृतद्रव्यतस्स्यात् ॥ २९

[382] मेयत्वाद्यैर्विगीतं क्षणिकमिह [383] जगत्स्यात् क्षणोपाधिवच्चेत्
बाधो [391] दृष्टान्तहानिः स्थिर इति विदितो यत् क्षणस्याप्युपाधिः ।
सामग्री कार्यशून्या क्षण इयमपि [392] तद्धेतुसङ्घः न चासौ
हेतुर्नान्यः स्थिरास्ते [397] क्रमवदुपधिवत् स्यात् क्षणत्वं स्थिरेऽपि ॥ ३०

[399] दीपादीनां कदाचित् सदृशविसदृशाशेषसंतत्यपेते
ध्वंसे दृष्टेऽप्यशक्या तदितरविषयेऽनन्वयध्वंसक्लृप्तिः ।
[400] बाधादेर्दर्शितत्वात् अपिच दृढमिते सान्वयेस्मिन् घटादौ
[401] दुर्दर्शावस्थया स्युः पयसि लवणवत् लीनदीपादिभागाः ॥ ३१

[402] सत्त्वेऽसत्त्वेऽपि पूर्वं किमपि गगनतत्पुष्पवन्नैव साध्यं
[403] हेतुप्राप्तिर्न पश्चाद्भवितुः अघटितोत्पादनेऽतिप्रसङ्गः ।
[404] जन्यं जन्मान्यथा वा द्वयमसत् अनवस्थानकार्यक्षतिभ्यां
इत्याद्यैर्हेतुसाध्यं न किमपि यदि [405] न स्वक्रियादेर्विरोधात् ॥ ३२

[427] कादाचित्कस्य कालावधिनियतिकरं पूर्वसत्कारणं [429] स्यात्
भावोपष्टम्भशून्यो न खलु तदवधिं प्रागभा[430]वोऽपि कुर्यात् ।
कार्यं निर्हेतुकं चेत् कथमिव न [431] भवेन्नित्यता तुच्छता वा
कादाचित्कस्वभावाद्यदि न नियमनात् [432] अन्यथाऽतिप्रसङ्गात् ॥ ३३

नेत्रादेर्दीपिकादेरिव नियमयुतं तैजसत्वादि[433]साध्ये
रूपादिग्राहकत्वं [434] यदि करणतया स्यादसाधारणत्वम् ।
[435] तत्साहाय्यं त्वसिद्धं [436] भवति गमकतामात्रमप्यञ्जनादौ
[440] अक्षाहङ्कारिकत्वं श्रुतिपथनिपुणैर्घोषितं नैव बाध्यम् ॥ ३४

तन्मात्रेष्विन्द्रियाणां श्रुतिरिह न लयं वक्ति[441]।किं तु प्रवेशं
[442] नो चेत्पृथ्व्यादिवाक्येष्विव हि लयपदं व्योम्नि [443] चाक्षेषु च स्यात् ।
भूतैराप्यायितत्वात् क्वचिदुपचरिता भौतिकत्वोक्तिरेषां
अन्नापस्तेजोमयत्वं श्रुतिरपि हि मनः प्राणवाचामुवाच ॥ ३५

[445] रूपादिज्ञानसिद्धौ यदि करणतया कल्पनं [449] धीन्द्रियाणां
तद्वद्गत्यादिकर्मस्वपि करणतया सन्तु कर्मेन्द्रियाणि ।
कर्मज्ञानाक्षहेत्वोस्समपरिहरणा ह्यन्यथासिद्धिशङ्का
तस्मादेकादशाक्षाण्यपि निगमविदो [452] मन्वते न्यायपूर्वम् ॥ ३६

[453] साङ्ख्यैस्त्रेधोक्तमन्तःकरणमिह मनोबुद्ध्यह[454]ङ्कारभेदात्
चित्तं चान्ये चतुर्थं विदुरुभयमसत् तादृशश्रुत्यभावात् ।
तत्तत्त्वोक्तिमात्रं न हि करणभिदामाह कल्प्तिस्तु गुर्वी
[456] बुद्ध्याद्याख्या निरूढा क्वचिदिह मनसो वृत्तिवैचित्र्यमात्रात् ॥ ३७

[460] एकं तत्तत्प्रदेशप्रतिनियततया शक्तिभेदं प्रपन्नं
देहव्यापीन्द्रियं चेत् प्रथममिह [461] भवेदागमेनैव बाधः ।

नो चेत्स्याद्देहभेदप्रतिनियत [463] तया सर्वजन्तोस्तदेकं
भेदाज्ञानादक्लृप्तेरपि न च भजते देह एवेन्द्रियत्वम् ॥ ३८

[467] सूक्ष्माण्येकादशाक्षाण्यपि न यदि कथं देहतो [469] निष्क्रमादिः
चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमोऽप्यस्तु मानम् ।
[471] वृत्त्याऽक्ष्यादेर्दवीयःप्रमितिजनकता वृत्तिराप्यायनार्थै-
र्भूतैर्जातः प्रसर्पः [472] श्रुतिमितमपि चानन्त्यमेषां स्वकार्यैः ॥ ३९

[476] प्राप्यग्राहीन्द्रियत्वात् विमतमितरवत् [479] प्राप्तिरुक्तप्रकारा
वृत्तिं दृष्टेर्न रुन्धे विरलपटनयादम्बुकाचादिरच्छः ।
[481] नो चेत् गृह्येत योग्यं सममिह निखिलं निष्फले छादकादौ
[482] स्थैर्ये तद्योग्यभावो [483] न हि गलति समा संततिस्त्वन्मतेऽपि ॥ ४०

[488] शब्दं गृह्णाति दूराभ्युदितमपि बहिस्संतता श्रोत्रवृत्तिः
[489] दिग्भेदासन्नतादिग्रहणमपि तदा तत्र तत्सन्निधानात् ।
[490] इत्येके अन्ये तु दूरान्तिकगतजनता शब्दधीकाल[491]भेदात्
श्रोत्रायातस्य तस्य ग्रहम् [492] अनुमितिमप्याहुरस्मिन् दिगादेः ॥ ४१

[494] प्रत्यक्षं व्योम नीलं नभ इति हि मतिश्चक्षुषैवा[495]स्मदादेः
[497] कूपोऽसौ रन्ध्रमेतत् पतति खग इहेत्यादिधीश्चात्र मानम् ।
[498] आधारोऽत्रातपादिर्यदि भवति कथं तस्य चेहेति बोधः ?
तस्यांशैश्चेत् त्र्यणौ तच्छिथिलगति [499] न च व्योमवागातपादौ ॥ ४२

[499] रूपस्पर्शोज्झितत्वान्न भवति गगनं दर्शनस्पर्शनार्हं
घ्राणश्रोते रसज्ञाऽप्यवगमयाति न द्रव्यं [500] अन्यत्त्वबाह्यम् ।
तस्मान्नाध्यक्षवेद्यं वियदिति यदि न प्रत्ययस्यापरोक्ष्यात्
[503] पञ्चीकारेण नैल्यं पटमलिनिमवद्भाषितं वोपकुर्यात् ॥ ४३

[504] शब्दस्याधारभूतं कथमपि गगनं शक्यते नानु[505]मातुं
स्वेच्छातः पारिशेष्य(ष्यात्)क्रम इह कथितोऽतिप्रसङ्गादिदुस्स्थः ।
निष्क्रान्त्यादेर्न तद्धीः सति [506] नभसि यतो नास्ति कुड्यादिकेऽसौ
रोधस्त्वावारकैश्चेत्तदभवनवशान्निष्क्रमादिश्च सिध्येत् ॥ ४४

[507] यत्त्वाकाशोऽवकाशप्रद इति कथितं शास्त्रतस्तत्र यासा-
वन्योन्य(न्यं) स्पर्शभाजां विहतिरिह न सा [508] प्राच्यतत्त्वेष्विव स्यात् ।
इत्यैदम्पर्यमूह्यं न यदि कथमिवान्येषु लभ्योऽवकाशः
सिद्धादेस्स्वप्रभा[509]वाज्जल इव कथितो (कठिने) युज्यते मज्जनादिः॥४५

[511] सद्रूपेणैव भानात् (बोधात्) न भवति वरणाभावमात्रं विहायः
[518] संसर्गाभावमात्रं (भावतास्मिन्) न च भवति यतो नास्ति संसर्गिबोधः ।
[519] अत्यन्ताभावनाशावजननिरपि वा सत्सु तेष्वेव न स्युः
[521] तादात्म्याभावसिद्धिः कथमपि न भवेत् तंतमर्थं विहाय ॥ ४६

[524] नित्यत्वाद्यम्बरादेर्यदि निरवयवद्रव्यताद्यैः प्रसाध्यम्
[525] कस्स्याद्बाधो विपक्षे कथमिव निगमे बाधकेऽ[527]त्रानुमा स्यात् ।
बाधस्सामान्यदृष्ट्या श्रुतिसमधिगते नैव कुत्रापि शक्यः
तेनामूर्तत्वलिङ्गान्न [528] सृजति विमतो मूर्तमित्याद्यपास्तम् ॥ ४७

प्राक्प्रत्यक्त्वादिभेदं भजतु वियदिदं भानुयोगा[529]दिभेदात्
अस्यैवोपाधिभेदादधिकदिश इव स्तां [530]परत्वापरत्वे ।
व्योमोत्तीर्णेऽपि देशे प्रभवतु तदुपा[531]ध्यन्वितैस्तत्तदर्थैः
दूरत्वादिव्यवस्था स्वय(मुत)मिह विभुना ब्रह्मणा किं परैर्नः ॥ ४८

[532] अन्यस्मिन्नन्यधर्मान् घटयतु वियदाद्यत्र नातिप्रसक्तिः
सिध्यत्कार्योपयुक्तोपनयननियमोपेततच्छक्तिक्लृप्तेः ।

एवं ह्येवाधिकायामपि दिशि भवतोऽतिप्रसङ्गो निषेध्यो
धर्मो धर्मी च कल्प्यौ [533] तव तदितरता स्यात्तु काले (समाना) स्वमानात् ॥

[534] संख्यानं तत्वपङ्क्तौ क्वचिदपि न दिशः कालवद्वा न भेदः
कण्ठोक्तो व्याक्रियादिव्यव[536]हरणमपि ह्यन्यथैवोपपन्नम् ।
श्रोत्रादुक्तस्तु लोकप्रभृतिवदुदयस्तस्य तत्राप्ययो वा
नैतावत्तत्वभेदं [537]गमयति न च तच्छ्रौत्रतामान्यपर्यात् ॥ ५०

[538] वातो वातीति साक्षान्मतिरितरसमा स्पर्शतो नानुमाऽसौ
अन्धेऽन्येषु प्रसङ्गात् [539] न पुनरगमकं स्पर्शनं रूपशून्ये ।
अन्याक्षग्राह्यताद्व्यिधगुणाविरहो ह्यन्यदक्षं न रुन्धे
[540] निर्गन्धो नीरसोऽपि स्फुरति यदनलो दर्शनस्पर्शनाभ्याम् ॥ ५१

सङ्ख्याद्याः स्पर्शनास्स्युः तदधिकरणकाः स्पर्शने गन्धवाहे
तेषां द्रव्योपलम्भप्रतिनियतनिजाध्यक्षयोग्यत्वतश्चेत् ।
[541] इष्टं त्वंशे नचात्मप्रभृतिषु सह ते तैः प्रसिध्यन्ति सर्वे
[542] तद्बाह्ये व्याप्तिरिष्टा यदि सततगतेरप्यसावस्तु बाह्ये ॥ ५२

[543] न प्राणो वायुमात्रं सह परिपठनात् [545] न क्रिया द्रव्यतोक्तेः
तेजोवद्वा न तत्वान्तरमगणनतो [546] वायुतानुज्झनाच्च ।
तस्माद्वातो विशेषं घनजलकर[547]कन्यायतः प्राप्य कंचित्
देहान्तर्दाशविध्यं भजति बहुविधोपक्रियो वृत्तिभेदैः ॥ ५३

[548] प्राणोऽक्षं प्राणशब्दादुपकरणतया क्षेत्रिणश्चेत्ययुक्तम्
शब्दैक्यं ह्यैकजात्यं व्यभिचरति [549] न च प्राणताक्षेषु मुख्या ।
देहस्यानक्षभावेऽप्युपकृतिरधिका तत्समाक्षोक्त्यद्दष्टिः
न प्राणे सात्विका[550]हङ्करणविकृतिता लक्षणं तद्धि तेषाम् ॥ ५४

[552] प्राणापानाख्यभस्त्रारभसविसृमरः प्राप्य वैश्वानराख्यां
मध्येदेहं हुताशो वसति जलनिधावौर्ववत् सर्वभक्षः ।
तत्तद्विद्यासु वेद्यं त्व(द्यत्र) न इव हि [553] परज्योतिषस्सोऽपि रूपं
नात्मानौ तौ जडत्वात् जनिविलयमुखैर्भेदकण्ठोक्तिभिश्च ॥ ५५

धर्मो भाति प्रभैका [554] बहुलविरलता(द्यता)तत्र दृष्टानुसारात्
सा दीपांशा विशीर्णा इति यदि बहुधा कल्पनागौरवादिः ।
रत्नादीनां स्थिराणां विशरणविहतेः निष्प्रभत्वादि [555]च स्यात्
तेजस्तत्सप्रभाकं तिमिरहरतया साऽपि तेजोविशेषः ॥ ५६

[556] भाष्ये भास्वत्प्रभादौ प्रतिहति बहुलीभावपूर्वं यदुक्तं
तेन स्रोतस्समाधिं परमतनयतः प्राहुरेके [558]प्रभायाम् ।
वस्तुन्यस्ते विक(ल्पे)ल्पैः स्फुटविघटनयोर्वक्तुरासस्य वाचोः
तात्पर्यं तर्कमानानुगुणमधिगुणैश्चिन्त्यमन्तेवसद्भिः ॥ ५७

[560] प्राच्ये स्नेहादिनाशे चरम इव दृढोऽनन्तरं दीप [561]नाशः
सामग्र्यन्यान्यकार्यं न जनयति नचानेक [562]दीपप्रतीतिः ।
साम्यादेस्स्यात्तु तद्धीः प्रवहणभिदुरास्सप्रभास्तत्प्रदीपाः
निर्बाधा भास्करादौ प्रथयति नियतं प्रत्यभिज्ञास्थिरत्वम् ॥ ५८

[563] वर्णानां तादृशत्वादतिकठिनतया गौरवस्यापि भूम्ना
धात्रीभागैः प्रभूतैः स्फुटमिह घटिता धातवो [565]हाटकाद्याः ।
तादृक्त्वेऽपि स्फुरत्ताद्यनितरसुलभं किञ्चिदन्वीक्ष्य तज्ज्ञैः
व्याख्यातं तैजसत्वं विधित[566]दितरयोस्तत्रसौकर्यसिद्ध्यै ॥ ५९

[567] नैल्याद्भौमं तमिस्रं [568]चटुलबहुलताद्यन्वयात्तन्न नैल्यम्
[569] छायावत्पारतन्त्र्यं त्वयस इव मणौ दृष्टिसिद्धात्स्वभावात् ।

स्पर्शाख्यातिर्न रूपं हरति हरिशिलालोक[570]वत्तत्र चाक्ष्णोः
नालोकोऽर्थ्यस्सासिद्धाञ्जननयन[571]दिवाभीतदृष्ट्यादि नीतेः ॥ ६०

[574]नालोकाभावमात्रं तिमिरं अविरतं नीलमित्येवदृष्टेः
नैल्यं त्वारोपितं चेत् कथमिव न भवेत् क्वापि कस्यापि बाधः ।
[576]आरोपे चात्र नैल्यं न भवति नियतं भास्वरान्यत्व[577]साम्यात्
नात्रादृष्टं नियन्तृ प्रतिनियतगुणारोपक्लृप्तेर्गुरुत्वात् ॥ ६१

[578]ध्वान्तं तेजश्च नासीदिति मुनिभिरुपाख्यायि संवर्तवार्ता-
भावाभावौ निषेद्धुं तदुभयविधिवद्व्याहतत्वादशक्यम् ।
अन्तर्यन्तुश्च तेजस्सहपठिततमो [579]देह इत्यामनन्ति
स्याच्चाभावोऽपि भावान्तरमतिमथने वक्ष्यमाणक्रमेण ॥ ६२

तिष्ठत्युर्वी भचक्रं पवनरयवशाद्भ्राम्यतीत्युक्तमाप्तैः
[584]भ्रान्तैः क्लृप्तं त्रिलोकीभ्रमणमिह [587]तथा मेदिनीभ्रान्तिपातौ ।
[557]तद्भ्रान्तौ प्राक्प्रतीचोः प्रसजति पतने पत्रिणोस्ता[598]रतम्यम्
पाते गुर्व्यास्तु तस्याः प्रलघु दिवि समुत्क्षिप्तमेनां न यायात् ॥ ६३

[609]ज्योतिश्शास्त्रं पुराणाद्यपि न हि निगमग्राह्य[610]मन्योन्य बाध्यम्
विद्यास्थानं तु सर्वं प्रतिनियतनिजोपक्रियांशे [611]प्रमाणम् ।
तात्पर्यं तर्कणीयं तदिह बहुविदा [613]भूपरिध्यादिभेदैः
दुर्ज्ञानं सर्वथा यन्मुनिभिरपि परैस्तत्र तूदासितव्यम् ॥ ६४

[614]सूर्यावृत्त्याद्युपाधिव्यतिकरवशतः [615]कालतास्त्वम्बरादेः
अन्यस्मिन्नन्यधर्मोपनयनानि[616]यमः प्राग्वदत्रेति चेन्न ।
कल्पान्तेऽप्येककालः प्रकृतिपुरुषयोर्ब्रह्मणो रूपमन्यत्
निर्दिष्टोऽनाद्यनन्तो मुनिभिरिति ततः कार्यता चास्य भग्ना ॥ ६५

[617] कालोऽस्मीति स्वगीता कथयति भगवान् [618] काल इत्याप्तवर्यो
हेतुस्सर्वस्य नित्यो विभुरपि च परः किं परेणेति चेन्न ।
कालान्तर्यामितादेस्स खलु [619] समुदितः संप्रतीते तु भेदे
साधर्म्यं नैक्यहेतुः स हि तदितरवद्धोषितस्तद्विभूतिः ॥ ६६

[620] कालस्योत्पत्तितः प्राक् परमपि च लयात् कालनास्तित्ववादी
स्वोक्तिव्याघातभग्नो न वदति [621] यदि तत्को वदेत्कालसृष्टिम् ।
आप्तस्तत्सृष्टिवादस्तदुपधिपरिणत्यादिभिस्सार्थकस्स्यात्
नो चेत्तत्रापि पूर्वापरवचनहतिर्दुर्निवारप्रसङ्गा ॥ ६७

[622] कालोऽध्यक्षावसेयः [623] क्षणलवदिवसाद्यंशतोऽर्थान् विशिंषन्
साक्षाद्धीः तत्तदर्थेष्विव भवति हि नः क्वापि कालान्वयेऽपि ।
[624] तत्संयोगाः परत्वादय इति च ततोऽप्येष नैवानुमेयो
[625] नो चेन्न क्वापि लोकव्यवहृतिविषयोऽव्यक्तवत्स्यादनेहा ॥ ६८

[631] कालस्योपाधिभेदात्कतिचिदभिदधत्यब्दमासादिभेदम्
तत्तद्रूपेण कालः परिणमत इति प्राहु [634] रेके तदा तु ।
ये तत्रोपाधयस्स्युस्त इह परिणतिं [635] प्राप्नुयुस्सानुबन्धाः
नित्यो व्यापी च तादृक्परिणतिभिरसौ सर्वकार्ये निमित्तम् ॥ ६९

[638] वायुर्दोधूयते यद्यदयमुडुगणो बम्भ्रमीति द्रुतं खे
तेजो जाज्वल्यते यद्यदपि जलनिधिर्माधवीं [639] दाधवीति ।
भूर्यद्वा बोभवीति स्थिरचरधृतये तच्च तादृक्च सर्वम्
स्वायत्ताशेषसत्तास्थितियतनपरब्रह्मलीलोर्मिचक्रम् ॥ ७०

**इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु तत्वमुक्ताकलापे जडद्रव्यसरः प्रथमः.**

---

# अशुद्धशोधनम्

---

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 17 | 24 | SARVATHA | SARVARTHA |
| 18 | 9 | ानत्य | नित्य |
| 21 | 2 | स्सत्त्व | स्सत्व |
| 24 | 21 | निराधारा: | निराधारा: |
| 27 | 3 | संगात् | सङ्गात् |
| ,, | ,, | 2* नच | नच |
| ,, | 5 | संगात्। नचो | सङ्गात् *[1] नचो |
| 28 | 20 | ाह | हि |
| 29 | 10 | उपपादकः | उपपादुकः |
| ,, | 17 | दि बुद्धो | दिबुद्धो |
| 32 | 19 | र्थ संनिधा | र्थसन्निधा |
| ,, | 21 | स्तद्वे | स्तदेव |
| 38 | 13 | रोप हेतु | रोपहेतु |
| ,, | 23 | इत्यन्ता | इति |
| 46 | 7 | विता | विदिता |
| 52 | 4 | रदिस्वभावा | रादिस्वभावा |
| 53 | 14 | प्यकस्मिन् | प्येकस्मिन् |
| 56 | 19 | भञ्जनत्यिु | भञ्जनीत्यु |
| 69 | 12 | स्वस्यवै | स्वस्यैव |
| 76 | 8 | व्यज्ज | व्यञ्ज |
| 77 | 3 | वृत्तौ। | वृत्तौ |
| 79 | 19 | लुम्पङ्को | लुम्पङ्क्यो |
| 80 | 4 | नमपि। | नमपि |
| 92 | 17 | त्युद्धत | त्युद्धूत |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 93 | 15 | लिबन्धी | तिबन्दी |
| 96 | 10 | मित्यत्रा | मित्यत्रा |
| 101 | 4 | दृष्टादध्य | दृष्टादनुमानादध्य |
| ,, | 10 | नित्या- | नित्यानु- |
| 105 | 15 | योरः | योर- |
| 106 | 10 | सत्वात् | सत्त्वात् |
| ,, | 16 | सारे | सरे |
| 107 | 2 | त्वया- | त्वयाऽ- |
| ,, | 3 | पटत्वस्य | पटस्य |
| ,, | 15 | सिद्ध्येत् | सिध्येत् |
| 108 | 9 | ,, | ,, |
| 109 | 15 | ध्या | द्धथा |
| ,, | 16 | स्त्व | त्स्व |
| 111 | 16 | वने | वेन |
| 113 | 7 | चिद्दार | चिद्द्वार |
| 114 | 9 | यत्प्रवणयो | यद्यत्प्रवणतायो |
| ,, | 18 | धे य | धेय |
| ,, | 23 | यन्नैवं य | यन्नैवं तन्नैवं य |
| 116 | 10 | (ज्ञातृत्वादिः) | (ज्ञातृत्वादि) |
| ,, | 11 | प्रसिद्धौ | प्रसिद्धे |
| 117 | 12 | त्पन्नेरिति | त्पन्नैरिति |
| ,, | 13 | सिद्धयार्थ? कादा | सिद्धार्थकादा |
| 120 | 8 | वदति | वदिति |
| ,, | 15 | साधिका | सात्विका |
| 121 | 10 | न्तिनो? स | न्तिनोऽस |
| ,, | 12 | ष्विर्तिा | ष्विति— |
| ,, | 14 | नोपा | नोप |
| ,, | 18 | पक्षत्वा | पक्षत्व |
| ,, | 20 | तेन्मह | तेर्मह |
| 122 | 8 | मृत्यं | मृत्युं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 123 | 2 | नंत | नन्त |
| 128 | 2 | अवति | अवीत |
| ,, | 4 | रद्दष्ट | रद्दष्ट |
| ,, | 10 | सध्यते | साध्यते |
| ,, | 14 | ननु (प्रत्य | ननु सुख्यामीति (प्रत्य |
| 130 | 6 | तथेति | तथातथेति |
| 132 | 24 | वशी | वंशी |
| 137 | 2 | व्यक्तावास्था | व्यक्तावस्था |
| 148 | 6 | मानीनरासः | माननिरासः |
| 179 | | प्रकृति विकृतीनामीश्वराधिष्ठानेन कार्यकरत्वम् | पञ्चीकरणस्थापनम् |
| ,, | 6 | ऐकैकं | एकैकं |
| 180 | 15 | नाना | ' नाना |
| ,, | 19-20 | . . . . . . . ते । तत ईत | . . . . . . . ते ततः ' इति |
| 184 | 19 | धाविभागिः | धा विभागः |
| 187 | 9 | सबन्धे | संबन्धे |
| 188 | 2 | तोऽप्यं | तोऽप्यंशभेदः । |
| 199 | 5 | परम् । | वरम् । |
| 205 | 22 | वयवस्थै | वयवकस्थै |
| ,, | ,, | जत्वा | जकत्वा |
| ,, | ,, | वस्थै | वकस्यै |
| 214 | 9 | सज्ज | सञ्ज |
| 225 | 7 | मिथ | मिथः |
| 226 | 19 | वल्ल्यादौ | वल्यादौ |
| 227 | 4 | (त्व) | (नत्व) |
| 232 | 10 | द्वित्वदि | द्वित्वादि |
| 237 | 21 | संयोगादः | संयोगादेः |
| 239 | 20 | अक | आक |

SARVARTHA.

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 239 | 21 | यवावि | यवि |
| 240 | 24 | ग्रहाणेना | ग्रहणेना |
| 240 | 16 | तथा | तथाचास्माकमपि अंशा-न्तरेषु अवय |
| ,, | ,, | न्यावा | न्यायवा |
| 257 | 20 | संयोगन्तरा | संयोगान्तरा |
| 260 | 20 | वृच्या | वृत्त्या |
| ,, | 9 | काणा | कारणा |
| 261 | 16 | गतातातिा | गतातीता |
| 262 | 16 | अत्त्वेन | असत्त्वेन |
| 265 | शिरासि | दद्वितीय | दप्रथमद्वितीय |
| 273 | 3 | त्वं वा कार | त्व (वां) च कार |
| 293 | 5 | भागन्तरा | भागान्तरा |
| 307 | 8 | व्यज्ज | व्यञ्ज |
| 326 | 20 | तज्ञा | तज्ज्ञा |
| 372 | 2 | रोधात | रोधात् |
| 389 | शिरासि | बाधत | बाधित |
| 391 | ,, | त्वासिद्धेरन्यथा | त्वासिद्धिपरिहारस्य तदन्यथा |
| 397 | ,, | ध्याङ्गी | ध्यङ्गी |
| ,, | 2 | २० | ३० |
| 405 | 13 | तद्दिने | तद्दिने |
| 409 | शिरसि | कुर्वत्त्वतानिव्यापा-त्व | कुर्वत्त्वतान्निर्व्यापारत्व |
| 409 | 2 | रेणाहेतुत्वं | रेण हेतुत्वम् |
| 410 | 5 | मेब | मेव |
| 411 | 3 | येयु ;! | येयुः ! |
| ,, | 5 | कथ | कथम् |
| 412 | 13 | भावः । तुच्छ | भावः । नित्यंवेति-तुच्छ |
| 413 | 8 | बाधित ? | बाधितम् ? |

| पृटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 415 | शिरसि | पौर्वान्नियमौ | पौर्वापर्यवन्नियमौ |
| 416 | 6 | वह्नथ | वह्नया |
| 420 | 20 | मार्थयो | मार्थयोः |
| 425 | 2 | स्थान | स्थाने |
| 431 | शिरसि | त्वोद्य | चोद्य |
| 444 | 9 | द्रियाणिम्; | न्द्रियाणि; |
| 463 | 22 | ङ्कारा | ङ्कारो |
| 477 | 21 | यौगंद्या | यौगपद्या |
| 479 | 2 | र्निरुन्धे | र्न रुन्धे |
| 482 | 13 | द्धेतिविष— | द्धेति—विष |
| 495 | शिरसि | चाक्षुत्वं | चाक्षुषत्वम् |
| 505 | 3 | दुस्थः। | दुस्स्थः। |
| 517 | शिरसि | खादि | खपुष्वादि |
| 517 | 3 | (दिष्टे) | (दिष्टम्) |
| 517 | 10 | (इत्यत) | (इत्येत) |
| 525 | 6 | एव; (एते) षां | एव; ए (एते)षां |
| 528 | 17 | यमर्थ— | यमर्थः— |
| 535 | शिरसि | त्वक्षेपे वायुताल | त्वाक्षेपे वायुकाल |
| 539 | 13 | स्त्वीगीन्द्र | स्त्वागिन्द्र |
| 539 | 17 | ग्राह्यत्वा- | ग्राह्यत्व |
| ,, | 21 | भावाददपि | भावादपि |
| 540 | 17 | नस्यात् तदा | न स्यात्; तदा |
| 541 | 19 | च्छदेना | च्छेदेना |
| 542 | 13 | सजातयि | सजातीय |
| ,, | 16 | (स्वात्म | (नस्वात्म |
| ,, | 17 | त्रह— | त्राह— |
| 544 | 5 | तत्सृष्टेः- | तत्सृष्टेः |
| 544 | पृष्ठात्परं | 545—560 | इत्यन्तेस्थाने प्रमादात् 555-570 इति पतितमास्ति |
| 566 | 17 | द्रवत्वाम | द्रवत्वम |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 566 | 23 | भौंवे | भाँवे |
| 567 | 20 | भदं | भेदं |
| 568 | 10 | लत्व वहलत्व | लत्व बहु (बह) लत्व |
| 569 | 17 | (तीतेरुपपत्ति)! | (तीतेरुपपत्ति) |
| ,, | 22 | नुद्भत | नुद्भूत |
| 581 | 16 | मुपपद्यते. इति भावः | मुपपद्यते यदि भू सम- |

परिमाणं स्थिरं द्रव्यं प्रत्यक्षं तत्र च प्रदेशभेदेऽपि गुरुत्वान्दोलनयो-र्न तारतम्यमनुभवासिद्धमभविष्यत् तदा भुवो भ्रमणं निरचेष्यत; न च तथा! इति भावः।

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 594 | 3 | च्छिन्नम् | श्छिन्नम् |
| ,, | 15 | भोगोल | भूगोल |
| 595 | 4 | स्थौल्यां | स्थौल्य |
| ,, | 6 | नक्षत्राण | नक्षत्राणां |
| 596 | 15 | स्सारा | सारा |
| 599 | 16 | प्राप्तभुव | प्राप्त(भु)व |
| ,, | 20 | स्सपक्षो | स्स पक्षो |
| 601 | 20 | मूर्तिः? | मूर्तिः |
| 604 | 13 | यतोऽवकाशे | यतोऽवकाशो |
| 627 | शिरसि | वर्तमाना | वर्तमान |
| ,, | 20 | उच्यते इति। एवं | उच्यते,—किन्तुसूर्यं |

परितो भ्राम्यतां ग्रहाणां बुध शुक्र कुज गुरुशनयः इति। अत्रापि भुवः ग्रहाणांच भ्रमणमङ्गीकृतमिति न लाघवम्। किंच सिद्धान्ते ग्रहाणां सर्वेषां भ्रमणाङ्गीकारे रवेरिव शनेरपि स्वसंचारवशादेव दक्षिणोत्तरायणयो रुपपत्तिः। न तु भूभ्रमणपक्षे। शनेः प्राथम्य-निर्देशेन चेदं सूच्यते। ‘भपञ्जरस्सग्रहो भ्रमति’ इत्यत्राप्येतद्विव-क्षितम्। एवं उक्तग्रहकक्ष्याङ्गीकारे मासाधिपत्योपपत्तिः। एवं—

॥ श्रीमते हयग्रीवाय नमः ॥

# श्रीसर्वार्थसिद्धिव्याख्या आनन्ददायिनी



श्रीमान् वेदान्तवेद्यः शुभगुणनिलयो निस्समस्सर्वदोष-
प्रत्यर्थीभूतमूर्तिः चिदमितमहिमानन्दसत्यस्वरूपः ।
सृष्टिस्थित्यन्तलीलः सकलचिदचितां मोक्षदस्सर्वविद्या-
वेद्यो वागीशमूर्तिः वृषभगिरिपतिः श्रेयसे स्यात्सदा नः ॥ १ ॥

जरीजृम्भत् स्तम्भादुदयगिरिशृङ्गादिव रविः
विभिन्दानो रक्षस्तिमिरपटलीं यः कररुहैः ।
वितन्वन्नानन्दं मृगपतिनराकारघटितः
स नश्श्रेयो देयादमृतफलवल्लीसहचरः ॥ २ ॥

आराधनार्थं वृषशैलभर्तुः घण्टा मुदा पद्मभुवा प्रयुक्ता ।
यद्रूपमास्थाय जगन्त्यरक्षत्तमेव वेदान्तगुरुं न मामि ॥ ३ ॥

प्रतिमतकथकधुरन्धरविद्याहङ्कारतूलवातूलः ।
सकलजनवन्दनीयो भवतु मुदे मे महागुरुर्नित्यम् ॥ ४ ॥

कुशिककुलजलधिचन्द्रो निगमान्तगुरुश्श्रीनिवासो नः ।
जयति यतिराजदर्शितसिद्धान्ताम्भोजमोदकरभानुः ॥ ५ ॥

## श्रीसर्वार्थसिद्धिटिप्पणं भावप्रकाशः

वागीशाख्या श्रुतिस्मृत्युदितशुभतनोर्वासुदेवस्य मूर्तिः
ज्ञाता यद्वागुपज्ञं भुवि मनुजवरैः वाजिवक्त्रप्रसादात् ।
प्रख्याताश्चर्यशक्तिः कविकथकहरिः सर्वतन्त्रस्वतन्त्रः
त्रय्यन्ताचार्यनामा मम हृदि सततं देशिकेन्द्रस्स इन्धाम् ॥

# श्रीतत्वमुक्ताकलापव्याख्या सर्वार्थसिद्धिः

## जडद्रव्यसरः प्रथमः

श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥
जयति सकलविद्यावाहिनीजन्मशैलो
जनिपथपरिवृत्तिश्रान्तिविश्रान्तिशाखी ।
निखिलकुमतिमायाशर्वरीबालसूर्यो
निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ १ ॥

## आनन्ददायिनी

आत्रेयवंशदुग्धाब्धिप्रालेयांशुं कलानिधिम् ।
सुराचार्यसमप्रज्ञमप्पलाचार्यमाश्रये ॥ ६ ॥
श्रीवत्सगोत्राम्बुधिमध्यदेशात्
बभूव चन्द्रो नरसिंहनामा ।
तस्यात्मजः साधुजनैकसेवी
नृसिंहदेवः प्रथितो धरायाम् ॥ ७ ॥
तोतारम्बातनयः पौत्रश्श्रीदेवराजस्य ।
दौहित्रः कुशिककुलश्रीभाष्यश्रीनिवासस्य ॥ ८ ॥
अप्रसिद्धस्य पक्षस्य विस्तरेण प्रकाशिकाम् ।
सर्वार्थसिद्धिसट्टीकां करोम्यानन्दवल्लिकाम् ॥ ९ ॥

इह खलु कवितार्किकसिंहः सर्वतन्त्रस्वतन्त्रो वेदान्ताचार्यापरनाम

## भावप्रकाशः

"वेदान्तगुरुमुखार्चितवागीशपदारविन्दमधुपाळिम् ।
श्रीब्रह्मतन्त्रकालिजिन्मणिमालां वन्दिषीय सुमहार्घाम् ॥ २ ॥

## सर्वार्थसिद्धिः

तारकल्पे स्फुरति सुधियां तत्वमुक्ताकलापे
दूराद्वृत्त्या दुरधिगमतां पश्यतां सर्वसिद्ध्यै ।
नातिव्यासव्यतिकरवती नातिसङ्कोचखेदा
वृत्तिस्सेयं विशदरुचिरा कल्प्यतेऽस्माभिरेव ॥ २ ॥

आरिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्त्यादिसिद्ध्यै मङ्गळमाचरन्नर्थाद्वक्ष्यमाणं द्रव्याद्रव्यविभागं प्रतितन्त्रविशेषांश्च संग्र-

## आनन्ददायिनी

श्रीमान् वेङ्कटनाथार्यः तत्वहितपुरुषार्थज्ञानहीनानवलोक्य सञ्जातकारुण्यः तद्रक्षणाय प्राचीनप्रबन्धेषु संक्षिप्तान् विप्रकीर्णांश्च सङ्कलय्य तत्वमुक्ताकलापाख्यपद्यरूपप्रबन्धेन निरूप्य तस्य दुरधिगमतामवलोक्य स्वयमेव व्याख्यास्यन् निर्विघ्नपरिसमाप्तिप्रचयगमनाय शिष्टाचारपरिप्राप्तं गुरुप्रकाशनरूपं मङ्गलमारचय्य शिष्यशिक्षार्थं निबध्नाति—जयतीति ॥

तारकल्पे—नक्षत्रसदृशे । दूराद्वृत्या—नक्षत्रपक्षे दूरस्थित्येत्यर्थः । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति सप्तम्यर्थे पञ्चमी । ग्रन्थपक्षे वृत्तिः—व्याख्या वृत्त्या इति षष्ठी ; वृत्तेर्दूराद्धेतोः—वृत्त्यभावादिति यावत् । यद्वा कर्तरि तृतीया । वृत्त्या—क्रमदूरत्वादित्यर्थः । दुरधिगमत्वं एकत्र अप्राप्तिः अपरत्राज्ञानम् । व्यासो—विस्तरः । व्यतिकरः—सङ्कीर्णता । खेदा—खिद्यमाना कर्मणि घञ् ।

## भावप्रकाशः

श्रीकृष्णब्रह्मतन्त्रात् कलिमथनगुरोर्लब्धवेदान्तसारः
विन्यस्तस्वात्मभारो वरदपदमुखे लक्ष्मणे देशिकेन्द्रे ।
वागीशप्राप्ततुर्यः हयमुखचरणत्राणसेवाधुरीणः
काचित्काचार्यभावं प्रकटयति यतिः नव्यरङ्गेन्द्रनामा ॥ ३ ॥

# श्रीतत्त्वमुक्ताकलापः

लक्ष्मीनेत्रोत्पलश्रीसततपरिचयादेष संवर्धमानो नाभीनाळीकरिङ्गन्मधुकरपटलीदत्तहस्तावलम्बः। अस्माकं संपदोघानविरलतुळसीदामसञ्जात-

## सर्वार्थसिद्धिः

हेण सूचयति—लक्ष्मीति । *[1] 'यज्ञविद्या' इत्यादिना सर्वविद्यानां तादधीन्योक्त्या सा ख्याप्येति लक्ष्मीरादौ संकीर्त्यते । नित्ययुक्तत्वसूचनाय सततपरिचयोक्तिः । नाभीत्यादिना पद्मभुवः कार्यत्वकर्मवश्यत्वसूचनात्ततोऽर्वाचामनीश्वरत्वं कैमुतिकसिद्धम् । अस्माकमिति जीवानां ईश्वरात् अन्योन्यं च भेदः प्रत्यक्त्वं अहंशब्दार्थत्वं च प्रख्याप्यते, तेन स्थालीपुलाकन्यायेन परमतनिरासमप्युदाहरति । संपदोघानिति—*[2] तत्वज्ञानादिकाः स्वप्राप्तिपर्यन्तास्सिद्धिपरम्पराः। अविरळेत्यादिना सत्वाधिकप्रशस्ततमद्रव्याचनीयतयाऽन्येभ्यो व्यावर्तनीयत्वं वर्ण्यते।

## भावप्रकाशः

व्यासो जैमिनिरप्रतीपहृदयावाचार्यशिष्यौ परां
मीमांसां निबबन्धतुः तदनु तां बोधायनाद्या बुधाः ।
व्याख्यन् ब्रह्मनयस्य लक्ष्मणमुनिर्भाष्यादि तत्र व्यधात्
तत्सर्वं सुदृढीचकार निगमान्तार्यो दयन्तामिमे ॥ ४ ॥

*[1] यज्ञविद्येत्यादि—विष्णुपत्न्या एव वाग्देव्या अनुग्रहवशात् व्यासस्य वेदविभागब्रह्मसूत्रमहाभारतकरणमिति ब्रह्मवैवर्ते स्पष्टम् । निरूपितं चैतत् हयशिरोरत्नभूषणे ।

## तत्वमुक्ताकलापः

**भूमा कालिन्दीकान्तिहारी कलयतु वपुषः कालिमा [1]*कैटभारेः ॥ १ ॥**

## सर्वार्थसिद्धिः

**कालिन्दीकान्तिहारीत्यनेन [2]*तद्गुणानां परगुण[3]*तिरस्कारकत्व-मुपलक्ष्यते । कैटभारेर्वपुष इति व्यतिरेकविभक्त्या शुद्धसत्व-मयविग्रहयोगस्तस्य स्वरूपादन्यत्वं च स्थाप्यते । वपुषः कालि-मेति [4]*द्रव्याद्रव्यविभागप्रदर्शनार्थम् । एवं जडाजडाद्यपि**

## भावप्रकाशः

[1]* कैटभारेरिति—एतच्च अनिरुद्धस्य हयशिरोरूपधारणेनेति स्पष्टं मोक्षधर्मे । [2]*तद्गुणानामिति—कैटभारेर्वपुषः कालिमेत्यत्र दिव्य-मङ्गळविग्रहसंबन्धिगुणमात्रप्रदर्शनं भगवता साक्षादसंबद्धानामपि दिव्य-मङ्गळविग्रहसंबन्धिगुणानां संपदोघप्रदत्वे भगवता साक्षात्संबद्धानां ज्ञानशक्त्यादिगुणानां तत् कैमुतिकन्यायेन सिद्ध्यतीति दर्शयितुं भगवद्गुणानामिव दिव्यमङ्गलविग्रहस्याप्युपासनानियतत्वं ख्यापयितुं च । अतश्च तद्गुणानामित्यत्र साक्षात्परम्परया च भगवत्संबन्धिनो गुणा विवक्षिताः । [3]*तिरस्कारकत्वमिति—कैटभारिशब्दघटककैटभ-शब्दयोगार्थोऽप्येनमुत्तम्भयति । अत एव मधुसूदनादिपदत्यागः । तेन 'यं पश्येन्मधुसूदनः' इति हयशिर उपाख्यानानन्तराध्यायस्थवचनानु-सन्धानेन भगवद्यामुनमुनिभिः 'तस्मै नमो मधुजिदङ्घ्रि' इत्यत्र मधु-जिच्छब्देन हयशिरसो निर्देशवत् नात्र कुतो निर्देश इति शङ्का प्रत्युक्ता । चशब्देन तस्य मोक्षसाधनज्ञानविषयता समुच्चीयते । [4]*द्रव्याद्रव्ये-त्यादि—विभागे चात्र द्रव्यगुणेत्याद्यक्षपादसूत्रपरिष्करणं मूलमिति

## तत्वमुक्ताकलापः

**नानासिद्धान्तनीतिश्रमविमलधियोऽनन्तसूरे-स्तनूजो वैश्वामित्रस्य पौत्रो विततमखविधेः पुण्डरीकाक्षसूरेः । श्रुत्वा रामानुजार्यात्सदसदपि ततस्तत्वमुक्ताकलापं व्यातानीद्वेङ्कटेशो वरदगुरुकृपालम्भितोद्दामभूमा ॥ २ ॥**

## सर्वार्थसिद्धिः

यथास्थानमूह्यम् ॥ १ ॥

चिकीर्षितस्य श्रद्धेयत्वाय वक्तृसंप्रदायवैलक्षण्यं दर्शयति–नानेति । सत्–प्रामाणिकं मुमुक्षुभिरुपादेयं च तदन्यत् असत् । सतस्सत्त्वेन असतश्चासत्त्वेन श्रवणमिहेष्टम् । ततः श्रवणादेव हेतोः ॥

## आनन्ददायिनी

यथास्थानमिति—अविरलतुलसीत्यादौ ॥ १ ॥

ननु प्रारिप्सितं विहाय नानासिद्धान्तेत्यादिना स्वमहिमवर्णनमनुचितमित्यत्राह–चिकीर्षितस्येति । सदसतोर्वैपरीत्येन श्रवणे श्रद्धेयत्वं न स्यादित्यत्राह—सत इति। व्यातानीदिति—आशंसायाम् ; कर्तुमाशंसत इत्यर्थः । सङ्कल्पमात्रेण ग्रन्थस्य सिद्धत्वं मत्वा भूतनिर्देशः ॥ २ ॥

## भावप्रकाशः

न्यायपरिशुद्धौ वक्ष्यते । इह केचन दार्शनिकाः बन्धमोक्षव्यवस्थादिसौकर्यमभिसंदधाना अहं प्रत्ययविषयं सगुणमात्मतत्वमाचक्षते । अपरे पुनर्दार्शनिकाः कूटस्थनित्यं परिणामिनित्यमिति द्वैविध्यं परिभाष-

## तत्त्वमुक्ताकलापः

प्रज्ञासूच्यानुविद्धः क्षतिमनधिगतः कर्कशात्तर्कशाणाच्छुद्धो नानापरीक्षास्वशिथिलविहिते मानसूत्रे निबद्धः ।

## सर्वार्थसिद्धिः

प्रबन्धस्य स्वरूपातिशयादपि सुधीभिस्स्वीकार्यत्वमाह- प्रज्ञेति । ज्ञातस्यातिशयाधायिनी धीः प्रज्ञा । कलापस्य अनुविद्धत्वादि प्रत्येकद्वारा । तत्वानां प्रज्ञया अनुविद्धत्वं सम्यङ्निर्धारितत्वम् । रत्नान्तरेषु शाणक्षतिसंभवो न मुक्तासु । प्रमाणतर्कैर्याथात्म्यान्वेषणं परीक्षा । तन्नानात्वं तर्कादिभेदात् । मुक्तासु स्वानुगुणपरिमाणयुक्तं सूत्रं मानसूत्रम् । अन्यत्र प्रमाणमेव सूत्रं तस्य अशिथिलविहितिः—निर्बाधत्वेन विशेषतो

## आनन्ददायिनी

प्रबन्धातिशयवर्णनमपि प्रारिप्सितानुगुणामित्यत्राह—प्रबन्धस्येति—शुद्धो नानापरीक्षास्वित्यत्र 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा' इति स्रग्धरालक्षणे मुनियतिमत्त्वमुक्तमिति तदभावो

## भावप्रकाशः

माणाः कौटस्थ्यभङ्गभिया निर्गुणमात्मतत्वं संगिरन्ते । आहुश्च—

तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते च नानाश्रया प्रकृतिः ॥

इति । तत्र नैयायिका वैशेषिकाश्च विधिकोटिवादिनः । साङ्ख्या योगाश्च निषेधकोटिवादिनः । पूर्वोत्तरमीमांसावृत्तिकारा मीमांसका

## तत्वमुक्ताकलापः

**आतन्वानः प्रकाशं बहुमुखमखिलत्रासवैधुर्यधुर्यो धार्यो हेतु *[1]जयादेस्स्वहृदि सहृदयैस्तत्वमुक्ताकलापः ॥ ३ ॥**

## सर्वार्थसिद्धिः

धीस्थत्वम् । प्रकाशं—आलोकं बोधं च । बहुमुखं सर्वतोदिक्कं सर्वविषयं च । त्रासो—मणिदोषः प्रतिपक्षाद्भीतिश्च । जयादेरित्यादिशब्देन क्वचिदैश्वर्यादेरन्यत्र तत्वानिर्णयस्य च संग्रहः । हृच्छब्दो वक्षश्चित्तं च वदति । सहृदयैस्सारासारविवेचनार्हहृदयवद्भिः । धार्यः क्वचिदाभरणतयाऽन्यत्राप्रमोषेण ॥ ३ ॥

## आनन्ददायिनी

नाशङ्क्यः ; तद्व्याख्याने—'स्वरसन्ध्याप्तसौन्दर्ये यतिभङ्गो न दोषभाक्' इत्यभिधानात् । अत्र स्वरसन्धिलब्धसौन्दर्यसत्त्वान्न दोष इति भावः ॥

## भावप्रकाशः

अपि विधिकोटिवादिन एव । 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म' 'ज्ञोऽत एव' इत्यादिसूत्रैस्तथाऽवगमात् । अत एव शबरस्वामिनाऽपि आत्मनोऽहम्प्रत्ययविषयत्वं विज्ञानाश्रयत्वं चोक्तम् । कुमारिलभट्टैश्च आत्मनः कौटस्थ्यानिराकरणपूर्वकं तद्व्यवस्थापनं कृतम् । शङ्कराचार्यैरपि समन्वयाधिकरणे आत्मनः कूटस्थनित्यताभ्युपगमेन वृत्तिकारमतं निराकृतम् । अतो मीमांसका अपि सगुणात्मवादिन एव । विभागे चास्मिन् ब्रह्मणः परिणामज्ञानं स्वभिन्नगुणवत्ता ज्ञानं च मोक्षसाधनमित्येतदंशद्वयसूचनंफलम् । अत एव 'जन्माद्यस्य यतः' 'परिणामात्' 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'विवक्षितगुणोपपत्तेश्च' इत्यादिसंगतिः । व्यक्तीभविष्यति चेदमुपरिष्टात् । *[1] जयादेरित्यनेन न्यायसिद्धाञ्जनन्यायपरिशुद्ध्यपेक्षया तत्वमुक्ताकलापस्य परमतनिराकरणप्राधान्यं बोध्यते ॥

## तत्वमुक्ताकलापः

शिष्ट्वा

## सर्वार्थसिद्धिः

[1]*नन्वपवर्गसिद्धौ यदन्तरङ्गं तदेव विशदं तदर्थिभिरवगन्तव्यम् । तावदेव शिष्यादिभ्योऽपि प्रवर्तितव्यम्, किमन्यैरिह कीर्त्यमानैरित्यत्राह—शिष्टेति ।

## आनन्ददायिनी

ननु तत्वमुक्ताकलापं व्यातानीत् इति वदता तत्वनिरूपणं विहाय जीवेशज्ञानपूर्वकोपासनाया मुक्तिहेतुत्वप्रतिपादनमनुपपन्नं इत्यत्राह—ननु अपवर्गसिद्धाविति ॥

## भावप्रकाशः

[1]* नन्वपवर्गसिद्धाविति—अयमाशयः—यद्यपि पदार्थानां परस्परव्यावर्तकाकारप्रदर्शनैदम्पर्येण प्रवृत्ते वैशेषिकदर्शने द्रव्यगुणकर्मसामान्यविशेषसमवायरूपेण विभक्तानां पदार्थानां मध्ये कर्मादीनां द्रव्यगुणयोरेवान्तर्भावेन द्रव्यस्यापि गुणत्वेन व्यवहारेण च गुणपदस्थाने अद्रव्यपदं निवेश्य द्रव्यमद्रव्यमित्येव तत्सूत्रं शिक्षणीयमिति व्याससिद्धान्त इति न्यायपरिशुद्धौ निपुणतरमुपपादयिष्यमाणदिशा द्रव्याद्रव्यविभागोऽपि युक्तस्स्यान्नाम ; अथापि न्यायपरिशुद्धौ प्रमेयाध्याये द्रव्याद्रव्यविभागज्ञानस्य साक्षादपवर्गसाधनत्वाभावस्य स्फुटं प्रदर्शनात् श्रुतिसंप्रदायसिद्धं स्वैरेव ग्रन्थान्तरेषु प्रदर्शितं ईशेशितव्यविभागं परावरविभागं च परित्यज्य द्रव्याद्रव्यप्रभेदादिति वक्ष्यमाणविभागकरणमनुचितं ईशेशितव्यपरावरविभागज्ञानस्य अपवर्गान्तरङ्गत्वात् इति ॥

## तत्वमुक्ताकलापः

[1]*जीवेशतत्वप्रमितियुत

## सर्वार्थसिद्धिः

शिष्टा—चोदितेत्यर्थः । जीवेशावेव तत्वे [2]*जीवेशतत्वे । तयोः [3]*प्रमितिरिहागमजन्या । परोपास्तेस्तत्वज्ञानमितिकर्तव्यता । न तु स्वयं साधनम् । प्रमितियुता प्रमितिजानितानुस्मृतिपूर्विकेत्यर्थः । तदाभिप्रायेणोक्तं 'जीवपरमात्मयाथात्म्यज्ञानपूर्वक' इत्यादि ।

## आनन्ददायिनी

शिष्टेति—शासेः रूपं न तु शिषेरित्याह—चोदितेत्यर्थ इति । तत्वप्रमितेर्विनष्टत्वात् तद्युक्तत्वं तज्जन्यत्वं वा न संभवतीत्यत्राह प्रमिति-जन्यानुस्मृतिपूर्विकेति । परविद्यापरत्वं परोपासनाशब्दस्याभिप्रेत्याह—सर्वविद्याभिप्रायमिति—'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्' इति परविद्या-प्रकरणाम्नानमुपलक्षणमिति भावः ॥

## भावप्रकाशः

[1]*जीवेशतत्वप्रमितीति—'पृथगात्मानं प्रेरितारं च मत्वा' 'द्वे विद्ये वेदितव्ये' इत्यादिश्रुतयोऽत्राभिमताः ॥

[2]*जीवेशतत्वे इति–तत्वं द्विविधं ईशरूपमीशितव्यरूपं चेति; 'क्षरात्मानावीशते देव एकः' 'ईशावास्यमिदं सर्वं' 'स ईशोऽस्य जगतो नित्यमेव' इत्यादिश्रुतेरित्याशयः । जिज्ञासाधिकरणान्ते श्रुतप्रकाशिकायां तत्वत्रयाधिकारे चेदं व्यक्तम् । परतन्त्रचेतनो जीवः स्वतन्त्र ईश्वर इति न्यायपरिशुद्धिसूक्तया स्वतन्त्रमस्वतन्त्रामित्यपि विभागस्सूच्यते ॥

[3]*प्रमितिरिहागमजन्येति—एतच्च अदृश्यत्वादिगुणकाधिकरणे भाष्ये स्पष्टम् ॥

## तत्वमुक्ताकलापः

**परोपासना मुक्तिहेतुः शक्यः**

## सर्वार्थसिद्धिः

[1]*परोपासनेति सर्वविद्याभिप्रायम्। परस्य ब्रह्मण उपासनेति वा। शक्य इत्यादि–[2]*न हि द्रव्याद्रव्यविभागाभावे शिष्टोपासनमूलकतत्वप्रतीतिसिद्धिः !तत्वनिरूपणाभावे च तत्वनिर्णयोपयुक्तयोस्त-

## आनन्ददायिनी

योगवृत्त्या सर्वविद्यापरत्वमाह—परस्येति। तत्तदिति—जीवेशपरत्वे

## भावप्रकाशः

[1]*परोपासनेति —उपासनैव मोक्षसाधनमिति प्राचां वृत्तिकाराणां सम्मतमित्यन्यत्र स्पष्टम्। अत्र उपासकस्य प्रपदनमङ्गकोटौ। अशक्तानां तूपासनास्थाने इति वेदार्थसंग्रहतात्पर्यदीपिकादौ। एतेन— ईशेशितव्यपरावरविभागज्ञानस्यापि उपासाद्वारैवोपयोगः न तु साक्षादिति सूचितम्॥

*[2] नहीत्यादि। अयमाशयः—ईशेशितव्यपरावरविभागज्ञानस्य किं रूपमपवर्गसिद्धावन्तरङ्गत्वं साक्षादुपायत्वं आहो स्वित्परम्परयोपकारकत्वम्? नाद्यः भक्तिप्रपत्तिव्यतिरिक्तविभागज्ञानस्योपायताया अप्रामाणिकत्वात्। द्वितीये तु जीवस्य परब्रह्मणोत्यन्तनिकर्षज्ञानसंपादनमुखेन भगवद्भक्तिजननादिद्वारा तस्योपयोगवत् द्रव्याद्रव्यविभागज्ञानस्यापि ब्रह्मगुणानां ब्रह्मणश्च तात्विकपरस्परभेदवत्त्वादिज्ञानसंपादनमुखेन प्रतिनियतगुणवद्ब्रह्मज्ञानस्यैव मोक्षोपायत्वस्थिरीकरणमूलकभगवद्भक्त्यादिजननात्मकोपकारकत्वस्य तुल्यत्वात्। असंप्रज्ञातसमाधावपि 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुत्युक्तषाड्गुण्य-

## सर्वार्थसिद्धिः

**क्वानुमानयोर्व्याप्तिः शङ्काकळङ्किता स्यात् । परोक्तानुमानानामन्यतरासिद्ध्यनैकान्तिकत्वाद्युद्भावनं च कथं स्यात्? परो वा**

## भावप्रकाशः

दिव्यमङ्गलविग्रहविशिष्टनिर्गुणवासुदेवविषयकत्वस्य 'संप्रज्ञातस्थितिमतिगते निर्विकल्पे समाधौ' इत्यादिश्लोके व्यक्तत्वात् । सूत्रकारश्च– 'इतरे त्वर्थसामान्यात्' 'आनन्दादयः प्रधानस्य' इति सूत्रद्वयेन स्वरूपनिरूपकचिदचिद्व्यावर्तकगुणवत्तायाः मोक्षोपायज्ञाननैयत्यं सिद्धान्तयामास । वपुषःकाळिमेत्यनेन दिव्यमङ्गलविग्रहस्य सर्वविद्यानुयायित्वव्यञ्जनेन अद्रव्यमध्ये शब्दस्पर्शरूपरसगन्धानां तथात्वस्य सूचनात् । 'सर्वं खल्विदं ब्रह्मेत्यादि . . अनादरः' इत्यन्तशाण्डिल्यविद्यासन्दर्भे दिव्यमङ्गलविग्रहस्य तद्गुणानां च विषयत्वस्य सर्वत्रप्रसिद्ध्यधिकरणभाष्ये व्यक्तमुपपादनात् । दहरविद्यायां च 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यत्र 'अस्मिन् कामास्समाहिता.' इत्यत्रैवोक्तगुणानां विवक्षा 'तस्मिन् यदन्तः इति कामव्यपदेशः' इति वाक्यग्रन्थसिद्धा । तत्र शक्तेरपहतपाप्मत्वादौ संयोगस्य सर्वविद्यानुयायिन्यनन्तत्वादौ निर्गुणश्रुतौ निषेध्यतया सत्वरजस्तमसां च ज्ञेयता भाष्यादिनिष्णातानां सुगमा । जडाजडविभागे च स्वयंप्रकाशत्वज्ञानस्य अचिद्विलक्षणत्वज्ञापनमुखेन पारलौकिकभोगार्थप्रवृत्तिप्रतिबन्धकनिवृत्तिसंपादकता 'प्रकृत्यात्मभ्रान्तिर्गलति चिदचिल्लक्षणधिया' इति सूक्तिसिद्धा । ब्रह्मणि स्वयंप्रकाशत्वस्य सर्वविद्यानुयायिता 'ज्ञानत्वं ज्ञातृभावात् स्वरबहुलतया स्वप्रकाशत्वतश्च' इत्यनेन निर्णीता । प्रत्यक्पराग्विभागे च अहन्त्वरूपप्रत्यक्त्वज्ञानस्य 'अहमर्थो न चेदात्मा' इत्यादिभाष्योदाहृतसूक्तिप्रतिपादितदिशा मोक्षार्थप्रवृत्त्युपयोगित्वं धर्मभूतज्ञानस्य पराक्त्वेन धर्मिभिन्नत्वज्ञानसंपादनमुखेन चोपयोग इत्यादिकं स्वयमूह्यम् ॥

## तत्वमुक्ताकलापः

**तत्तत्प्रकारावगतिविरहिभिर्नैव याथात्म्यबोधः । तेते चार्था विदध्युः कुमतिविरचिताः तत्वबोधोप-**

## सर्वार्थसिद्धिः

**कथमस्मत्सिद्धान्तानभिज्ञः कथायामस्माभिरधिकुर्यात्? पर-कल्पितार्थभङ्गेन तदहंकारखण्डनं च तत्वाध्यवसायसंरक्षणार्थम् । तत्तदिति प्रस्तुतौ जीवेशौ गृह्येते । अथवा तत्तत्प्रकृत्यादि-प्रकारबोधाभावे तत्प्रतिसंबन्धिकं तयोरपि याथात्म्यं नावगम्येत । ते ते चार्थाः–[1]*ब्रह्मविवर्तपरिणामभिन्नाभिन्नत्वादयः । कुमति-विरचिताः कुदृष्टिभिः कल्पिताः भ्रान्तिविजृम्भिता इति वा ।**

## आनन्ददायिनी

वीप्साया अभावात् द्वन्द्वो वाच्यः ; स न युक्तः एकशेषप्रसङ्गादित्य-भिप्रायेणाह—अथवा इति—केचित्तु -- 'तत्तदिति प्रकृतौ जीवेशौ गृह्येते' इत्यस्यायमर्थः—तत्तदित्यत्र प्रथमतच्छब्देन जीवेशौ गृह्येते । तयोः तत्प्रकारः–तत्तत्प्रकारः ; व्यावर्तकत्वेन श्रुतिप्रतिपन्नप्रकारः इति न वीप्साद्वन्द्वौ ; अपि तु षष्ठीतत्पुरुषः इत्याहुः । मायिनो विवर्तपक्षः । भास्करस्य परिणामः । यादवस्य भेदाभेदौ । आदिशब्देनासत्कार्य-

## भावप्रकाशः

[1]*ब्रह्मविवर्तेत्यादि–उपादानविषमसत्ताकोऽन्यथाभावो विवर्तः । तत्समसत्ताकोऽन्यथाभावः परिणामः । अत्र परिणामपक्षः शङ्कराचार्ये-भ्योऽपि प्राचीनस्य भर्तृप्रपञ्चस्य अर्वाचीनानां यादवप्रकाशानां च संमत इत्युत्तरत्र व्यक्तीभविष्यति । विवर्तवादः ब्रह्मस्वरूपपरिणामवादश्च दूषितौ श्लोकवार्तिके भट्टैः ॥

## तत्वमुक्ताकलापः

**रोधम् तस्मान्निर्धूतसर्वप्रतिमतविमतिं साधये सर्वमर्थम् ॥ ४ ॥**

**आवापोद्वापतस्स्युः कतिकति कविधीचित्रवत्तत्तदर्थेष्वानन्त्यात्**

## सर्वार्थसिद्धिः

अत एव कुमतिभिरर्थ्यन्त इत्यर्थाः न तु परमार्थाः । प्रतिमतैर्विमतिर्विवादः तत्प्रसूता वा विरुद्धबुद्धिः । सर्वमर्थ—मुमुक्षुभिर्ज्ञातव्यं परम्परयेत्यर्थः ॥ ४ ॥

तथापि निर्धूतसर्वप्रतिमतविमतिं सर्वमर्थं साधय इत्यशक्योक्तिः त्रैकालिकसिद्धान्तभेदानन्त्यात्, इत्याशङ्कोद्धाटनपूर्वकं प्रयोजकशिक्षया कृत्स्नानिष्टनिरासः कृत्स्नाभीष्टसाधनं च शक्यमिति स्थापयति—आवापेति । एकस्मिन्नेव हि दर्शने व्याख्यातृभेदात्केषां चित्प्रमेयानां आवापोद्वापौ दृश्येते यत एकदेशिव्यपदेशः । कविधीचित्रवत् कवीनां धीभिः कृतं काव्यादिकं कविधीचित्रम् । तद्वन्मतभेदा अप्यनन्तास्संभवन्ति । तत्त-

## आनन्ददायिनी

वादाभिव्यक्तिवादक्षणिकत्ववादादयोऽभिमताः । तत्वबोधोपरोधकत्वमर्थानां न युक्तं इत्यत्राह प्रतिमतैरिति ॥ ४ ॥

ननु तत्वनिरूपणं प्रस्तुत्य विशेषदर्शनस्य संशयादिनिवर्तकत्वबोधस्य तत्तत्कल्पनाधीनभ्रमनिवर्तकत्वोक्तिरनवसरग्रस्तेत्यत्राह—तथापीति । ननु अस्तिनास्तीत्यस्तिनास्तिशब्दावुच्येते । तयोर्द्वैरूप्येणान-

## तत्वमुक्ताकलापः

**अस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः।**
**तत्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान्**
**समस्तान् पुंस्त्वे तत्वेन दृष्टे पुनरपि न खलु**
**प्राणिता स्थाणुतादिः ॥ ५ ॥**

**द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्व-**

## सर्वार्थसिद्धिः

दर्थेष्वस्तिनास्त्योरानन्त्यादित्यन्वयः। अस्तिनास्त्योरिति प्रयो-गपरम्। कुहना—छद्म तत्सम्बन्धिन्यो युक्तयः कुहनायुक्तयः हेत्वाभासच्छलजातिरूपाः। ताभिः कान्ताः सम्यक्त्वेनैव भाताः। तत्वालोकः यथार्थाध्यवसायः। प्रकृतशङ्कानिरासार्थं अपेक्षणीयान्तराभावात्सहसेत्युक्तम्। निस्सम इति निरवधिक-त्वोपलक्षणम्। प्रतिरोधबाधरहित इत्यर्थः। उक्तस्थापकं त्र्यप्यन्तार्थविशेषव्यञ्जकमप्यर्थान्तरं न्यस्यति—पुंस्त्व इति। पुनर्न प्राणिता संशयविपर्ययसामग्रीलोपान्न भासेतेत्यर्थः ॥ ५ ॥

अथ निरूप्यमर्थजातं साधर्म्यवैधर्म्यभेदैस्संगृह्य विभज्य च निर्दिशति—द्रव्येति। अत्र तत्वमिति पदार्थमात्रोक्तिः। मितं—

## आनन्ददायिनी

न्त्याभावादित्यत आह—अस्तिनास्त्योरिति—प्रयोगाणां बहुत्वाद्विषय-विषयिभावसंबन्धेनार्थगतत्वमिति भावः ॥ ५ ॥

ननु निरूपणे प्रवृत्तस्य तत्वविभागकरणमसङ्गतमित्यत्राह—अथ निरूप्यामिति। निरूपणसौकर्याय विभागः कृत इति भावः।

## सर्वार्थसिद्धिः

[1]*प्रमितम् । तथात्वं च सर्वसाधारणम् । तदपि हि सामान्यतः प्रमितम् । अन्ततस्स्वपरनिर्वाहान्नानवस्था । इदं च साधर्म्योक्ति-मात्रम्; व्यवच्छेद्याभावेन लक्षणत्वासिद्धेरित्येके । निर्दिष्टव्यापित्वे सति [2]*तदन्यवृत्तिरहितत्वात् लक्षणमपि स्यादित्यन्ये । बाह्यकुदृष्टिव्यावृत्तास्तद्विदः । अत्र तत्तदन्यरूपेण विभागेषु न

## आनन्ददायिनी

तदपीति—प्रमितत्वमित्यर्थः । ननु प्रमितत्वेऽपि प्रमितत्वे अनवस्थेत्यत्राह—अन्तत इति । ननु प्रमितत्वस्य लक्षणत्वं नोपपद्यते इतराप्रसिद्धावितरभेदा-साधकत्वादित्यत्राह—इदं चेति । व्यावर्तकत्वाभावेऽपि व्यवहारप्रयोजकत्वा-भिप्रायेणाह—निर्दिष्टेति—निर्दिष्टं—लक्ष्यम् । लक्ष्यनिष्ठात्यन्ताभावा-प्रतियोगित्वं तद्व्यापित्वम् । तदन्यवृत्तित्वनिषेधश्च निर्दिष्टत्वरूपलक्ष्य-तावच्छेदकव्याप्यत्वम् । तेन तदन्यस्याप्रसिद्ध्या तत्प्रयुक्तदोषानवकाशः । केचित्तु—निर्दिष्टं—स्वलक्ष्यम् । स्वलक्ष्यव्यापकत्वे सति तदन्य-निष्ठत्वं तत्तदतिव्यापकेषु प्रसिद्धं प्रकृते निषिध्यते; यथा स्वोपादान-गोचरजन्यकृतिजन्यान्यत्वमित्यत्रेत्याहुः ॥

## भावप्रकाशः

* [1] प्रमितमिति — द्रव्याद्रव्ययोरेकजातीयप्रमाविषयत्वोक्त्या निर्विकल्पकमेकमेव प्रमा न तु विकल्पः । निर्विकल्पके धर्मी भासते सविकल्पके च धर्माः । अतो धर्मिमात्रमेव परमार्थसदिति वैभाषिक-कुदृतेर्नावकाश इति सूचितम् । विवेचयिष्यते चेदमुपरिष्टात् । एतन्नयायेन च न ब्रह्मगुणापलापइति स्पष्टं निर्विकल्पकवादे ॥

*[2] तदन्यवृत्तिरहितत्वादिति—सिद्धान्ते भावान्तराभावपक्षाङ्गी-कारेण तदन्यस्याप्रसिद्धावपि न क्षतिः । विवेचयिष्यते चैतदग्रे ॥

## तत्वमुक्ताकलापः

माहुः*[1] द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्य-

## सर्वार्थसिद्धिः

नीलपीतादिवत् कोट्यन्तरावकाशः। *[2] द्रव्यत्वात्यन्ताभाववत्त्वरूपेण तदन्यत्वस्य विवक्षितत्वात्। द्रव्यलक्षणं वक्ष्यति। जडमिह स्वगोचरज्ञानत एव प्रकाशमानं।

## आनन्ददायिनी

ननु द्रव्यान्यत्वं द्रव्यस्याप्यस्ति घटस्य पटादन्यत्वात्। तथाच तदन्यरूपेण विभागे नीलपीतादिवत् कोट्यन्तरमस्त्येवेत्यत आह—द्रव्यत्वात्यन्ताभाववत्त्वरूपेणेति। स्वगोचरं स्वभिन्नमेव; भेदनिबन्धनत्वाद्विषयविषयिभावस्येति भावः ॥ ६ ॥

इति द्रव्याद्रव्यविभागः.

---

## भावप्रकाशः

*[1] द्रव्यं द्वेधेति—अथवा द्रव्यं द्विविधं आत्मानात्मभेदात्। त्रेधा वा भोक्तृभोग्यनियन्तृश्रुत्यनुसारात्। षोढा वा—त्रिगुणकालजीवेश्वरशुद्धसत्वमतिभेदात्। एकं वा इतरविशिष्टं प्राधान्यतः परं ब्रह्म; मुमुक्षुभिः प्रकर्षेण मेयत्वश्रुतेः इति न्यायपरिशुद्धिः। अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्वं। तदन्तर्गतं च सर्वं द्रव्याद्रव्यात्मना विभक्तं इति न्यायसिद्धाञ्जनम्।

*[2] द्रव्यत्वात्यन्ताभाववत्त्वरूपेणेति—एतेन प्रतियोगिसत्ताविरोधित्वं सूचितम्। 'वस्त्वन्तरगतासाधारणविरोधिधर्म एव समानाधिकरणव्यधिकरणनिषेधभेदेनान्योन्याभावोऽत्यन्ताभावश्च' इति तात्पर्यचन्द्रिकासूक्तिरत्रानुसन्धेया ॥

## तत्वमुक्ताकलापः

**मव्यक्तकालौ । अन्त्यं प्रत्यक्पराक्च प्रथममुभ-
यथा तत्र जीवेशभेदान्नित्या भूतिर्मतिश्चेत्यपरमपि
जडामादिमां केचिदाहुः ॥ ६ ॥ तत्र द्रव्यं दशावत्**

## सर्वार्थसिद्धिः

अव्यक्तशब्देन व्यक्तमपि लक्ष्यते। तदनन्यद्रव्यत्वज्ञापनार्थं। प्रत्यक्—स्वस्मै भासमानं। पराक्—परस्मा एव भासमानं। भूति-र्विभूति—स्वातिशयाधानार्थं नियन्तव्यद्रव्यं। नित्या भूतिरिति नित्यप्राचुर्यतश्शुद्धसत्वमुपलक्ष्यते। इह आदिमां—नित्यभूतिं केचिज्जडामाहुरिति सयूथ्यमतभेदोक्तिः ॥ ६ ॥

इति द्रव्याद्रव्यविभागः.

---

प्रस्तुतस्य द्रव्यस्य तदवान्तरभेदानां च लक्षणमाह—तत्रेति तत्र—द्रव्याद्रव्ययोर्मध्ये द्रव्यं दशावत् *[1] विकारधर्मवदित्यर्थः।

## आनन्ददायिनी

ननु द्रव्यस्यावस्थायोगित्वकथनमयुक्तं द्रव्यादिनिरूपणस्यैव कर्तव्यत्वादित्यभिप्रायेणाह—प्रस्तुतस्येति—। दशाशब्दस्यावयवार्थत्वे नित्येष्वव्याप्तिरित्यत्राह—विकारधर्मवदित्यर्थ इति— धर्मवत्त्वं लक्षण-मित्युक्ते अभावरूपधर्मवति गुणेऽतिव्याप्तिः। भावरूपधर्मवत्त्वमित्युक्ते रूपत्वादिजातिमति पुनरप्यतिव्याप्तिः। अत उक्तं विकारधर्मवत्त्वमिति।

## भावप्रकाशः

*[1] विकारधर्मवदिति—अपृथक्सिद्धिसंबन्धेन आगन्तुकधर्मवदित्यर्थः।

## सर्वार्थसिद्धिः

ईश्वरादावपि मूर्तसंयोगा *[1]आगन्तुकास्सन्ति।

## आनन्ददायिनी

ननु ज्ञाततावादिमते पुनरप्यतिव्याप्तिः; एकदेशिभिः शब्दादावपि संख्याङ्गीकाराच्छक्त्यङ्गीकाराच्चातिव्याप्तिः। न च गुणादौ शक्त्यभावः; कारणत्वानुरोधेन तदावश्यकत्वादिति चेदुच्यते—अगन्तुकधर्मवत्त्वमित्यर्थः। ज्ञाततातिरिक्तधर्म्यनन्तरकालीनोत्पत्तिकधर्मत्वमागन्तुकत्वं विवक्षितं। यद्यपि द्वित्वरूपा संख्या तादृशी; तथाऽपि सा सिद्धान्ते नास्त्येव। एकत्वं तु धर्मिणा सहैवोत्पद्यते इति धर्म्यनन्तरकालीनोत्पत्तिर्नास्त्येव। तथा शक्तिरपि सहजा; आधेया तु गुणे न; मानाभावात्। सहजाऽपि प्रतिबन्धे गुणादौ न विद्यते; तदपगमे धर्म्यनन्तरमुत्पद्यते इति तथेति शङ्का गुणस्यैवापगमोत्पत्तिभ्यां परिहार्या। यद्यपि—यादृशादेव करतलानलसंयोगाद्दाहः तादृशादेव मणिसमवधाने न दाह इति शक्तेरेवोत्पत्त्यपगमौ; तथापि प्रतिबन्धकाभावधर्म्यतिरिक्त विशेषकारणतावच्छेदकावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकावच्छिन्नधर्म्यसमानकालीनस्ववर्तमानव्यवहारविषयताप्रयोजकधर्मानवच्छिन्नधर्मत्वं विवक्षितमिति न दोषः। प्रतिबन्धकाभावश्च धर्मी च प्रतिबन्धकाभावधर्मिणौ ताभ्यामतिरिक्ते वस्तुनि विशेषकारणतावच्छेदकावच्छिन्ना कारणता तत्प्रतियोगिककार्यतावच्छेदकावच्छिन्न इति धर्मविशेषणं। धर्म्यसमानेत्यारभ्यावच्छिन्नेत्यन्तमपि धर्मविशेषणं। आद्येन शक्तिमादायातिप्रसङ्गनिरासः; धमर्यनन्तरकालोत्पन्नशक्तेः प्रतिबन्धकाभावधर्मिभ्यां विशेषकारणाभ्यामुत्पन्नत्वात्। द्वितीयेन ज्ञाततामादायातिप्रसङ्ग-

## भावप्रकाशः

*[1]आगन्तुकास्सन्तीति—धर्मधर्मिणोरत्यन्तभेदस्य साधयिष्यमाण-

## सर्वार्थसिद्धिः

संचरति हि मूर्ते तस्य विभुनश्च *[1]संयोगा विद्यन्त एव । प्रकृतिशब्दः प्राग्वद्विकृतीनामप्युपलक्षकः । त्रिगुणशब्दाभिलप्यद्रव्यमित्यर्थः । तत्स्वगुणैरेव लक्षयति—गुणैरित्यादिना । इह—अव्यक्तकालयोर्मध्ये ।

## आनन्ददायिनी

निरासः ; ज्ञातताया अतीतधमर्यादौ स्ववर्तमानव्यवहारप्रयोजकधर्माविच्छिन्नत्वात् । केचित्तु संयोग एव विकार इत्याहुः । अन्यतरकर्म संयोगहेतुरस्तीत्याह—संचरति हीति । लक्ष्यतावच्छेदकमाह—त्रिगुणशब्दाभिलप्येति । ननु सत्वपूर्वैरित्यत्र सत्वविशिष्टरजस्तमोवत्त्वं लक्षणमिति भाति; तच्चायुक्तं ; रजस्तमसोरेव प्रत्येकं लक्षणत्वसंभवात् । नापि प्रत्येकं

## भावप्रकाशः

तया धर्माणामागन्तुकत्वेऽपि धर्मिण ईश्वरादेर्नित्यत्वानपगमात् ।

'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्'

इति परिभाषामवलम्बमानानां सांख्यानां योगानां च कूटस्थनित्यं परिणामिनित्यमिति विभागो निर्मूल एव । अन्यथा तन्मते पुरुषाभ्युपगम एव निरर्थक आपद्येत इति भावः । *[1]संयोगा विद्यन्त एव इति—

'अप्राप्तयोस्तु या प्राप्तिस्सैव संयोग ईरितः'

इति तु परिभाषामात्रं । अत एव तेषां आकाशादिषु मूर्तसंयोगस्य एकदेशिभिः विभुद्वयसंयोगस्य च अङ्गीकारो युज्यत इति भावः ।

अचिज्जीवस्वधीद्वारा स्वरूपेण च सर्वगे ।
अवस्थास्सन्त्यदोषास्ते निर्विकारोक्तिरन्यतः ॥

इति तत्वटीकासूक्तिरत्रानुसन्धेया ॥

## तत्वमुक्ताकलापः

**प्रकृतिरिह गुणैस्सत्त्वपूर्वैरुपेता कालोऽब्दाद्याकृति-स्स्यादणुरवगतिमान् जीव ईशोऽन्य आत्मा।संप्रोक्ता**

## सर्वार्थसिद्धिः

**त्रिगुणस्य रजस्तमसी पृथग्लक्षणे; सत्वं तु बन्धकत्वेन विशेषितं। कालोब्दाद्याकृतिरिति उपाधिकृतविभागैरब्दादिव्यवहारविषय इत्यर्थः। तत्तत्परिणामवान् काल इति पक्षोऽपि वक्ष्यते। ईश्वरात् अचेतनादणोश्च व्यवच्छेदाय अणुरवगतिमानित्युक्तं। ईशोन्य आत्मा अणुव्यतिरिक्तश्चेतन इत्यर्थः। जीवे विभुत्वोक्तिः ईश्वरे अणुत्वोक्तिश्च अन्यपरेति सूत्राद्युक्तं। संप्रोक्ता तत्परैश्शास्त्रैरिति शेषः।**

## आनन्ददायिनी.

सत्वस्य; शुद्धसत्वेऽतिव्याप्तेः। किञ्च सत्वपूर्वैरिति बहुवचनानुपपत्तिः अन्यपदार्थबहुत्वाभावात् इति चेत्; तत्राह—त्रिगुणस्येत्यादिना। 'सर्वादीनि सर्वनामानि' इत्यत्रेव सत्वस्याप्यन्यपदार्थान्तर्भावान्न बहुवचनानुपपत्तिरिति भावः। कालस्य विकाराभावपक्ष आह—उपाधीति। आकृतिशब्दस्य 'हूतिराकारणाह्वाने' इत्यादौ व्यवहारे आङ्पूर्वस्य कृञोऽनुशासनाद्व्यवहारार्थत्वं वक्तुं युक्तः व्यवहारविषयत्वमब्दत्वाद्युपाधेरप्यस्तीत्याह—तत्तदिति। ईश्वरादिति—अणुत्वेनेश्वरव्यावृत्तिः। अवगतिमानित्यचेतनव्यावृत्तिः। लक्ष्म्या ईश्वरकोटित्वान्नाव्याप्तिः। अन्य इत्यस्य जीवलक्षणलक्षितादन्यत्वोक्तौ तदन्तर्गतावगतिमद्विशेषणवैयर्थ्यमित्याह—अणुव्यतिरिक्तश्चेतन इति। जीवे इति—'अणोरणीयान् महतो महीयान्' 'स चानन्त्याय कल्पते' इत्यादेः; । 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' 'निचाय्यत्वादेवं व्योमवच्च' 'उत्क्रान्तिगत्या-

## तत्वमुक्ताकलापः

**नित्यभूतिस्त्रिगुणसमधिका सत्वयुक्ता तथैव ज्ञातु-**
**र्ज्ञेयावभासो मतिरिति कथितं संग्रहाद्द्रव्यलक्ष्म॥७**

## सर्वार्थसिद्धिः

त्रिगुणसमाधिका त्रिगुणद्रव्यादन्या। सत्वयुक्ता सत्वाख्यगु-णविशेषवती। त्रिगुणान्यत्वं कालादेरप्यस्तीति तद्व्यवच्छे-दोऽनेन कृतः। एतावन्मात्रेण त्रिगुणसाधर्म्यमित्यभिप्रायेण तथैवेत्युक्तं; रजस्तमस्समानाधिकरणसत्वस्यापि *[1]तत्र सत्वात्। 'निर्मलत्वात्प्रकाशकं' इत्यादि समानमिति वा। ज्ञातुर्ज्ञेयावभासो मतिः—अहमिदं जानामीत्यहमर्थाश्रयतया *[2] सिध्यन् सकर्मकः प्रकाशो मतिरित्यर्थः। तादृशावस्थयापि तद्विशिष्टं गृह्यते। द्रव्यलक्ष्म सामान्यतो विशेषतश्चेति शेषः॥ ७॥

इति द्रव्यादीनां लक्षणानि.

---

## आनन्ददायिनी

गतीनां' इत्यादौ उपासनार्थमौपाधिकाणुत्वादिकमुक्तमिति भावः। अहमर्थाश्रयतया इति—सकर्मकःप्रकाशो मतिरिति लक्षणं। तदर्थस्तु—स्वव्यतिरिक्तप्रकाशनियततत्कत्वं। नचात्मादौ स्वव्यतिरिक्तप्रत्यक्त्वा-दिप्रकाशकत्वादतिव्याप्तिः; आत्मवदेव तस्यापि स्वेनैव प्रकाशात्। अत एव शतदूषण्यां तेषां धर्माणां ज्ञानदृष्टान्तेन स्वप्रकाशतोक्तिः॥७॥

इति द्रव्यादीनां लक्षणानि.

---

## भावप्रकाशः

*[1] तत्र—त्रिगुणे*[2] सिध्यन्निति—एतेन मूले ज्ञातुरिति न लक्ष-णान्तः पाति; किंतु धर्मिव्यतिरिक्तधर्मभूतज्ञानसद्भावे प्रमाणसद्भावबो-धनार्थम्। लक्षणं तु स्वभिन्नविषयसंयुक्तत्वमेवेति द्योत्यते॥

## तत्वमुक्ताकलापः

***[1]एकार्थप्रत्यभिज्ञा भवति दृढतरा दर्शनस्पर्शनाभ्यां**

## सर्वार्थसिद्धिः

***[2] ननु द्रव्यमद्रव्यमित्युभयमसिद्धं,**

## आनन्ददायिनी

नन्ववस्थाश्रयो द्रव्यमिति लक्षणमसंगतं; धर्मधर्म्यभावात् इत्याक्षेपसंगतिं दर्शयति—नन्विति—चत्वारो हि बौद्धाः—वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदात्। तत्र वैभाषिका अपि द्विविधाः–

## भावप्रकाशः

ज्ञानमेकमेव तत्वमिति योगाचाराः। ज्ञानज्ञेयौ द्वौ न तु ज्ञाता इति वैभाषिकाः। इदंच मतद्वयं प्रमाणं प्रमेयं प्रमाता प्रमितिरिति चतुर्धा विभागेन परिष्करणीयमिति तात्पर्येण प्रमाणप्रमेयेत्यादि सूत्रयताऽक्षपादेन 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इति यत्प्रमेयपरीक्षासूत्रमारब्धं तद्द्रव्यपरीक्षासूत्रमपि भवतीति तदेव ज्ञेयं द्विविधं धर्मो धर्मी चेति वैभाषिकादिमतपरिष्करणायापि प्रभवतीति व्यञ्जयति— *[1] मूले एकार्थप्रत्यभिज्ञा; दर्शनस्पर्शनाभ्यां; इति पदद्वयेन। ननु द्रव्याद्रव्यविभागः परब्रह्मणा साक्षात्परम्परया च संबद्धानां गुणानां तदाश्रयस्य च अत्यन्तभेदज्ञापनायेति न युज्यते; लोके रूपादिप्रत्यक्षे दण्डकुण्डलादि प्रत्यक्ष इव पृथग्विभिन्नवस्तुद्वयभानाननुभवेन रूपादिप्रत्यक्षस्योभयविषयकत्वासिद्ध्या रूपाद्यतिरिक्तवस्तुन एवाभावेन गुणानां तदाश्रयस्य च भेदकथाया एवाभावादित्याशयेन शङ्कते–*[2] नन्विति।

## सर्वार्थसिद्धिः

**रूपादेराश्रयाभावात्। रूपादितया विकल्प्यमानस्यैकस्यैव वा सत्त्वादिति पक्षद्वयमेकेनैव प्रतिक्षिपति—एकार्थेति। एवमाहु-**

## आनन्ददायिनी

वात्सीपुत्राः अन्ये च। तत्र वात्सीपुत्राः—रूपरसगन्धस्पर्शशब्दपञ्चक-व्यतिरेकेण धर्मी नास्ति। ते च चक्षुराद्येकैकेन्द्रियग्राह्याः। त एव समुदिताः पृथिवीत्वेन एकैकह्रासेन जलादित्वेन व्यवह्रियन्त इति वदन्ति। अन्ये वैभाषिकाः—शब्दस्तावन्न तत्वान्तरं। अपि तु रूपादिष्वेव केचन शब्दात्मानः इति वदन्ति। अपरे वैभाषिकाः सौत्रान्तिकैकदेशिनश्च एकस्य रूपादेः शब्दात्मकत्वे श्रोत्रग्राह्यत्वं चक्षुर्ग्राह्यत्वं चेति ग्राहकभेदाधीनभेदव्यवहार आवश्यकः। नच केचन रूपादयः श्रोत्रग्राह्याः शब्दात्मानः; तथा सति सर्वेषां रूपाद्यन्यतमत्वप्रसङ्गेन चत्वार इत्यस्याभावप्रसङ्गात्। नच पञ्चाप्यङ्गीकार्याः। तथा सत्यपि ग्राहकभेदं विना निर्वाहासंभवात्तदावश्यकत्वे दर्पणकृपाणादिव्यञ्जकभेदाद्यथा मुखं नीलत्वदीर्घत्वारोपवद्भासते तथा धर्म्यैव रूपरसादिरूपेण भासते इति धर्मा न सन्ति धर्म्येक एवेत्याहुः॥ सौत्रान्तिकमते धर्मिणोऽनुमेयत्वेऽपि इन्द्रियजन्यवृत्तौ तदाकारार्पणात् ग्राहकभेदेन तद्भेद इत्यवगन्तव्यम्। [1] योगाचारस्य तु बुद्धिव्यतिरेकेण किमपि नास्तीति मतं। माध्यमिकस्य तु सर्वं शून्यमिति मतम्॥ तत्र वैभाषिकसौत्रान्तिकमतद्वयमनुवदति—रूपादेरिति। निराधाराः धर्मा इत्यर्थः। रूपादितयेति धर्म्येक एवेति पक्षः। रूपत्वेन रसत्वेन च विकल्प्यमानस्य गृह्यमाणस्येत्यर्थः। एवमाहुरिति

[1] योगाचारमाध्यमिकमतयोरनुवादः क. ख. पुस्तकयोर्न दृश्यते।

## सर्वार्थसिद्धिः

वैभाषिकाः—"निराधारा निर्धर्मकाश्च रूपादयश्चत्वारः पदार्थाः। ते चक्षुराद्यैकैकेन्द्रियग्राह्याः" इति.

*[1] वात्सीपुत्रास्तु शब्दादीन् पञ्च वैभाषिका विदुः।
शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन् ॥

तत्र निराधारत्वं तावत्प्रतिसन्धानविशेषेण निरस्यति। अस्ति हि दृष्टमेव स्पृशामीति *[2] द्वीन्द्रियग्राह्यवस्तुविषया धीः।

## आनन्ददायिनी

—तत्वसा(ग)रादिग्रन्थ इति शेषः। निराधारा इति धर्मपक्षः। निर्द्धर्मका इति धर्मिपक्षः। केचित्तु—रूपादय इत्युक्त्या धर्मपक्ष एव। धर्मिपक्षस्तु—

अत्थि रूआइएण एअं घयत्ति अक्खभेआदो।

इत्यादिभिरुक्त उपलक्ष्य इत्याहुः।

अस्ति रूपादिकेन एकं गृह्यते अक्षभेदात्। इति तदर्थः॥

वत्सी वैभाषिकमाता। वत्सीपुत्र(छात्राः)संबन्धिनो वात्सीपुत्राः। निराधारत्वं तावदिति— निर्द्धर्मकत्वं 'धर्मोनिर्धर्मकश्चेत्' इत्युत्तरत्र निरासिष्यते। अनन्यथासिद्ध(प्रमाणभूत)प्रतीतेरेवार्थसाधकत्वात् ता-

## भावप्रकाशः

*[1] वात्सीपुत्रास्त्विति—एत एव नित्यात्मतत्ववादिनः इति तत्वसंग्रहव्याख्यायां पञ्जिकायां ३३६ तमश्लोके स्फुटम्।

*[2] द्वीन्द्रियग्राह्यवस्तुविषयेति—एतेन मूले दर्शनस्पर्शनाभ्या-मित्यत्र विषयतारूपं वैशिष्ट्यं तृतीयार्थः; तस्य एकार्थप्रत्यभिज्ञेत्यत्र

## सर्वार्थसिद्धिः

सा तावन्न संशयात्मा, विरुद्धानियतकोट्यनवलम्बात् । न च विपर्ययः,*[1] स्वारसिकबाधादृष्टेः*[2] अनन्यथासिद्धेश्च । तदेतदुभयं दृढतरेति संगृहीतं । ग्रहणमिति वक्तव्ये प्रत्यभिज्ञेत्युक्तिर्ज्ञातृज्ञेयस्थैर्यस्यापि व्यक्त्यर्था ।

## आनन्ददायिनी

मुपन्यस्यति—आस्तिहीति । प्रामाण्यानन्यथासिद्धिं दर्शयति—सा तावदिति । ग्रहणमिति वक्तव्ये इति—उभयेन्द्रियजन्यैकविषयज्ञानमात्रेणापि धर्मिसिद्धिसंभवात् प्रत्यभिज्ञाग्रहणस्य प्रयोजनं वक्तव्यमित्यर्थः । पूर्वं स्पृष्टवत इदानीं पश्यतश्चैक्यात् ज्ञातृस्थैर्यं; पूर्वं स्पृष्टस्येदानीं दृश्यस्य चैक्यात् ज्ञेयस्थैर्यमिति बोध्यम् । नन्वेवमपि प्रत्यभिज्ञया रूपाद्यतिरिक्तं द्रव्यं साधयितुं न शक्यते;

## भावप्रकाशः

एकार्थपदार्थेऽन्वयः इति सूचितं । सिद्धान्ते इयं च गौरिति सविकल्पकवत् इदमपि संस्कारसहकृतेन्द्रियजन्यमेव ज्ञानं प्रमात्मकं । तत्र दर्शनस्य संस्कारबलात् स्पर्शनस्य तदाश्रयस्य च स्वयंप्रकाशतया विषयस्येन्द्रियसन्निकर्षेण भानमिति बोध्यम् ।

*[1] स्वारसिकबाधादृष्टेरिति–अबाधितत्वादिति यावत् । तत्प्रयोजकमपि हेतुमाह–*[2]अनन्यथासिद्धेश्चेति । प्रत्यभिज्ञायाः रूपाद्यतिरिक्ततदाश्रयविषयकत्वे विवदमानं प्रति दृष्टमेव स्पृशामीति प्रत्यभिज्ञा रूपस्पर्शातिरिक्ताविषयिणी रूपमात्राविषयकत्वे सति स्पर्शमात्राविषयकत्वे

## सर्वार्थसिद्धिः

*[1] सेयं न रूपमात्रगोचरा ; तस्य स्पर्शनविषयत्वाभावात् अन्यथाऽन्धस्यापि स्पर्शनेन रूपोपलम्भप्रसंगात् *[2] न च स्पर्शमात्रगोचरा; तस्यापि दृग्विषयत्वाभावात्। तथात्वे चास्पृशतोऽपि दृशा स्पर्शधीप्रसंगात्। न चोभयविषया;*[3] दर्शनस्पर्शनयोः प्रत्येकविषयत्वादेव।

## आनन्ददायिनी

रूपस्पर्शैक्यबोधनेनैव तस्याश्चरितार्थत्वात् इत्यन्यथासिद्धिमाशङ्क्य परिहरति–सेयं इत्यादिना। न रूपमात्रगोचरा–न रूपमात्रैक्यविषयिणी। दर्शनस्पर्शनयोरिति—चक्षुरिन्द्रियत्वगिन्द्रिययोः। एकैकमात्रविषयत्वेन कस्यापीन्द्रियस्योभयग्राहकत्वं न संभवति। न च मिळितं गृह्णाति; पूर्वापरकालव्यापारत्वेन युगपद्व्यापाराभावात्। भावेऽप्येकस्योभयगोचरत्वाभावेन वायौ स्पर्शं घटे रूपं च गृह्णतोः दर्शनस्पर्शनयोरिव प्रत्यभिज्ञापकत्वायोगादिति भावः।

## भावप्रकाशः

सति किञ्चिद्विषयकप्रमात्वात् इति पारिशेषतस्साधयिष्यन् विशेषणद्वयासिद्धिं परिहरति–*[1] सेयमित्यादिना। तस्य–रूपमात्रविषयकचाक्षुषस्य। स्पर्शनविषयत्वाभावात्–स्पर्शनविषयविषयकत्वाभावादित्यर्थः। न रूपमात्रगोचरेत्यत्र हेतुस्तु स्पर्शनविषयविषयकत्वमेव। एवमेव न स्पर्शमात्रगोचरेत्यत्राप्यूह्यम्।

उभयविषयविषयकत्वसिद्ध्या (जगदीशमतेन) अर्थान्तरं शङ्कते–*[2] नचेति।

*[3] दर्शनस्पर्शनयोः–चाक्षुषत्वाचप्रत्यक्षयोः। दृष्टमेव स्पृशामीत्यस्य त्वगिन्द्रियेण स्पृष्टमेव पश्यामीत्यस्य चक्षुरिन्द्रियेण जननादाद्ये रूपस्य द्वितीये स्पर्शस्य च भानस्य बौद्धमतेऽप्यनङ्गीकारेण नार्थान्तरावकाश इति भावः।

## सर्वार्थसिद्धिः

*[1]अतः इयं प्रत्यभिज्ञा रूपाद्यतिरिक्तं तदाश्रयभूतं वस्तु प्रकाशयति इदं रूपस्पर्शवत् इति। *[2] ननु रूपस्पर्शयोर्नियताक्षवेद्यत्वेऽप्यवस्था-भेदात्प्रतिसन्धानं स्यात्; न स्यात्; न ह्यस्माकमिव स्थिरमवस्था-न्तरभाक् किञ्चित्त्वन्मते । *[3] विभज्यवैभाषिकपक्षस्तु

## आनन्ददायिनी

इदं रूपस्पर्शवदिति -यदेव रूपवत् तदेव स्पर्शवदित्यर्थः । ननु रूपादेः प्रतिनियतेन्द्रियग्राह्यत्वं न स्वरूपेण; आपितु रूपत्वाद्यवस्थाविशिष्टतया; तथाच रूपत्वाविशिष्टस्यैव स्पर्शत्वाद्यवस्थस्य त्वगिन्द्रियेण ग्रहसंभवात् न प्रत्यभिज्ञान्यथानुपपत्त्या तदतिरिक्तधर्मिसिद्धिरिति शङ्कते—नन्विति—इयं शङ्का भवत्पक्षे(नोदेति)नोपपद्यते इत्याह—न स्यादिति। ननु विभज्यवैभा-षिकेण—'अत्थिहि भिक्खवे अकदयं' इत्यागमबलेन नित्यस्यापि तत्त्व-स्याङ्गीकारात् कथमवस्थान्तरभाजो वस्तुनो राहित्यमित्यत्राह -विभज्येति-अस्तिहि भिक्षोरकृतकं इति तदर्थः । विभज्य—विभागेन नित्यव-स्त्वङ्गीकारात् विभज्यवैभाषिक इति नाम । वैभाषिकैकदेशीति यावत् ।

## भावप्रकाशः

*[1] अतः—पूर्वोक्तहेतुना । प्रकारान्तरेणाप्यर्थान्तरमाशङ्क्य परिहरति—*[2] ननु रूपस्पर्शयोरित्यादिना । *[3] विभज्यवैभाषिकपक्ष इति—परमतभङ्गे वैभाषिकभङ्गाधिकारे विभज्यवैभाषिकमते—

अत्थि हि भिक्खो अकदयं जइ णत्थि एदस्स जन्तुणो सत्तम् ।
माणससुण्णावत्था णं संपज्जइ ॥

{अस्ति हि भिक्षोरकृतं यदि नास्यैतस्य जन्तोस्सत्त्वम् ।
मानसशून्यावस्था ननु संपद्यते ॥}

## सर्वार्थसिद्धिः

*[1] अतिमन्दः ।

## आनन्ददायिनी

अतिमन्द इति–बौद्धसमयप्रसिद्धसत्वक्षाणिकत्वव्याप्तिभङ्गप्रसङ्गात् तेनैव न्यायेन सर्ववस्तुस्थायित्वस्यापि प्रसंगादिति भावः ।

## भावप्रकाशः

इति नित्यतत्वाभ्युपगमाद्यर्थोदाहृतबुद्धवाक्यमाभासोपपात्तिमूलमिति सुव्यक्तं इति; एकं वस्तु नित्यमभ्युपगच्छतः क्षणिकत्वसाधक-सत्वानुमानं विरुद्धं स्यादिति च आचार्यसूक्तिरिह भाव्या। अत एव 'अस्ति सत्व उपपादकः' इति 'भारं वो भिक्षवो देशयिष्यामि भारादानं भारनिक्षेपं भारहारं च । तत्र भारं पञ्चोपादानस्कन्धाः । भारादानं तृप्तिः । भारनिक्षेपो मोक्षः । भारहारः पुद्गलः । इति । एवं भारहारः कतमः पुद्गलः? योऽसावायुष्मन् एवं नामा एवंजातिः एवमाहारः एवं सुखदुःखं प्रति संवेदी एवंदीर्घायुः' इति । 'रूपं भदन्त नाहं, वेदनासंज्ञासंस्कारो विज्ञानं भदन्त नाहं, एवमेतद्भिक्षो रूपं न त्वं, वेदनासंज्ञासंस्कारो विज्ञानं न त्वं' ।

इत्यादि बुद्धोपदेशवाक्यानां तत्वसंग्रहे—

आगमार्थविरोधे तु पराक्रान्तं मनीषिभिः
नास्तिक्यपरिहारार्थं चित्रा वाचो दयावतः ।
समुदायादिचित्तेन भारहारादिदेशना
विशेषप्रतिषेधश्च तद्दृष्टीन् प्रति राजते ॥

इति शान्तरक्षितेन नित्यात्मतत्वबोधतात्पर्यकत्वाभावोक्तिस्संगच्छते ।

*[1] अतिमन्द इति— एतेन—"कामेऽष्टद्रव्यकोऽणुरशब्दः । रूपधातुस्वरूपमुक्तं—कामे—कामधातौ । अष्टद्रव्यकोऽणुः—रूप-

## सर्वार्थसिद्धिः

**तदिह संहतासंहत *[1] स्वलक्षणभेदमात्रं तु स्यात्. तत्र संघात-**

## आनन्ददायिनी

केचित्तु—

णाणम्मि अप्पऊणिअ आआरं वत्तु अप्पाणं।
णिब्भाइ सोसरूवं धम्मो वा कोवि तस्सव्व ॥

इत्यादिसौत्रान्तिकपक्षे धर्माभ्यनुज्ञानात् कथंचिदवस्थामादाय शङ्कासंभवेऽपि वैभाषिकपक्षो विशिष्यासंगत इत्याह विभज्येति इत्याहुः।

{ ज्ञानेऽर्पयित्वा आकारं वस्त्वात्मनः।
निर्भाति सस्वरूपं धर्मो वा कोऽपि तस्यैव ॥ }

इति तदर्थः। विभज्य—विशिष्येत्यर्थः। धर्मिवादिसौत्रान्तिकापेक्षयेति शेषः।

ननु रूपादौ रूपत्वाद्यवस्था अतिरिक्ता माभूत्। किंतु रूपादिकमेव संहतावस्थं द्वीन्द्रियग्राह्यं; तदेवासंहतस्वरूपं प्रतिनियतेन्द्रियग्राह्यं भवत्वित्यनूद्य परिहरति—तदिहेति—

## भावप्रकाशः

रसगन्धस्पर्शा इति चत्वारि द्रव्याणि। पृथिव्यप्तेजो वायुरिति चत्वारि। द्रव्यशब्दो वस्तुवचनः। तेषामष्टद्रव्यकोऽणुः" इत्यागमः (न्या-वा-ता-टी) इति बुद्धागमविरुद्धभाषणेन वैभाषिक इति समाख्या भवतो युक्तेति सूचितम् ॥

अतीत्यनेन 'सर्वशून्यवादिनापि हि संवृत्या विशिष्टधीरिष्यत' इति वक्ष्यमाणमाध्यमिकपक्षादपि मन्दत्वं द्योत्यते।

*[1] स्वलक्षणेति—असंहतस्वलक्षणं निर्विकल्पविषयः संहतं तु विकल्पस्येति बोध्यम्। अद्रव्यसरे (४२) चैतदर्थः स्फुटः।

## भावप्रकाशः

अभिन्नदेशकालं स्वलक्षणमिति वक्ष्यते। धर्मकीर्तिश्चेत्थमाह न्यायबिन्दौ— तस्य विषयः स्वलक्षणं, यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदः तत्स्वलक्षणं तदेव परमार्थसत् अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः अन्यत्सामान्यलक्षणम्' इति। व्याचख्यौ च धर्मोत्तराचार्यः—'तदेवं प्रत्यक्षस्य कल्पनापोढत्वाभ्रान्तत्वयुक्तस्य प्रकारभेदं प्रतिपाद्य विषयविप्रतिपत्तिं निराकर्तुमाह—तस्येत्यादि। तस्य—चतुर्विधप्रत्यक्षस्य। विषयो—बोद्धव्यः। स्वलक्षणं—स्वं असाधारणं तत्वं लक्षणं स्वलक्षणं। वस्तुनो ह्यसाधारणं तत्वमस्ति, सामान्यं च। यदसाधारणं तत्प्रत्यक्षग्राह्यं। द्विविधो हि प्रमाणस्य विषयो ग्राह्यश्च। यदाकारमुत्पद्यते प्रापणीयश्च यमध्यवस्यति; अन्यो हि ग्राह्योऽन्यश्चाध्यवसेयः। प्रत्यक्षस्य हि क्षण एको ग्राह्यः। अध्यवसेयस्तु—प्रत्यक्षबलोत्पन्नेन निश्चयेन सन्तान एव। सन्तान एव च प्रत्यक्षस्य प्रापणीयः। क्षणस्य प्रापयितुमशक्यत्वात्। तथाऽनुमानमपि स्वप्रतिभासेऽनर्थेऽनर्थाध्यवसायेन प्रवृत्तेरनर्थग्राहि। स पुनरारोपितोऽर्थो गृह्यमाणः स्वलक्षणत्वेनावसीयते यतस्ततस्स्वलक्षणमध्यवसितं प्रवृत्तिविषयोऽनुमानस्य। अनर्थस्तु ग्राह्यः। तदत्र प्रमाणस्य ग्राह्यं विषयं दर्शयता प्रत्यक्षस्य स्वलक्षणं विषय उक्तः। कः पुनरसौ विषयो ज्ञानस्य यः स्वलक्षणं प्रतिपत्तव्यः? इत्याह—यस्यार्थस्येत्यादि। अर्थशब्दो विषयपर्यायः। यस्य—ज्ञानविषयस्य। संनिधानं—निकटदेशावस्थानं। असंनिधानं—दूरदेशावस्थानं। तस्मात्—सान्निधानादसंनिधानाच्च। ज्ञानप्रतिभासस्य ग्राह्याकारस्य। भेदः—स्फुटत्वास्फुटत्वाभ्यां। यो हि ज्ञानस्य विषयस्संनिहितस्सन् स्फुटमाभासं ज्ञानस्य करोति असंनिहितस्तु योग्यदेशावस्थित एवास्फुटं करोति तत्स्वलक्षणं। सर्वाण्येव हि वस्तूनि दूरादस्फुटानि दृश्यन्ते समीपे स्फुटानि तान्येव

## तत्वमुक्ताकलापः

**संघातादेरयोगादवगमयति सा वस्तु रूपादितोऽ-**

## सर्वार्थसिद्धिः

**स्वरूपं तस्य प्रतिसन्धानविषयत्वं च न युज्यत इत्याह संघाता-देरयोगादिति। संघातोऽपि संघातिस्वरूपस्तदन्यो वा? पूर्वत्र न प्रतिसन्धानपदं। द्वितीये सत्यः असत्यो वा? आद्ये द्रव्यवाद एव वरं। संसर्गाख्यधर्मस्वीकारो वा। तेन परस्पर-**

## आनन्ददायिनी

न प्रतिसन्धानपदमिति — न प्रत्यभिज्ञाविषय इत्यर्थः। संघातिस्वरूपाणां प्रतिनियतेन्द्रियग्राह्यत्वादिति भावः। द्रव्यवाद एव वरमिति— अवयव्यादिवद्वृत्तिविकल्पदुष्टाप्रामाणिकसंघाताश्रयणा(द्रूपी) दपि घट इति प्रतीत्यनुसारेण द्रव्यस्याङ्गीकारो न्याय्य इति भावः।

ननु भवद्भिरपि तन्तुसंघातः पट इति स्वीकारात् स एवाङ्गीकर्तुं युक्त इत्यत्राह—संसर्गाख्येति—तथाऽपि तवापसिद्धान्त इति भावः।

## भावप्रकाशः

स्वलक्षणानि। कस्मात्पुनः प्रत्यक्षाविषय एव स्वलक्षणं? तथाहि— विकल्पविषयोऽपि वहिर्दृश्यात्मक एवावसीयत इत्याह—तदेव परमार्थसदिति। परमार्थोऽकृत्रिममनारोपितं रूपं तेनास्तीति परमार्थसत्। य एवार्थ संनिधानासंनिधानाभ्यां स्फुटमस्फुटं च प्रतिभासं करोति परमार्थसन् स एव। स एव च प्रत्यक्षाविषयो यतस्तस्मादेव स्वलक्षणम्। कस्मात्पुनस्तदवे परमार्थसादित्याह—अर्थ्यत इत्यर्थः हेय उपादेयश्च। हेयो हि हातुमिष्यते उपादेयश्चोपादातुं। अर्थस्य—प्रयोजनस्य क्रिया—निष्पत्तिः तस्यां सामर्थ्य—शक्तिः तदेव लक्षणं—रूपं यस्य वस्तुनस्तदर्थ-

## सर्वार्थसिद्धिः

विशिष्टस्वरूपमेवेत्यपि निरस्तं; विशेषणविशेष्यतत्संबन्धातिरिक्तविशिष्टायोगात् । द्वितीये कथं प्रत्यभिज्ञात्मकार्थक्रियाकारित्वम्? निरन्तरस्वरूपं संघात इति पक्षेऽपि प्रत्येकपक्षवत् नेन्द्रियान्तरेण प्रतिसन्धिस्स्यात् ।

## आनन्ददायिनी

विशेषणविशेष्येति—तथा च द्रव्यवादसधर्मकत्वयोः प्रसङ्ग इति भावः । द्वितीय इति—यद्यपि शुक्तिरूप्यस्यापि तदिदमिति प्रत्यभिज्ञाविषयत्वमस्ति; तथाऽपि प्रत्यभिज्ञाया अबाधितत्वेन प्रमात्वात् तन्मते अर्थजत्वस्यावश्यकत्वे तज्जनकत्वेनार्थस्यार्थक्रियाकारित्वादसत्वं न स्यादिति भावः । नन्वस्मिन् पक्षे व्यवधानाभावसहितं स्वरूपं संघातः संयोगस्य नैरन्तर्यरूपत्वाङ्गीकारात् । अतो न संसर्गाख्य धर्मस्वीकार इति पक्षमनूद्य दूषयति–निरन्तरेति–प्रत्येकपक्षवदिति–उभयेन्द्रियग्राह्यस्यैकस्याभावात् । न च नैरन्तर्यरूपाभावस्यैवोभयेन्द्रियवेद्यता; तथाऽप्युभयोर्निरूपकयोरग्रहणे उभयनैरन्तर्यस्यापि ग्रहणासंभवात् । वस्तुतस्तस्य तुच्छतया प्रत्यभिज्ञाक्रियार्थक्रियाकारित्वं न युक्तं; अन्यथा तदादाय सधर्मकत्व-

## भावप्रकाशः

क्रियासामर्थ्यलक्षणं । तस्य भावस्तस्मात् । वस्तुशब्दः परमार्थसत्पर्यायः । तदयमर्थः—यस्मादर्थक्रियासमर्थं परमार्थसदुच्यते तस्मात्स एव परमार्थसन् । तत एव हि प्रत्यक्षविषयादर्थक्रिया प्राप्यते; न विकल्पविषयात् । अत एव यद्यपि विकल्पविषयो दृश्य इवावसीयते तथाऽपि न दृश्य एव; ततोऽर्थक्रियाभावात् दृश्याच्च भावात् । अतस्तदेव स्वलक्षणं; न विकल्पविषयम् ॥ इति ॥

## सर्वार्थसिद्धिः

**अन्यथा रसादिष्वपि संहतेषु तत्प्रसङ्गात् । एतेन देशैक्यमेव संघात इत्यपास्तं; एकदेशान्वयिनां त्रैकालिकानामेकसंघातप्रसङ्गात् । देशोऽपि तदातदा भिन्न एवेति चेन्न; क्षणभङ्गस्य निरासिष्यमाणत्वात् । न च ते देश आकाशादिरूपः; तस्य युष्माभिरावरणाभावमात्रत्वज्ञापनात् । नचोपादानरूपः; स्पर्शरूपादीनां भिन्नभिन्नक्षणोपादानत्वाभ्युपगमात् ।**

## आनन्ददायिनी

प्रसङ्ग इति भावः । नैरन्तर्यमात्रेणेन्द्रियान्तरग्राह्यत्वाङ्गीकारे बाधकमाह—अन्यथेति—अविशेषादिति भावः । ननु दृष्टमेव जिघ्रामि मधुरमेव पश्यामि इति प्रत्यभिज्ञानदर्शनादिष्टापत्तिरिति चेन्न, रसादीनामपि चक्षुरादिग्राह्यत्वे दर्शनमात्रेण रसादिग्रहणात् संशयाभावप्रसङ्गेन प्रत्याभिज्ञायास्तदनुमितधर्मिविषयत्वात् । ननु वनादौ देशैक्यस्य संघातत्वदर्शनादत्रापि तथास्त्वित्याशङ्क्य निराकरोति—एतेनेति—देशस्यापि रूपादिस्वलक्षणमात्रत्वे द्वीन्द्रियग्राह्यत्वाभावात् प्रत्यभिज्ञानुपपत्तिः । रूपादेराश्रयतयाऽभ्युपगतस्य एकस्य वस्तुनः संघातत्वे द्वीन्द्रियग्राह्यत्वे च तस्यैव द्रव्यत्वापात्तिः सधर्मकत्वापत्तिरित्यादिनेत्यर्थः । एतेनेत्यस्य रसादिष्वपि प्रसङ्गेनेत्यर्थमप्याहुः ॥ दूषणान्तरमप्याह—एकदेशान्वयिनामिति—अतिप्रसङ्गपरिहारं शङ्कते । देशोऽपीति—अभिन्नदेशकालं स्वलक्षणं संघात इति भावः । तस्य युष्माभिरिति—'आकाशे हि पदार्थानामवस्थानं आकाश एव ह्यवकाशः स चावरणाभावः' इति भावत्कवचनात् । तस्य शून्यतया रूपाद्यनाधारस्य संघातव्यवहारानिमित्तत्वाभावादिति भावः । भिन्नाभिन्नक्षणेति—पूर्वपूर्वरूपस्पर्शोपादानत्वादु-

## सर्वार्थसिद्धिः

'कोपादानत्वे तु तदेव द्रव्यं। पृथिव्यादिदेशैक्यात्संघातत्वे तु तत्संघातस्यापि संघातान्तरापेक्षायां अनवस्था अन्योन्याश्रयो वा। अथ स्यात्; गृहीतेन रूपेण पूर्वमेव स्पर्शोऽनुमितः तत्र दृष्टरूपानुमितमेव स्पृशामीत्येव प्रतिसन्धानमिति चेन्न द्वयोरेकाश्रयत्वग्रहणमन्तरेण[1]*व्याप्तिग्रहणासंभवेनानुमानासिद्धेः, दृष्टे रूपे स्पृष्टे च स्पर्शे भेदाग्रहात् दृष्टमेव स्पृशामीति बुद्धिशब्दाविति चेन्न; भेदेनैव तयोर्गृह्यमाणत्वात् रसादिष्वपि प्रसङ्गाच्च।

## आनन्ददायिनी

त्तरोत्तररूपस्पर्शयोरिति भावः। तत्संघातस्येति—भवत्पक्षे तस्यापि (रूपादि) क्षणत्वेन नानात्वात् तदैक्यं च संघातत्वेन वक्तव्यं तस्यापि संघातरूपत्वेन संघातरूपदेशापेक्षायां अनवस्था। तथाच—पृथिव्याद्येकदेशसंघातप्रयोजको दुर्लभ इति भावः। अन्योन्येति—पृथिवीशब्दवाच्यरूपरससंघातस्य एतत्संघातावच्छेदेन संघातत्वाङ्गीकारे इति भावः। ननु गन्धानुमिते द्रव्ये घ्रातमेव पश्यामीतिवद्दृष्टरूपानुमितस्पर्शे दृष्टमेव स्पृशामीति प्रत्यभिज्ञेत्याशङ्क्य उभयाश्रयस्यैकस्य त्वयाऽनङ्गीकारेण साहचर्यगर्भव्याप्तिग्रहासंभवान्नानुमानप्रवृत्तिरिति परिहरति—अथेति। भेदग्रहेऽपि भ्रमरूपप्रत्यभिज्ञाङ्गीकारे बाधकमाह—रसादिष्वपीति।

## भावप्रकाशः

[1] * व्याप्तिग्रहणासंभवेनेति—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमः . . . . . ॥

इति वदतां भवतां मतेऽपि रूपरसयोर्धूमाग्न्योरिव कार्यकारणभावविर-

## सर्वार्थसिद्धिः

ननु[1]* निर्विषयैवेयं प्रत्यभिज्ञा वासनावशात्स्यादिति चेन्न; योगाचारनीत्या रूपादेरपि निह्नवप्रसङ्गात्। बाधाबाधाभ्यां विशेष इति चेन्न; स्वारसिकबाधादृष्टेः[2]* यौक्तिकबाधस्य समत्वाच्च। अतो रूपस्पर्शवदिदमिति मिथो भिन्नविशेषणकं विशेष्यं सर्वलोकसिद्धं दुरपह्नवं। यत्तु मतान्तरं—स्पर्शमात्र-स्वरूपो वायुस्वलक्षणः। तैजसादयस्तु द्वित्रिचतुस्स्वभावाः। अतस्तेजःप्रभृतीनां द्वीन्द्रियग्राह्यत्वमिति; तदप्यसत्।

## आनन्ददायिनी.

प्रत्यभिज्ञाया निर्विषयत्वे प्रत्ययमात्रस्याविशेषान्निर्विषयत्वप्रसङ्गेन रूपादि-स्वलक्षणस्याप्यपह्नवस्स्यादित्याह—योगाचारनीत्येति। समत्वादिति-ग्राह्यग्राहकभावानुपपत्त्यादिबाधकस्य तेनापि प्रतिपादनादिति भावः। संघातादेरयोगादित्यत्रादिशब्दसंगृहीतं मतान्तरं शङ्कते—यत्तु मतान्तर-मिति। द्वित्रिचतुस्स्वभावा इति द्वन्द्वगर्भो बहुव्रीहिः। न च सर्वत्र सर्वान्वयः; देवदत्तयज्ञदत्तविष्णुमित्राः रक्तशुक्लकृष्णाः इतिवद्योग्यत-

## भावप्रकाशः

रहेण वृक्षशिंशपयोरिव तादात्म्यविरहेण स्वभावासंभवाच्चाविनाभावग्रहा-संभव इति भावः।

[1] * निर्विषयैवेत्यादि—विषयाजन्येत्यर्थः। एवं च इदं रजत-मित्यादेरिव अर्थजन्यत्वरूपप्रमात्वविरहेणास्य साधकत्वं न संभव-तीति भावः। रूपादिप्रत्ययस्यापि योगाचारनीत्या निर्विषयत्वं प्रस-ञ्जयति—[2] * यौक्तिकबाधस्य समत्वादिति—धर्मधर्मिणोस्सम्बन्धानुप-पत्त्यादिवत् ज्ञानार्थयोस्सम्बन्धानुपपत्त्यादिबाधकस्य सत्त्वादित्यर्थः॥

## सर्वार्थसिद्धिः

एकस्यानेकस्वभावत्वायोगात् । तदभ्युपगमे जैनमतावतारात् । अनेकधर्मत्वे त्वस्मन्मतसिद्धेः । एकस्मिन्नेव रूपादिस्वभावभेदकल्पनेति चेन्न; सर्वत्रासिद्धस्य कल्पनायोगात् । क्वचित्सिद्धौ द्रव्यवादसिद्धेश्च । एतेन भेदोपलम्भाभावादभेदसिद्धिरिति प्रत्युक्तं । विपरिवर्तस्यैव सुवचत्वात् ।

## आनन्ददायिनी

याऽन्वयव्यवस्थासंभवात् । अतो द्वित्रिचतुरित्यत्र न समासान्तप्रसङ्गः । तदुक्तं तत्वमात्रपञ्चिकायां--

> वाय्वादिव्यवहरो भवति स्पर्शादिलक्षणैरेव ।
> द्वित्रिस्वभावभाग्भिः एकस्माद्ध्रस्वतादीव ॥

इति । अत्र मते धर्माणामेव तथाव्यवहारसाधनत्वं; धर्म्येवेति पक्षे तु न वस्तुनानास्वभावत्वं; किन्तु ग्राहकभेदेन तथा व्यवहार इति भेदः ॥

स्वभावभेदा इत्यत्र स्वश्चासौ भावश्चेति स्वभावः---स्वरूपमित्यर्थः; उताहो स्वस्य भावः स्वभावः इति षष्ठीसमासः इति विकल्पं मनसि निधाय प्रथमं दूषयाति---एकस्येति । चतुष्ट्वे हि वस्तुस्वभावानां परस्पराभेदे चतुष्ट्वव्याघातः भेदेऽत्वेकत्वव्याघात इति भावः । द्वितीयं दूषयति--अनेकेति । अगत्या धर्मिपक्षमवलम्बते---एकस्मिन्नेवेति । सर्वत्रासिद्धस्येति --क्वचित्सिद्धस्यैवारोपादिति भावः । ननु प्रत्येकं सिद्धानामेकस्मिन्नारोपे को विरोध इति चेत्; न; एकैकात्मकत्वेन सिद्धानां भेदाद्विरोधग्रहेणारोपासंभवादविरोधार्थं क्वचित्समावेशे वक्तव्ये तदसिद्धिरिति भावः । ननु रूपरूपिणोः भेदग्राहकप्रमाणाभावादभेदसिद्धौ रूपादीनामाश्रयासिद्धिरित्यत आह---एतेनेति--प्रत्यभिज्ञानुपपत्तिरूपस्य पूर्वोक्तसाधकस्य सत्त्वेनेत्यर्थः । दूषणान्तरमाह---विपरिवर्तस्येति । अभेदानुपलम्भेन भेदस्यैव सिद्धेरित्यर्थः । अभेदानुपलम्भमेव दर्श-

## सर्वार्थसिद्धिः

**नहि रूपमिदमिति पटादीन् कश्चित् क्वचित्प्रत्येति। किं तु तद्वदिति। सहोपलम्भनियमादि [1] *हेतुचतुष्टयं च निरसिष्यामहे। [2] *नच रूपादेर्धर्मिणश्च सहोपलम्भनियमः; पीतशङ्खादिभ्रमे रूपमन्तरेण रूपिणः तमन्तरेण तस्य चोपलब्धेः।**

## आनन्ददायिनी

यति—नहीति। ननु वैपरीत्यप्रसङ्गो नोपपद्यते—सहोपलम्भनियम मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यैकशब्दानुविद्धप्रत्यय प्रथमपिण्डग्रहणकालिकाभेदग्रहणरूपाभेदोपलम्भहेतुचतुष्टयस्य सत्त्वादित्यत्राह—सहोपलम्भनियमादीति। निरसिष्यामह इति। भेदाभेदनिरसनावसरे इत्यर्थः। असिद्धश्चायं प्रथमो हेतुरित्याह—नचेति। रूपमन्तरेणेति—स्वकीयरूपमन्तरेणेत्यर्थः। धर्मिज्ञानस्याप्यारोपहेतुत्वादिति भावः। तमन्तरेणेति—शङ्खमन्तरेण तदी-

## भावप्रकाशः

[1] * हेतुचतुष्टयमित्यादि–बुद्धिसरे (२०) अभेदसाधकत्वं सहोपलम्भनियमस्य; तत्रैव (३२) अभेदावगाहित्वं निर्विकल्पकप्रत्ययस्य; तत्रैव (९४) धर्मधर्म्यभेदसाधकत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यस्य निरासिष्यते इति विवेकः। [2] * नच रूपादेरित्यादि–अत्र न्यायसिद्धाञ्जने (११) ‘नचसहोपलम्भनियमान्नीलतदाधारादेरभेदः एकसामग्रीवेद्यत्वनियमात्तदुपपत्तेः। सहत्वतन्नियमाभ्यां भेदस्यैव स्थिरीकरणेन व्याघातात्। समस्य च सहोपलम्भनियमस्य शङ्खश्वैत्यादावसिद्धेः। असमस्यापि गन्धादौ। भास्वराध्वान्ताभास्वररूपाभ्यामनेकान्तत्वाच्च’ इत्यन्ता सूक्तिरपि भाव्या। निर्विकल्पके शब्दानुवेधस्य बौद्धैरनङ्गीकारात् विकल्पस्य विपर्ययत्वेन च न ततोऽभेदासिद्धिरिति सर्वेषां

## सर्वार्थसिद्धिः

**नचात्रान्यश्शङ्खस्तदानीमुत्पन्नः; नापि शङ्खरूपोऽयं पित्तविवर्तः; स्पर्शनेन स एवायं शङ्ख इति गृहीतेः। एवं स्पर्शादावपि। यदि चासौ हेतुरङ्गीक्रियते; [1]* किमपराद्धम्—**

**सहोपलम्भनियमादभेदो नीलतद्धियोः ॥**

## आनन्ददायिनी

यरूपस्यान्यत्रारोपस्थल इत्यर्थः। ननु पीतशङ्खादिभ्रमे पीतिमगुणविशिष्ट एवान्यश्शङ्खस्तदानमुित्पद्यते; क्षणिकत्वाङ्गीकारेण पूर्वशङ्खस्य नाशात्। यद्वा—पित्त(पीत)द्रव्यस्यैवायं शङ्खाभासरूपेण परिणामः। तथाच सिद्ध एव सहोपलम्भनियमः तत्राह—नचेति। तत्र हेतुमाह—स्पर्शनेनेति—न क्षणिकत्वेन शङ्खान्तरोत्पादनं युक्तं; स एवायमिति प्रत्यभिज्ञानुपपत्तेः नापि पित्तविवर्तः; त्वागिन्द्रियाविषयत्वानुपपत्तेरित्यर्थः। एवमिति—जले औष्ण्यभ्रमकाले तदीयशैत्यानुपलम्भात् उष्णस्पर्शस्याश्रयं विनोपलम्भाच्चेत्यर्थः। आदिशब्देन रसादयो गृह्यन्ते। सहोपलम्भनियमस्य व्याप्तिग्रहस्थानाभावान्न साधकत्वं तथाऽपि साधकत्वे योगाचारमतप्रसङ्ग इत्याह—यदि चासाविति। प्रत्युत सहभावस्य

## भावप्रकाशः

स्फुटमेतत्। किंच एकशब्दानुविद्धप्रत्ययो यदि साधकत्वेन संमतः; तदा नैयायिकाभिमताया जातेरङ्गीकारापत्तिः इत्यादिकमन्यत्र स्पष्टम् ॥

तत्वसंग्रहे—लोहितः स्फटिकः इति ज्ञानविचारे (५६६)—

शुक्लादयस्तथा वेद्या इत्येवं चापि संभवेत्।
तस्माद्भ्रान्तमिदं ज्ञानं कम्बुपीतादिबुद्धिवत ॥

इत्युक्तदिशा पीतश्शङ्ख इति भ्रमे शुक्लरूपमेव विषय इत्यङ्गीकारेऽप्याह—

[1] * किमपराद्धमित्यादि—अयमाशयः—तत्वसंग्रहटीकायां 'तदत्र

## सर्वार्थसिद्धिः

इति वदद्भिः। अतः सहोपलम्भनियमाद्धर्मधर्मिभेद एव सिध्यति। किंच रूपस्पर्शयोः सहधीनियमस्त्वयाऽपि दुस्साधः। अतस्तयोरयुगपदुपलम्भादभेदासिद्धावेकस्य [1]*प्रत्याभिज्ञाविषयस्य ततोऽन्यत्वं प्रस्पष्टं। यत्तदन्यत्र युष्माभिरुक्तम्—

## आनन्ददायिनी

भेदघटितत्वात्तन्नियमहेतुर्विरुद्ध इत्याह—अत इति। किंच सहोपलम्भनियमेन धर्मधर्मिभेदनिरसनेऽपि रूपस्पर्शयोस्तान्नियामकाभावादसिद्धेः दृष्टमेव स्पृशामीति प्रत्यभिज्ञानुपपादनादेतावान् प्रयासो व्यर्थइत्याह—किंचेति। भवद्भिरेवानुगतो धर्मी बुद्धेर्बाध्यबाधकभावनिरूपणस्थले बुद्धितत्वमालायामुक्तः; स इदानीं त्यज्यत इति पूर्वापरविरोधश्चेत्याह यत्तदन्यत्रेति अनुपप्लवेति—इदमित्थं सिद्धिटीकायां व्याख्यातं—शुक्तिकारजतयोर्बाध्यबाधकभावः कथं नियम्यते? नहि विरोधेन; वैपरीत्यस्यापि प्रसङ्गात्। नच निषेधात्मकतया; विधेरपि क्वचिद्बाधकत्वात् निषेधस्यापि बाध्यत्वात्। न च प्रामाणिकत्वाप्रामाणिकत्वाभ्यां; प्रामाणिकस्यापि दुर्बलस्य शत्रोर्बाध्यत्वात्। किंच बाधार्थं बाध्यविषय-

## भावप्रकाशः

गुणेभ्योऽर्थान्तरभूतद्रव्यानुपलम्भेन गुणगुणिवादो निरस्तः। प्रयोगः--यदुपलब्धिलक्षणप्राप्तं सत् यत्र नोपलभ्यते तत्तत्र नास्ति; यथा क्वचित्प्रदेशविशेषे घटादिरुपलभ्यमानः। नोपलभ्यते च गुणेभ्योऽर्थान्तरभूतस्तत्रैव देशे गुणी' इति स्वभावानुपलब्धिः प्रतिषेधहेतुरुक्तः; स एव नोपलभ्यते च ज्ञानादर्थान्तरभूतस्तत्रैव देशेऽर्थ इति विधया वैभाषिकाभ्युपगतस्य ज्ञानादर्थान्तरभूतस्यार्थस्य प्रतिषेधहेतुः प्रसजेत् इति ॥ [1]*प्रत्यभिज्ञाविषयस्येत्यादि—एतेनोदाहृतस्वभावानुपलब्धिहेतोरसिद्धिर्दर्शिता।

## सर्वार्थसिद्धिः

अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्स(स्त)त्पक्षपाततः ॥

## आनन्ददायिनी

कव्यापारं कुर्वाणो हि लोके बाधक इत्युच्यते; नहि सत्यस्य शुक्त्यादेर्मिथ्यारजतत्वादिकं प्रति व्यापारोऽस्ति; अव्याप्रियमाणस्यापि बाधकत्वेऽतिप्रसङ्गो विपरिवर्तश्च स्यात्। तस्मात्कथं बाध्यबाधकभावव्यवस्थेति? उच्यते—अनुपप्लवेति—उपप्लवभूतोऽर्थस्वभावो रजतत्वं; अनुपप्लवभूतोऽर्थस्वभावोऽनारोपितश्शुक्तित्वादिः। तस्य विपर्ययैः—उपप्लवभूतैः रजतत्वादिभिः न बाधः; किंत्वयत्नवत्त्वेऽपि—बाध्यरजतत्वविषयव्यापाररहितत्वेऽपि शुक्तित्वादिरेव बाधः; कुतः? बुद्धेस्सत्पक्षपाततः—भूतार्थपक्षपातित्वात्। अयं भावः—भूतार्थपक्षपातो हि बुद्धीनां स्वभावः। तावदेवेयमनवस्थिता; तावदेवेयं भ्रान्तिः। यावत्तत्त्वं न प्रतिलभते; तत्प्रतिलाभे तु तत्र स्थितपदा सती अप्रामाणिकं रजतत्वं न संस्पृशेत्; बुद्धेस्ततो निवृत्तिरेव तद्विषयव्यापारमकुर्वतोऽपि बाधकत्वं नाम। यथा हि वेश्यया परिगृह्यमाणः कुरूपो दरिद्रो वा तद्विषयव्यापारमकुर्वताऽपि सुरूपेणाढ्येन वा बाध्यते; बाधकत्वं चाढ्यस्य सुरूपस्य दरिद्रात्कुरूपाद्वा वेश्याया निवृत्तिरेव तथैतदपीति। अन्ये तु—सर्वेपि पुरुषास्सर्वेष्वपि पदार्थेषु संभावितभ्रान्तयः आहोस्वित् कस्मिंश्चित्पदार्थे कश्चिदसंभावितभ्रान्तिरपि भवतीति? तदर्थं विचारितं; कस्मिंश्चित्पदार्थे कांश्चिदाकारान् कश्चिद्गृह्णाति। अपरस्तु ततोऽप्यधिकान्। ततोऽन्यस्ततोऽप्यधिकान्। तत्र पूर्वस्या बुद्धेरुत्तरोत्तरमुत्कृष्यते। इयं चोत्कर्षपरम्परा कस्मिंश्चित्पुरुषे समाप्यते आहोस्विदप्रतिष्ठां गच्छतीति? यदा तु काष्ठां न प्राप्नोति तदा सर्वेऽपि संभावित-

## सर्वार्थसिद्धिः

इति। तदिह प्रतिसन्धेयं।

## आनन्ददायिनी

भ्रान्तयः। सर्वेषामपि स्वाज्ञाताकारस्य पदार्थेषु संभवात्। यदा-तु काष्ठां प्राप्नोति तदा तस्मिन् पदार्थे तेनाज्ञाताकाराभावात् आकाराज्ञानहेतुकभ्रमासंभवः इति। तत्र पदार्थाभ्यासो हि बुद्ध्युत्कर्षहेतुर्भवति। अभ्यासेन जायमानोत्कर्षपरम्परा काष्ठां गच्छन्ती दृष्टा। यथा पुटपाकोत्कर्षेण जायमाना स्वर्णोत्कर्षपरम्परा दशवर्णे। पदार्थाभ्यासोऽभ्यासत्वात्काष्ठाप्राप्तिहेतुः इति। ननु लङ्घनाभ्यासेऽप्यभ्यासत्वं वर्तते; न स काष्ठाप्राप्तिहेतुर्भवतीति, मैवं; तत्रोत्कर्षं जनयन् लङ्घनाभ्यासः पूर्वपूर्वप्रयत्नाधिकप्रयत्नापेक्ष एवोत्कर्षं जनयति। तथाच त्रैलोक्यलङ्घनहेतुभूतप्रयत्नस्यासंभवात्तत्रोत्कर्षकाष्ठाप्राप्तिर्नास्ति। अयं चाभ्यासोऽधिकप्रयत्नापेक्ष एवोत्कर्षहेतुः पुटपाकाभ्यासवत्। तस्मादुत्कर्षकाष्ठाप्राप्तिहेतुर्भवतीति। एतदेवाभिप्रेत्योक्तं—अयत्नवत्त्वेऽपि बुद्धेः इति। पूर्वप्रयत्नाधिकप्रयत्नसापेक्षेणाभ्यासेन जायमानतया उत्कर्षकाष्ठां प्राप्तायाः अत एव यथार्थविषयाया बुद्धेः तत्पक्षपाततो बाधकत्वमुपपद्यते इति। अस्मिन् पक्षद्वयेऽपि धर्मिस्वरूपस्य धर्मस्य चाङ्गीकाराद्विरोध इति भावः। अत्र बुद्धेस्सत्पक्षपाततः तत्पक्षपातत इति पाठद्वयं बोध्यं। केचिदेवं व्याचख्युः—निष्कलङ्कप्रत्यक्षसिद्धस्य युक्तिभिर्न बाध इति त्वयाङ्गीकारात् तन्नयायो धर्मविशिष्टधर्मिण्यप्यस्त्वित्यत्राह—यत्तदन्यत्रेति। उपप्लवो—बाधः। प्रत्यक्षबाधाभावादनुपप्लवभूतः स चासावर्थश्च तथोक्तः। स्वभावः—स्वरूपं। विपर्ययैः—यौक्तिकबाधैः प्रत्यक्षबुद्धेरबाधितार्थविषयकत्वस्यौत्सर्गिकत्वादित्यर्थ इति। तदिहेति—एकस्मिन् धर्मिणि भ्रान्त्यभ्रान्त्यनुगत प्रामाणिकधर्माङ्गीकारेण ह्ययं बाध्यबाधकभावसमर्थनार्थो वा काष्ठाप्राप्तिसमर्थनार्थो वा ग्रन्थ आरब्ध इति न विस्मर्तव्यमित्यर्थः।

## तत्वमुक्ताकलापः

न्यत् । [1]*एकस्मिन् दूरतादेरविशदविशदप्रत्यभिज्ञादि तद्वत्

## सर्वार्थसिद्धिः

बुद्ध्यन्तराणि च तद्बाधकानि [1]*अभिन्नेन्द्रियजन्यान्याह—एकस्मिन् इति—आसन्नदेशे दृष्ट्वा दूरं गतस्य अविशदा प्रत्यभिज्ञा । दूरे दृष्ट्वा समीपं गतस्य तु विशदा । एवं क्रमाद्दृष्टविरलालोकादिवशादप्युभयथा ग्राह्या । अल्पधर्मविशिष्टतया ग्रहणं अविशदग्रहणं । भूयोधर्मविशिष्टतया तु

## आनन्ददायिनी

बुध्यन्तराणीति—यद्यपि दृष्टमेव स्पृशामीति पूर्वोक्तापि प्रत्यभिज्ञा एकेन्द्रियजन्यैव चक्षुर्मात्रजन्यत्वात्; तथाऽपि सा इन्द्रियद्वयसापेक्षेति भावः। अभिन्नेन्द्रियजन्यानि–भिन्नेन्द्रियानपेक्षाणि ॥ ननु विशदाविशदज्ञानं कथं धर्मिसाधकमित्यत्राह—अल्पधर्मविशिष्टतयेति तथाच एकस्यैव वस्तुनो भूयोऽल्पधर्मविशिष्टतया ग्रहणमेव प्रतीतेर्विशदाविशदत्वमिति

## भावप्रकाशः

[1] * अभिन्नेन्द्रियजन्यानीति—पूर्वज्ञानजनकेन्द्रियाभिन्नेन्द्रियजन्यानीत्यर्थः । एतावता पूर्वज्ञानजनकेन्द्रियजन्यं ज्ञानं धर्मभिन्नधर्मिसाधने प्रमाणमिति सिद्धं । अथ 'यस्यार्थस्य सान्निधानासान्निधानाभ्यां ज्ञानप्रतिभासभेदः तत् स्वलक्षणं तदेव परमार्थसत् अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः' इति धर्मकीर्तिना न्यायबिन्दौ स्वलक्षणविषये यदुक्तं तदेव धर्मिभिन्नधर्मपारमार्थ्यानङ्गीकारे न घटते इत्याह—मूले [2]* एकस्मिन् दूरतादेरित्यादि ।

## सर्वार्थसिद्धिः

**विशदग्रहणं न तु न्यूनाधिकदर्शनमात्रं ; तथा मति घटपट-दर्शने घटमात्रदर्शने च विशदाविशदव्यवहारप्रसङ्गात् । नचात्र रूपमेवाविशदं विशदं च भाति; पीतशङ्खादिभ्रमे रूपान्तर-वत्तया भातस्यापि तथा प्रत्यभिज्ञानात् । नापि परिमाणं;**

## आनन्ददायिनी

धर्मिसिद्धिरिति भावः । ननु विशदाविशदत्वमधिकन्यूनविषयत्वमेव, न त्वेकधर्मिणि अधिकन्यूनधर्मविषयत्वं । तथाच न धर्मिसिद्धिरित्यत्राह– [1] * न तु न्यूनाधिकेत्यादिना । ननु रूपमेव दूरादूरयोरविशदं विशदं च भासतां ; न(च)तु रूप एवाल्पबहुधर्मप्रसङ्गः ; तदाऽपि तदाश्रया-सिद्धेः इत्यत्राह —नचेति । तथा च पीतशङ्खभ्रमस्थले पूर्वं श्वैत्यस्य ग्रहणादिदानीं पीतिमग्रहणात्तयोरभिन्नत्वात् तद्विषयतया प्रत्यभि-ज्ञाया अनिर्वाहादुभयानुयायिधर्मिसिद्धिरिति भावः । परिमाणस्य द्वीन्द्रियग्राह्यतया प्रत्यभिज्ञाविषयत्वमस्त्वित्यत्राह – नापीति ।

## भावप्रकाशः

[1] * न तु न्यूनाधिकदर्शनमात्रमिति—अधिकसंख्यवस्तुदर्शनं विशदं ; न्यूनसंख्यवस्तुदर्शनमाविशदमित्यपि न संभवतीत्यर्थः । एतेन निरन्तराधिकवस्तुदर्शनं विशदमित्युक्तावपि न निस्तार इति सिद्धं । अधिकावयवानां दर्शनेऽपि तद्धर्माणामग्रहे न्यूनावयवानां ग्रहेऽपि अधि-कतद्धर्मग्रहेच विशदाविशदव्यहारप्रसङ्गात् । बौद्धमते एकैकावयवस्य स्वलक्षणत्वेन परमार्थत्वेन अवयवसन्तानस्य विशदाविशदज्ञानविषय-त्वाङ्गीकारे परमार्थत्वप्रसङ्गात् । सिद्धान्ते विलक्षणसंयोगाविशिष्टानामे-वावयविप्रत्ययविषयताया व्यवस्थापयिष्यमाणत्वात् । तत्रापि नानाध-

## सर्वार्थसिद्धिः

तस्य परमार्थस्य त्वयाऽनभ्युपगमात् । दूरे च परिमाणान्तरवत्तया वस्तुनः स्फुरणात् । अत एव नैकत्वसंख्या; दूरासन्नयोरेकानेकत्वबोधे तदेवेति दर्शनात् । अत्र उत्तरेण [1] * आदिशब्देन संशयविपर्यय (धि) योर्ग्रहणं । [2] संशयविपर्ययौ तावत् अधिष्ठानग्रहे विशेषाग्रहात् समानधर्मग्रहाच्च भवतः । तथादृष्टिनियमश्च नान्यथयितुं शक्यः ।

## आनन्ददायिनी

काल्पनिकं परिमाणमस्त्वित्यत्राह—दूरे चेति । तथाच दूरान्तिकयोर्भिन्नपरिमाणस्फुरणान्न प्रतिज्ञानिर्वाह' इति भावः । उक्तन्यायेन संख्याया अभावात्; काल्पनिकत्वेऽपि दूरासन्नयोः भिन्नसंख्यास्फुरणान्न तामादायापि निर्वाह इत्याशङ्क्याह—अत एवेति ननु संशयानुरोधात्कथं धर्मिसिद्धिरित्यत्राह—संशयविपर्ययौ तावदिति । किञ्चिदाकारेणाधिष्ठानज्ञानं किञ्चिदाकारविशिष्टतया च तदज्ञानं तस्मिन् सादृश्यज्ञानं च तत्कारणं । तौ तद्धर्म्यभावे न संभवत इत्यर्थः । तेषां कारणत्वे नियामकमाह—तथा दृष्टि नियमश्चेति—अन्वयव्यतिरेकदर्शनादित्यर्थः । ननु स्तो निर्धर्मकत्वेऽपि संशयविपर्ययावित्याशङ्क्य

## भावप्रकाशः

र्मग्रहस्य दुष्परिहरत्वाच्च । अवधारणं विशदग्रहणं संशयोऽविशदग्रहणं एककोटिकसंशयोऽप्युपगम्यते इत्युक्तावपि न निस्तार इति भावेन दूरतादेरिति मूले आदिपदमिति सूचयन् विवृणोति [1] * आदिशब्देन संशयविपर्ययधियोर्ग्रहणमिति । *[2] संशयविपर्ययौ तावदिति—एतद्विस्तरश्चान्यत्र द्रष्टव्यः ।

## सर्वार्थसिद्धिः

अधिष्ठानस्य कार्त्स्न्येन भानेऽभाने च न भ्रमः ।
भाताभाताकृतिभिदा कथं निर्धर्मके भवेत् ॥

बाधकधीश्च अधिष्ठानातिरिक्ततदसाधारणधर्मविषया ; तत्स्वरूपग्रहस्यारोपासहत्वात् । जिज्ञासा च नात्यन्तानुपलब्धे ; अदर्शनात् । न च निश्शेषविदिते ; वेद्याभावात् । अतस्तद्विषये विदिताविताकारत्वं सिद्धं । तदिदं सर्वमभिप्रेत्य भिन्नाभिन्नवा-

## आनन्ददायिनी

कारणासंभवान्न संभवत इत्याह—अधिष्ठानस्य कार्त्स्न्येनेति । निर्धर्मकत्वपक्षे अधिष्ठानज्ञानमस्ति न वा? अस्ति चेत् कार्त्स्न्येन तद्रूपविशेषदर्शनादज्ञाताकाराभावान्न भ्रमः । तदभावे सामान्येनापि तज्ज्ञानाभावान्न भ्रम इत्यर्थः । ननु निर्धर्मकत्वेऽपि भाताभाताकारोऽस्तु इत्यत्राह—भाताभातेति । अयं भावः—एकस्य वस्तुनो न स्वरूपेण भाताभातत्वसंभवः विरोधात् ; अपि तु किञ्चिद्धर्मविशिष्टतया ज्ञातत्वं किंचिद्धर्मविशित्वेनाज्ञातत्वं वाच्यं ; तच्च निधर्मकस्य न संभवतीत्यर्थः । बाधकप्रत्ययबलादपि धर्मसिद्धिरित्याह—बाधकधीश्चेति । ननु धर्मस्वरूपज्ञानमेव बाधकमस्तु न तावता धर्मधर्मिभाव आवश्यकः इत्यत्राह—स्वरूपग्रहस्येति । तथाच क्वचिदप्यारोपो न स्यादिति भावः । जिज्ञासाबलाच्च धर्मधर्मिभावसिद्धिरित्याह—जिज्ञासा चेति । इदं च निर्विशेषजिज्ञासाखण्डनसमये शतदूषण्यां प्रपञ्चितमाचार्यैः ; तत्रानुसन्धेयम् । विदिताविदिताकारवत्त्वमिति आकारो—धर्मः । भिन्नाभिन्नवादिभिः—

## सर्वार्थसिद्धिः

दिभिरप्युक्तम्—

आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि; यत्र वा ज्ञानं प्राग्धर्मग्रहणाद्भवेत् ॥

इति । [1]*अत्रागृहीताशेषधर्मधर्मिग्रहणं तु न मृष्यामहे । यत्तु बौद्धैरुक्तं—

## आनन्ददायिनी

भास्करादिभिः । आविर्भावधर्मः—धर्मिग्रहणनियतग्रहणो धर्मः इदन्त्वादिः । तिरोधानधर्मः—धर्मिग्रहणसमये कदाचित् तिरोधानार्हधर्मः शुक्तित्वादिः । तत्रानुगतं धर्मीत्यर्थः । प्रकारान्तरमाह—यत्रेति । यत्र वा वस्तुनि धर्मग्रहणात्पूर्वं ज्ञानं भवेत् तद्धर्मीत्यर्थः । शुद्धनिर्विकल्पकानङ्गीकारात् स्वानभिमतांशमाह—अत्रागृहीतेति—अगृहीताशेषधर्मस्य धर्मिणो ग्रहणमित्यर्थः । धर्मधर्मिभेदे परोक्तं बाधकं शङ्कते—यत्तु बौद्धैरुक्तमिति । धर्मोपकारेति सिद्धिटीकायामिदमित्थं व्याख्यातं—धर्माणां न केवलं धर्मिमात्रमङ्गीकार्यं; अपितु धर्मान्प्रति उपकारः तच्छक्तिश्च । न हि तदनुपकारिणस्तद्धत्वं संभवतीति माभूद्दश मासानपि धृत्वा प्रसूतापि वन्ध्या पुत्रिणी । नचाशक्त उपकारको नाम; अतिप्रसङ्गात् । नहि नद्यश्शतं सम्भूयापि पचेरन्; तस्माद्धर्मिणमङ्गीकुर्वता तस्मिन् धर्मोपकारः तदङ्गभूता शक्तिश्चेति पदार्थद्वयमङ्गीकरणीयं । अस्तु; सम्पदेव सम्पदोऽनुबध्नातीति चेत्; नायं

## भावप्रकाशः

[1]*अगृहीताशेषेत्यादि—निर्विकल्पकसौषुप्तिकार्थप्रतिसन्धानासम्प्रज्ञातसमाधीनां धर्मविशिष्टविषयकत्वं व्यवस्थापयिष्यते इति भावः ।

## सर्वार्थसिद्धिः

अधिष्ठानस्य कात्स्न्र्येन भानेऽभाने च न भ्रमः ।
भाताभाताकृतिभिदा कथं निर्धर्मके भवेत् ॥

बाधकधीश्च अधिष्ठानातिरिक्ततदसाधारणधर्मविषया ; तत्स्वरूपग्रहस्यारोपासहत्वात् । जिज्ञासा च नात्यन्तानुपलब्धे ; अदर्शनात् । न च निश्शेषविदिते ; वेद्याभावात् । अतस्तद्विषये विदिताविताकारत्वं सिद्धं । तदिदं सर्वमभिप्रेत्य भिन्नाभिन्नवा-

## आनन्ददायिनी

कारणासंभवान्न संभवत इत्याह—अधिष्ठानस्य कात्स्न्र्येनेति । निर्धर्मकत्वपक्षे अधिष्ठानज्ञानमस्ति न वा? अस्ति चेत् कात्स्न्र्येन तद्रूपविशेषदर्शनादज्ञाताकाराभावान्न भ्रमः । तदभावे सामान्येनापि तज्ज्ञानाभावान्न भ्रम इत्यर्थः । ननु निर्धर्मकत्वेऽपि भाताभाताकारोऽस्तु इत्यत्राह—भाताभातेति । अयं भावः—एकस्य वस्तुनो न स्वरूपेण भाताभातत्वसंभवः विरोधात्; अपि तु किञ्चिद्धर्मविशिष्टतया ज्ञातत्वं किंचिद्धर्मविशित्वेनाज्ञातत्वं वाच्यं; तच्च निधर्मकस्य न संभवतीत्यर्थः । बाधकप्रत्ययबलादपि धर्मसिद्धिरित्याह—बाधकधीश्चेति । ननु धर्मस्वरूपज्ञानमेव बाधकमस्तु न तावता धर्मधर्मिभाव आवश्यकः इत्यत्राह—स्वरूपग्रहस्येति । तथाच क्वचिदप्यारोपो न स्यादिति भावः । जिज्ञासाबलाच्च धर्मधर्मिभावसिद्धिरित्याह—जिज्ञासा चेति । इदं च निर्विशेषजिज्ञासाखण्डनसमये शतदूषण्यां प्रपञ्चितमाचार्यैः ; तत्रानुसन्धेयम् । विदिताविदिताकारवत्त्वमिति आकारो—धर्मः । भिन्नाभिन्नवादिभिः—

## सर्वार्थसिद्धिः

दिभिरप्युक्तम्—

आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि ; यत्र वा ज्ञानं प्रागधर्मग्रहणाद्भवेत् ॥

इति । [1]* अत्रागृहीताशेषधर्मधर्मिग्रहणं तु न मृष्यामहे । यत्तु बौद्धैरुक्तं—

## आनन्ददायिनी

भास्करादिभिः । आविर्भावधर्मः—धर्मिग्रहणनियतग्रहणो धर्मः इदन्त्वादिः । तिरोधानधर्मः—धर्मिग्रहणसमये कदाचित् तिरोधानार्हधर्मः शुक्तित्वादिः । तत्रानुगतं धर्मीत्यर्थः । प्रकारान्तरमाह—यत्रेति । यत्र वा वस्तुनि धर्मग्रहणात्पूर्वं ज्ञानं भवेत् तद्धर्मीत्यर्थः । शुद्धनिर्विकल्पकानङ्गीकारात् स्वानभिमतांशमाह—अत्रागृहीतेति—अगृहीताशेषधर्मस्य धर्मिणो ग्रहणमित्यर्थः । धर्मधर्मिभेदे परोक्तं बाधकं शङ्कते—यत्तु बौद्धैरुक्तमिति । धर्मोपकारेति सिद्धिटीकायामिदमित्थं व्याख्यातं—धर्माणां न केवलं धर्मिमात्रमङ्गीकार्यं ; अपितु धर्मान्प्रति उपकारः तच्छक्तिश्च । न हि तदनुपकारिणस्तद्धत्वं संभवतीति माभूद्दश मासानपि धृत्वा प्रसूतापि वन्ध्या पुत्रिणी । नचाशक्त उपकारको नाम ; अतिप्रसङ्गात् । नहि नद्यरशतं सम्भूयापि पचेरन् ; तस्माद्धर्मिणमङ्गीकुर्वता तस्मिन् धर्मोपकारः तदङ्गभूता शक्तिश्चेति पदार्थद्वयमङ्गीकरणीयं । अस्तु ; सम्पदेव सम्पदोऽनुबध्नातीति चेत् ; नायं

## भावप्रकाशः

[1]*अगृहीताशेषेत्यादि—निर्विकल्पकसौषुप्तिकार्थप्रतिसन्धानासम्प्रज्ञातसमाधीनां धर्मविशिष्टविषयकत्वं व्यवस्थापयिष्यते इति भावः ।

## सर्वार्थसिद्धिः

धर्मोपकारशक्तीनां भेदे [1]*तास्तस्य किं यदि ।
नोपकारस्ततस्तासां तथा स्यादनवस्थितिः ॥
[2]* नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ।
सर्वात्मनोपकार्यस्य को भेदस्स्यादनिश्चितः ॥

## आनन्ददायिनी

संपत्सपंदनुबन्धः ; किन्तु विपदो विपदनुबन्ध एवायमिति प्रतिपादनार्थमिदं पद्यमवतीर्णं । धर्मेति—अयमर्थः धर्मविषयोपकारार्थं याश्शक्तयो मया आपादिताः तासां धर्मिणा भेदोऽभेदा वा? आद्ये तासामपि शक्तीनां धर्मत्वं वाच्यं धर्मिणश्च तद्वत्त्वं । ततश्च तासां शक्तीनां ततो—धर्मिणः उपकारो यदि न; तदा किं ता अस्य स्युः? अन्येषामपि किं न स्युः? न ह्यनुपकारकस्तद्वान्नाम। अस्तु तर्हि तत्राप्युपकारश्शक्तिश्च ; तत्राह—तथा स्यादिति—त्रिचतुरकक्ष्याविश्रमे नियामकभावात् । अस्तु तर्हि—

स्वभावनियमाभावादुपकारोऽपि दुर्घटः ।

इति न्यायेनाभिन्ना इति द्वितीयः पक्षः; तत्राह—नानोपाधीति । उपकाराङ्गभूता शक्तिः उपकाराङ्गशक्तिः । अयं भावः—रूपवत्त्व

## भावप्रकाशः

[1]* 'तास्तस्य किं' 'यदि नोपकारः' इत्यत्र तासां तत उपकारो यदि न तास्तस्य किं इति योजना ।

[2]* नानोपाधीति—प्रत्यक्षलक्षणन्यायवार्तिकतात्पर्यटीकायां च कारिकाशयवर्णनपूर्वकः इत्थं कारिकाक्रमो दृश्यते—

यस्यापि नानोपाधेर्धर्मग्राहिकाऽर्थस्य भेदिनः ।

## सर्वार्थसिद्धिः

इति[1] * तदपि मन्दं ; अन्वयव्यतिरेकासि[illegible]कारण[illegible]त्र्य-
निबन्धनस्वभावभेदवतामुपाधीनां परस्परव्यभिचा(र)रि वृत्ति-

## आनन्ददायिनी

मात्रमस्य न स्वरूपं ; अपि तु स्पर्शवत्त्वमपि । तथाच रूपवत्त्वादि-
समस्तधर्मैरभिन्नात्मा धर्मी । तथाच यदैकधर्मवत्तया गृह्यते तदा
सर्वधर्मात्मनापि गृहीत एव ; स्वरूपे ग्रहणाग्रहणासंभवात् । ततश्चोप-
कार्यस्य धर्मस्य आनिश्चितः को भेदस्स्यात् अनिश्चितांशस्स्यात् -
रूपस्पर्शादीनां सर्वेषां एकात्मत्वेनागृहीतांशाभावादिति धर्मधर्म्यङ्गी।
कारेऽपि भाताभातांशानुपपत्तेः संशयाद्यनुपपत्तिस्समेत्यर्थः । उपा-
धीनामिति—न तावद्रूपस्पर्शवद्धर्म्यभेदमात्रेण रूपादीनामभेदः ; अन्वय-
व्यतिरेकसिद्धाभिन्नकारणकानां रूपादीनां घटपटयोरिवैक्यासंभवात् ।
नच धर्मोपकारशक्तीनामित्युक्तदूषणं संभवति ; अन्वयव्यतिरेकसहकृत-
प्रत्यक्षादिप्रमाणैः कश्चिदेव रूपादीनां धर्मीति नियमसंभवात् । अन्यथा
क्षणसंतानपक्षेऽपि सर्वक्षणसंतानोऽपि सर्वस्य किं न स्यात्? इति

## भावप्रकाशः

नानोपाध्यु . . . . . . . . . . दनिश्चितः
एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे ।
दृष्टे तस्मिन्नदृष्टेऽपि तद्ग्रहे सकलग्रहः ॥

इति । [1]* तदपि मन्दामित्यादि—एतद्विस्तरः प्रत्यक्षलक्षणन्यायवार्तिक-
तात्पर्यटीकायां 'नचैकोपाधिना सत्त्वेन विशिष्यैतास्मिन् गृहीते
उपाध्यन्तरविशिष्टतद्ग्रहप्रसङ्गः' इत्यादौ द्रष्टव्यः ।

## तत्वमुक्ताकलापः

नैकत्वेऽप्यक्षभेदाद्भिदुरमिव मिथस्संश्रयादि-

## सर्वार्थसिद्धिः

नियतसामग्रीबोध्यत्वेन ग्रहणाग्रहणयोरुपपत्तेरिति। नन्वस्तु प्रतिसंधानबलात् द्वीन्द्रियग्राह्यं किंचिन्; तत्तु रूपरसाद्यात्मकमिति वा तदाश्रय इति वा न मृष्यामहे; तेषामेवाभावात्। एकस्मिन्नेव ग्राहकभेदात्तत्तद्धर्मधीः; यथा—मणिकृपाण द-र्पणादिव्यञ्जकभेदान्मुखादेरणुत्वपृथुत्वमलिनत्वविमलत्वादिधीः सव्यदक्षिणविपर्यासश्चेति। तमिमं पक्षं प्रतिक्षिपति नैकत्वेऽप्यक्षभेदाद्भिदुरमिवेति इह तावत् सर्वत्रासिद्धस्य कल्पनानुपपत्तिरुक्ता। बाधकान्तरमाह—मिथ इति चक्षुरादिग्राहकवैजात्यं

## आनन्ददायिनी

तत्राप्युपकारशक्तिकल्पनमुखेन बहुविप्लवप्रसङ्गात्। तथाच धर्माणां भेदे युगपद्ग्रहणनियमोऽपि नास्ति; ग्राहकाणां परस्परव्यभिचारित्वात्। तस्मात् धर्मिणो ग्रहणेऽप्यनिश्चितांशसंभवात् 'को भेदस्स्यादनिश्चितः' इत्यनुपपन्नं; रूपस्य ग्रहणेऽपि रसस्याग्रहणोपपत्तेः। रूपादितया विकल्प्यमानस्येत्युक्तं पक्षं दूषयितुमनुभाषते नन्वस्तु प्रतिसन्धानबलादिति। एकस्मिन् वस्तुनि रूपरसाद्याकारबुद्धिः कथमित्यत्राह—एकस्मिन्नेवेति। ननु ग्राहकनिष्ठानां धर्माणां ग्राह्ये ग्रहणमस्तु तत्राविद्यमानानां रूपादीनां कथं ग्रहणमित्यत्राह—सव्यदक्षिणविपर्यासश्चेति। इह तावदिति। क्वचिदप्यसिद्धस्यारोपासंभवात् ग्राहकभेदान्न भेदधीरित्यर्थः। किञ्च इन्द्रियभेदः प्रमितो ग्राह्येऽध्यस्यते उत सत्तयेति विकल्प्याद्यं दूषयति—चक्षुरादीति।

## तत्वमुक्ताकलापः

प्रसङ्गात् ॥ ८ ॥

## सर्वार्थसिद्धिः

हि ग्राह्याकारभेदात् कल्प्यते; तदसिद्धौ कथं तद्ग्राहकभेद-क्लृप्तिः? तदभावे च कथं तत एव ग्राह्याकारभेदक्लृप्तिरिति? इह तु मध्ये बुद्धिभेदप्रवेशे चक्रकं। अस्तु कारणभेदादिन्द्रियभेद-क्लृप्तिरिति चेन्न; इन्द्रियवैजात्यव्यवस्थापकस्य तस्यानुपल-म्भात्। तत एव तत्क्लृप्तौ तत्रापि मिथस्संश्रयात्। ननु दर्पणादि-ग्राहकभेदाद्ग्राह्ये सव्यदक्षिणविपर्यासः। पृथुत्वाणुत्वविमलत्व-मलिनत्वकल्पना च दृष्टेति चेत् सत्यं; दर्पणादेस्तद्धर्माणां च भेदेन दृष्टत्वात् तदधीनाध्यासभेदो यथादर्शनमङ्गी-क्रियते। अत्र तु न तथा, अक्षेषु च ते बहिः कल्पनी-यानां रूपादीनामसंभवात्। उपाधिज्ञाननिरपेक्षेयं औपाधिकभे-

## आनन्ददायिनी

कल्प्यत इति—ज्ञायत इत्यर्थः। ग्रहणभेदाद्ग्राहकभेदः कल्प्यता-मित्यत्राह—मध्ये इति। बुद्धेर्भेदो न जातिकृतः; एकविषयप्रत्यक्षा-नुमित्योरिव समानव्यवहारप्रसङ्गात्। अपितु विषयकृतः। स च न संभवति; ग्राहकभेदज्ञानायत्तत्वात्। तथाच इन्द्रियभेदज्ञाने विषयभेदारोपः ततश्च विज्ञाने भिन्नविषयत्वज्ञानं तत इन्द्रियभेदज्ञानमिति चक्रकमित्यर्थः।

इन्द्रियेति—तथाविधकारणस्यानुपलम्भात्कल्पनं इन्द्रियवैजात्येन इन्द्रियवैजात्यं च तेनेत्यन्योन्याश्रय इत्यर्थः। ननु तर्हि व्यञ्जकभेदात् क्वापि धीभेदो न स्यात् इति शङ्कते—नन्विति। दृष्टान्तदार्ष्टा-न्तिकवैषम्येन परिहरति—सत्यमिति। सत्यं; मालिन्यादयो भेदेन दृष्टा आरोप्यन्ते रूपादयस्त्वक्षेषु तदन्यत्र वा न गृहीताः कथमा

## सर्वार्थसिद्धिः

**दधीरस्तु मण्डूकवसाक्तदृष्टेर्वंशेषु उरगबुद्धिवदिति चेन्न। तत्तद्दोषशक्त्या तत्तद्भ्रान्तिभेदसिद्धेः—कल्प्याकारस्य क्वचित्संभवाच्च। चक्षुरादिस्वभावा एवात्रापि रूपादिभ्रान्तिहेतवो दोषा इति चेन्न; सर्वकल्पनाधारे स्वलक्षणेऽपि अनाश्वासप्रसङ्गात्। ततश्च इन्द्रियस्वभावभेदोऽपि दुर्वचः; अधिष्ठानाकाङ्क्षायामपि बुद्ध्यैव चरितार्थत्वात्। तथाच इन्द्रियस्वभाव-**

## आनन्ददायिनी

रोप्येरन् इत्यर्थः। द्वितीयं पक्षमाशङ्कते—उपाधीति। तत्तद्दोषेति—न चात्रेन्द्रियस्वरूपभेदतद्दोषव्यक्तीनां सिद्धिरिति भावः। ननु प्रतीतिवैजात्यं सिद्धं कारणादिवैजात्यं साधयतीत्यत्राह—कल्प्याकारस्येति। वैजात्यं विषयकृतमिति तद्भ्रान्तिरन्यत्र तत्सिद्धिसापेक्षेति भावः। ननु चक्षुरादिस्वभावास्सिद्धाः। त एव दोषा अध्यासहेतवः! नचान्यत्राप्रसिद्धस्यारोपानुपपत्तिः; आरोप्यज्ञानस्याहेतुत्वात्, अन्यथा कदाचिदपि सर्पादर्शिनो मण्डूकवसाञ्जनाक्तनेत्रस्य वंशे सर्पभ्रमाभावप्रसङ्गादिति शङ्कते चक्षुरादि स्वभावा एवेति। चक्षुरादीनामेव दोषत्वे स्वलक्षणस्यापि सिद्धिर्नस्यात्; दोषजन्यतया निर्विकल्पस्यापि प्रामाण्याभावप्रसङ्गादिति परिहरति नेति। ततश्चेति—धर्मधर्मिणोरुभयोरपि कल्पितत्वप्रसङ्गात्तदुभयातिरिक्तपदार्थासंभवाच्च न पारमार्थिकत्वं ग्राहकरूपभेदस्य वक्तुं शक्यमित्यर्थः। ननु निरधिष्ठानभ्रमानुपपत्त्यैव चक्षुरादीनां दोषत्वं प्रतिनियतमित्यत्राह—अधिष्ठानेति—बुध्यैवेति—योगाचारवत्तत्तत्पदार्थविषयबुध्यैव तेते पदार्थाः कल्प्यन्तामित्यर्थः। (अधिष्ठानबुद्धिरेवाधिष्ठानमस्तु) कल्पनालाघवाच्च त्वत्पक्षादप्ययं पक्षो ज्यायानित्याह—तथाचेति। बुद्धिशक्तिः बुद्धि-

## सर्वार्थसिद्धिः

भेदोऽपि नापेक्ष्यः। पूर्वपूर्वबुद्धिशक्तिभेदादेव उत्तरोत्तरविचित्रभेदोपपत्तेः। ननु स्पर्शनेन्द्रियस्य अज्ञातैर्भागभेदैः करतलप्रकोष्ठादिवर्तिभिरेकस्यैव दुरालभास्पर्शस्योल्लेखभेदा भवन्तीति चेन्न; स्पर्शस्यात्र भेदेनानुल्लेखात्। दुरालभावयवानां तु वह्निकणवत् शरीरमाविशतां तद्विकृतिजनकत्वमात्रं। प्रदेशभेदेन विकृतितारतम्यं च वह्न्यादिभिरिव नानुपपन्नं। ननु मनुष्यपशुमृगादीन्द्रियभेदाद्भक्ष्यादिषु आनुकूल्यादिवैपरीत्यं तारतम्यं च दृश्यते; न च वस्त्वेवानुकूलप्रतिकूलस्वभावं; विरोधात्। सर्वेषामविशेषेण सर्वदा उभयविधानुपलम्भात्।

## आनन्ददायिनी

रूपा शक्तिर्वासनेत्यर्थः। न च दुरालभास्पर्शस्यैकत्वेऽपि स्पर्शनेन्द्रियप्रदेशभेदैः अज्ञातैरेव करतलप्रकोष्ठादिवृत्तिभिः अनेकधोल्लेखस्य सर्वैरङ्गीकारात्तन्न्यायस्सर्वत्राप्यस्त्विति शङ्कते—नन्विति तत्राप्यकास्मिन् स्पर्शे ग्राहकप्रदेशभेदादनेकधोल्लेखोऽसिद्ध इति परिहरति। नेति—नन्वेकस्मिन्ननेकधोल्लेखाभावे विकृतितारतम्यं कथमित्यत्राह—प्रदेशभेदेनेति—यथा वह्न्यवयवानामुष्णस्पर्शवतां तत्तत्प्रदेशभेदेन अल्पशो बहुशश्च प्रवेशेऽपि स्पर्श एकरूप एव गृह्यते; स्पर्शवद्बह्वल्पव्यक्तिप्रवेशकृतमेव विकृतितारतम्यं; तथा दुरालभावयवानां (प्रदेशभेदेन) प्रविष्टानामल्पत्वबहुत्वकृतमेव तारतम्यमित्यर्थः। नन्विन्द्रियादिभेदेन तृणादिवस्तुषु प्रतिकूलत्वमनुकूलत्वं च कल्प्यत इति सर्वसंमतं; तद्वदत्रापि भवत्विति शङ्कते—नन्विति। ननु तत्र द्वयोरपि पारमार्थिकत्वमस्त्वित्यत्राह—नचेति। तथा च विनिगमकाभावादुभयं कल्पितमेवेति भावः।

## सर्वार्थसिद्धिः

अनेकान्तवादानभ्युपगमाच्च । एवं चक्षुरादिभेदाद्रूपादिभेद-भ्रमस्स्यात् इति । तदपि न । तत्तत्कर्मशक्तिवैचित्र्यात्तत्तदनु-कूलत्वादिव्यवस्थोपपत्तेः । वस्तुषु च अनुकूलत्वप्रतिकूलत्वे सुख-दुःखजनकत्वे एव । तथापि सुखदुःखे बुद्धिभेदावेव भव-द्भिरपि स्वी(क्रियेते)कृतौ । ततश्चात्र विषयभेदाद्धीभेदः तस्मा-देव च स इति प्रसङ्गस्स्यादिति चेन्न; विषयभेदस्य स्वकार-

## आनन्ददायिनी

तथाचोक्तं—

परिव्राट्कामुकशुनामेकस्यामेव योषिति ।
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥

इति । अनेकान्तवादः—सप्तभङ्गीवादः । अनुकूलप्रतिकूलत्वयोः प्रतियोगिभेदेन विरोधाभावान्नेन्द्रियकल्पितत्वं किं तु पारमार्थिकत्व-मेवेति परिहरति—तदपीति । तर्हि सर्वेषामुभयथा प्रतीतिस्स्यादित्य-त्राह—तत्तदिति । पारमार्थिकत्वं विरोधाभावं चोपपादयति—वस्तुष्विति । बुद्धिभेदावेवेति । अनुकूलविषयिणी बुद्धिः सुखं प्रतिकूलविषयिणी दुःखं इत्यङ्गीकृतामित्यर्थः । परेषां तु ते तज्जनके इति विशेषः । तथाच—

अर्थेनैव विशेषो हि निराकारतया धियाम् ।

इति न्यायेन तद्भेदाद्धीभेदः धीभेदात्तद्भेद इत्यन्योन्याश्रय इत्यर्थः । उत्पत्तिज्ञप्त्योरन्योन्याश्रयो दोषो वाच्यः । न तावदुत्पत्तावन्योन्याश्रयः; अर्थभेदः स्वसामग्र्या न तु धीभेदेन; धीभेदस्त्वर्थभेदेनेति। नापि ज्ञप्तौ; धीभेदसामग्र्येव विषयभेदज्ञाने कारणं भेदज्ञाने च मनस्सन्निकर्षा-दिकमिति ज्ञप्तावपि नान्योन्याश्रय इति परिहरति—न विषयभेदस्येति ।

णाद्यधीनत्वात् तदुत्पाद्यबुद्धिभेदस्य तत्कारणत्वाभावाद्द्वयोरपि परस्परप्रतीतिनिरपेक्षप्रमाणसिद्धत्वाच्च । एवमुपाधिभेदैरेकस्मिन्नेव ह्रस्वदीर्घत्वदर्शनान्यपि नेतव्यानीति । अत्रादिशब्देन पूर्ववत्संशयाद्यसंभवो नीलपीतशीतोष्णमधुराम्लादिभेदासंभवश्च गृह्यते । न हि नीलादिभेदेष्विन्द्रियभेदोपाधिकत्वं शक्यं वक्तुं; रूपादिभेदमिथ्यात्वे तदन्तःपातिनीलादिभेदोऽपि मरीचिकावीचिकान्यायेन मिथ्यैव स्यादिति चेन्न; आसिद्धस्यासिद्धेन दुस्साधत्वात् ।

## आनन्ददायिनी

परस्परजन्यजनकभावे परस्परप्रतीतिसापेक्षप्रतीतिकत्वे(वा)नान्योन्याश्रय इति भावः । एवमुपाधिभेदैरिति—यद्यप्येकमेव वस्तु ह्रस्वदीर्घत्वबुद्धिविषयः ; न चात्र ह्रस्वदीर्घत्वे पारिमाणे स्त; पारिमाणद्वयाभावात् ; तथापि निरूपकभेदाधीनन्यूनाधिकभावः पारिमाणेऽस्तीति तत्रापि विषयभेद एवेति भावः । पूर्ववदिति—ज्ञाताज्ञातभिदाभावादित्यर्थः । ग्राहकभेदेन रूपरसादिबुद्धिभेदोपपादनेऽपि ग्राहकभेदाभावान्नीलपीतादिधीभेदो न स्यादित्याह—नीलपीतेति । नीलपीतयोश्चक्षुरेकेन्द्रियग्राह्यत्वात् शीतोष्णयोस्त्वगेकग्राह्यत्वात् मधुराम्लयो रसनैकेन्द्रियग्राह्यत्वादिति भावः । ननु मरीचिकाया मिथ्यात्वे तदन्तःपातिवीचिकाया इव रूपादिभेदस्यैव मिथ्यात्वे तदन्तःपातिनीलादिभेदस्य सुतरां मिथ्यात्वं; (तथा) ग्राहकभेदाभावेऽपि तद्भेदधीः कथञ्चित्समर्थनीयेति शङ्कते—रूपादिभेदमिथ्यात्व इति । आसिद्धस्येति—मृगमरीचिकाया मिथ्यात्वं नाम किं स्वरूपस्य कुत्राप्यभावः? स त्वसिद्धः । अत्र

## सर्वार्थसिद्धिः

**मिथो (नि) दर्शनेन साधने मिथस्संश्रयात् । निदर्शनमात्रेण निश्शेषनिह्नवप्रसङ्गाच्चेति । [1]*तथाप्येकमनेकस्वभावमिति व्याहतमिति चेन्न, स्वरूपभेदस्यानभ्युपगमात्। धर्मभेदस्याविरुद्धत्वात्।**

## आनन्ददायिनी

सिद्धसूर्यालोकेऽन्यत्र सिद्धजलत्वारोपात् तथा वीचिकाप्युपपन्ना । नचात्र तन्न्यायो वक्तुं शक्यः; क्वापि (धी) रूपादिभेदस्यानभ्युपगमादिति भावः । ननु नीलादिनिदर्शनेन मरीचिकायाः मिथ्यात्वं साध्यतामित्यत्राह—मिथ इति । निदर्शनमात्रेणेति—स्वप्नादिप्रत्ययानिदर्शनमात्रेण स्वलक्षणमात्रस्यापि निह्नवप्रसङ्गादित्यर्थः । ननु रूपवत्त्वस्पर्शवत्त्वयोः प्रतियोगिभेदाद्भेदो वाच्यः; ताभ्यां च धर्मिण ऐक्येऽपि धर्मिभेदस्स्यादिति शङ्कते—तथापीति । स्वरूपस्यैकत्वात्तदभिन्नयो रूपवत्त्वस्पर्शवत्त्वयोर्भेदाभावान्न विरोध इत्याह—नेति । धर्मभेदस्येति नहि मशकमातङ्गभेदवद्रूपस्पर्शादिभेदस्तदाश्रयाभेदविरोधीति भावः ।

## भावप्रकाशः

एतावता परमतभङ्गोक्तरीत्या बुद्धोपदिष्टक्षणभङ्गप्रत्यक्षार्थभङ्गबाह्यार्थभङ्गधर्मधर्मिभावभङ्गादिषु क्षणभङ्गधर्मधर्मिभावभङ्गद्वयाङ्गीकर्तुः वैभाषिकस्य मते वस्तुस्थैर्यमित्यादिना क्षणभङ्गनिरासकत्वेन या प्रत्यभिज्ञा प्रमा वक्ष्यते सैव धर्मधर्मिभावभङ्गभञ्जनत्युपपादितं । संभावितान्यथासिद्धिशिक्षणं च कृतम् । अथ सिद्धान्ते वैभाषिकाक्षेपं परिहर्तुमनुवदाति—[1]* तथापीत्यादिना । वैभाषिकमते वस्तुस्वभावस्य वस्तुनश्चाभेदेन वस्तूनां क्षणिकतया न व्याहतिः । स्थिरद्रव्यवादासिद्धान्ते च व्याहतिरिति भावः ।

## सर्वार्थसिद्धिः

[1]* वेद्यहेतुफलाकारैर्भिन्नैरेका समेति धीः ।

## आनन्ददायिनी

त्वयाप्येकस्य प्रामाणिकानेकाकारोऽप्यभ्युपगत इत्याह—वेद्येति । एका—बुद्धिः वेद्यस्य घटस्य हेतोश्चक्षुरादेः फलस्य चोपादानादेराकारैः समेतीति—संबध्नातीत्यर्थः ; तथाहि—बाह्यार्थवादिना त्वयाऽप्ययं घट इति ज्ञानस्य घट एव विषयो नान्यदिति व्यवस्थासिद्ध्यर्थं वेद्यस्य घटस्याकारो ज्ञानेऽङ्गीकरणीयः । अन्यथा—

धियो नीलादिरूपत्वे बाह्योऽर्थः किं प्रमाणकः ।
धियोऽनीलादिरूपत्वे स तस्यानुभवः कथम् ॥

## भावप्रकाशः

[1]*वेद्यहेत्वित्यादि—अत्र धीः–निर्विकल्पकज्ञानं । हेतुः–अधिपत्यादिकं । वेद्यः—उत्तरोऽर्थक्षणः । फलं—विकल्पज्ञानं तन्मूला प्रवृत्तिविषयप्रदर्शनरूपा प्राप्तिश्च । उक्तं च न्यायबिन्दुटीकायां—'निश्चयेन च तज्ज्ञानं नीलसंवेदनमवस्थाप्यमानं व्यवस्थाप्यं' इति. "यस्मात्प्रत्यक्षबलोत्पन्नेनाध्यवसायेन दृष्टत्वेनार्थोऽध्यवसीयते नोत्प्रेक्षितत्वेन । दर्शनं चार्थसाक्षात्करणाख्यं प्रत्यक्षव्यापारः उत्प्रेक्षणं तु विकल्पव्यापारः । तथाहि—परोक्षमर्थं विकल्पयन्त उत्प्रेक्षामहे न तु पश्याम इत्युत्प्रेक्षात्मकं विकल्पव्यापारमनुभवादवस्यन्ति । तस्मात्स्वव्यापारं तिरस्कृत्य प्रत्यक्षव्यापारमादर्शयति । यत्रार्थे प्रत्यक्षपूर्वकोऽध्यवसायस्तत्र प्रत्यक्षं केवलमेव प्रमाणं" इति च । अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तिहेतवः । तत्र हि—नीलाभासस्य हि चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता । समनन्तरप्रत्ययात्पूर्वविज्ञानाद्बोधरूपता । चक्षुषोऽधिपतिप्रत्ययाद्रूपग्रहण-

## सर्वार्थसिद्धिः

[1]* तथा बाह्योऽपि

## आनन्ददायिनी

इति त्वदुक्तेरयोगात् । अनीलादिरूपत्वे इत्युत्तरत्र छेदः । तथा चाक्षुषमेवेदं ज्ञानं इति व्यवस्थासिद्ध्यर्थं हेत्वाकारोऽप्यपेक्ष्यः । एवं फलाकारोऽप्यूह्यः । बाह्योऽपि—घटपटादिरपीत्यर्थः ।

## भावप्रकाशः

प्रतिनियमः । आलोकात्सहकारिप्रत्ययात् स्पष्टार्थता । तत्र ज्ञानजन्मनि समनन्तरप्रत्ययो विज्ञानमुपादानकारणं । आलम्बनप्रत्ययोऽर्थः सहकारिकारणम् । अर्थजन्मनि सोऽर्थ उपादानकारणं । तज्ज्ञानं सहकारिकारणं । ज्ञानार्थयोस्स्वभावत एव विषयविषयिभावः । जन्यजनकभावोऽपि स्वभावात्मक एव । स च सम्बन्ध्यनतिरिक्त इति तन्मतम् ॥

[1]* तथा बाह्योऽपीति—भिन्नस्समेतीत्यनुषङ्गेणान्वयः । भिन्नैः रूपस्पर्शादिभिः ज्ञानस्यार्थेन अधिपत्यादिना च स्वभावाख्यसम्बन्धवत् धर्मस्य धर्मिणापि स्वभावाख्यसम्बन्धाङ्गीकारेऽपि ज्ञानस्यार्थाधिपत्यादिभिरिव धर्मधर्मिणोरप्यत्यन्तभेदो दुस्त्यज एवेति भावः । तदाह वाचस्पतिः सविकल्पकप्रत्यक्षत्वसमर्थने तात्पर्यटीकायाम्—

'अपि च रूपविज्ञानं विषयग्रहणधर्मं नानापरमाणुविषयं न परमाणुस्वभावः । तत्स्वभावत्वे वा तेषां सर्वान् प्रत्यविशेषात् सर्वैरेव ते परमाणवो विदितास्स्युः । नचासंबद्धा एव स्वज्ञानेन रूपपरमाणवो विषयास्तस्येति वाच्यम्; असंबद्धस्य विषयत्वेऽतिप्रसङ्गात् । स्वभाव एवार्थज्ञानयोः सम्बन्धो यदर्थो विषयो ज्ञानं च विषयीति चेत्; हन्त उपाध्युपाधिमतोरपि स्वभाव एव सम्बन्धोऽस्तु तथापि विज्ञानार्थवत् न

## सर्वार्थसिद्धिः

[1] * दृष्टत्वाद्युगपत्क्रमशोऽपि नः ।
प्रतिसम्बन्ध्यनेकत्वं यथा नैक्यस्य बाधकम् ।

## आनन्ददायिनी

दृष्टत्वादिति—रूपवान् गन्धवान् इति दृष्टत्वादित्यर्थः । क्षणिकबुद्धिवादिनस्ते युगपदेवानेकाकारः ; नः—अस्माकं युगपत्क्रमशोऽपि ; श्यामघटे क्रमशो रक्तताद्युत्पत्तिदर्शनात । प्रतिसंबन्धीति—एकस्यापि देवदत्तस्य प्रतिसम्बन्ध्यनेकत्वं—भ्रातृपुत्रतातमात्राद्यनेकत्वं यथा तदैक्य-

## भावप्रकाशः

स्वरूपाभेदः इति’ ‘जनकत्वं नाम न वस्तुस्वभावः ; अपि तु तद्धर्मः। धर्मश्च धर्मिणो वस्तुतो भिद्यते’ इति च ।

* [1] दृष्टत्वादिति—दर्शनाप्रामाण्ये च—

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥

इति वदन् योगाचारः ।

अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः ।
धूमिकान्तःप्रतिश्रुत्कामरीच्यभ्रैस्समो भवः ॥

(चतुश्शातिका २००)

फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा ।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः ॥

(माध्यमिकावृत्तिः) १०)

इन्द्रियैरुपलब्धं यत् तत्तत्वेन भवेद्यदि ।
जातास्तत्वविदो बालाः तत्वज्ञानेन किं फलम् ॥

(बोधि+पं २७५)

## सर्वार्थसिद्धिः

**तथा सम्बन्ध्यनेकत्वं स्वाभीष्टे च समत्वतः ॥**

इति द्रव्यसाधनम्

## आनन्ददायिनी

बाधकं न भवति तथा सम्बन्ध्यनेकत्वं—घटसम्बन्धिनां रूपरसादीनामनेकत्वं बाधकं न भवति। यद्वा—यथैकस्य वस्तुनः प्रतिसम्बन्धिनो—विरोधिनो बहवस्सान्ति तथेत्यर्थः। स्वाभीष्टे—क्षणिकत्वबुद्धौ। अन्यथा वेद्याकारैर्बुद्धेरपि भेदःस्यादिति भावः ॥ ८ ॥

इति द्रव्यसाधनम्

इह वादिनां बहूनि कर्तव्यानि भवन्ति—स्वपक्षप्रदर्शनं तत्र साधनोपन्यासः साधनसमर्थनं प्रतिवाद्युद्भावितस्वपक्षदूषणोद्धारः परपक्षदूषणसमर्थनं इत्यादीनि तत्र द्रव्याद्रव्यविभागेन स्वपक्षप्रदर्शनं कृतं। प्रत्यभिज्ञाश्लोके च प्रमाणोपन्यासः। तदनन्यथासिद्ध्युपपादनेन च—

क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चमु।
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः ॥
नैकं रूपाद्यभेदो वा दृष्टं चेन्नेन्द्रियेण तत्।
अक्षानेकत्ववैयर्थ्यं स्वार्थे भिन्नेऽपि शक्तिमत् ॥

## भावप्रकाशः

लोकावतारणार्थं च भावा नाथेन देशिताः।
तत्वतः क्षणिका नैते . . . . . ॥

(बोधि+पं ३७६)

इति भाषमाणो माध्यमिको वा विजयी स्यादिति भावः। एतच्च बुद्धिसरे (३३)श्लोकविवरणे-'विकल्पविषया वस्तुत्वे इत्यादिना आचार्यैरेव वक्ष्यते॥

## सर्वार्थसिद्धिः

एवमेकाश्रयानेकदृष्टावन्यतरानिह्नवार्थिनौ पुनरपि धर्मधर्मिभाव-भङ्गमुखेन प्रवृत्तौ प्रतिहन्येते। अन्यथा [1]*'अन्तस्तद्धर्मोपदे-

## आनन्ददायिनी

अविद्यमानाभेदेऽपि तदक्षागोचरत्वतः।
स्पृशतोऽप्यस्ति सा बुद्धिः द्रव्यं तत् स्पर्शनं यदि॥
नायं घट इति ज्ञानं सर्व (वर्ण) प्रत्यवभासनात्।

इत्यादीनि बौद्धपठितदूषणान्युद्धृतानि भवन्ति। इदानीं तु प्रमेयदूषणो-द्धारः क्रियते इति सङ्गतिं दर्शयन् द्रव्यनिराकरणवादिनः पूर्वं प्रधानतया प्रस्तुतत्वात् तद्द्रव्यबाधकयुक्तीनां पृथगुपन्यासः तत्समा-धानं च राद्धान्तिना वक्तव्यं; न चात्र तत्क्रियते; धर्ममात्र पर्यवसानाद्वक्ष्यमाणयुक्तीनां; धर्ममात्रदूषणं च तच्छून्यश्लोके स युक्तिकमुपपादयिष्यते। अतः कथमुत्तरश्लोकारम्भ इति शङ्काद्वयं पौनरुक्त्यं च परिहरन्नवतारयति—एवमेकाश्रयेति धर्मधर्मिभावोऽत्र निराक्रियते न धर्ममात्रं। उत्तरत्र वृत्तिविकल्पेन अत्र तु धर्मधर्मि भावभङ्गमुखेन इति न कृत्वाकरणं नापि पौनरुक्त्यमिति भावः। धर्म-धर्मिभावस्योपयोगमाह—अन्यथेति—धर्मधर्मिभावाभावे 'अन्तस्तद्ध-र्मोपदेशात्, इत्यादेरयोगादिति भावः। बौद्धानां धर्मधर्मिभावखण्ड-

## भावप्रकाशः

[1]* अन्तस्तद्धर्मोपदेशादित्यादि। आदिपदेन 'विवक्षितगुणो-पपत्तेश्च' 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यादिपरिग्रहः। अत्रान्तस्त-द्धर्मोपदेशादिति सूत्रोपादानं 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष इति श्रुत्युक्तदिशा भगवतो दिव्यमङ्गलविग्रहवत्त्वेऽपि अकर्मवश्यत्वप्रख्या-पनपूर्वकं दिव्यमङ्गलविग्रहगुणानामपि मुक्त्युपायज्ञानविषयत्वबोधनाय।

## सर्वार्थसिद्धिः

**शात्' इत्यादि [1]*अनिरूढप्रायं स्यात्। ननु अनुमानं प्रमाणमि-च्छन् न धर्मधर्मिभावं बाधितुमर्हति; तस्य हेतुसाध्यधर्माश्रयावश्यं भावात्; आह च धर्मकीर्तिः [2]*हेतुबिन्दौ—**

## आनन्ददायिनी

नमपासिद्धान्त इति शङ्कते नन्विति। हेतुर्धूमादिः साध्यं वह्न्यादिः त एव-धर्मः तदाश्रयः पर्वतादिः पक्षः। धर्मकीर्तिः—बौद्धविशेषः। हेतुबिन्दौ—

## भावप्रकाशः

[1]*अनिरूढप्रायं स्यादिति—धर्मधर्मिणोर्भेदासाधने स्वभिन्न-धर्मशून्यत्वादेर्ब्रह्मण्यङ्गीकारेऽपि ब्रह्म निर्धर्मकं निर्गुणं इत्येव पर्यवसानं स्यात्। तच्चोदाहृतसूत्रप्रणेतुर्व्यासस्यानभिमतं। 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति ब्रह्मतद्विग्रहगुणानां मुक्त्युपायज्ञान-विषयत्वबोधकाथर्वणश्रुत्यादिस्वारस्यविरुद्धं च। अतस्तत्साधनं दोषपरि-हरणं चावश्यक मिति भावः। एतेन 'अथातो ब्रह्मजिज्ञासा' इत्यत्र धर्मविशिष्टस्यैव ब्रह्मणो जिज्ञास्यत्वं द्रव्याद्रव्यविभागस्य प्रयोजनं व्याससंमतिश्च सूच्यन्ते।

[2]*हेतुबिन्दाविति—अत्र न्यायबिन्दौ धर्मकीर्तिवाक्यान्यनु-सन्धेयानि—(सू २०) 'त्रैरूप्यं पुनः लिङ्गस्यानुमेये सत्त्वमेव। सपक्ष एव सत्त्वं। असपक्षे चासत्त्वमेव निश्चितं। अनुमेयोऽत्र जिज्ञा-सितविशेषो धर्मी। साध्यधर्मसामान्येन समानोऽर्थस्सपक्षः। नस-पक्षोऽसपक्षः। ततोऽन्यस्तद्विरुद्धस्तदभावश्चेति। त्रिरूपाणिच त्रीण्येव च लिङ्गानि अनुपलब्धिः स्वभावकार्ये च। तत्रानुपलब्धि-र्यथा—न प्रदेशविशेषे क्वचिद्घटः उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति।

## सर्वार्थसिद्धिः

पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव सः ।
अविनाभावनियमाद्धेत्वाभासाः [1]*ततः परे ॥

## आनन्ददायिनी

हेतुबिन्द्वाख्यग्रन्थे । पक्षधर्म इत्यादि—पक्षधर्मः—साध्याश्रयस्य पक्षस्य पर्वतादेः धर्मः । तन्निष्ठो धूमादिरिति यावत् । तदंशेन—पक्षांशेन तस्य पक्षस्यांशेन—विशेषणेन साध्येन व्याप्तः । त्रिविधेन—कार्यस्वभावानुपलब्धिभेदेन । अविनाभावस्य नियमात्—

## भावप्रकाशः

उपलब्धिलक्षणप्राप्तिरुपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च । यः स्वभावः सत्स्वन्येषूपलम्भप्रत्ययेषु यत्प्रत्यक्ष एव भवति स स्वभावः । स्वभावः स्वसत्तामात्रभाविनि साध्यधर्मेहेतुः । यथा वृक्षोऽयं शिंशपात्वादिति । कार्यं यथाऽग्निरत्र धूमादिति । अत्र द्वौ वस्तुसाधनौ । एकः प्रतिषेधहेतुः इति । अत्र हेतुबिन्दौ तदंशेन व्याप्त इत्यनेन 'सपक्ष एव सत्वं असपक्षे चासत्त्वमेव निश्चितं' इति न्यायबिन्दूक्तं रूपद्वयं संगृहीतं । बाधः परं प्रत्येकं न दोषः व्यभिचारासिद्धयोरन्यतरेण गतार्थत्वात् । बाधस्थले पक्षान्तर्भावेन व्याप्तेरसंभवाच्च । एकत्र बाधाभावनिश्चयेऽपि पक्षतावच्छेदकाक्रान्तानेकव्यक्तिषु बाधाभावनिश्चयस्याशक्यत्वाच्च । अतोऽबाधितत्वासत्प्रतिपक्षितत्वे परित्यक्ते ।

[1]* ततः पर इति—न्यायबिन्दौ—एवं त्रयाणां रूपाणामेकैकस्य द्वयोर्द्वयोर्वा रूपयोरासिद्धौ सन्देहे च यथायोगमसिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासा इत्युपसंहारे संक्षेपः ।

## सर्वार्थसिद्धिः

इति। अन्येऽपि 'ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुः' इति। सत्यं; काल्पनिकहेतुसाध्यधर्मद्वारा अनुमानप्रवृत्तिः; पारम्पर्येण तु स्वलक्षणविश्रान्त्या भाक्तमनुमानप्रामाण्यमिति हि [1]* बौद्धानां रहस्यम्। [2]* तत्वगत्या चतुर्विधानामपि तेषां धर्मधर्मिभावः क्षेप्यः।

## आनन्ददायिनी

विद्यमानत्वादित्यर्थः । ग्राह्यधर्म इत्यादि—ग्राह्यस्य इन्द्रियग्राह्यस्य पक्षस्य धर्मस्तदंशेन साध्येन व्याप्तो हेतुः इति न्यायकौमुदीकारादय आहुरित्यर्थः । नात्रार्थतथात्वलक्षणं प्रामाण्यमङ्गीक्रियते; तस्य निर्विकल्पकमात्रपर्यवसायित्वात् अपितु अविसंवादित्वलक्षणं; तच्च धर्मधर्मिभावकल्पनयाऽप्युपपद्यते इति परिहरति सत्यमिति—अस्मिन् श्लोके न वैभाषिक एव पूर्वपक्षी; अपि तु चत्वारोऽपीत्याह—चतुर्विधानामिति । नन्वयं विकल्पो विषयसिद्ध्यसिद्धिपराहत इत्याह—

## भावप्रकाशः

[1]* बौद्धानां रहस्यमिति—न्यायबिन्दौ निर्विकल्पकं प्रस्तुत्य 'तस्य विषयः स्वलक्षणं । तदेव परमार्थसत् । अन्यत्सामान्यलक्षणम् । सोऽनुमानस्य विषयः' इत्याद्युक्तेरिति भावः । एतच्च बुद्धिसरे (३३) सविकल्पकदृष्टान्तेन आचार्यैरेव सम्यगुपादयिष्यते ।

[2]* तत्वगत्येत्यादि—सौत्रान्तिकयोगाचारमाध्यमिकानां प्रत्यक्षार्थभङ्ग बाह्यार्थभङ्ग सर्वशून्यत्ववादैः वैभाषिकवैलक्षण्यसत्त्वेऽपि परमार्थसतोर्धर्मधर्मिणोर्द्वयोः कैरप्यनङ्गीकारादिति भावः ।

## तत्त्वमुक्ताकलापः

धर्मो निर्धर्मकश्चेत्कथमिव भविता सोऽभि-
लापादियोग्यो धर्मेणान्येन योगे स च भवति
तथेत्यव्यवस्थेति चेन्न। कश्चिद्धर्मोऽपि धर्मी स्फुट-

## सर्वार्थसिद्धिः

अतस्तत्पक्षमनूद्य प्रत्याह—धर्म इत्यादिना। अयमर्थः—यस्त्वया कश्चिद्धर्म इष्यते स निर्धर्मकस्सधर्मको वा? आद्ये तस्य शब्दवाच्यत्वं न स्यात्। अविशिष्टस्य व्युत्पत्त्याद्यगोचरत्वात्। [1]* सर्वधीशब्दानां विशिष्टविषयत्वं च भवतां भाष्यादिषूक्तं।

## आनन्ददायिनी

अयमर्थ इति—त्वयेति। परसिद्धेन परो बोधनीय इति न्यायान्न व्याघात इति भावः। आद्ये इति। वाच्यत्वाभावाद्धवन्मतानुरोधेन तुच्छत्वं स्यादिति भावः। शब्दगोचरत्वाभावे हेतुः अविशिष्टस्येति। अविशिष्टेऽपि व्युत्पत्तिरस्त्वित्यत्राह—सर्वधीशब्दानामिति। अविशिष्टस्य सकलप्रमाणबाह्यतया धीगोचरत्वाभावेन व्युत्पत्तिविषयत्वाभावान्न शब्दमात्र-

## भावप्रकाशः

[1]* सर्वधीशब्दानामित्यादि—ज्ञानत्वव्यापकं किञ्चिदवच्छिन्न-विशेष्यताकत्वं निरवच्छिन्नविशेष्यताकत्वाभावो वा; संसर्गताप्रकारता भिन्नज्ञानीयविषयतात्वव्यापकं किञ्चिदवच्छिन्नत्वं वा; शब्दत्वव्यापकं निरवच्छिन्नविषयत्वाप्रयोजकत्वं चेत्यर्थः। एतेन स[illegible]वैलक्षण्यात् निर्विकल्पस्य विशिष्टविषयकत्वाभावमभ्यु[illegible]दीनां मते

## सर्वार्थसिद्धिः

**द्वितीये तु येन धर्मेण धर्मस्सधर्मकः सोऽपि पूर्ववद्धर्मान्तरेण धर्मी स्यादित्यपरापरापेक्षायामनवस्था । द्वित्रादिपर्वमात्रे विश्रम इति व्यवस्थाभावात् । धर्मत्वं च धर्माणां भावः । अतस्तस्यापि धर्मत्वं वाच्यं । न चैतत्तस्यात्मैव आत्माश्र-**

## आनन्ददायिनी

विषयत्वमित्यर्थः । यावद्दर्शनं व्यवस्था भविष्यतीत्याशङ्क्य दर्शनमसिद्धमित्याह—द्वित्रादीति । ततश्च—

अस्मानुपालभ्य पुनः कुर्वतो धर्मविप्लवम् ।
तव वाक्यमिदं हास्यं श्वश्रूनिर्गच्छवाक्यवत् ॥

इति न्यायस्स्यादिति भावः । प्रकारान्तरेणानवस्थां प्रतिपादयति—धर्मत्वं चेति । धर्माणां भावो धर्मान्तरं न तु स्वरूपमित्यर्थः । ततः किमित्यत्राह—अत इति । धर्मत्वं वाच्यमिति—तत्रापि धर्मत्वे धर्मत्वं नाम धर्मान्तरं वाच्यमित्यर्थः । ननु सकलधर्मवर्ति धर्मत्वं स्वात्मैव; अन्यथा सकलधर्मवृत्तित्वव्याघातादित्यत्राह—न चेति । स्वनिष्ठत्वाभावे सकलधर्मवृत्तित्वव्याघातवत् स्वस्य स्ववृत्तित्वेऽपि व्याघातस्स्यादित्यर्थः ।

## भावप्रकाशः

सर्वत्र तात्विकधर्मधर्मिभावाङ्गीकारोऽयुक्तः सर्वप्रतीतिषु खण्डनयुक्त्या विशिष्टविषयकत्वानभ्युपगमौचित्येन तात्विकधर्मधर्मिभावासिद्ध्या निर्धर्मकमेव सर्वं प्रसज्येतेति सूचितम् । मूले अभिलापादीत्यादिपदस्य इतरव्यावृत्तत्वादिरर्थः । धर्मो हि धर्मिण इतरव्यावृत्तिधीहेतुः । धर्मे व्यावर्तकधर्माङ्गीकारे तस्येतरव्यावृत्तत्वेन निश्चयासंभवेन तेन धर्मिणोऽपीतरव्यावृत्तत्वेन निर्धारणं न संभवतीति भावः । ननु गोत्वेन गोः गवा गोत्वस्य

## सर्वार्थसिद्धिः

यात् । न चान्यत्; अनवस्थानादेवेति चेत् तन्न, सर्वेषां धर्माणां निर्धर्मकत्वानङ्गीकारात् । कश्चिद्धर्मोऽपि धर्मी स्फुटं । स्फुटदृष्टं हि नापह्नोतव्यं । त्वयापि हेतुसाध्यादिधर्माणां पक्ष-

## आनन्ददायिनी

अनवस्थानादेवेति—स्वीकृतस्वीक्रियमाणधर्मवर्तिधर्मस्वीकारेऽनवस्था स्यादिति ;

धर्मं समर्थयन् मूर्खः तेन धर्मेण बाध्यते ।
कवाटविवरे पुच्छं प्रेरयन् जम्बुको यथा ॥

इति न्यायस्स्यादिति भावः। सिद्धान्ती परिहरति—तन्नेति । सर्वेषामिति जातिगुणक्रियादिवृत्तीनामेव निर्धर्मकत्वस्वीकारादिति भावः । तेषां च शब्दबोध्यत्वादिकमुपपादयिष्यते । स्फुटदृष्टमिति—

धर्मत्वेन प्रतीयन्ते स्पष्टं जातिगुणक्रियाः ।
तत्तल्लक्षणयोगेन परस्परविलक्षणाः ॥

इति प्रतीतत्वादित्यर्थः । अपसिद्धान्तमेव द्रढयति—त्वयाऽपीति ।

## भावप्रकाशः

च धर्मवत्त्वेतरव्यावृत्तत्वाद्यङ्गीकारे गोवृत्ति गोत्वं गोत्ववान् गौरिति वा गोवृत्तिगोत्ववानित्यादिर्वाऽभिलापः स्यात्; गौरिति प्रतीतौ च गोत्वस्य निर्धर्मकस्य भानमनुभवसिद्धं; तद्विरुध्येत । परस्परधर्मवत्त्वेन इतरव्यावृत्तिधीस्वीकारे परस्पराश्रयप्रसङ्गश्च । किंच गवि स्वेतरतत्तद्भेदसामान्यं च स्वधर्मभूतगोत्वरूपं गोत्वे स्वेतरतत्तद्भेदसामान्यं च गोत्वव्यक्तिरूपमेवेति सिद्धान्तविरोधः । तत्रापि गोत्वनिष्ठभेदस्य गोवृत्तित्वरूपतायाः आधेयतासंबन्धेन गोरूपताया वा अङ्गीकारस्यैवोक्त-

## तत्त्वमुक्ताकलापः

### मतिमथने स्वान्यनिर्वाहकत्वं

## सर्वार्थसिद्धिः

धर्मत्वादिधर्मास्स्वीकार्याः। अन्यथा अनुमानासिद्धौ क्षणभङ्गादिसाधनायोगात्। अतिमथने–[1]*अत्यन्तचर्चायाम्। [2]*यद्वा स्फुटमतिमथने—विशदबुद्ध्या सावधानं [3]*विमर्शे सतीत्यर्थः।

## आनन्ददायिनी

अन्यथेति—पक्षधर्मत्वादीनां कल्पितत्वेऽनुमानस्याभासत्वात् क्षणभङ्गादिसाधनमपि न स्यादित्यर्थः। अत्यन्तचर्चायामिति। अयं भावः—धर्मधर्मिभावमपलपतः को भावः? किमनुभव एव नास्तीति; उत सत्यपि तस्मिन् अनवस्थादुस्स्थतया न सद्विषयत्वमिति। नाद्यः; वाङ्मात्रेण प्रतीतिमात्रापह्नवप्रसङ्गात्। न द्वितीयः; स्वपरनिर्वाहकत्वेऽनवस्थाया एवाभावात् इति। तर्हि प्रथमत एव स्वपरनिर्वाहोऽस्तु किं धर्ममात्रेणापीति शङ्कां परिहर्तुं 'स्फुटमतिमथने' इत्येकनिर्वाहप्रमाणपरतया योजयति—यद्वेति। स्फुटा चासौ मतिश्चेति स्फुटमतिः। मतिरेव वस्तुसद्भावे भवति शरणं। स्वान्यनिर्वाहकतया केषाञ्चिदेव

## भावप्रकाशः

रीत्या न्याय्यत्वादिति भावेनाह—[1]*अतिचर्चायामिति। गौरित्यादौ गोत्वादेर्धर्मिणा धर्मवत्त्वस्य स्फुटताया उक्तरीत्या असम्भवमभिप्रेत्य स्फुटमतिमथने इत्येकमेव पदमित्यभिप्रेत्याह—[2]*यद्वेति। [3]*विमर्शे सतीति। विमर्शो विचारः। स च उक्तरीत्या बोध्यः।

## सर्वार्थसिद्धिः

**स्वान्यनिर्वाहकत्वं—स्वपरव्यवहारादिव्यवस्थापकत्वं । [1]*यत्र ह्यनवस्थाभयाद्धर्मान्तरं नेष्यते, तत्र निमित्तान्तरनिरपेक्षौ तद्धी-व्यवहारौ । यथा गोशब्दस्य व्यक्तिवृत्तावित्थम्भावभूतं गोत्वं निमित्तं गोत्वे तु न निमित्तान्तरमपेक्षते आनन्त्यव्यभिचार-रूपानुपपत्त्यभावात् । एवं शुक्लादिशब्देष्वपि ।**

## आनन्ददायिनी

धर्माणां प्रतीतिरित्यनुभवानुसारात् क्वचिद्धर्मान्तरेण सधर्मकत्वं नाप-ह्नोतुं शक्यमिति भावः । सदृष्टान्तमुपपादयति—यत्र हीति । नन्वेवं धर्मे धर्मान्तरनियमाभावे यस्य धर्मत्वादेर्न धर्मान्तरं तस्य व्युत्पत्त्याद्य-भावे शब्दवाच्यत्वादिकं न स्यादिति चेन्न; तत्र धर्मान्तराभावेऽपि स्वस्यैव स्ववृत्तितया प्रमेयत्वादिवद्विशिष्टबुद्ध्यादिविषयत्वेन वाच्य-त्वादिसंभवात् । नच सिद्धान्ते गोत्वस्य संस्थानरूपतया आनन्त्य-व्यभिचाराद्यनुपपत्तिः; तथाऽपि सौसादृश्यरूपस्यैकस्य संभवादिति भावः । एवं शुक्लादिशब्देष्वपीति—ननु शुक्लादीनामनेकत्वान्न गोत्वा-दिन्याय इति चेन्न; शुक्लत्वस्यैकस्योपाधेर्वक्तुं शक्यत्वात् । ननु यदि

## भावप्रकाशः

[1]* यत्र हीत्यादि । उक्तं च भाष्ये–'प्रथममेव वस्तु प्रतीयमानं सकलेतर-व्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशिष्टतया इत्थमिति प्रतीतेः' इति 'तदपि जात्यादिविशिष्टवस्तुनः प्रत्यक्षविषयत्वात् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनस्स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितं। संवे-दनवत् रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव' इति । अत्र श्रुतप्रकाशिका—

## सर्वार्थसिद्धिः

**ननु गौः शुक्ल इत्यादि-**

## आनन्ददायिनी

केषां चिद्धर्माणां स्वेनैव विशेषः तथात्वेऽपि गौरित्यादिजातिशब्देषु धर्मिपर्यन्तेषु शुक्लादिशब्देषु व्यक्तेर्जातिर्गुणश्च जातेर्व्यक्त्यादिश्च वैशिष्ट्यप्रतियोगित्वादिना भासतां। यत्र गुणमात्रविषयकश्शुक्लशब्दः यत्र वा भावप्रधाननिर्देशो द्व्येकयोरित्यादिषु बहुवचनप्रसङ्गेन द्वित्वैकत्वपरेषु त्वतलाद्यन्तेषु गोत्वगोतादिशब्देषु जातिरित्यादिशब्देषु च प्रधानतया गुणादीनां निर्देशः तत्र किञ्चिद्धर्मवत्त्वाभावे प्राधान्यायोगात्तदन्यत्वेऽनवस्थाप्रसङ्गात्तदभावे एकस्य विशेषणविशेषतया प्रतीत्ययोगादपसिद्धान्तः। प्रमेयत्वादिकं च पक्षसममिति तत्र धर्माभावेऽपि गत्यन्तराङ्गीकारे सर्वत्र तथाऽस्त्विति शङ्कते—नन्विति—

## भावप्रकाशः

'जात्यादेरेवेति—स्वपरनिर्वाहकत्वाद्द्वयावृत्तिरूपधर्मान्तरनिरपेक्षस्य प्रतियोगिनिरपेक्षस्यैव चेति भावः' इति ; उपसंहारभाष्ये च 'अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदाविशिष्टविषयमेव प्रत्यक्षं' इति। न च 'अतोद्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यते' इति भाष्यविवरणावसरे 'पिण्डधर्मस्संस्थानं तद्धर्मोऽनुवृत्तिरिति धर्मिधर्मभावरूपसाम्यानिबन्धनं च दृष्टान्तद्वयोपादानं' इति। तत्पूर्वं 'अनेकव्यक्त्यन्वयरूपा ह्यनुवृत्तिः सा चान्वयिनः पदार्थस्य पूर्वव्यक्तिनिष्ठतापरामर्शेनैव द्वितीयादिषु गृह्यते' इति च व्यासार्यसूक्तौ निर्विकल्पकसविकल्पकयोरुभयोरपि गोत्वे गोराधेयतासम्बन्धेन प्रकारतया भानमिति प्रतीयते ; स्पष्टं चेदं निर्विशेषप्रामाण्यव्युदासवादे इति वाच्यम् ; अनेकव्यक्त्यन्वयरूपा ह्यनुवृत्तिरित्यनेन अनेकव्यक्ति-

## सर्वार्थसिद्धिः

[1]* विशेष्यपर्यन्तोक्तौ तथा स्यात् । क्वचिद्गुणमात्रविषयेषु [2]*शुक्लादिशब्देषु भावप्रधानेषु द्व्येकयोरित्यादिषु त्वतलाद्यन्तेषु जातिर्गुणः क्रियेत्यादिषु च वाच्यानां तत्तद्धर्माणामिदन्त्वेन निर्देशादित्थम्भावसापेक्षत्वे अनवस्था ; अनपेक्षत्वे तु

## आनन्ददायिनी

ननु धर्माणां धर्मान्तराङ्गीकारे अनवस्था ; स्वस्यैव स्वनिष्ठत्वे आत्माश्रयः ; धर्मिणश्च धर्मापेक्षया धर्मत्वेऽन्योन्याश्रयः ; परस्परव्यावर्तकत्वे कर्मकर्तृविरोध इति तन्निष्कर्षकप्रयोगे धर्मी विशेष इत्यनुपपन्न-

## भावप्रकाशः

सम्बन्धस्यैव अनुवृत्तिपदार्थत्वकथनेन तस्य संसर्गतया भानस्यैव तेन स्वरसतः प्रतीतेः । पूर्वव्यक्तिनिष्ठता—पूर्वव्यक्तिसम्बन्ध एव । भाष्ये गोत्वादेरनुवृत्तिधर्मविशिष्टता—अनेकव्यक्तिसम्बन्ध एव । वस्तुतो धर्मधर्मिभावस्य गोत्वानुवृत्त्योस्सत्त्वेन तथा व्यपदेशो भाष्ये श्रुतप्रकाशिकायां च, न तु ताद्रूप्येण ज्ञाने भानतात्पर्येण इति ध्येयम् ।

[1]* विशेष्यपर्यन्तोक्तावित्यादि—विशेषणत्वं विशेष्यस्य स्वेतरव्यावृत्तिधीहेतुत्वं । यस्य विशेषणत्वमात्रं तस्य तु स्वत एव स्वेतरव्यावृत्तता । विशेष्यस्यैवेतरव्यावर्तकधर्मापेक्षा इति चास्तु तथाप्यद्रव्ये संस्थानरूपजातेरसंभवेन तद्विशेष्यकप्रतीतिषु तदितरव्यावर्तकधर्माभावेन 'प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते' इति भाष्यविरोध इति भावः । [2]* शुक्लादिशब्देष्विति—शुक्लादिप्रत्यक्षे च आश्रयविनिर्मोकेण रूपभानं न संभवतीति तत्त्यागः । इदं शब्दगन्धादिप्रत्यक्षस्याप्युपलक्षणम् ।

## तत्वमुक्ताकलापः

**तन्निष्कर्षप्रयोगेष्वपि भवति पुनस्तस्य धर्मी विशेषः ॥ ९ ॥**

## सर्वार्थसिद्धिः

"इदमित्थमिति हि सर्वा प्रतीतिः" इति भाष्यादिविरोध इत्यत्राह—तन्निष्कर्षप्रयोगेष्वित्यादि । अयं भावः—उदाहृतेषु [1]* नियतानियतनिष्कर्षकशब्देषु जातिगुणादेः प्रधानतया निर्देशेपि [2]* सन्ति केचिद्यथाप्रमाणमित्थम्भावाः

## आनन्ददायिनी.

मित्यत्राह—अयं भाव इति । कल्पितधर्ममादाय सधर्मकत्वप्रतीत्युपपादनेऽपीदृशदोषाःस्युरिति त्वयापि कथंचित्परिहार्यो इत्याह—

## भावप्रकाशः

[1]* नियतानियतनिष्कर्षकशब्देष्विति—पृथिव्याद्यपेक्षया नियत निष्कर्षका जातिगुणक्रियाशब्दाः । अनियतनिष्कर्षकाः शुक्लादिशब्दाः । एतच्च बुद्धिसरे (८१,८५श्लो) विवेचयिष्यते । [2]* सन्ति, केचिदित्यादि । तदुक्तं तत्त्वटीकायाम्—

सजातियविजातीयव्यावृत्तस्वस्वभावतः ।
इत्थमित्येव गृह्यन्ते शब्दगन्धादयोऽपि हि ॥

इति । अयमाशयः—शुक्लरूपादिषु निरवयवेषु अवयवसन्निवेशविशेषात्मकसंस्थानाभावेऽपि 'संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तुसंस्थानमनुसन्धेयम्' इति भाष्योक्तदिशा शुक्लरूपादिमात्रावगाहि ज्ञानमेव संस्थानं । उक्तं च न्यायसिद्धाञ्जने—'ननु यदि संस्थानमेव

## सर्वार्थसिद्धिः

त्वयापि हेतुसाध्यादीनां पक्षधर्मत्वादिधर्मास्स्वीकार्याः। अनवस्था च कथञ्चिदुपशमनीया। स्वीकृतं च संवेदनसंवेदने शब्दशब्दादौ स्वपरनिर्वाहकत्वं। [1]*न चात्र कर्मकर्तृ-

## आनन्ददायिनी

त्वयापीति। स्वपरनिर्वाहकत्वं त्वयापि क्वचित्स्वीकार्यमित्याह—स्वीकृतं चेति। संवेदनसंवेदनं—ज्ञानमात्रविषयकं ज्ञानं। आदिशब्देन सर्वमित्यादिशब्द उक्तः। देवदत्त आत्मानं पश्यतीत्यादौ कर्मकर्तृभावदर्शनान्न विरोध इत्याह—न चात्रेति। ननु तर्हि

## भावप्रकाशः

सामान्यं तर्हि तद्रहितेषु रूपरसादिषु कथं निर्वाहः? तव वा कथं उपलक्षणरहितेषु? लक्षणमेवोपलक्षणमिति चेत्; किं तत्? प्रतीतिरिति चेन्न; आत्माश्रयप्रसङ्गात्, अस्माकं तु तदेवैकीकरणमिति नोपद्रवः' इति॥ शुक्लरूपाद्यवगाहिनो ज्ञानस्य स्वयंप्रकाशतया विषये प्रकारतया भानेन शुक्लरूपाद्यवगाहिसर्वप्रतीतिषु तस्येतरव्यावर्तकता। एवं कालस्यापीतरव्यावर्तकत्वं बोध्यम्। तदुक्तं व्यासार्यैः (जिज्ञासाधिकरणे)—

'ननु कथं सर्वप्रमाणानां सविशेषविषयत्वं? नहि गन्धादिग्राहि प्रमाणं गन्धादिकं साश्रयमावेदयति; नैवं; आश्रय एव विशेष इति नियमाभावात्। संविदोऽपि सर्वविशेषणतया सर्वार्थवैशिष्ट्यं ह्युपपद्यते। अयं गन्धोऽनुभूयते इति कालादिविशेषावच्छिन्नतयैव गन्धादिप्रतीतेश्च सविशेषत्वोपपत्तिः' इति। [1]*नचात्रेति। अत्र-रूपादेः ज्ञानप्रकारत्वे ज्ञानधर्मित्वे च॥ भवति पुनस्तस्य

## सर्वार्थसिद्धिः

विरोधः। स्वोत्पादकत्वादाविव पौर्वापर्यादिवैधर्म्याभावात्। किंच स्वलक्षणादीनां जात्यादीनां च संवृतिसिद्धानां निर्धर्मकत्वेऽपि कथञ्चिदभिलापार्हत्वं त्वयापि ग्राह्यं; अन्यथा तत्तत्संव्यवहारेण कथादिप्रवृत्त्ययोगात्। अतो निर्धर्मकं शब्दवाच्यं न भवति इति स्वसिद्धान्तविरोधः स्ववचनव्याघातश्च। आस्तामेतत्——[1]* समानाधिकरणस्येव व्यधिकरणस्यापि

## आनन्ददायिनी

स्वस्य स्वजनकत्वमपि स्यादित्यत्राह—स्वोत्पादकत्वादाविति। तत्र हि सत्त्वासत्त्वयोर्विरोध इति भावः। ननु धर्मे स्वपरनिर्वाहकत्वमसिद्धमित्यत्राह—किं चेति। ननु कल्पितधर्ममादाय धर्मे व्यवहार इत्यत्राह—जात्यादीनामिति। तत्रापि धर्मकल्पनेन व्यवहारेऽनवस्था स्यादिति भावः। अतो निर्धर्मकमिति। कल्पितधर्ममादाय शब्दवाच्यत्वे शुक्त्यादेरपि रजतादिशब्दवाच्यत्वप्रसङ्गे लोकव्यवहारविरोधाद्व्यवस्था न स्यादिति स्वरूपेणापि वाच्यत्वं स्वलक्षणं वाच्यमिति सिद्धान्तविरोधोऽपीति भावः। स्ववचनेति। निर्धर्मकं शब्दवाच्यं न भवतीति निर्धर्मकशब्दवाच्यत्वेन तदवाच्यत्वप्रतिपादनात् स्ववचनव्याघात इत्यर्थः। ननु प्रतिबन्दीमात्रमनुत्तरमित्यत्राह—आस्तामिति।

## भावप्रकाशः

धर्मी विशेष इति मूलं विवृणोति—[1]* समानाधिकरणस्येत्यादिना। एतेन 'ननु विशेषा हि निर्विशेषाः तत्कथं निर्विशेषवस्तुनोऽप्रामाणिकत्वं? उच्यते—धर्मेण धर्मी सविशेषः धर्मिणा च धर्मस्सविशेषः। कस्यचिद्धर्मभूतं धर्मि वा यन्न भवति तत् प्रामाण्यशून्यमिति हि ग्रन्थार्थः।

## सर्वार्थसिद्धिः

व्यावर्तकत्वादित्थम्भावत्वं सिध्यति। तथा च नियत-निष्कर्षकप्रयोगेष्वप्येतेषु धर्मी धर्मं विशिनष्टि यथा पटस्य शौक्ल्यं खण्डस्य गोत्वमित्यादिषु । धर्मी विशेषः धर्मस्य स्वेतरनिष्ठाद्व्यावृत्तिधीहेतुरित्यर्थः। न चात्र मिथस्संश्रयः। विशेषणविशेष्याधियोस्तद्व्यवहारयोश्च मिथो जन्यत्वाभावात्। निष्कर्षानिष्कर्षव्यवहारयोश्च विवक्षाभेदायत्तत्वात्, उभयथा व्यवहारस्य सर्वत्र सर्वैरपि दुरपह्नवत्वात्। यश्चात्र समा-

## आनन्ददायिनी

व्यावर्तकत्वादिति । राज्ञः पुरुष इत्यादौ व्यावर्तकत्वादित्यर्थः। ननु परस्परव्यावृत्तबुद्धिविषयत्वेऽन्योन्याश्रयः इत्याह—नचेति । परस्पर-विशिष्टबुद्धिर्व्यावृत्तिधीहेतुः । नचात्रान्योन्याश्रयः, परस्परव्यावृत्तिबुद्धेः परस्परहेतुत्वाभावात् । तद्विशिष्टबुद्धिश्चेन्द्रियसंप्रयोगाद्विशिष्टशब्दादि-प्रमाणाद्वा भवति। तत्र शब्देन कदाचित्किञ्चिद्विशेष्यतया भासते। तथानियमस्य विवक्षा नियामिका। उभयथाऽपि प्रतीतौ परस्पर-व्यावर्तकत्वाविशेषे कथं विशेषणविशेष्यभावभेद इत्यत्राह—यश्चेति ।

## भावप्रकाशः

विशेषो व्यावर्तकः धर्मी च स्वगतधर्मस्य आश्रयान्तरगतधर्माद्व्यवच्छेदक इति विशेषशब्दवाच्यः' इति श्रुतप्रकाशिकायां धर्मिणा धर्मस्सविशेष इत्यस्य घटस्य शौक्ल्यमित्यादिव्यधिकरणस्थलमेवोदाहरणं विवक्षितमिति दर्शितं। तेन ज्ञानत्वव्यापकं किञ्चिदवच्छिन्नविशेष्यताकत्वमित्येव 'सविशेषवस्तुविषयत्वात्सर्वप्रमाणानाम्' इति भाष्यस्यार्थः। वस्तुशब्दस्य विशेष्यपरत्वात्, 'प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव

## सर्वार्थसिद्धिः

**नाधिकरणप्रयोगे विशिष्टत्वेनावस्थितोऽपि [1]*अर्थतस्स्वधर्मं अन्यनिष्ठाद्व्यवच्छिनत्ति स एव पटस्य शौक्ल्यमित्यादि-प्रयोगे गुणीभवन् कण्ठोक्तेन स्वसम्बन्धेन विशिनष्टि। गोत्वं शौक्ल्यं इत्यादिपदेष्वपि "तस्य भावस्त्वतलौ" इत्यादि विहिततद्धिताश्रयवाच्यत्वेन धीस्थ एवार्थो निष्कृष्यमाणः स्वविशेषणनिरूपकतया अनुशिष्यते। एवं विशेष्यस्यैव द्विधा विशेषणयोग इति व्यञ्जनाय पुनश्शब्दः; निष्कर्षप्रयोगेषु विशेषं वा द्योतयति ॥ ९ ॥**

## आनन्ददायिनी

नन्वेवं सति गोत्वं शौक्ल्यमित्यादौ तद्धिताश्रयप्रकृतिगवादिशब्दैः धर्म्येव धर्मविशेषितः प्रतीयत इति गुणीभवन् कण्ठोक्तेन सम्बन्धेन प्रतीयत इत्यनुपपन्नमित्यत आह—गोत्वं शौक्ल्यमित्यादीति। प्रकृत्या विशिष्टार्थोपस्थितावपि तद्धितार्थधर्मान्वयबोधसमये गौर्नित्येत्यादाविव धर्मं विहाय स्वरूपमन्वेतीति न दोष इति भावः। ननु जातिर्गुणः क्रियेत्यत्र न धर्म्युपस्थापकं प्रमाणमस्ति। अनुपस्थितानां च न व्यावर्तकत्वं। न च जात्यादिकमेव तदुपस्थापकं; अनुपस्थापितस्य तस्य तदुपस्थापकत्वायोगात्। उपस्थापनस्य व्यापकधर्म्युपस्थापनाधीनत्वा-दिति चेत्तत्राह—निष्कर्षप्रयोगेष्विति। तत्तच्छब्द एव सहानुभवसाम-र्थ्यात् स्मारयति, स्मृतानां व्यावर्तकत्वं चेति न विरोध इति भावः ॥ ९ ॥

## भावप्रकाशः

प्रतीयते' इत्युत्तरभाष्यैकरस्यादिति सिद्धं। [1]*अर्थत इति—एतेन गौरिति प्रत्यये गोत्वे गोराधेयतासम्बन्धेन भानं नास्तीति सूचितम् ॥

## तत्त्वमुक्ताकलापे

तच्छून्ये तस्य वृत्तिः कथमिव घटते तद्वि-
शिष्टे तु वृत्तौ ।

## सर्वार्थसिद्धिः

पुनरपि धर्मस्य धर्मिणि वृत्तिं विकल्प्य तदुभयमप-
ह्नुवानं प्रत्याह—तच्छून्य इति—योऽयं रूपादिः द्रव्यस्य गुणतयेष्टः
स किं स्वशून्ये वर्तते स्वविशिष्टे वा? नाद्यः । व्याघातात्;
अन्यथा सर्वेषां सर्वत्र वृत्तिः किं न स्यात्? खपुष्पादीनामपि

## आनन्ददायिनी

ननु पूर्वमेव धर्मधर्मिभावानुपपत्तिमाशङ्क्य समाहितत्वात् पुनस्त-
त्कथनमयुक्तं इत्याशङ्क्य निरसनीयशङ्काभेदान्न पौनरुक्त्यमित्याह—
पुनरपीति । एकस्मिन् काले स्वात्यन्ताभावसामानाधिकरण्यं विरुद्ध-
मित्याह—व्याघातादिति । विरोधादित्यर्थः । अन्यथा—विरोधाभावे ।
ननु सर्वत्र सर्वं स्यादित्ययुक्तं रूपरसयोर्विरोधाभावमात्रेण तेजसि न रस-
प्रसक्तिः अपि तु तत्सत्ताग्राहकप्रमाणसत्त्वे; सर्वत्र तदनुपलब्धेर्न
प्रसक्तिरित्यत्राह—खपुष्पादीनामिति । निषेधः—निस्स्वभावत्वानियमः ।

## भावप्रकाशः

एतावता—

अविशिष्टाद्विशिष्टस्य वैशिष्ट्ये यदि धीर्विशेत् ।
तद्बुद्धिधाराऽविश्रान्तिस्स्याद्वा मूलाविशिष्टता ॥

इति खण्डनोक्तदूषणमपि परिहृतं । अथ खण्डनकृता विशि-
ष्टस्यातिरिक्तानतिरिक्तत्वपक्षद्वयं दूषयित्वा लक्षणानिर्वचनं न संभवती-

## सर्वार्थसिद्धिः

**कथं निषेधः? योग्यानुपलब्धेरिति चेन्न; तदुपलब्ध्यनुपलब्ध्योरपि विरोधाभावात्। किंच अनुपलब्धिः अभावोपस्थापनेन भावं विरुन्ध्यात् तदा कथं तच्छून्ये तस्य वृत्तिः? न द्वितीयः। आत्माश्रयापातात् [1]* विशिष्टं विशेषणविशेष्यतत्संबन्धातिरिक्तं**

## आनन्ददायिनी

ननु तत्राप्यनुपलब्धया निश्चयोऽस्त्विति शङ्कते—योग्यानुपलब्धेरिति। अनुपलब्धिर्न तावत्स्वरूपाभावविषया; अपितूपलब्ध्यभावरूपतया उपलम्भरूपप्रमाणाभावे प्रमेयाभाव इति व्याप्तया वा प्रत्यक्षसहकारेण वा। उभयथाऽपि नानुपलब्धिमात्रमभावनिश्चयहेतुः घटवति घटानुपलब्धिमति व्यभिचारात्। किञ्च तयाऽभावनिश्चयोऽस्तु तावतापि रूपज्ञानं रसवत्त्वमिव कथं भावं निरुन्ध्यात् विरोधाभावात् इत्याह— न तदुपलब्ध्यनुपलब्धयोरिति। ननु अनुपलब्धिरभावमुपस्थाप्य सत्त्वविरोधी न भविष्यतीत्यत्राह—किञ्चेति। तथा सति भावस्याभाववि-

## भावप्रकाशः

त्युक्तं। तत्र प्रथमपक्षवादिन इत्थमाहुः—विशिष्टं विशेषणविशेष्यतत्सम्बन्धातिरिक्तं। समूहालम्बनाद्विशिष्टज्ञानस्य समूहालम्बनजन्यव्यवहाराद्विशिष्टव्यवहारस्य च भेदात्। एकः पुरुष इत्यादिप्रतीतिविलक्षणादेको दण्डीति प्रत्ययात् प्रत्येकाभावाद्विशिष्टाभावस्यापि भेदाच्च। विशेषणसान्निधानेन विशेष्यं विशेष्यसंनिधानेन विशेषणं विशेषणविशेष्योभयं वा विशिष्टोपादानं। विशिष्टप्रत्येकयोश्च भेदाभेद इति। तन्मतेनात्र समाधिर्न सम्भवतीत्याह—[1]*विशिष्टमित्यादि।

## सर्वार्थसिद्धिः

**न किंचित् । तस्मिन् [1]* प्रमाणाभावात् । न चोक्तेषु त्रिष्वन्यतम-**

## आनन्ददायिनी

रोधित्वात्स्वशून्ये स्वस्य वृत्तिर्न स्यादित्यर्थः । ननु स्वस्य स्ववृत्तित्वे

## भावप्रकाशः

[1]*प्रमाणाभावादिति—'दण्डी पुरुष इति प्रतीतौ दण्डपुरुषसम्बन्धमन्तरेण दण्डिनोऽन्यस्याप्रतीतेः दण्डिनमानयेत्युक्तेऽतदानयनप्रसङ्गाच्च' इत्यादि खण्डनोक्तदूषणानातिवृत्तेः । सत्कार्यवादस्थापनार्थं प्रवृत्ते आरम्भणाधिकरणेऽर्धवैनाशिकसिद्धान्तितस्य बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वसाधनप्रकारस्य श्रीभाष्यादौ दूषितत्वेन तन्न्यायेन विशिष्टशुद्धयोरपि भेदासिद्धेः । किं च विशिष्टशुद्धयोर्भेदे तत्तत्क्षणविशिष्टव्यक्तीनां भेदेन क्षणिकानन्तपदार्थस्वीकारेण वैनाशिकमतप्रवेशापत्तिः 'क्षणमपि चरमामणववस्थां न जह्यादिति' वक्ष्यते ; भेदाभेदश्च निरसिष्यत इति भावः । खण्डने 'विशिष्टानातिरिक्ततापक्षे प्रत्येकं दाण्डिव्यवहारप्रसङ्गः, धर्मत्वाद्यननुगमेनानुगतविशिष्टबुद्ध्यनुपपत्त्या धर्मधर्मिसम्बन्धानां विशिष्टरूपता न संभवति ; अनुगतधर्मत्वभङ्गे सम्बन्धधर्मिणोरपि भङ्गेन धर्ममात्रवादी वैभाषिक एव विजयी स्यात् ।

> प्रत्येतव्यस्य वैचित्र्यं प्रत्ययोल्लेखसाक्षिकम् ।
> धियं निवेश्य लुम्पद्भो भङ्गं साक्ष्येव यच्छति ॥

अतोऽर्थवैचित्र्यमन्तरा बुद्धिवैलक्षण्यमसम्भवि' इत्युक्तं । तत्र धर्मातिरिक्त धर्म्यादिकं एकार्थप्रत्यभिज्ञेति श्लोक एव साधितं । अनुगतधर्मानङ्गीकारेऽपि प्रतीतिव्यवहारावद्रव्यसरे स्थापयिष्येते इति प्रत्येकं दण्डया-

## सर्वार्थसिद्धिः

**मात्रं; तावति विशिष्टधीव्यवहारयोरभावात्। [1]* अतस्सम्बन्ध्युभयं विशिष्टशब्दार्थ इति स्यात्। [2]*तथा च स्वविशिष्टे वर्तमानो गुणः स्वविशेष्यमिव स्वात्मानमपि।**

## भावप्रकाशः

[दिव्यवहारप्रसङ्गं वारयति [1]*सम्बन्ध्युभयमिति। एतेन प्रत्येकज्ञानात् समूहालम्बनाच्च विशिष्टज्ञानस्य वैलक्षण्यादिकमुपपादितं भवति। तथाहि - दण्डी पुरुष इति प्रत्यये संयोगेन दण्डसम्बद्धः पुरुषः पुरुषे दण्ड इति प्रत्यये च पुरुषसम्बद्धो दण्डो विषयः। प्रतीतेर्विशिष्टविषयकत्वं च दण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यतानिरूपकतादिकं। अतो विशिष्टशुद्धयोरभेदेऽपि समूहालम्बनादेकः पुरुष इत्यादितश्च विशिष्टज्ञानस्य वैलक्षण्यं। तन्निबन्धन एव व्यवहारभेदः। नहि विषयवैलक्षण्यादेव प्रतीतिवैलक्षण्यमिति राजाज्ञा; विशेष्यप्रकारभावादिविषयता वैलक्षण्यादपि तदुपपत्तेः। ज्ञानातिरिक्तश्चार्थो बुद्धिसरे स्थापयिष्यते। विशेषणावच्छिन्नप्रतियोगिताकत्वेन विशेषणविशेष्योभयपर्याप्तप्रतियोगिताकत्वेन वा विशिष्टाभावस्य शुद्धाभावाद्भेद इत्यक्षपादानुयायिग्रन्थेषु व्यक्तं। भावान्तराभाववादे च न दोषलेशोऽपीत्यादिकं [निरूपित्व]प्रतियोगित्वादिकं च यथाऽवसरं विवेचयिष्यते। [2]*तथाच स्वविशिष्ट इत्यादि—अत एव वेदप्रामाण्यवादिभिरपि सोऽयं देवदत्त इत्यादौ तत्तेदन्तयोरुपलक्षणत्वमेव न तु विशेषणत्वं। दण्डी कुण्डलीत्यादावपि दण्डकुण्डलोपाहितयोस्तादात्म्यमेव विषयः इत्यभ्युपगतं। तदुक्तं सक्षेपशारीरके—

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः।
घटते न यदैकता तदा न तरां तद्विपरीतरूपयोः॥

## तत्त्वमुक्ताकलापः

**स्वाधारत्वप्रसङ्गस्तत इह न गुणो नापि धर्मीत्य-युक्तम् ।**

## सर्वार्थसिद्धिः

**स्वाधारीकुर्यात्। किमत्रानिष्टम्? [1]*स्वस्य स्वस्मादन्यत्वम् । अभेदे**

## आनन्ददायिनी

आत्माश्रय इत्यसङ्गतं उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावादित्याशङ्क्य आधाराधेयभावे भेदस्स्यात् तस्य भेदाधीनत्वादिति परिहरति—किमत्रेत्यादिना। ननु प्रमेयत्वे प्रमेयत्वमित्यादावभेदेऽपि दर्शनात्तथाऽत्राप्यास्त्वित्यत्राह—अभेद इति ॥

कथं स्ववृत्तिरिष्टा चेद्यथाऽन्यत्रेति गम्यताम् ।
प्रमाणं कारणं वृत्तौ न भिन्नाभिन्नते यतः ॥

इति न्यायेन प्रमाणसद्भावात्तथाऽङ्गीकारः; इह तु न तथा; प्रमाणाभावादिति भावः । नन्वेकस्यैव घटस्य भूतलाधेयत्वं रूपाधारत्वं च

## भावप्रकाशः

इति भावः [1]*स्वस्य स्वस्मादन्यत्वमिति—तदवच्छिन्ननिरूपिताधेयतायास्तत्राङ्गीकारे स्वस्य स्वधर्मितावच्छेदकत्वप्रसङ्गेन विधेयत्वोद्देश्यत्वाद्यवच्छेदकभेदाद्यभावेन शुक्लादिशब्दाच्छाब्दानुपपत्तिरिति भावः । न चात्र तदुपलक्षिते तस्य वृत्तिरिति संभवति; अविद्यमानं सत् व्यावर्तकमुपलक्षणमिति परिभाषा । एवं सति धर्मस्याविद्यमानत्वे धर्मिणोऽपि सत्त्वासंभवेन कस्यायं व्यावर्तको भवेत्? किञ्च धर्मस्योपलक्षणत्वे उक्तरीत्या प्रतीत्यप्रकारत्वेन भवदिष्टासिद्धिरपीति ।

## तत्त्वमुक्ताकलापः

**तद्वृत्तिर्धर्मिमात्रे**

## सर्वार्थसिद्धिः

**कथमाधाराधेयभावः प्रतिसंबन्धिभेदाभावात्? *[1]नचात्र भिन्नाभिन्नत्वं दृष्टं[2]*युष्मादिष्टं वा? एवं [3]*वृत्त्यनुपपत्त्या वा गुणगुणिनोरन्यतरपरिशेषस्स्यात् उभयपरित्यागो वेति परोक्तमयुक्तं। कथमित्यत्राह—तद्वृत्तिर्धर्मिमात्र इति। न वयं तच्छून्ये तद्विशिष्टे वा तस्य वृत्तिं ब्रूमः। अपि तु *[4]वस्तुतस्तद्विशिष्टे**

## आनन्ददायिनी

दृष्टमित्यत्राह—प्रतिसम्बन्धीति । यस्य यदपेक्षया आधारत्वं तस्य तदपेक्षया भेद इति भावः । ननु एकस्य गुणगुणिस्वरूपस्य कौमारिलैराधाराधेयभावोऽङ्गीकृत इत्यत्राह—न चात्रेति । तन्मतं प्रमाणविरुद्धमिति भावः । अपसिद्धान्तश्चेत्याह—युष्मदिष्टमिति । वृत्त्यनुपपत्त्या वेति वाकारःपूर्वश्लोकोक्ततर्कापेक्षया । अन्यतरपरिशेषस्स्यादिति वैभा-

## भावप्रकाशः

[1]*न चात्रेत्यादि। भिन्नाभिन्नत्वं–तादात्म्यं। एतेन दण्डी कुण्डलीत्यादावपि भवन्मते भेदाभेदानभ्युपगमेन तद्भानासंभवेनाभेदभाने च दण्डकुण्डलयोरभेदप्रसङ्ग इति सूचितं। [2]* युष्मदिष्टमिति–एतच्च अग्र्यसरे स्फुटीभविष्यति। [3]वृत्त्यनुपपत्त्या वेति वाकारश्चार्थे। विशिष्टस्यातिरिक्तत्वानङ्गीकारेण अनतिरिक्तत्वे वृत्त्यनुपपत्त्या चेत्यर्थः। तदवच्छिन्ननिरूपिताधेयता न तत्र स्वीक्रियते येनोक्तदोषस्स्यात् किं तु तदधिकरणनिरूपिताधेयतैवेति नानुपपात्तिरित्याह—[4]* वस्तुतस्ताद्विशिष्टे इति ॥

## तत्त्वमुक्ताकलापः

**न भवति तत एवास्य तच्छून्यताऽतो**

## सर्वार्थसिद्धिः

विशेष्ये तद्विशिष्टवृत्त्यभावे तच्छून्यवृत्तिस्स्यादेवेति चेत्तत्राह— न भवति तत एवास्य तच्छून्यतेति। यत्र यद्वर्तते तस्य कथं तच्छून्यत्वं? न च तद्वति वर्तमानस्य तस्मिन्नपि वृत्तिरिति नियमः; घटवति भूतले वर्तमानानां गुणादीनां घटेऽपि वृत्तेरदृष्टेः। एवं घटस्यापि। ननु सर्वत्र वृत्तिविकल्पेन विशिष्टं दूषयतः किं (निदानं)? निदर्शनं। किं क्वचिदपि विशिष्टप्र-

## आनन्ददायिनी

षिकसौत्रान्तिकमतोपसंहारः। वस्तुतस्तद्विशिष्टे—तदाधारे इत्यर्थः। यत्र यद्वर्तत इति—ततश्च तदाश्रयस्य तच्छून्यत्वं स्वस्य स्वविशिष्टत्वमिति वा विरुद्धं। ततश्च—

तर्तुकामो यथा गर्तं वेगादुत्प्लुत्य मूढधीः।
अन्धः कूपे पतेत्तद्वद्बौद्धो व्याप्तिसमर्थनात्॥

इति न्यायानुसरणमिति भावः। किञ्च यत्र रूपं न तत्र रूपाभावः यत्र रूपाभावः तत्र न रूपमिति व्याप्तिं वदता रूपस्य वृत्तिरभ्युपगतेति। ततश्च—

अस्मदुक्तं भवान्वक्ति नान्यत्किञ्चन भाषते।
पिशाच इव कूटस्थः तस्मात्त्वत्तो बिभेम्यहम्॥

इति न्याय इति भावः। ननु घटवति भूतले इत्यादेर्दृष्टान्तस्यापि पक्षतुल्यत्वात्तदुदाहरणमसङ्गतामिति शङ्कते—नन्विति। निदर्शनं दृष्टान्तः। क्वचित् किं निदानमिति पाठः। तदा नन्वित्यारभ्य

## सर्वार्थसिद्धिः

तीतिरेव नास्ति, सत्यपि वा निष्कारणिका, सकारणापि वा दुर्निरूपकारणा, निरूपितकारणापि वा निर्विषया, सविषयाऽपि वा बाधितविषया? इति; नाद्यः; लौकिकपरीक्षकबहिष्कार-प्रसङ्गात्। [1]*सर्वशून्यवादिनापि हि संवृत्या विशिष्टधीरिष्यते। न द्वितीयः, कार्यस्य कारणावश्यम्भावात्। तदन-

## आनन्ददायिनी

सिद्धान्तिवाक्यं। नन्विति प्रश्नपरं। उत्तरमाह—किमित्यादि। प्रतीत्या ह्यर्थक्लृप्तिर्द्वेधा — कार्यत्वेन कारणतया, विषयत्वेन विषयितया वा; उभयथाऽपि न सम्भवतीति प्रथमः कल्पः। कार्यत्वेन कारणतयाऽर्थकल्पनं न संभवतीति द्वितीयतृतीयौ। विषयविषयितया कल्पनं न संभवतीति चतुर्थपञ्चमाविति विवेकः। संवृति

## भावप्रकाशः

[1]* सर्वशून्यवादिनाऽपीत्यादि। तदुक्तं माध्यमिकवृत्तौ—अपि च लोकव्यवहाराङ्गभूतो घटः पीतनीलादिव्यतिरिक्तो नास्तीति कृत्वा तस्योपचारः कल्प्यते। नन्वेवं सति पृथिव्यादिव्यतिरेकेण नीलादिकमपि नास्तीति नीलादेरप्यौपचारिकं प्रत्यक्षत्वं कप्ल्यतां। यथोक्तम्—

रूपादिव्यतिरेकेण यथा कुम्भो न विद्यते।
वाय्वादिव्यतिरेकेण तथा रूपं न विद्यते॥

इति। तस्मादेवमादिकस्य लोकव्यवहारस्य लक्षणेनासङ्ग्रहादव्यापितैव लक्षणं स्यात्। तत्वविदपेक्षया हि प्रत्यक्षं घटादीनां नीलादीनां च नेष्यते। लोकसंवृत्या त्वभ्युपगन्तव्यमेव प्रत्यक्षत्वं घटादीनां। यथोक्तं शतके—

सर्व एव घटो दृष्टो रूपे दृष्टे हि जायते।

## सर्वार्थसिद्धिः

भ्युपगमे तु [1]*लोकायतावतारात् । इष्यते च अविद्यावासनादि भ्रान्तेरपि निदानं भवद्भिः। अत एव न तृतीयः । नापि चतुर्थः स्वपरलोकव्यवहारविरोधादेव । कथं किलासौ विशिष्टप्रतीतिः कथं च निर्विषया ? न पञ्चमः, अद्यापि

## आनन्ददायिनी

दोषः । तदधीनकल्पितविषया विशिष्टधीरित्यर्थः । लोकायतेति—चार्वाकमते कार्यकारणभावाभावादिति भावः । नचेष्टापत्तिः अपसिद्धान्तप्रसङ्गापत्तेरित्याह—इष्यते चेति । अविद्या—दोषः । वासना पूर्वपूर्वसंस्कारः । आदिशब्देनालम्बनसमनन्तरसहकार्यधिपातिप्रत्ययादयः । अत एवेति—तत्कारणतयैव निरूपणसंभवादित्यर्थः । स्वपरेति—लोको द्विविधः—स्वः परश्चेति । तद्व्यवहाराविरोधादित्यर्थः कथं चेति विशिष्टविषया प्रतीतिर्विशिष्टप्रतीतिः । तथा च विशिष्टप्रतीतिर्निर्विषयेति स्ववचनव्याघात इत्यर्थः । अद्यापीति—व्याघातात्माश्रय-

## भावप्रकाशः

ब्रूयात्तत्कस्यचिन्नाम घटः प्रत्यक्ष इत्यपि ॥

इति । [1]*लोकायतावतारादिति । तन्मते कार्यकारणभावानङ्गीकारे युक्तयः तद्दूषणप्रकाराश्च (३१) प्रकाशयिष्यन्ते । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति पातञ्जलैर्निर्विषयत्वव्याख्या[illegible]कारेण तदभिप्रायेण निर्विषयेति पृथक्कोटिः । ननु स्वलक्षणस्यैव परमार्थसत्त्वेन सप्रकारकज्ञानसामान्यं भ्रमः, वेदवादिभिरपि निर्गुणं ब्रह्मैव परमार्थसत् सगुणं त्वपरमार्थमेवेति निर्विकल्पकं ब्रह्मज्ञानमेव तत्वतः प्रमा सप्र-

## तत्वमुक्ताकलापः

**नोक्तौ दोषौ स्वधीवाग्विहतिरितरथा**

## सर्वार्थसिद्धिः

**बाधस्याशामोदकायमानत्वात्, [1]*विकल्पप्रामाण्यं च[2]*वक्ष्यते। अतो यथादर्शनं क्वचित्किञ्चिद्वर्तते न स्वस्मिन् इति व्यवस्थिते त्वदुक्तौ व्याघातात्माश्रयदोषौ न स्त इत्याह—अतो नोक्तौ दोषाविति। अन्यथा अनिष्टमाह—स्वधीवाग्विहतिरितरथेति। स्वधीविहतिः स्ववाग्विहतिः, स्वधीवाग्विहति-**

## आनन्ददायिनी

योर्बाधकयोरप्यलब्धजीवितत्वादित्यर्थः। ननु सर्वविकल्पानां वासनानिर्मिततया प्रकारद्वयेनापि विषयव्यवस्थापकत्वमनुपपन्नमित्यत आह—विकल्पेति—बुद्धिसर इति शेषः। स्वधीवाग्विहतिरिति— धीश्च वाक्चेतीतरेतरयोगे द्वन्द्वसमासः।

## भावप्रकाशः

कारकब्रह्मज्ञानं त्वप्रमेत्यभ्युपेयते इति शङ्कायामाह—[1]विकल्पप्रामाण्यमित्यादि। [2]*वक्ष्यते इति। बुद्धिसरे (३३) इति भावः। इदमत्र बोध्यं—प्रकारभूतो व्यावर्तकोऽपि धर्मो द्विविधः—उपलक्षणं विशेषणं चेति। स्वविशेष्यमात्रेऽन्वयि उपलक्षणं स्वविशेष्यान्वितेऽप्यन्वयि विशेषणमिति आद्यस्य दण्डी कुण्डलीत्यादिकं द्वितीयस्य रूपवान् प्रमेय इत्यादिकमुदाहरणं इति ज्ञानत्वव्यापकं किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यताकत्वमिति नियमस्यानुभवसाक्षिकस्य न बाध इति॥

## सर्वार्थसिद्धिः

रिति प्रत्येकसमुदायपरं योज्यं। कथं विशिष्टधीविरहे तवापि तद्विषयव्याहारव्यवहारौ? उदाहरणोपनयौ च वस्तुतस्तद्धर्मविशिष्टविषयौ। बुद्धिस्स्वप्रकाशा [1]*अभिन्नदेशकालं स्वलक्षणं कल्पनापोढमभ्रान्तं प्रत्यक्षं प्रतिवादिवाक्यमसाधकं

## आनन्ददायिनी

नातो द्वन्द्वाच्चुदषहान्तात्समाहार इति समासान्तः। स्वधिया विहर्ति दर्शयति—कथमिति। तद्विषयेति। उक्तिः व्याहारः। व्यवहारः—प्रवृत्त्यादिः। तयोर्विशिष्टधीसाध्यत्वादित्यर्थः। स्ववाग्विरोधमाह—उदाहरणेति। उदाहरणं दृष्टान्तवाक्यं। उपनयः—संश्च शब्दादिरिति वाक्यं।

## भावप्रकाशः

[1]*अभिन्नदेशकालं स्वलक्षणमिति। अत्रोदाहृतन्यायबिन्दुवाक्यान्यनुसन्धेयानि। *कल्पनापोढमित्यादि। अत्र धर्मोत्तराचार्यः—'तत्र प्रत्यक्षत्वमनूद्य कल्पनापोढत्वमभ्रान्तत्वं च विधीयते। यत्तद्भवतामस्माकं चार्थेषु साक्षात्कारि ज्ञानं प्रसिद्धं तत्कल्पनापोढाभ्रान्तत्वयुक्तं द्रष्टव्यम्। न चैतन्मन्तव्यं; कल्पनापोढाभ्रान्तत्वं चेदप्रसिद्धं किमन्यत्प्रत्यक्षस्य ज्ञानस्य रूपमवशिष्यते; यत्प्रत्यक्षशब्दवाच्यं सदनूद्येतेति। यस्मादिन्द्रियान्वयव्यतिरेकानुविधाय्यर्थेषु साक्षात्कारि ज्ञानं प्रत्यक्षशब्दवाच्यं सर्वेषां सिद्धं। तदनुवादेन कल्पनापोढाभ्रान्तत्वविधिः। कल्पनापोढम्—कल्पनास्वभावरहितमित्यर्थः। अभ्रान्तं—अर्थक्रियाक्षमे वस्तुरूपेऽविपर्यस्तमुच्यते। अर्थक्रियाक्षमं च

## सर्वार्थसिद्धिः

विशिष्टं नास्तीत्यपि विशिष्टमात्थ। तच्च विशिष्टविषयस्वधी-विरुद्धमिति। सन्त्यन्येऽपि धर्मधर्मिभावभञ्जकाः परेषां

## आनन्ददायिनी

स्वधीवाग्विरोधं दर्शयति—विशिष्टं नास्तीत्यपीति। स्वधीवाग्विहति-मुपपादयति—तच्चेति। अनेन वाक्येन विशिष्टाभावविषयिणी विशि-ष्टबुद्धिर्जायमाना विशिष्टसाधिकेति। तया वाचा धियो विरोध इति

## भावप्रकाशः

वस्तुरूपं सन्निवेशोपाधिधर्मात्मकं। तत्र यन्न भ्राम्यति तदभ्रान्तं। एतच्च लक्षणद्वयं विप्रतिपत्तिनिराकरणार्थं। न त्वनुमाननिवृत्त्यर्थं; यतः कल्प-नापोढग्रहणेनैवानुमानं निवर्तितं। तत्रासत्यभ्रान्तग्रहणे गच्छद्वृक्षदर्शनादि प्रत्यक्षं कल्पनापोढत्वात्स्यात्। ततो हि प्रवृत्तेन वृक्षमात्रमाप्यत इति सम्पादकत्वात्सम्यक्ज्ञानं कल्पनापोढत्वाच्च प्रत्यक्षमिति स्यादाशङ्का। तन्निवृत्त्यर्थमभ्रान्तग्रहणं। तद्धि भ्रान्तत्वान्न प्रत्यक्षं। त्रिरूपलिङ्ग-जत्वाभावान्नानुमानम्। न च प्रमाणान्तरमस्ति। अतो गच्छद्वृक्षदर्श-नादि मिथ्याज्ञानमित्युक्तं भवति। यदि मिथ्याज्ञानं; कथं ततो वृक्षावाप्तिरिति चेत्; न ततो वृक्षावाप्तिः। नानादेशगामी हि वृक्षः। तेन परिच्छिन्नः एकदेशनियतश्च वृक्षोऽवाप्यते। ततो यद्देशो गच्छद्वृक्षो दृष्टस्तद्देशो नावाप्यते। यद्देशश्चावाप्यते स न दृष्ट इति न तस्मात्कश्चिदर्थोऽवाप्यते ज्ञानान्तरादेव तु वृक्षादिरर्थोऽ-वाप्यते इत्येवमभ्रान्तग्रहणं विप्रतिपत्तिनिरासार्थं। भ्रान्तं ह्यनुमानं। स्वप्रतिभासेऽनर्थेऽध्यवसायेन प्रवृत्तत्वात्' इति व्याचख्यौ।

## तत्त्वमुक्ताकलापः

**तद्वदन्येऽपि जल्पाः ॥ १० ॥**

## सर्वार्थसिद्धिः

प्रसङ्गाः। ते कथमुद्धार्या इत्यत्राह—तद्वदन्येपि जल्पा इति। अन्येपि—नित्यसमादिरूपाः शुष्कप्रलापाः। तद्वत्—निरस्तवाक्यैस्तुल्यं वर्तन्ते। उत्थानपरिहारप्रकारभेदेऽपि स्वव्याघातादिदोषाविशेषादित्यर्थः।

घटकुड्यवदन्यत्वेऽनन्यत्वे तु स्वरूपवत्।
न गुणस्य गुणत्वं स्यादित्यसत् स्वोक्तिबाधतः॥
दूष्यादन्यदनन्यद्वा दूषणं न तु दूषणम्।
गर्दभादिवदन्यत्वेऽनन्यत्वे दूषणीयवत्॥

## आनन्ददायिनी

भावः। नित्यसमादिरूपेति—क्वचित्साहचर्यदर्शनमात्रेण व्यापकापादनं नित्यसमः। आदिशब्देनोत्कर्षसमादयो गृह्यन्ते। मतुबन्तता भ्रान्तिं वारयति—निरस्तवाक्यैरिति। ननु कथं तुल्यत्वं? उत्थानस्य परिहारस्य च भिन्नत्वादित्यत्राह—उत्थानेति। व्याघातांशमादाय तुल्यत्वमित्यर्थः। अन्येऽपि जल्पा इत्युक्तांशं दर्शयति—घटकुड्यवदिति। धर्मधर्मिणोर्भेदोऽभेदो वा? आद्ये घटकुड्यवद्धर्मधर्मिभावो न स्यात्। द्वितीये स्वरूपवद्धर्मधर्मिभावो न स्यादित्यर्थः। स्वोक्तिबाधत इति—सिद्ध्यसिद्धिरूपव्याघातादित्यन्ये। अनुमानेन धर्मधर्मिभावखण्डने अनुमानस्य धर्मधर्मिप्रतिपादकोदाहरणोपनयरूपस्वोक्तिविरोधादित्यर्थ इत्यपरे। जातिरूपतया स्वव्याघातकत्वादित्यप्याहुः। दूषणस्य स्वव्यापकत्वमेव दर्शयति—दूष्यादन्यदिति—दूषणं दूष्यादन्यन्न वा? उभय-

## सर्वार्थसिद्धिः

**एवं सम्बद्धत्वासम्बद्धत्व—समानकालत्वासमानकालत्व—युगपद्ग्राह्यत्वायुगपद्ग्राह्यत्वादिविकल्पस्य बाधास्तदुद्धाराश्च विशुद्धबुद्धिभिरवधातव्याः । दूष्येणापि सम्बन्धादिविकल्पदोषसाम्यादिति ॥ १० ॥**

इति द्रव्यातिरिक्तधर्माक्षेपपरिहारः.

---

## आनन्ददायिनी.

थाऽपि दूष्यादन्यगर्दभवत् तस्मादनन्यदूष्यवद्वा दूषणं न स्यादित्यर्थः । एवमिति—धर्मिणा रूपादिकं संबद्धमसंबद्धं वा ? सम्बद्धत्वे संयुक्तघटपटयोरिव धर्मधर्मिभावो न स्यात् । असंबद्धत्वे मेरुमन्दरयोरिव धर्मधर्मिभावो न स्यात् । एवं धर्मिणा धर्मस्समानकालोऽसमानकालो वा ? उभयथाऽपि समानकालीनासमानकलीनघटपटयोरिव गुणगुणिभावो न स्यादित्यर्थः । एवं धर्मिणा धर्मो युगपद्ग्राह्यो न वा ? उभयथाऽपि तादृशघटपटवदगुणत्वप्रसङ्ग इति प्रसङ्गो बोध्यः । एवं प्रमेयमप्रमेयं वा ? जन्यमजन्यं वा ? घटस्तदन्यो वा ? उभयथाऽपि न गुण इति प्रसङ्गाः आदिशब्देन विवक्षिताः । तदुद्धारक्रममाह—दूष्येणापीति । दूषणं दूष्येण संबद्धमसंबद्धं वा ? समानकालमसमानकालं वा ? युगपद्ग्राह्यमयुगपद्ग्राह्यं वा उभयथाऽपि तादृशदूष्यरासभादिवन्न दूषणमित्यादि प्रसङ्गादिति भावः । केचित्तु सम्बद्धत्वेत्याद्येवं व्याचख्युः—विशेषणस्य विशेष्येण सह सम्बद्धत्वे सोऽपि सम्बन्धस्संबद्धो नवा ? आद्ये अनवस्था । द्वितीये—

षण्णामपि पदार्थानामसंघातः प्रसज्यते ।

इति न्यायेन असंहतरूपता स्यात् । विशेषणस्य विशेष्येण समानका-

## सर्वार्थसिद्धिः

एवं द्रव्याद्रव्ये सामान्यतः प्रसाध्य द्रव्येषु प्रथमोद्दिष्टं त्रिगुणमादौ परीक्ष्यते। तत्र काश्चिदाह—'धीमन्निदर्शनतया प्रसिद्धस्सुरगुरुर्लोकायतं शास्त्रमारभ्य पृथिव्यादीनि चत्वार्येव तत्वान्याह। अधिकानि तु तावन्मात्रविभागोद्देशादपोढानि। अतिरिक्तचेतननिषेधाच्चेति। अत्र किं लोकायतसूत्राणि स्वयंप्रमाणतयोपादीयन्ते। तदुपस्थापकतया वा?

## आनन्ददायिनी

लीनत्वे सामग्र्यैक्यात्कार्यैक्यप्रसङ्गः। प्रागभावभेदस्य प्रतियोगिभेदाधीनतया तदसिद्धावसिद्धेः। भिन्नकालत्वे तु विशेषणस्य पूर्वत्वे निराधारकार्योत्पत्तिप्रसङ्गः। विशेष्यपूर्वकत्वे तु गुणाश्रयो द्रव्यमिति द्रव्यलक्षणव्याघातः। न च गुणात्यन्ताभावानधिकरणत्वेन निर्वाहः अत्यन्ताभावानधिकरणत्वं नाम अत्यन्ताभावाभावाधिकरणत्वं; तथा च अभावाभावस्य भावात्मकत्वात् गुणाधिकरणत्वमित्यर्थस्स्यात्। तथाचोक्तदोषानतिक्रान्तिः। गुणात्यन्ताभावस्यैकत्वे तत्रैवातिव्याप्तिः। अनेकत्वेऽनवस्थेत्यादिकमूह्यमिति ॥१०॥

इति द्रव्यातिरिक्तधर्माक्षेपपरिहारः.

---

प्रकृत्यादौ विप्रतिपत्त्यभावात्तत्र प्रमाणोपन्यासवैफल्यमाशङ्क्याह—द्रव्याद्रव्ये इति। धीमन्निदर्शनतया—बुद्धिमद्दृष्टान्ततया। लोकायतं शास्त्रमारभ्येति—'अथ लोकायतं शास्त्रं। पृथिव्यादीनि चत्वार्येव तत्वानि। तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्ति-

## सर्वार्थसिद्धिः

नाद्यः असम्मतेः, गुरूक्तेश्च [1]* विरोचनोपदेशवदसुरमोहनार्थत्वात्। न द्वितीयः उक्तेषु विवादाभावात्। अधिकानां निषेधस्य निष्प्रमाणकत्वात्। अनुपलब्ध्या निषेध इति चेन्न; योग्यानुपलब्धेरभावात्। इतरस्य निषेधकत्वायोगात्। उपलब्ध्या चेच्चतुर्णामुपादानं आकाशेन किमपराद्धम्। अस्ति ह्यासंसारं तदुपलम्भः। न चात्रास्पर्शत्वादिभिर्बाधः। अरूपत्वादिना वाय्वादेरपि निह्नवप्रसङ्गात्। शेषं च वक्ष्यामः। अथ उपलम्भबलादस्त्वाकाशमपीति चेत्; तथैव भिन्नाभिन्नभवानु-

## आनन्ददायिनी

वत्" इत्यादिनेत्यर्थः—विरोचनोपदेशवदिति—ब्रह्मणा मोहनार्थं विरोचनं प्रत्युपदेशवदित्यर्थः। अधिकानामिति—संख्याविशेषात्तन्मूलभूतप्रमाणेनाधिकनिषेधः कर्तव्यः। आगमबाधे(न)तदनुमानायोगादिति भावः। इतरस्य। अनुपलब्धिमात्रस्य। अस्ति हीति—इहाकाशे विहगः पततीत्याबालमुपलम्भादित्यर्थः। अरूपत्वादिनेत्यादिशब्दद्वयेन गन्धवत्त्वाभावाज्जलस्य स्नेहवत्त्वाभावात्तेजसश्चेति विवक्षितं। ननु महत्त्वे सत्युद्भूतस्पर्शवत्त्वं बाह्ये (ह्यैके) न्द्रियग्राह्यस्पर्शवत्त्वं वा द्रव्यप्रत्य(क्षे)क्षत्वे तन्त्रं; अनुगतसंभवे तत्परित्यागायोगादिति चेत्तत्राह—शेषं चेति—आकाशनिरूपणे इत्यर्थः। भिन्नभवो—जन्मान्तरं—

## भावप्रकाशः

[1]* विरोचनोपदेशवदिति—छान्दोग्याष्टमप्रपाठकाष्टमखण्डे विरोचनं प्रति प्रजापत्युपदेशोऽवसेयः॥

## सर्वार्थसिद्धिः

भूतार्थप्रतिसन्धाताऽप्यभ्युपगन्तव्यः। अस्तु तर्हि[1]* षड्धातुवादः [2]*अध्वर्युभिस्तथाध्ययनात् इति चेत् [3]*तर्ह्युद्गातृभिश्चतुर्णामध्ययनाच्चतुर्धातुवादः स्यात्। अनुक्रमविरुद्धमन्यतो ग्राह्यमिति चेत्समानं [4]*भूयसां च प्राबल्यात्। [5]* उपबृंहणप्राचुर्याच्च। न चात्र मिथो विरोधान्निरर्थकार्थवादमात्रता। सम्य-

## आनन्ददायिनी

तत्रानुभूतार्थप्रतिसन्धानं—स्तन्यपानादीष्टसाधनतास्मृतिः। अभिन्नभवे—बाल्ये अनुभूतस्य प्रतिसंन्धानं—तत्स्मृतिः। षड्धातुवादः—षट्तत्ववादः। अध्वर्युभिरिति—"तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादिना यजुर्वेदेऽध्ययनादित्यर्थः। उद्गातृभिरिति—"सदेव सौम्येदमग्र आसीत्तत्तेजोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्त" इत्यादिवाक्यैरित्यर्थः। ननु विभागेनोद्देशेनेतरव्यवच्छेदाद्विरोध इत्यत्राह—भूयसां चेति। भूयसां—चतुर्विंशतितत्वप्रतिपादकानामिति शेषः। विरोधाङ्गीकारेऽपि न तत्प्रतिबन्धीति भावः। भूयस्त्वमसिद्धमित्यत्राह—उपबृंहणप्राचुर्यादिति। तथाच अनुग्राहकप्राचुर्यमपि प्राबल्यप्रयोजकमविशेषादिति भावः। ननु भूयस्त्वमप्रयोजकं; शतमप्यन्धानां न पश्यतीति न्यायादित्यत्राह—नचात्रेति। सम्यङ्न्या-

## भावप्रकाशः

[1]* षड्धातुवादः—आत्मपञ्चभूतरूपषट्पदार्थवादः। [2]*अध्वर्युभिः—यजुर्वेदिभिः। [3]*उद्गातृभिः—सामवेदिभिः। [4]* भूयसां अतिरिक्तप्रतिपादकानां मैत्रायणीयसुबालमहोपनिषदादीनां।

[5]* उपबृंहणेति। विष्णुपुराणभारताद्युपबृंहणवचनान्याचार्यैः न्यायसिद्धाञ्जनादावुदाहृतानि।

## सर्वार्थसिद्धिः

ङ्न्यायानुग्रहमात्रेण बलाबलदृष्ट्या विरोधशान्तेः । केचित्तु प्रकृत्यादिशब्दै[1]*रदृष्टादिकं कथ्यत इत्याहुः । यथाहोदयनः— "इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात्प्रकृतिः। [2]* इत्यादि ।

## आनन्ददायिनी

यबलादुभयोरविरोधस्यैव स्थि(र)तत्वात् । चतुर्धातुवाक्यं चतुर्णां स्वरूपप्रतिपादनमात्रेणापि प्रामाण्यमश्नुते । न तदर्थमितरनिषेधमपेक्षते। चतुर्विंशतिवाक्यं तु न्यूनपरं चेन्न प्रामाण्यं लभते इति न विरोध इति भावः । ननु चतुर्विंशतिवाक्यस्य चतुर्विंशतितत्वपरत्वं नावश्यं वाच्यं; अन्यथाऽपि प्रामाण्योपपत्तेरिति नैयायिकमतमनुभाषते— केचित्त्वित्यादिना । प्रथमादिपदेन महदहङ्कारादिशब्दग्रहणं । द्वितीयादिपदेन बुद्धिविशेषचेतनगुणौ गृह्येते । कुसुमाञ्जलिसंमतिमाह— यथाऽऽहेति । सहकारिशक्तिः सर्वकार्यसहकारिकारणं, अदृष्टमित्यर्थः । दुरवबोधत्वान्मायाशब्दवाच्यतापीत्याह — दुरुन्नीतितः । तस्य प्रकृतिशब्दवाच्यताऽपि युक्तेत्याह — मूलत्वात्प्रकृतिरिति ।

## भावप्रकाशः

[1]* अदृष्टादिकमिति—अदृष्टबुद्धिविशेषाहमाभिमानाः प्रकृतिमहदहङ्कारशब्दार्थाः । तन्मात्राणि च सूक्ष्मभूतान्येव । कर्मेन्द्रियाणि तु तत्तदधिष्ठानान्येवेति ।

[2]* 'इत्यादीति—

प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ।।

## सर्वार्थसिद्धिः

**तदे[1]*तदपष्ठु। नियतक्रमानुपूर्वप्रकृतिविकृति[2]*परम्परोपदेशात्।**

## आनन्ददायिनी

नियतक्रमेति—प्रकृतिविकृतिभावस्य द्रव्यधर्मत्वादिति भावः। ननु न प्रकृतेर्महानिति प्रकृतिशब्देनोपादानमुच्यते; अपि तु निमित्तमात्र-

## भावप्रकाशः

इति कुसुमाञ्जलिप्रथमस्तबकान्तिमश्लोकः। इमं च कुसुमाञ्जलि-प्रकाशे वर्धमानः—(203–204 पृ.) व्याचकार—'यस्य देवस्य एषा अदृष्टरूपा सहकारिशक्तिः—सहकारिकारणं असमा मायेत्युदिता 'यन्मायाप्रभवं विश्वम्; इत्यत्र मायाशब्देनादृष्टस्याभिधानात्। अस-मत्वे हेतुः दुरुन्नीतितः; अदृष्टमाययोर्महाविचारोन्नेयत्वात्। 'प्रकृति प्रभवं विश्वं, इत्यत्राप्यागमे अदृष्टरूपा शक्तिरेव प्रकृतिरुदिता। कुतः मूलत्वात् मूलकारणमेव प्रकृतिशब्दार्थः। अदृष्टं च तथा। अवि-द्याप्रभवत्वागमे सैवाविद्येत्युदिता। यतः प्रबोधात् तत्वज्ञानात् उभ-योरपि भीतिः अविद्यावत् तज्जनकादृष्टस्यापि ततो भयात् तत्वज्ञाने तदनुत्पत्तेः' इति। *[1] अपाष्ठ्विति। 'अपदुस्सुषु स्थः' इति कुः। अपार्थमित्यर्थः। धर्माधर्मरूपादृष्टस्य तन्मते जविगतत्वेन—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥

इति श्रुत्याद्यसमञ्जसं स्यात्। एवं 'अजामेकां लोहितशुक्लकृ-ष्णाम्' इत्यादिरूपवत्त्वाम्नानमप्यसङ्गतं स्यात् इति भावः।

*[2] परम्परोपदेशादिति—उपदेशश्च श्रुतिपुराणादौ बोध्यः। अतीन्द्रियजगत्कारणविषये अनुमानप्रवृत्तिं भवदभ्युपगतामनुसरन्तः

## तत्त्वमुक्ताकलापे

**स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्राक्षसिद्धिः।**

## सर्वार्थसिद्धिः

**बाधाभावे भाक्तत्वायोगात्। अन्यथा सर्वत्र श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च। तदेतत्सर्वमभिप्रेत्याह—स्वच्छन्देनेति। *[1] साधकबाधकप्रमाणाभावे विशिष्टार्थबोधनसामर्थ्यं आगमस्य स्वाच्छन्द्यं। आगम इह श्रुतिस्मृतीतिहासादिः। करणदोषबाधकप्रत्ययविरहादस्मदाद्यतीन्द्रियविषयं शास्त्रमपि प्रत्यक्षवत् श्रद्धेयमेव। अत आगमिकानामपि सद्भावनिश्चय इति सिद्धि-**

## आनन्ददायिनी

मित्यत्राह—बाधेति। बाधाभावे निमित्तत्वस्य प्रकृतिशब्दबोध्यत्वादिति भावः। अन्यथेति—तथाच प्रकृतेरिति पञ्चमीश्रुतस्य तस्माद्वेति पञ्चमीश्रुतस्य जनिकर्तुरित्यनुशासनासिद्धस्य "तमासि लीयते" इति सप्तम्या च श्रुतस्योपादानत्वस्य हानिरश्रुतस्य निमित्तत्वस्य स्वीकार इत्यर्थः। अन्ये तु—प्रकृतिशब्दस्योपादानपरस्य निमित्तत्वे लक्षणास्वकार इत्याहुः। यद्वा—बाधकाभावेऽपि भाक्तत्वे सर्वत्र तथा प्रसङ्गेन कोऽपि सिद्धान्तो न सिध्येदित्यर्थः। साधकबाधकेति साधकसत्त्वेऽनुवादप्रसङ्गाद्बाधकसत्त्वे योग्यताविरहादर्थविशेषप्रतिपादनाभावादपुरुषार्थतापत्तेर्विहतं स्वाच्छन्द्यं। श्रद्धेयमेवेति। 'तत्प्रमाणं बाद-

## भावप्रकाशः

साङ्ख्या अपि प्रकृतिमहदादिकमनुमानत एव साधयन्तः प्रकृतिमहदादिक्रममागमसिद्धमेवाङ्गचकार्षुरिति भवतस्तस्य सर्वस्य त्यागो न युक्त इति भावः। *[1] साधकबाधकप्रमाणाभाव इति। उक्तं च मीमांसकैः—

## तत्वमुक्ताकलापः

**नाध्यक्षेणाप्रतीतेः**

## सर्वार्थसिद्धिः

शब्दाभिप्रायः। ननु प्रत्यक्षसिद्धं पृथिव्यादितत्वं। तच्च कार्यावस्थं प्रकृतिद्रव्यमेवेति ब्रूथ। तथा सति कारणावस्थमपि तदेवेति कथं तस्याप्रत्यक्षत्वं? अश्रुतागमैः अप्रतिसंहितव्याप्तिभिश्च बालादिभिरपि चक्षुरादिकरणानि व्यवह्रियन्ते। अतः कथं तेषामागमिकत्वं? तत्राह—नाध्यक्षेणेति। प्रत्यक्षविरुद्धेयं प्रत्यभिज्ञेत्याह—अप्रतीतेरिति। न हि प्रकृत्याद्यवस्थस्य प्रत्यक्षतः प्रतीतिरस्ति। अवस्थाभेदैरेकस्यैव प्रत्यक्षत्वाप्रत्यक्षत्वे बहुलं लोकदृष्टे। चक्षुरादिव्यव-

## आनन्ददायिनी

रायणस्यानपेक्षत्वात्' इति न्यायादिति भावः। ननु नाध्यक्षेणेति मूलमसंगतं अभागिप्रतिषेधापत्तेरित्याशङ्क्यावतारयति—नन्विति। नन्विन्द्रियाणामतीन्द्रियत्वात्तद्विषयं शास्त्रमर्थवदित्याह—अश्रुतागमैरिति। अप्रातिसंहितेति। यथा धर्माधर्मविषयकवैदिकव्यवहारात् व्यवहारविषयत्वेन व्यवहर्तव्यविशेषविषयमनुमीयते तद्वदपि न व्यवहार्यमनुमाय व्यवहार इत्यर्थः। ननु प्रत्यक्षसिद्धत्वं भवतु को दोष इत्यत्राह—अतः कथमिति। प्रत्यक्षसिद्धे शास्त्रस्य तात्पर्याभावादिति भावः। ननु पृथिव्यादीनामपि प्रत्यक्षत्वं न स्यात् तदभेदात् इत्यत्राह—अवस्थेति। असंयुक्तावस्यस्य केशस्य दूरे न प्रत्यक्षता। तस्यैव सजातीययुक्तावस्थस्य प्रत्यक्षता। प्रत्येकस्य

## सर्वार्थसिद्धिः

हाराश्च लौकिकानां तत्तदधिष्ठानमात्रविषयाः । मनसा जानामीत्युक्तिरपि[1]*धीविशेषाविषया। अहमिति प्रत्यक्षं तु न महत्तत्त्वविषयं अहङ्कारविषयं वा; प्रत्यगात्मन एवाहमिति भानात् ।

## आनन्ददायिनी

रजसश्चक्षुरगम्यत्वं; तस्यैव राश्यवस्थस्य चक्षुर्गम्यत्वं दृष्टमित्यर्थः। तथाच यदवस्थाविशिष्टस्य शास्त्रप्रतिपाद्यत्वं तदवस्थस्य न प्रत्यक्षत्वमिति भावः। ननु यत्र प्रत्यक्षमधिष्ठानं नास्ति तत्र कथमित्यत्राह—मनसेति। संभावनारूपधीविशेषविषय इत्यर्थः। ननु अहमिति महत्तत्त्वस्य अहङ्कारस्य च प्रत्यक्षत्वात् कथं तयोः शास्त्रवेद्यत्वमित्यत्राह—अहमिति । ननु साङ्ख्यैः 'अध्यवसायो बुद्धिः' इत्यत्र बुध्यते अध्यवस्यतेऽनेनेति व्युत्पत्त्या महत्तत्त्वपरिणामतयाऽध्यवसायस्य तन्निष्ठत्वोक्तेरध्यवसायाश्रयतया प्रतीयमानोऽहमर्थो महत्तत्त्वमेव। तथा 'अभिमानोऽहङ्कारः' इत्यत्र अभिमन्यतेऽनेनेति व्युत्पत्त्या तिरस्कारात्मकबुद्धेर्वाऽहङ्कारधर्मत्वात्तदाश्रयतया

## भावप्रकाशः

असन्निकृष्टवाचा च द्रव्यमेव जिहासितम् ।
ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा ॥

इति। [1]*धीविशेषः—संस्कारजन्यं ज्ञानं। तद्धि सविकल्पकस्मरणादि। ननु अतीन्द्रियविषयकस्य योगिप्रत्यक्षस्य सिद्धान्तेऽप्यङ्गीकारेण नाध्यक्षणेति मूलमयोग्यमिति चेत् न; योगिप्रत्यक्षस्यागमैकसिद्धस्य सिद्धान्तेऽङ्गीकारेण तत्र श्रुतावेव साधकत्वपर्यवसानस्य 'श्रुत्यालम्बे तु सैव प्रसजति शरणम्' इति (बुद्धिसरे ३६) वक्ष्यमाणत्वेनानुपपत्त्यभावात् ।

## सर्वार्थसिद्धिः

अध्यवसायादयोऽपि वस्तुत आत्मधर्माः। करणभेदपरतया तु तत्तद्वृत्तित्वोपचाराः। दृष्टेषु पृथिव्यादिष्वपि शास्त्रैकवेद्याः कतिकति न सन्त्याकाराः? किंपुनरन्येषु? अतो लोकोत्तीर्णा-

## आनन्ददायिनी

प्रतीयमानोऽहङ्कार इति चेत्तत्राह—अध्यवसायादयोऽपीति। तर्ह्यध्यवसायादेः तद्धर्मत्वे (शास्त्रेषु धर्मितया) तेषु तद्धर्मतया व्यपदेशः कथमित्यत्राह—करणभेदेति। करण(रूप)भूत महदाद्यायत्तत्वादित्यर्थः। ननु पृथिव्याद्यवस्थाविशिष्टस्यैव प्रत्यक्षवेद्यत्वात् कथं पृथिव्यादेश्शास्त्रवेद्यत्वम्? नच तस्य मास्तु तद्वेद्यत्वमिति वाच्यम्; तथा सति चतुर्विंशतितत्वानां शास्त्रवेद्यत्ववचनविरो(धः)धात् इत्यत्राह—दृष्टेष्विति। पृथिव्यवस्थाविशिष्टतया प्रत्यक्षत्वेऽपि सलिलादिजन्यत्वब्रह्मपरतन्त्रत्व ब्रह्मकारणकत्वब्रह्मशरीरत्वाद्यैर्धर्मैरप्रत्यक्षत्वेन शास्त्रवेद्यत्वमाविरुद्धम्।

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता।
श्रेयस्साधनताप्येषां नित्यं वेदात्प्रतीयते॥

इति न्यायादिति भावः। दृष्टानामेव पृथिव्यादीनां शास्त्रगम्यत्वे अतीन्द्रियप्रकृत्यादीनां शास्त्रगम्यत्वं किं पुनर्न्यायसिद्धमित्याह—किं पुनरिति। तथाच इदं सुखदुःखमोहात्मकं कार्यजातं तादृशकारणजन्यमित्यनुमानान्न सिध्यतीति भावः। ननु प्रकृत्यादीनामप्रत्यक्षत्वे तल्लक्षणग्रहणमनुपपन्नं; प्रत्यक्षदृष्टानां पृथिव्यादीनां तत्तदवान्तरभेदानां च लक्षणमप्यनुपपन्नं; कार्यकारणयोरभेदेन पृथिव्यादिलक्षण-

## सर्वार्थसिद्धिः

कारेण त्रिगुणस्य शास्त्रवेद्यत्वं। एषां च तत्वानां तदवान्तर-भेदानां च यथाऽऽगमं यथादर्शनं च लक्षणं ग्राह्यम्। केषु-चित् क्षीरगुडादिरसभेदवत् दुर्वचा अपि भेदास्त्वनुभवसिद्धा [1]* दुरपह्नवाः।

## आनन्ददायिनी

प्रकृत्यादावतिव्याप्तेश्चेत्यत्राह—एषां चेति। अप्रत्यक्षाणामागमबोधितं लक्षणं। तेषु सर्वतत्वकारणत्वं महत्तत्वकारणत्वं च प्रकृतिलक्षणं। प्रकृत्य-व्यवधानेन प्रकृतिजन्यत्वं महल्लक्षणं इत्यादिना ग्राह्यम्। पृथिव्या-दीनां च प्रत्यक्षतः। नचातिव्याप्तिः; यथादर्शनं यथाऽऽगमं तत्त-दवस्थाविशिष्टस्य लक्ष्यतया तत्तदवस्थाशून्यकाले लक्षणविरहादति-व्याप्त्यभावादिति भावः। ननु पृथिव्यादीनामनुगतस्य धर्मस्य दुर्वचत्वात् न लक्षणं संभवतीत्यत आह—केषुचिदिति। भेदाः—भेदकधर्मा इत्यर्थः। ननु प्रत्यक्षेणाप्रतीतेरित्यस्यानुषङ्गेऽनुमयेत्यनुप-

## भावप्रकाशः

[1]* दुरपह्नवा इति। तदाह दण्डी काव्यादर्शे—

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।
तथाऽपि न तदाख्यातुं सरस्वत्यापि शक्यते॥

इति। साङ्ख्यास्तु यस्यातीन्द्रियस्य साधनेऽनुमानं न प्रभवति तदेवाग-मतस्सिध्यतीत्याहुः। यथाहेश्वरकृष्णः—

'सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात्।
तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम्॥

इति। तदेतत्साङ्ख्यतत्वकौमुद्यां इत्थं व्याचकार वाचस्पतिः—'तत्र

## भावप्रकाशः

यत्प्रमाणम् यत्र शक्तं तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति—सामान्यत इति। तुशब्दः प्रत्यक्षपूर्ववद्भ्यां विशिनष्टि। सामान्यतो दृष्टादध्यवसायादतीन्द्रियाणां प्रधानपुरुषादीनां प्रतीतिः। चितिच्छायापत्तिर्बुद्धेरध्यवसाय इत्यर्थः। उपलक्षणं चैतत्; शेषवदित्यपि द्रष्टव्यम्। तत्किं सर्वेष्वतीन्द्रियेषु सामान्यतो दृष्टमेव प्रवर्तते? तथाच—यत्र तन्नास्ति महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च तत्र तेषामभावः प्राप्त इत्यत आह—तस्मादपीति। तस्मादित्येतावतैव सिद्धे चकारेण शेषवदित्यपि समुच्चितं' इति। एतद्व्याख्यायां साङ्ख्यतत्वविभाकरनाम्न्यां वंशीधर इत्थमाह—' आदिना संयोगसंग्रहः। प्रकृतिपुरुषतत्संयोगा नित्यामेया इत्युक्तेः। जडायाः प्रतीतेर्घटादेरिव प्रमेयव्यवहारहेतुत्वाभावादाह—चितीति। चितिच्छाया—चैतन्यप्रतिबिम्बः तस्यापत्तिर्यत्र चैतन्यप्रातिबिम्बाश्रयेत्यर्थः। सा च बुद्धेरन्तःकरणस्याध्यवसायः वृत्तिरूपपरिणामः। अचेतनोऽपि चेतन इव भवतीत्यर्थः। नन्वतीन्द्रियादौ व्यतिरेकिणोऽपि सम्भवात् कथं सामान्यतो दृष्टादेव तत्प्रतीतिरित्यत आह—उपलक्षणमिति। शेषवतः—अवीतस्य व्यतिरेकिण इत्यर्थः। आगमस्य वैफल्यमाशङ्कते—तत्किमिति। तत्रेष्टापत्तिमाशङ्क्य निराकरोति - तथाचेति। पदार्थक्रमे अनुमानद्वयं न सम्भवति कार्यलिङ्गेन कारणानुमानात्। तथा च परोक्षे प्रत्यक्षानुमानयोरविषये श्रुतिरेवमानं। स्वर्गबोधकं 'यन्न दुःखेन' इत्यादि। स्वर्गकामो यजेतेत्यादि अपूर्वे। अपूर्वं विना आशुविनाशिनो यागस्य स्वर्गसाधनत्वासम्भवात्। देवतायां 'अग्नीषोमाविदं हविरजुषेतां'। ऐन्द्रं दध्यमावास्यायां' इत्यादि। सामान्यतोदृष्टाद्यथा प्रधानादीनां सिद्धिः तथा 'प्रकृतेर्महान्' इत्यादौ स्पष्टमभिधास्यते इत्याह। एवं च स्वच्छन्देनागमेनेति मूलमसङ्गतमित्यभिप्रयन् न पुनरनुमयेति मूलमवतारयति—

## तत्वमुक्ताकलापः

**न पुनरनुमया व्याप्तिलिङ्गाद्यसिद्धेः ।**

## सर्वार्थसिद्धिः

[1]*ननु साङ्ख्योक्तैरनुमानैः प्रधानादिसिद्धिस्स्यादित्यत्राह— न पुनरनुमयेति । न त्वनुमानैरित्यर्थः । तत्र हेतुः—व्याप्तिलिङ्गाद्यसिद्धेः । यथासम्भवं व्याप्तिलिङ्गपक्षदृष्टान्तानामसिद्धेरित्यर्थः । तथा हि—यत्तावदुक्तं ।

कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धमिति ।

[2]*अयमर्थः—

## आनन्ददायिनी

पत्रं; अनुमाशब्दस्यानुमितिपरत्वेन तज्जन्यप्रतीत्यभावादित्यत्राह— न पुनरनुमयेति अनुमानैरित्यर्थः इति । अनुमाशब्दः करणपरो जात्येकवचन इति भावः । आदिशब्दार्थमाह—पक्षदृष्टान्तेति । साङ्ख्योक्तं प्रकृत्यनुमानं दूषयितुमनुभाषते—यत्तावदुक्तमिति । काकस्य कार्ष्ण्याद्धवलः प्रासाद इतिवदसंगतामित्यत्राह—अयमर्थ इति ।

## भावप्रकाशः

[1] * नन्वित्यादिना । तत्राव्यक्तसाधनार्थप्रवृत्तसाङ्ख्यसप्ततिकारिकार्थमनुवदति — कारणेत्यादिना । तत्र साङ्ख्यतत्वकौमुदीमनुसृत्य कारिकार्थमाह— [2]* अयमर्थ इत्यादिना । अत्र 'महदादिकार्येण सुखदुःखमोहरूपेण स्वकारणगतसुखदुःखमोहात्मना भवितव्यमिति' वाचस्पतिवाक्येन कार्यत्वे सति यद्धर्मवत्त्वं यत्र तत्र कारणगततद्धर्मात्मकत्वमिति व्याप्तिस्सूच्यते । एतच्च अत्र कार्याणां

## सर्वार्थसिद्धिः

यत् कार्यं तत् कारणगुणात्मकं यथा तन्त्वादिगुणात्मकं पटादि; तथा महदादिकार्यजातमपि सुखदुःखमोहात्मकतया स्वकारणगतसुखदुःखाद्यात्मकं भवति; अतस्तत्कारणं सुखदुःखाद्यात्मकं प्रधानमिति। तत्र पटादेः किमिदं कार-

## आनन्ददायिनी

सुखदुःख मोहात्मकतयेति। इत्थं साङ्ख्यप्रक्रिया—सर्वं कार्यजातं सुखदुःखमोहात्मकं। यथा स्त्री रूपयौवनकुलादिसंपन्ना स्वामिनं सुखाकरोति स्वामिनं प्रति सुखात्मकत्वात्। एवं पुरुषान्तरं मोहयति तं प्रति मोहात्म-

## भावप्रकाशः

स्वगुणसरूपगुणकारणकत्वानुमानमपि अनैकान्त्यदुस्स्थमिति; परत्र चाचार्यवाक्ये व्यक्तम्। अत एवात्र वंशीधरेण महदादि सुखदुःखमोहद्रव्योपादानकं कार्यत्वे सति तद्विशेषगुणवत्त्वात् इत्यनुमानप्रयोगान्निष्कर्षितः। मूलस्याप्यत्रैव तात्पर्यमिति माठरवृत्तौ स्पष्टं; यथा—[1] कारणस्य गुणाः कारणगुणाः ते अत्मा—स्वभावो यस्य तद्भावः कारणगुणात्मकत्वं। आत्मशब्दः स्वभावे वर्तते। कारणगुणस्वभावत्वात्कार्यस्य इह लोके यदात्मकं कारणं तदात्मकमेव कार्यमपि भवतीति। महदादीनां सुखदुःखमोहात्मकत्वं—त्रिगुणं . . . ११॥ प्रीत्यप्रीतिविषादात्मकाः . . . गुणाः १२॥ इति कारिकायोः व्यक्तं। अत्र वाचस्पतिः—त्रिगुणमिति। त्रयो गुणा अस्येति त्रिगुणं। तदनेन सुखादीनामात्मधर्मत्वं पराभिमतमपाकृतमित्याह। उत्तरत्र च १३. यत्सुखहेतुः तत्सुखात्मकं सत्वं यद्दुःखहेतुः तद्दुःखात्मकं रजः यन्मोहहेतुः तन्मोहात्मकं तमः इति तदेवासाधयत्। अत्र वंशीधरविवरणं—तदनेनेति—'कामस्सङ्कल्पः

## सर्वार्थसिद्धिः

णगुणात्मकत्वं? किं कारणगुण[1]तादात्म्यं उत [2]कारणं प्रति गुणभूतत्वं [3]अथ अप्रधानत्वं [4]कारणगुणैर्गुणित्वं वा [5]तत्स-जातीयगुणवत्त्वं वा?

## भावप्रकाशः

. . . एतत्सर्वं मन एव'। 'तीर्णो हि तदा हृदयस्य शोकात् कामा-दिकं मन एव मन्यमानः' इत्यादि श्रुतिविरोधादिति तात्पर्यार्थ इति। एवं (२२३) तथा च विमतानि बाह्यानि सुखाद्यात्मकानि तद्धेतुत्वात् बुद्ध्या-दिवत्। नचानुकूलतर्काभावः यस्यान्वयव्यतिरेकौ सुखादिना दृश्येते तस्यैव सुखाद्युपादानत्वं कल्प्यते; तस्य निमित्तत्वं परिकल्प्यान्यस्यो-पादानत्वकल्पने कारणद्वयकल्पनागौरवं। तथाच लाघवमेवानुकूलतर्कः।

तत्सन्तु चेतस्यथवाऽपि देहे सुखानि दुःखानि च किं ममात्र।

इति मार्कण्डेयपुराणवचनाच्च। 'याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्मविद्वान् इति दिशो वेद सदेवास्सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवास्सप्रतिष्ठा (बृहदा ३-९-१९) किंदेवतोऽस्यां प्राच्यां दिश्यसीति आदित्यदेवत इति; स आदित्यः कस्मिन् प्रतिष्ठित इति? चक्षुषीति; कस्मिन्नु चक्षुः प्रतिष्ठितमिति? रूपे-ष्विति; चक्षुषा हि रूपाणि पश्यति; कस्मिन्नु रूपाणि प्रतिष्ठितानीति? हृदय इति होवाच; हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठानि भवन्तीत्येवमेतद्याज्ञवल्क्य '(बृ ३-९-२०) इत्यादि बृहदार-ण्यश्रुत्या सर्वेषां बाह्यानां बुद्धिकार्यत्वावधारणेन सुखद्यात्मकत्वस्य सूचनाच्च इत्यादि। [1]तादात्म्यमभेदो भेदाभेदो वा। [2-3]*द्वितीयतृती-यविकल्पयोः मूलप्रकृतेः प्रधानशब्देन व्यपदेशात् महदादेश्च तथाऽव्यप-देशात् महदादेर्गुणतया कारणगुणात्मकत्वं युज्यते इति भावः। [4-5]*चतु-र्थपञ्चमविकल्पयोः त्रिगुणमविवेकीत्यादिषु तेषां गुणाश्रयत्वव्यवहारो मूलं।

## सर्वार्थसिद्धिः

[1]*अन्यद्वा किं चित्? नाद्यः; असिद्धेः। [2]* न खलु तन्त्वादिगुणैश्शुक्लादिभिः पटस्य तादात्म्यं दृष्टं। तथा सति गुणवत्तन्तुनिष्पत्तिमात्रेण पटनिष्पत्तिप्रसङ्गात्। *[3] नचायमिष्टः प्रसङ्गः; अभिव्यक्तिवादादेरपाकरिष्य-

## आनन्ददायिनी

कत्वात्। सपत्नीं दुःखाकरोति तां प्रति दुःखात्मकत्वात्। अनया स्त्रिया सर्वे भावा व्याख्याता इति। तथाचेदं कार्यजातं सुखदुःखमोहात्मकमिति तादृशकारणजन्यं तादृशकार्यत्वात् यद्यदात्मकं कार्यं तत् तदात्मककारणजन्यं यथा मृदात्मको घटस्तदात्मकमृज्जन्य इति सुखाद्यात्मकतया परिणतसत्वाद्यात्मकप्रकृतिसिद्धिरिति भावः। ननु शुक्लः पट इति प्रतीतिस्तन्त्वादिगुणैस्तादात्म्यं पटादेरस्त्वित्यत्राह—
तथा सतीति। तथा च पटाद्यर्थकारकव्यापारवैयर्थ्यमिति भावः। ननु कारकव्यापारो न पटाद्युत्पत्त्यर्थोऽपितु तदभिव्यक्त्यर्थः इत्यत्राह—
नचायमिति। ननु शुक्लः पट इति धीभेदव्यवहारबलात्पटगुणयोः

## भावप्रकाशः

[1]* अन्यद्वा—माठरवृत्त्याद्युक्तं कारणगुणस्वभावत्वादिकम्।
[2]* न खल्वित्यादि—शुक्ल पट इति प्रतीत्या पटगतशुक्लरूपस्य पटस्य चाभेदस्य शङ्कार्हत्वेऽपि तन्तुगतशुक्लरूपस्य पटस्य चाभेदशङ्कायां बीजदर्शनं नेति भावः। ननु तन्तूनामेव पटरूपेणाभिव्यक्त्या तन्तुपटयोरभेदेन शुक्लरूपपटयोश्च पृथग्जन्माननुभवेन शुक्लः पट इति प्रतीत्या चा भिन्नतया तन्तुगतशुक्लादिभिः पटस्य तादात्म्येन गुणवत्तन्तुनिष्पत्तिमात्रेण पटनिष्पत्तिप्रसङ्ग इष्ट एवेत्याशङ्कायामाह
[3]* नचेत्यादि—अभिव्यक्तिवादादेरित्यत्रादिपदस्य द्रव्यगुणयोः पृथ-

## सर्वार्थसिद्धिः

माणत्वात् । अत एव न द्रव्यस्य गुणतादात्म्यं । [1]*शुक्लः पट इति च न पर्यायः। न द्वितीयः; अदृष्टेरेव । तन्तुसमवेतत्वात्

## आनन्ददायिनी

भेदस्सिद्धः । तथा च तन्तुपटयोस्तादात्म्यात्तन्तुरूपमेव पटरूपमिति कारणगुणतादात्म्यं सिद्धमित्यत्राह—अत एवेति । द्रव्यनिष्पत्तिमात्रेण रूपादेस्सिद्ध्या रूपाद्यर्थपाकादिरूपकारकव्यापारवैयर्थ्यप्रसङ्गादेवेत्यर्थः । दूषणान्तरमाह—शुक्लः पट इति । अभेदे पर्यायत्वप्रसङ्गादित्यर्थः । न च अभेदेऽपि द्रव्यपटयोः पर्यायत्वाभाववदिहापी (पिने) ति शङ्क्यं; तत्र द्रव्यत्वादेर्भिन्नधर्मस्य सत्वात् । अत्रापि भिन्नधर्माङ्गीकारे स एव गुणो धर्मि (धर्मीच) भिन्न इति भावः । ननु कारणगुणभूत-रूपाद्यात्मकत्वाभावेऽपि रूपादिवत् स्वयमपि गुणान्तरं भवत्विति द्वितीयपक्षं दूषयति—न द्वितयि इति। तथा च असिद्धिरित्यर्थः।

ननु कारणगुणत्वं नाम कारणसमवेतत्वमेव विवक्षितं; अस्ति

## भावप्रकाशः

ग्जन्माननुभवादेरभेदसाधकत्वमर्थः । अपाकरणं जडसारे (२४) श्लोकादौ बोध्यम् । द्वयोः पृथग्जन्माननुभवस्याभेदसाधकत्वे रूप-रसादेरैक्यप्रसङ्गः स्फुट इति भावः । अत एव—अपाकारिष्यमाणत्वादेव । धर्मधर्मिणोरभेदे बाधकमाह—शुक्लः पट इति । सत्वादिद्रव्यत्रये पुरुषोपकारकत्वाद्गुणशब्दप्रयोगः न तु मुख्य इति हि सांख्यानां रहस्यं । इत्थं च कारणगुणात्मकत्वादिति हेतोः समन्वयादिति हेतुतो न फलतो

## सर्वार्थसिद्धिः

**पटस्य तन्तुगुणत्वोक्तिरिति चेन्न; अवयविसमवाययोः त्वयाप्यनभ्युपगमात्। पटत्वस्य तन्तुनिष्ठत्वमुपलब्धमिति चेत्; किमतः; कार्यावस्थानां कारणद्रव्यवृत्तित्वमात्रसाधनापत्तेः। तथा च न कारणावस्थस्य सुखाद्यात्मकत्वसिद्धिः। कारणमात्रं तु सिद्धत्वान्न साध्यं। तृतीयेऽपि किमिदं कार्यस्य कारणं प्रत्यप्रधानत्वं? तत्कार्यत्वमिति चेन्न; सिद्धसाधनात्। साध्याविशेषाच्च। न हि अकारणेन किञ्चित्कार्यमिच्छामः।**

## आनन्ददायिनी

च तत् पटेऽपि तन्तुसमवेतत्वादिति शङ्कते—तन्तुसमवेतत्वादिति। ननु तन्निष्ठत्वमेव तद्गुणत्वप्रयोजकमस्तु त (तु) च पटावस्थाया अस्तीति शङ्कते—पटत्वस्येति। किमत इति। महत्त्वाद्यवस्थाः कारणनिष्ठाः कार्यावस्थात्वात् पटत्वाद्यवस्थावदिति हि तदा प्रयोगो भवेत्। तथा च कारणगुणसामान्य सिद्ध्येत् न तु त्रिगुणात्मककारणविशेष इति भावः। सिद्धसाधनादिति—महत्त्वा (हदा)दिकं कारणायत्तं कार्यत्वादिति हि तदा स्यात्; तथा च चार्वाकव्यतिरिक्तं प्रति सिद्धसाधनमेवेति भावः। साध्याविशेषाच्चेति-- कारणनियतपश्चाद्भावित्वलक्षणकार्यत्वस्य कारणायत्तत्वस्य च पर्यायत्वादिति भावः। ननु कारणनियतपश्चाद्भावित्वं न कार्यत्वं अपि तु प्रागभावप्रतियोगित्वादिकं; तथा न पर्यायत्वं न सिद्धसाधनं चेत्यत्राह—न हीति। कार्यमात्रस्य कारणानिरूप्यत्वव्याप्तिग्रहाद्व्याप्तिग्रहसामान्यसिद्ध्यैव सिद्ध्या सिद्धसाधनमिति भावः। यद्वा—कारणं विनाऽपि कार्य (कार्यं किं) मस्त्वित्यत्राह—न हीति। अकारणं—कारणाभावः। सहयोगे तृतीया। न हि कारणाभावस्थले कार्यं चार्वाकादन्येऽङ्गीकुर्व-

## सर्वार्थसिद्धिः

कारणसहकारित्वादिसाधनेऽपि न विवक्षितसिद्धिः। न चतुर्थः; अवयविवादे तन्तुपटोदाहरणायोगात्। तत्र हि तन्तुगुणैः पटगुणा जन्याः। द्रव्यनित्यत्ववादे सिद्धसाधनात्। कार्यावस्थस्य कारणावस्थानियतगुणसाधने विरोधात्। पञ्चमस्तु विलक्षणमहत्त्वाद्यधिकरणत्वान्निरस्तः। सजातीयगुणसद्भावमात्रे

## आनन्ददायिनी

न्तीति भावः। कारणसहकारित्वादीति—कारणं प्रत्यप्रधानत्वं कारणसहकारित्वमिति निर्वचनेऽपि (तेन) कारणं किञ्चित्सिद्ध्येत्। न तु सुखदुःखमोहात्मकमित्यर्थः। आदिशब्देन समवायिविनाशजन्यविनाशप्रतियोगित्वादिकं विवक्षितं। इदमुपलक्षणं—कारणस्य कार्यजनने सहकारित्वं नाम किं स्वजनने स्वकारणापेक्षया उत? यत्किञ्चित्कार्यजनने तत्कारणापेक्षया? नाद्यः; बाधात्, महदादेः प्रकृत्यादिसहकारित्वा (सिद्धेः) भावात्। न द्वितीयः; सिद्धसाधनादित्यपि द्रष्टव्यम्। अवयविवादे इति—तथा च असिद्धिरिति भावः। विरोधादिति—नित्यत्वाव्यक्तत्वादिसाधने कार्यत्वव्यक्तत्वादिना विरोधादित्यर्थः। ननु कार्यस्य स्वगुणा (णत्वा) वच्छेन कारणावस्थवृत्तित्वं साध्यं। तथा च सुखदुःखमोहादीनां महदादिधर्माणां त (द्वति कारणे वृत्त्या) त्कारणवृत्त्या तदात्मकप्रकृतिसिद्धिरिति चेन्न। अहङ्कारादिस्वकार (णा) णवृत्तिशब्दादिगुणवत्तयाऽऽकाशादीनां तत्र व्यभिचार इति भावः। कारणगुणसजातीयैर्गुणवत्त्वमित्यत्र किं तैरेवेत्यवधारणं विवक्षितं उत नेति विकल्पमभिप्रेत्य आद्ये दोषमाह—विलक्षणेति द्वितीयं निरस्यति—स्वसजातीयेति। किं च किं कारणगुणवत्त्वमात्रं साध्यते यद्वा सर्वगुणसजातियसर्वगुणवत्त्वं वा उत विशेषगुणसाजात्यं

## सर्वार्थसिद्धिः

साध्ये सिद्धसाधनात् । सर्वगुणसजातीयत्वसाधने कार्यकारणयोरविशेषप्रसङ्गात्, *[1] मृत्सुवर्णादिवत् कार्यविशेषव्यवस्थापककारणस्वभावसाजात्यविवक्षायां गोमयमाक्षिकाद्यारब्ध-

## आनन्ददायिनी

वे(मि)ति विकल्प्याद्ये दोषः काकाक्षिन्यायेनावर्तनीय इति मत्वा द्वितीये दोषमाह—सर्वगुणेति । यथा मृद उत्पन्नो घटो मृदात्मकः स्वर्णादुत्पन्नः कटकः स्वर्णात्मकः तद्वदित्यर्थः । तृतीये दोषमाह—कार्यविशेषेति । महदादि कार्यं कार्यविशेषधर्मव्यवस्थापककारणगुणसजातीयगुणवत् कार्यत्वात् इति साधने वृश्चिकमाक्षिकादौ व्यभिचारीति भावः । 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' इति

## भावप्रकाशः

वैलक्षण्यमिति व्यञ्जयन्नाह—[1]*मृत्सुवर्णादिवदित्यादिना । यथोक्तं वाचस्पतिना ' भिन्नानां समानरूपता समन्वयः । सुखदुःखमोहसमन्विता हि बुध्यादयोऽध्यवसायलक्षणाः प्रतीयन्ते । यानि यद्रूपसमनुगतानि तानि तस्स्वभावाव्यक्तकारणकानि ; यथा मृद्धेमपिण्डसमनुगता घटमकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति ' । अत्रयद्रूपसमनुगतानि—यत्स्वभावात्मकानीति व्याचख्यौ वंशीधरः । अत्र सर्वार्थसिद्धौ कार्यविशेषव्यवस्थापकेत्यनेन मृद्धेमपिण्डेत्यादिवाचस्पतिवाक्ये मृत्स्वभावान्वयस्य घटादिकार्यविशेषनियामकत्वमभिप्रेतमिति व्यञ्जितं । एवं कारणगुणात्मकत्वादिति कारिकाविवरणे 'महदादिलक्षणेनापि कार्येण सुखदुःखमोहरूपेण स्वकारणगतसुखदुःखमोहात्मना भवितव्यं' इत्यत्रापीति बोध्यम् ।

## सर्वार्थसिद्धिः

**वृश्चिकादिषु व्यभिचारात् । तदभिप्रायं च सूत्रं [1]*"दृश्यते तु" इति । नापि षष्ठः; तस्य त्वद्बुद्धिमात्रारूढस्य अदूष्यत्वात् । लोकदृष्टस्य तु कस्यचिदुक्तो (दत्तो) त्तरप्रायत्वात् । अतः कर्मणां स्वविषयसरूपफलप्रदत्वानुमानवत् कार्याणां स्वगुणसरूपगुणकारणकत्वानुमानमपि अनैकान्त्यदुःस्थमिति ।**

## आनन्ददायिनी

व्याससूक्तिसम्मतिमाह — तदभिप्रायमिति । कार्यकारणयोर्गोमयवृश्चिकयोर्वैलक्षण्यं दृश्यत इत्यर्थः । स्वविषयसरूपेति—स्वस्य हिंसादेर्विषयो वधादिस्तज्जन्यदुःखादिकं वा तत्सरूपफलप्रदानानु-

## भावप्रकाशः

[1]*'दृश्यते तु इति' इति—अत्र भाष्यं— दृश्यते हि माक्षिकादेर्विलक्षणस्य कृम्यादेस्तस्मादुत्पत्तिः । ननूक्तमचेतनांश एव कार्यकारणभावात्तत्र सालक्षण्यं ; सत्यमुक्तं; न तावता कार्यकारणयोर्भवदभिमतसालक्षण्यसिद्धिः इत्युपक्रम्य 'नहि घटमकुटादिष्विव वस्त्वन्तरव्यावृत्तिहेतुभूतासाधारणाकारानुवृत्तिर्माक्षिकगोमयवृश्चिकादिषु दृश्यते' इति । एतेन अचेतनत्वेन सुखदुःखमोहात्मकत्वेन गुणवद्द्रव्यत्वेन वा सादृश्यं विवक्षितमिति वंशीधरवचनमपि दत्तोत्तरम् । येन केनचित्सारूप्यं तु जगद्ब्रह्मणोरपि सत्तादिसाम्यसंभवाद्भाष्य एव न विवक्षार्हमित्युक्तम् । असङ्गश्रुत्या ब्रह्मणि परिणामाङ्गीकारो न संभवतीति वंशीधरोक्तं तु न युक्तं; तथा सति असङ्गश्रुतिविरोधेन तन्मते प्रकृतिपुरुषयोर्संयोगाङ्गीकारस्यैवासंभवप्रसङ्गात् । कूटस्थस्य सर्वमूर्तसंयोगित्वरूपाविभुत्वानुपपत्तेः । सामान्यगुणातिरिक्तधर्म एव परिणामः तद्धेतुसंबन्ध एव सङ्गशब्दार्थ इति वंशीधरोक्त्या तन्मते न दोष इति

## सर्वार्थसिद्धिः

येच *[1] भेदानां परिमाणादित्यादि-। हेतव उक्ताः ।

## आनन्ददायिनी

मानवदित्यर्थः । वैदिकहिंसा स्वपीडनजनिका परपीडनात्मकत्वादिति वा; वैदिकहिंसा स्वविषयसरूपफलप्रदा क्रियात्वात् इति वा प्रयोगो द्रष्टव्यः । पशुदहनादौ च परस्त्रीगमनादौ च व्यभिचार इति भावः ।

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥
कारणमस्त्यव्यक्तं . . . . ।

इति सांख्योक्तानुमानान्तराण्यपि दूषयितुमनुभाषते—ये चेति । भेदानां - महदादिकार्याणां कारणमव्यक्तमस्ति कुतः परिमाणात् परिच्छि-

## भावप्रकाशः

चेत् तर्हि श्रीभाष्याद्युदाहृतश्रुतिसिद्धान्तर्यामित्वादिधर्मान्यथानुपपत्त्या संकोचविकासात्मकावस्थादिसंबन्धस्यैव सङ्गशब्दार्थत्वौचित्येनैतन्मतेऽप्यनुपपत्त्यभावात् । कारणद्रव्येषु रूपाद्यभावेऽपि न्यूनाधिकभावने कारणद्रव्याणामन्योन्यसंयोगस्यैव तन्मात्रारूपादेः कारणतायाः स्वेनैव स्वीकृततया अत्रापि विलक्षणपरिणामस्यैव महदादिगतसुखदुःखमोहप्रयोजकत्वसंभवेन महदादिगतसुखदुःखमोहानां स्वकारणगतसुखदुःखमोहान्विनाप्युत्पत्तिसंभवेनाप्रयोजकत्वाच्च ।

[1]* भेदानां परिमाणादित्यादिनेति । आर्यामिमामित्थमवतारयामास वाचस्पतिः—स्यादेतत् 'व्यक्ताद्व्यक्तमुत्पद्यते' इति कणभक्षाक्षचरणतनयाः । परमाणवो हि व्यक्ताः तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्यं व्यक्तमारभ्यते । पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः । तस्मात व्यक्तात् व्यक्तस्य तद्गुणस्य चोत्पत्तेः कृत-

## सर्वार्थसिद्धिः

**तत्र तावत्–यत् परिमितं तत् सकारणकं इत्यत्र न व्याप्तिः।**

## आनन्ददायिनी

न्नत्वात् इति प्रथमो हेत्वर्थः। तद्दूषयति–तत्रेति। तत्र परिच्छिन्नत्वात्सकारणकमित्येवानुमानं; न त्वव्यक्तकारणकमिति। 'कारणमस्त्यव्यक्तम्' इति तु पक्षधर्मताबल सिद्धा (लभ्या) भिप्रायं। तथा च

## भावप्रकाशः

महदष्टचरेणाव्यक्तेनेत्यत आह–भेदानामिति' इति। अत्र वंशीधरविवरणं 'ननु सुखात्मककार्येण कारणस्याव्यक्तस्य पूर्वार्यायां साधितत्वात् परिमाणादिना पुनःसाधने पौनरुक्त्यापत्तिरित्याशङ्कायां कणभक्षादिमतविरोधेन साधितमप्यसाधितमिव भवतीति न्यायेन पुनः प्रसङ्गसङ्गत्या परमतानिराकरणं विना प्रकृत्यर्थो न सिध्यतीत्युपोद्घातसङ्गत्या बहुसाधनहेतुकामार्यामवतारयति–स्यादेतदिति' इति। यद्यपि तत्वकौमुद्यां कारणकार्यविभागाविभागौ शक्तितः प्रवृत्तिरिति हेतुत्रयं परिमाणहेतोः प्राक् निरूपितं; तत्र पाठक्रमत्यागे चेदं निदानं वंशीधरेणोक्तं–अव्यक्तपदार्थस्यातीन्द्रियस्य रूपादिविहीनस्य वा कारणत्वादर्शनेन दृष्टान्तासिद्धिरिति। तथाऽपि वंशीधरेणैव ननु. पारिभाषिकाव्यक्तत्वस्य परमाणुषु महत्तत्वाहङ्कारपञ्चतन्मात्रान्यतमेषु वा संभवेन कृतं ततः परेणाव्यक्तेनेति परिमाणादिति हेतोः चेतनस्य सुखाद्युपादानत्वनिराकरणार्थं समन्वयादिति हेतोश्च प्रवृत्त्यभिधानेन परिमाणादित्यस्यैव प्राधान्यं। अत एव माठरवृत्त्यादौ पाठक्रमानुसरणं युज्यते इत्याभिप्रयन् पाठक्रममनुसृत्यैव दुदूषयिषुः 'परिमाणादिति परिमितत्वात् अव्यापित्वादिति यावत्' इति वाचस्पत्युक्तमर्थं दूषयति–*[2]तत्र तावदित्यादिना।

## सर्वार्थसिद्धिः

जीवाणुत्वनित्यत्वयोस्साधयिष्यमाणत्वात् । महदादीनां स्वरूपं *[1] अनुमानसिद्धं वा पक्षीक्रियते *[2] आगमसिद्धं वा? नाद्यः तल्लिङ्गासिद्धेः ।

## आनन्ददायिनी

आत्मनि व्यभिचारान्न व्याप्तिरित्यर्थः तल्लिङ्गासिद्धेरिति—तथा चाद्यानुमानस्याश्रयासिद्धिरिति भावः। ननु विष्वक्प्रवणा चिच्छक्तिः किंचिद्द्वारमपेक्ष्यप्रवर्तते स्वतो विष्वक्प्रवणयोग्यत्वे सति कदाचिदेव किंचिद्विषयकत्वात् यत्प्रवणयोग्यत्वेसति तेषु किंचिदेव प्रकाशयति तत्तत्र किंचिद्द्वारमपेक्षते यथाघटस्थदीपालोको बहिरर्थप्रकाशकः इति । तथाच यद्द्वार-

## भावप्रकाशः

*[1] अनुमानसिद्धंवेति—तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम् । (२६) इति कारिकोत्तरार्धावतरणतत्वकौमुद्यां 'यत्र तन्नास्ति महदाद्यारम्भक्रमे' इति वाक्येनारम्भक्रमेऽनुमानाप्रवृत्तिप्रतीतावपि महदादौ तदप्रतीतेरिति भावः । *[2] आगमसिद्धं वेति—महदादौ तदारम्भक्रमे चानुमानाप्रवृत्तिः पूर्ववाक्ये विवक्षितेत्यभ्युपगमेनेदं । अत एव मूले महदाद्यनुमानाकाराणामनुल्लेख इति भावः । एतेन 'प्रकृतेर्महान्' इति श्लोकव्याख्यानावसरे यदाह नवीनो वंशीधरः—'एतेषु पदार्थेषु अष्टौ प्रकृतयष्षोडश विकाराः' इति गर्भोपनिषत्। पृथिवीच पृथिवीमात्राच इति प्रश्नोपनिषच्च प्रमाणमनुमानं च इत्युपक्रम्य इन्द्रियानुमानं तु 'अत्रहि रूपादि ज्ञानं' इत्यादिना टीकायामुक्तं ; तत्वान्तरेण तत्वान्तरानुमानमेव प्रकृतत्वाादिदानीमुच्यते—तन्मात्रेन्द्रियाणि अभिमानद्रव्योपादानकानि अभिमानकार्यद्रव्यत्वात् यन्नैवं यथा पुरुषादि ।

## भावप्रकाशः

अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्यद्रव्यत्वात् इत्यादि ; तत्र प्रकृत्यादेरनुमानागमाभ्यां साधनं ; 'प्रकृतिपुरुषतत्संयोगा नित्यानुमेया' इति स्वोदाहृतं सांख्याचार्यवाक्योक्तकारिकादि विरुद्धमिति फलितम्। सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात्। इत्युक्तकारिका पूर्वार्धतत्वकौमुद्यां 'उपलक्षणं चैतच्छेषवतः' इति वाक्ये शेषवतः अवीतस्य व्यतिरेकिणः इत्यर्थ इति स्वेनैव विवरणेन व्यतिरेक्यनुमानस्याप्यविषयातीन्द्रियार्थस्यैव श्रुत्या सिद्धेस्तदुत्तरार्धे स्फुटतया व्यतिरेक्यागमाभ्यामहङ्कारमहदादिसाधनासंभवात्। विपक्षे बाधकाद्यर्थं तत्रापि श्रुतेस्त्वयाऽङ्गीकृततया 'श्रुत्यालम्बे तु सैव प्रसजति शरणम्' इति वक्ष्यमाणदिशा तत्रानुमानप्रवृत्त्यसम्भवस्य 'शास्त्रयोनित्वादिति' सूत्रसिद्धत्वात्।

> कौमुद्यापि न संजातो येषां तत्वविनिश्चयः।
> कृतस्तज्ज्ञानसिध्यर्थं साङ्ख्यतत्वविभाकरः॥

इति स्वोक्त्यनुरोधेन रचनानुपपत्त्यधिकरणशङ्करभाष्यादिकं दूषयित्वा बाह्यानां सुखदुःखमोहरूपतां व्यवस्थापयतोऽपि पुरुषबहुत्वादिषु बहुषु विषयेषु साङ्ख्यविरुद्धमेवार्थं साधयतो वंशीधरस्य 'विप्रतिषेधाच्चासमञ्जसम् इति' व्याससूत्रोक्तं दूषणमसमा(धान)धे यमेवेति चस्फुटम्। २३ 'अध्यवसायोबुद्धिः' २४ 'अभिमानोऽहङ्कारः' ३० युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्चतस्य निर्दिष्टा। 'करणं त्रयोदशविधम्' ३५ 'सान्तः करणा बुद्धिः सर्वं विषयमवगाहते यस्मात्। तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि'। ३७ 'सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य

---

1 य.

## सर्वार्थसिद्धिः

[1] ननु [2]चिच्छक्तेरेव [3]स्वतो विषयप्रवणतायां अनिर्मोक्षप्रसङ्गा-दस्ति किंचिद्द्वारं । तत्तु न चक्षुरादिमात्रं, तदुपरमेपि सङ्कल्पाद्युत्पत्तेः । नापिमनोमात्रविश्रमः, तत्प्रशान्तावपि स्वप्ने मनुष्यस्य स्वात्मनि व्याघ्राद्यभिमानात् । नाप्य-हंकारे पर्यवसानं, तद्विरामे सुषुप्तौ प्रश्वासनिश्वासहेतुभूत-प्रयत्नाधारस्य महतस्सिद्धेः । न च तदवधिस्तत्वपङ्क्तिः । तस्यापि परिमितत्वेन कार्यत्वात् । तत्कारणं त्वव्यक्तं न

## आनन्ददायिनी

तया बुद्धि( रस्तीत्या )सिद्धिरित्याशङ्कते—नन्वि(ति)त्यादिना—विपक्षे भाधकतर्कमाह—अनिर्मोक्षेति । विषयोपराग विरत्य(त्यागा)भावा-द्वैराग्याद्यसिद्धेरिति भावः । परिशेषाद्बुद्धिसिद्धिरित्याह—तन्न चक्षुरा-दिमात्रमिति । तत्प्रशान्तावपीति—सांख्यैः स्वप्ने इन्द्रियमात्रोपरम-स्याविशेषेण साधना (अभिधाना) दिति भावः । तथाच अहङ्कार-जन्यस्वाप्नानुभवः । नाप्यहंकार इति । सुषुप्तावहमनुभवाभावेनाह-

## भावप्रकाशः

साधयति बुद्धिः । सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम्, इति कारिका प्रघट्टकस्य महदादि साधनपरत्व व्यञ्जनमुखेन स्वस्य साङ्ख्य-मतरहस्यज्ञतां प्रकाशयन् अनुमानेन महदादिसिद्धिं शङ्कते [1]* नन्वि-त्यादिना ।

[2] * चिच्छक्तेः—चितः । [3]* स्वतः—

## सर्वार्थसिद्धिः

**परिमितामित्यत्र प्रमाणमस्ति । तत्कल्पनायां तु अनवस्थापातः । अतोऽव्यक्तमपरिमितमादिकारणमिति [1]* वृत्तिभेदसिद्धैर्महदादिभिरव्यक्तानुमानं स्यात् । तदेतत्कथामात्रं । स्वतस्सर्वग्रहणयोग्यापि हि पुंसां [2]* चिच्छक्तिस्संसारावस्थायां कर्मणा**

## आनन्ददायिनी

ङ्कारस्योपरमात् प्रश्वासनिश्वासहेतुभूतप्रयत्नाधारभूतस्य महतस्सिद्धिः । नच तन्मते आत्मनः प्रयत्नाधारत्वं; तस्य त्रिविधान्तःकरणवशादेव (ज्ञातृत्वादि ;) प्रतिभासात् । स्वभावतश्चितिमात्ररूपत्वस्य तैरङ्गीकारादिति ध्येयम् । कारणत्वादेव महदादिवत्परिमितत्वमित्यत्राह— तत्कल्पनायां त्विति । तथाच अप्रयोजकत्वमिति भावः । वृत्तिभेदासिद्धैरिति 'अध्यवसायोबुद्धिः' 'अभिमानोहङ्कारः' उभयात्मकमत्र मनः'

## भावप्रकाशः

अन्तःकरणादिनैरपेक्ष्येण । [1]* वृत्तीभेदसिद्धैरिति । अध्यवसायोऽभिमानः सङ्कल्पः आलोचनं वचनादानविहरणोत्सर्गानन्दाः। क्रमान्महदहङ्कारमनोज्ञानेन्द्रियवाक्पाणिपादपायूपस्थरूपकर्मेन्द्रियाणां वृत्तयः एतासांक्रियात्वेन सकरणकतृसाधनेन । महदादिसिद्धिः । ५ 'त्रिविधमनुमानं' इति कारिकाविवरणावसरे 'अपरंचवीतं सामान्यतोदृष्टमदृष्टस्वलक्षणसामान्यविषयं; यथेन्द्रियाविषयमानुमानं । अत्र हि रूपादि विज्ञानानां क्रियात्वेन करणत्त्वमनुमीयते' इति वाचस्पतिग्रन्थे इन्द्रियपदं त्रयोदशकरणानां रूपादि विज्ञानपदं उक्तवृत्तिसामान्यस्योपलक्षणं उत्तरोदाहृतकारिकाद्यनुरोधादिति भावः । [2]* चिच्छक्तिः धर्मभूतज्ञानं ।

## सर्वार्थसिद्धिः

संकुचन्ती कर्मोत्पन्नैरेव द्वारैः यथाकर्मप्रसरतीति तु त्रय्यन्त-वृद्धाः। नापि सङ्कल्पादिभिर्मनः क्लृप्तिः। संस्कारप्रणाड्या। तदुपपत्तेः। अन्यथामनसापि तदुत्पादनायोगात्। [1]* करणस्य

## आनन्ददायिनी

इत्युक्तेरित्यर्थः। आलोच्य—मयेदं कर्तव्यमिति योऽयं चितिसान्नि-धनादापन्नचैतन्याया बुद्धेर्निश्चयः सोऽध्यवसायः। स च बुद्धेर्महतोऽ-साधारणधर्मः; तस्य बुद्धिकार्यत्वात्तदभेदेन निर्देशः। आलोच्यात्राह-मधिकृतो मदर्थाएवामी विषयाः अहमस्मीति योऽयमभिमानः साहङ्कारस्य-वृत्तिः चक्षुरादिना संमुग्धाकारेण वस्तुग्रहणे इदमित्थमिति। विशेषण-विशेष्यभावेन ग्रहणं मनसेति तादृशसम्यक्क(ल्प्यं)ल्प्यः सविकल्पा-ध्यवसायो मनोवृत्तिरिति तदर्थः। कर्मोत्पन्नैरिति। तथा च कर्मो-त्पन्नचक्षुरादिभिरन्यथासिद्धयार्थे? कादाचित्कप्रसरबलान्न महदादि-द्धिरीति भावः। संस्कारप्रणाड्येति। संस्कारसहितादात्मन एव वा चक्षुरादितोऽपि वा तदुपपत्तेरित्यर्थः। यद्वा—संस्कारादेवेत्यर्थः। संस्कारस्या-वश्यकतामाह—अन्यथेति। ननु संस्कारस्य न सङ्कल्पादिकरणत्वं गुणत्वादि-त्यत्राह--करणस्य चेति। प्रत्यक्षं प्रतीन्द्रियार्थसन्निकर्षादेरिवानुमि(तौ)त्यादौ

## भावप्रकाशः

[1]* करणस्य चेत्यादि। एतेन तन्मात्रेन्द्रियाणि अभिमान-कार्यद्रव्यत्वादभिमानवृत्तिमद्द्रव्योपादानकानि। अहङ्कारद्रव्यं निश्चय-

## सर्वार्थसिद्धिः

च द्रव्यत्वं नावश्यापेक्षितं। न च स्वप्ने व्याघ्राद्यभिमाना-दहङ्कारक्लृप्तिः। मनसैव तादृशसंस्कारसध्रीचा तदुपपत्तेः। निश्वासादिहेतुभूतप्रयत्नाधारतया महत्क्लृप्तिरप्ययुक्ता। अदृ-ष्टवशादेव बाह्यस्येव आन्तरस्यापि मरुतस्स्पन्दोपपत्तेः। न चादृष्टस्यापि महत्तत्वाश्रयत्वं इतः पूर्वं सिद्धं। यदा च ईश्वर प्रयत्नाधीनत्वं उच्छ्वासादेस्सेत्स्यति। तदा क्षेत्रज्ञस्यापि न

## आनन्ददायिनी

व्या(प्ति)प्त्यादिज्ञानस्य(क)? कारणत्वदर्शनाद्व्यभिचार इति भावः। वृत्ति-भेदान्मनः क्लृप्तिं दूषयित्वा तद्भेदादहङ्कारक्लृप्तिं दूषयति—न च स्वप्न इति। एवमध्यवसायस्याप्यन्यथा सिद्ध्या न महत्तत्त्वसिद्धिरिति द्रष्टव्यं। ननु निश्वासादि हेतुप्रयत्नाधारतया महत्सिद्धिरिति (त्युक्तमितिचेत्) चेत्तत्राह निश्वासादिहेतुभूतेति। नन्वस्तु तादृशादृष्टाधारतया मह-त्सिद्धिरित्यत्राह—नचादृष्टस्यापीति। तथा च व्याप्त्यसिद्धिरिति भावः। कैमुतिकन्यायेनापि महतः प्रयत्नानाधारत्वमित्याह—यदेति।

## भावप्रकाशः

कार्यद्रव्यत्वान्निश्चयवृत्तिमद्द्रव्योपादानकं। इति वंशीधरोक्तानुमानमपि प्रतिक्षिप्तं। अभिमानकार्यद्रव्यत्वस्योपादानद्रव्येऽभिमानवृत्तिसाधनाशक्त-त्वात्। कारणगुणात्मकत्वात्कार्यस्येति प्रक्रियानुसारे च महदादावप्य-भिमानाङ्गीकारप्रसङ्गात्। अतीन्द्रियेऽर्थेऽभिमानकार्यद्रव्यत्वादिहेतोरनु-मानेन साधनासम्भवाच्छ्रुत्यालम्बेतु तस्यैव शरणत्वेनानुमानाप्रसराच्च

## सर्वार्थसिद्धिः

जीवनपूर्वकः प्रयत्नः कल्प्यः। किमुतकस्य चिदचिद्द्रव्यस्य। परिमितत्वन्तु महतः कुतस्त्यं? अन्तर्देहमेव तत्प्रवृत्त्युपलंभादितिचेन्न। त्वत्पक्षे विभोरप्यात्मनश्शरीरावच्छिन्नप्रदेश एव व्यापारावेशवद्विभोरपि महतस्सहकारिविशेषसामर्थ्यात्काचित्कप्रवृत्तिसंभावात्। न च वृत्तिभेदमात्रादन्तःकरणभेदक्लृप्तिर्युक्ता; कामस्सङ्कल्प इत्यादिना [1]*मनस्येव बहुविधवृत्ति-

## आनन्ददायिनी

उच्छ्वासनिश्वासादिकं परप्रयत्नेनैव लोहकारभस्त्रिकान्यायेनोपपाद्यमिति भावः। भेदानां परिमाणादित्यनुमाने अश्रयासिद्धिमुक्त्वा स्वरूपासिद्धिमप्याह—परिमितत्वं (त्वं) चेति। प्रकारान्तरेण लिङ्गसिद्धिं शङ्कते—अन्तरिति। तत्प्रवृत्तिः—प्रयत्नाध्यवसायादिः। व्यापारावेशः मुखे दर्पणमालिन्यसम्बन्ध इवातात्त्विकः—कृत्यध्यवसायसंस्पर्शः? (काचित्कः)? (तात्त्विकः)? सहकारिविशेषः—क्वाचित्कशरीरयोगादिः। अध्यवसायस्य प्रमारूपत्वादिति भावः। संस्पृश्यतेऽनेनेति सहकारि वृत्तिविशेषादन्तः करणकल्पनेऽपि 'अन्तःकरणं त्रिविधमिति' त्रैविध्यकल्पन मनुपपन्नमित्याह—नचवृत्तीति। एकस्यैवानेकवृत्तिसम्भवादिति भावः। तत्र श्रुतिबाधमप्याह—'कामस्संकल्पइति'। सर्वशब्देनाध्यवसायादीनां धीभेदानां ग्रहः। यद्वा

## भावप्रकाशः

[1]*मनस्येवेति। तर्कैकालम्भिगोष्ठ्यां लाघवस्य बहुमानार्ह-

## सर्वार्थसिद्धिः

श्रुतेः। कामादीनां मनस्सामानाधिकरण्यं आयुर्घृतम् इति [1]*वद्भाक्तं। महतश्च त्वया मिथो मनस्येव विरुद्धभावाष्टक-सुखदुःखाद्याश्रयत्व[2]*स्वीकारात्। बाह्येन्द्रियमनोहंकाराणा-मालोच- ादिवृत्तिभेदाश्रयणमप्ययुक्तं।

## आनन्ददायिनी

वृत्तिभेदस्याश्रयभेदकत्वे व्यभिचारमप्याह—कामस्सङ्कल्पइति। आयु-र्घृतमितिवदति—कारणे कार्योपचारः। ननु विरुद्धवृत्ति (बुद्धिवृत्तिः)? राश्रयभेदिकेत्यत्राह—महतश्चेति। भावाष्टकं धर्माधर्मज्ञानाज्ञान वैरा-ग्यावैराग्यैश्वर्यानैश्वर्याणि। तेषां बुद्धिधर्मत्वं 'धर्मोज्ञानं विरागऐश्वर्यम्'। इत्यादिना निरूपितं। अत्र वाचस्पतिना व्याख्यातं—धर्मोनाम यागादिजनितोऽष्टाङ्गयोगाभ्यासजनितश्चाभ्युदयनिश्रेयसहेतुभूतो गुण-विशेषः। ज्ञानं—तत्त्वज्ञानं विरागोनाम 'दृष्टानुश्रविकविषय वितृष्णस्य वशीकारसंज्ञा वैराग्यमिति' वशीकाराख्यं। ऐश्वर्यं—अणिमादिप्रादुर्भावः। एवं चत्वारस्साविका (काख्याता) बुद्धिधर्माः। तामसास्तु तद्विपरीता अधर्माज्ञानावैराग्यानैश्वर्याख्याश्चत्वारः। तथा-चाष्टविधा अन्योन्यविरुद्धा भावा बुद्धिनामकमहत्तत्वधर्मा इति। वृत्तिभेदेन बाह्येन्द्रियमनोहङ्काराणाम्मह(त्तत्वाद्भेद) तस्तत्वान्तराद्भेद-कल्पनं च न स्यादित्याह—बाह्येन्द्रियेति। आलोचनं—सम्मुखा-

## भावप्रकाशः

त्वादिति भावः। [1]*भाक्तमिति। एतच्च (१३-६) गीताभाष्यतात्प-र्यचन्द्रिकायां व्यवस्थापितम्।

[2]*स्वीकारादिति—एतच्च वृत्तिभेदाश्रयणमप्ययुक्तमित्यत्रहेतुः।

## सर्वार्थसिद्धिः

महत एव सहकारिभेदा[1]* त्सर्ववृत्त्यविरोधात् । अत एव शास्त्रतो महदादितत्त्वासिद्धावपि तेषां पृथक्करणत्वं वृत्त्याश्रयत्वं वा न कल्प्यं । एवं चक्षुरादिष्वालोचनोक्तिरपिनेया । न द्वितीयः महदादीना[2]* मागमतास्सिध्यतां साक्षात्परम्परया वा प्रधानजन्यत्वसिद्धेरनुमातव्याभावात् ।

## आनन्ददायिनी

कारेण (अस्मीदन्ताकारेण) ज्ञानं आदिशब्दार्थस्तु सङ्कल्पाभिमानौ । सहकारिभेदात्—तत्तद्गोळकाधिष्ठानभेदात् । शास्त्रतोमहदादीन-सिद्ध्यङ्गीकर्तुः पृथक्करणत्वं वृत्तिभेदश्चासिद्ध इति । अन्तःकरण-त्रैविध्यदूषणं सिद्धान्तिनो? सङ्गतमित्यत्राह—अत एव शास्त्रत इति । एकस्यैव वृत्तिभेदसंभवादिति भावः । एवं चक्षुरादिष्विति ।

रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः—

इति बाह्येन्द्रियस्यान्तरिन्द्रिय भेदकवृत्ति भेदकल्पनमपि नोपप-पद्यते । आलोचनसङ्कल्परूपवृत्त्योरपि एकत्रैवोपपत्तेरिति भावः । एवं सर्ववृत्तीनामेकाश्रयत्वेसति चक्षुरादिष्वाप्तागमेष्वालोचनाख्यवृत्त्य-भेदोक्तिरपि राज्यं सुखमितिवद्गौण्यावृत्त्या नेतव्या स्यादित्याह—एवं चक्षुरादिष्वितीत्यप्याहुः । महदादीनामनुमानसिद्धानां पक्षत्वा-मागमसिद्धानां पक्षत्वं वेत्याद्यविकल्पे द्वितीयं दूषयति—न द्वितीय इति । साक्षात्परम्परया वेति । प्रकृतेन्महान्महतोऽहङ्कार इत्येवंरूपेण सिद्धे-

## भावप्रकाशः

[1]* सर्ववृत्त्यविरोधादिति—एतदपि तत्रैव हेतुः ।

[2]* आगमतास्सिध्यतामिति—जगतोऽपरिमितब्रह्मोपादानकत्वमा-

## सर्वार्थसिद्धिः

एकप्रमाणवेद्यत्वे कार्यकारणयोर्मिथः ।
बोध्यबोधकते न स्तः सहदृष्टाग्निधूमवत् ॥

विप्रतिपन्नं प्रत्यनुमानं सार्थमिति चेन्न महदादीनप्यभ्युपेत्यानभ्युपेत्य वा तेष्वव्यक्तकारणकत्वविप्रतिपत्त्ययोगात् [1]*यदप्याहुः—कार्याणां स्वाधिकपरिमाणादुत्पत्तिर्नियतेति ; तदप्यसत् । वस्त्रादिषु वैपरीत्यदृष्टेः अव्यक्तस्य च परिच्छिन्नत्वं "तमसः परस्तान्मृत्यं भिनत्ति" इत्यादिशास्त्रशतसिद्धं

## आनन्ददायिनी

रित्यर्थः । तथा च सिद्धसाधनमिति भावः । तदेव कारिकयोपपादयति—एकेति । ननु धूमाग्न्योरप्येकप्रमाणवेद्ययोरनुमापकत्वमनुमेयत्वं च दृश्यत इत्यत्राह—सहदृष्टाग्निधूमवदिति । एकप्रमाण वेद्यत्वमेकदा निश्चितत्त्वमित्यर्थः । अत्र कैश्चिद्भेदानां परिमाणादित्यत्र भेदानां—कार्याणां परिमाणात्—स्वाधिकपरिमाणकारणजन्यत्वस्य सिद्धत्वान्महदादिकार्यापेक्षयाधिकपरिमाणमव्यक्तं सिद्धं इति व्याचक्षते । तन्मतमाह—यदप्याहुरिति । वस्त्रादिष्विति । तथा च विरुद्धमिति भावः । व्यभिचारमप्याह—अव्यक्तस्यचेति । भिनत्ति—तरति ।

## भावप्रकाशः

गमतास्सिध्यतीति नायकसरे (२५) वक्ष्यते । ततश्चैतत्पक्षेऽर्थान्तरमित्यपि बोध्यम् । माठरवृत्त्यनुयायिकल्पितमर्थं दूषयितुमनुवदति ।

[1]* यदप्याहुरिति—'कारणगुणात्मकत्वात् । समन्वयात्' इति हेतुद्वयस्यैकधैव पर्यवसानस्य तत्वकौमुद्यां व्यक्ततया कार्येषु कारण-

## सर्वार्थसिद्धिः

व्याप्तिवचनं "तदनंतमसंख्यातप्रमाणं च" इत्यादिकमपि, विभु-त्वमन्तरेणापि स्यात् घटादीनामपि स्वन्यूनपरिमाणैः पिण्डा-द्यवयवैरेवोत्पत्तिरिति समन्वयश्च कुत्र केषां कीदृशः? [1]* सुखादिरूपेषु कार्येषु सत्वादीनां समनुगतिरिति चेत् किमतः? न हि यद्येष्वनुगतं तत्तेषां कारणमिति नियमः शौक्ल्यगोत्वादेरनेकानुगतस्य तत्कारणत्वाभावात्।

## आनन्ददायिनी

व्याप्तिवचनं—अपरिच्छिन्नत्ववचनं। अव्यक्ते व्यभिचारप्रदर्शनस्य-सिद्ध्यसिद्धिदोषादुदाहरणान्तरे व्यभिचारमाह—घटादीनामपीति। सम-न्वयादित्युक्तं दूषयितुमुपक्रमते—समन्वयश्चेति। अत्रैवमनुमान-प्रयोगः—विवादाध्यासिता महदादिभेदाः स्वानुगताव्यक्तकारणवन्तः। समन्वयात्। यानि च यद्रूपसमन्वितानि तानि तत्स्वभावाव्यक्तकारण-कानि यथा मृद्धेमरूपसमन्विता घटमकुटादयो मृद्धेमापिण्डाव्यक्त-कारणका इति। तथा च सुखदुःखमोहसमन्विता बुद्ध्यादयस्तादृशा-व्यक्तं साधयन्तीति। सुखादिरूपेष्विति। भिन्नेष्वेकाकारतानुगति-रिति तैरुक्तेस्सत्वादीनां सुखादिरूपेषु महदादिष्वनुगतिरित्यर्थः। (तत) अव्यक्तकारणकमित्यत्रा (प्य) व्यक्तशब्दस्य कारणपरत्वे सिद्धसाधनात्। येषु यदनुगतं तत्तत्कारणमिति वक्तव्यं तत्राह—नहीति। तत्र हेतुमाह—शौक्ल्येति। तथा च तत्र व्यभिचार (उक्त)? इति भावः।

## भावप्रकाशः

गुणसमन्वयस्समन्वयादित्यनेन विवक्षित इत्याशयेनाह—[1]*सुखादि-रूपेष्वित्यादि। यथा मृद्धेमपिण्डसमनुगताः इत्यादि तत्वकौमुदीसू-

## सर्वार्थसिद्धिः

**अन्यथा व्यक्ताव्यक्तसाधारणधर्माणां तदुभयकारणत्वप्रसङ्गात्। तथा च तत्वाधिक्यप्रसङ्गः। एतेन [1]*विगीतं स्वानुगतकारणकं कार्यत्वात् घटशरावादिवदित्यपि निरस्तं। घटादिष्वनुगतस्य मृत्त्वस्य तत्कारणत्वासिद्धेः। मृद्द्रव्यस्य तु घटाद्यात्मना**

## आनन्ददायिनी

सर्वस्यापि कारणत्वमस्त्वित्यत्राह—अन्यथेति। 'त्रिगुणमविवेकि यिषयः' इत्यादिना त्वया प्रतिपादितानां त्रिगुणत्वादीनामित्यर्थः। इष्टाप(त्त्या)त्तिं परिहरति—तथाचेति। त्रिगुणापेक्षयापि कारणं तत्वान्तरं स्यादित्यर्थः। इदमुपलक्षणं—प्रकृतेरपि विकृतित्वं स्यादिति 'प्रकृति विकृतयस्सप्त' इत्युक्तं विरुध्येतेत्यपि ध्येयं। ननु कार्यस्य स्वानुगतकारणकत्वमात्रं साध्यं न तु तदनुगतानां यावतां तत्कारणत्वं। तथा च शौक्ल्यादिषु न व्यभिचार इत्यत्राह—एतेनेति। एतेनेत्युक्तमेवाह—घटादिष्विति। तथा च व्यापचत्वासिद्धिरिति भावः।

## भावप्रकाशः

चितमनुमानाकारमाह—[1]*विगीतमित्यादिना।

> 'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
> सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्' ॥ (१०)

इत्यत्र अनेकेषां महदादनिामेकस्याव्यक्तस्य लिङ्गत्वं स्फुटम्।

> 'भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च।
> कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ (१५)

कारणमस्त्यव्यक्तम्' इत्यस्य वैश्वरूप्यस्य—नानारूपस्य कार्यस्य

## सर्वार्थसिद्धिः

विभक्तस्याविभक्तस्य वा तेष्वनुगतत्वादृष्टेः [1]*यदप्येकरूपान्वितत्वात् एकोपादानत्वमिच्छन्ति । तदपि स्वपरमतनि-

## आनन्ददायिनी

विभक्तस्य—कार्यावस्थस्य । अविभक्तस्य— कारणावस्थस्य । तस्याभेदेन तदात्मकतया तद्वृत्तित्वासिद्धेरिति भावः । ननु समन्वयादित्यस्य एकरूपान्वितत्वादित्यर्थस्य च साध्यमेकोपादानकत्वमिति च कस्य चिन्मतमनूद्य दूषयति—यदपीत्यादिना । स्वपरमतनिर्धूतं—स्वपरमतानुसारेण घटादिषु व्याप्तिशून्यमित्यर्थः । किं च एकरूपान्वितत्वं नाम सर्वथास्व(सर्वसारूप्यं)रूपैक्यं विवक्षितं उत यत्किञ्चि-

## भावप्रकाशः

स्थार्थिकः ष्यञ् इति तद्विवरणेऽपि । अवश्यं चैकोपादानत्वं साङ्ख्यैस्साधनीयं अन्यथा अनुमानेनानेकपरमाणूपादानकतां कार्यजातस्य साधयतो वैशेषिकादेस्स्वस्य वैलक्षण्यमेव न स्यात् । न च—

> शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम् ।
> त्रिगुणं तज्जगद्योनि . . . . . ॥

इति विष्णुपुराणोक्तं रूपादिराहित्येन वैलक्षण्यं वंशीधरेणोक्तमिति न दोष इति वाच्यम् । अनुमानेन साधनावसरे आगमोदाहरणस्यानवसरग्रस्तत्वात् उपादानस्यैकत्वे लाघवमेव विपक्षे बाधकस्तर्कः । समन्वयादिति हेतौ च समित्येकीकारे । एतत्तात्पर्यकमेव 'भिन्नानां समानरूपता समन्वयः' इति तत्वकौमुदीवाक्यमित्यभिप्रयन् तन्मतमुपन्यस्यति—[1]* यदप्याहुरिति ।

## सर्वार्थसिद्धिः

**धूतं सर्वथा सारूप्ये हेतौ तत्वभेदभङ्गप्रसङ्गात्। यथाकथं चित्सारूप्येतु व्यभिचारात्। साक्षादेकोपादानत्वसाधने सृष्टिक्रमादिशैथिल्यं स्यात्। मृत्तन्त्वाद्युपादानभेदश्च निह्नूयते। परम्परयेति तु मृद्धटादिनिदर्शनविरुद्धं। नित्येषु च पुरुषेषुसाक्षित्वादयो धर्मास्साधारणा युष्माभिरेव पठ्यन्ते न तु तेषां हेतव इष्टाः। व्यक्ताव्यक्तयोश्च त्रिगुणमविवेकीत्यादि साध-**

## आनन्ददायिनी

दाकारेण वेति विकल्पमभिप्रेत्याद्यं दूषयति—सर्वथेति। तथा च महदादय इति पक्षबहुत्वासिद्धे (राश्रयासिद्धि) रित्यर्थः। द्वितीयं दूषयति—यथाकथञ्चिदिति। द्रव्यत्वेनैकरूपवद्भिर्भिन्नैः मृत्तन्तूपादानकैर्व्यभिचारादित्यर्थः। किञ्चैकोपादानक (त्व)? मित्यत्र किं साक्षादेकोपादानकत्वं साध्यते उत परम्परया यद्वा सामान्येनेति विकल्पाभिप्रायेणाद्ये दूषणमाह—साक्षादिति। सृष्टिक्रमादीति। प्रकृतेर्महान्महतोऽहङ्कारस्ततस्तन्मात्राणीत्यादिक्रम इत्यर्थः। तथाचागमबाध इति भावः। व्यभिचारश्चेत्याह—मृत्तन्त्वादीति। द्वितीयं दूषयति—परम्परयेति। (तथाच) दृष्टान्ते साध्यवैकल्यमिति भावः। तृतीयं दूषयति—नित्येषु चेति।

'तस्माच्चविपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं (कैवल्याध्यस्तत्वं) माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च॥

इत्यनेनेति शेषः। ननु नास्मन्मतेऽपि नित्यत्वं हेतुमत्त्वविरोधीत्यत्राह—नतु तेषामिति। अभिव्यञ्जका अपि तेषां नेष्टा इति भावः। ननु यत्कार्यं येन सहैकरूपं तत्तेन सह समानो (सहैको) पादानकमिति विवक्षितामित्यत्राह—व्यक्ताव्यक्तयोश्चेति। आदिशब्दार्थस्तु ....

' विषयस्सामान्यमचेतनं प्रसवधर्मि।

## सर्वार्थसिद्धिः

**र्म्यपाठादेकोपादानत्वप्रसङ्गः। कार्यत्वे सतीति विशेषणेपि मृत्पिण्डद्वयारब्धघटादिभिः गोमयादिनानोपादानवृश्चिकादि-भिश्चानैकान्त्यं बह्वारब्धघटादिभिश्च । तेषामपि पक्षीकरणे**

## आनन्ददायिनी

व्यक्तं तथा प्रधानम्' . . . . ।

इति विवक्षितः तथा च महदादेः प्रकृत्या सह त्रैगुण्यादिसमान-रूपवत्त्वात्तया नित्यभूतया सहैकोपादानकत्वाभावाद्व्यभिचार इव भावः। ननु यत्कार्यं येनकार्येण सरूपामिति विवक्षायान्न व्यभिचार इत्यत्राह— कार्यत्वे सतीति । ननु

कार्यरूपेण नानात्वमभेदः कारणात्मना ।

हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥

इति तथा च यथा कारणात्मना हेमरूपेणाभेदः । कुण्डलाद्यात्मना भेदः तथा मृत्पिण्डस्वरूपेण भेदेऽपि मृदात्मना कारणतावच्छेदकाकारेण वा अभेदोस्तीत्यत्राह—गोमयेति। एकरूपान्वित वृश्चिकापेक्षया उपा-दानभूतगोमयवृश्चिकयोः परस्परं विरुद्धधर्मसंसृष्टत्वेन कारणात्मना (प्यभेदस्य) प्यैक्यस्य वक्तुमशक्यत्वादिति भावः। न च एकव्य-क्तिर्दृष्टान्तस्तस्या एकमृत्पिण्डोपादानकत्वादित्यत्राह—बह्विति । तथा-चैकं कार्यमेकोपादानकमिति नियम एव नास्ति दूरे बहूनि कार्या (बहुकार्यद्रव्या) ण्यैकोपादनकानीति नियम इति भावः । ननु सर्वकार्याणामप्यनेनानुमानेनैकोपादानकत्वं साध्यते । (तथा च) पटा-दीनां नानोपादानकत्वेऽपिक्षित्यादावेककर्तृकत्वसिद्धिरिव न विरुद्ध-मिति पटादीनां पक्षकोटिनिक्षिप्तत्वान्न व्यभिचार इत्यत्राह— तेषामपीति । तथा च व्याप्यत्वासिद्धिरिति भावः । ननु सर्वं कार्य-

## सर्वार्थसिद्धिः

दृष्टान्तासिद्धिः । अवीतहेतुविवक्षायामपि नदृष्टः कारणभेदो पह्नोतुं शक्यः । नापि कारणान्तरमेकं विधातुं । दृष्टैरेव हेतुभि रदृष्टघटितैः कार्याणां चरितार्थत्वात् न च शास्त्रमन्तरेण जगत [1]*स्सत्वादिगुणसमन्वयस्सिद्धः येन तन्मयं कारण

## आनन्ददायिनी

जातमेकोपादानकं एकरूपान्वितत्वात् यदेकोपादानकं न भवति तदेकरूपान्वितमपि न भवति । यथात्मानात्मानौ यथा वा शशशृङ्ग कूर्मरोमाणीति तत्राह—अवीतेति—व्यतिरेकीत्यर्थः । किं दृष्टाना मेवोपादानानामैक्यं सध्यते । उत तदतिरिक्तैकोपादानकत्वमिति विकल्प्याद्यं दूषयति—न दृष्ट इति । तथा च बाध इति भावः । द्वितीयं दूषयति । नापीति । शक्यमिति शेषः । तथाचाप्रयोजकत्वमिति भावः । न चेति । तथा च सत्वादि समन्वितकारणस्य तदैक्यस्य च श्रुत्यैव सिद्धत्वात्किमनुमानेनेति भावः । ननु (प्रत्यक्षेण तन्मूलकानुमानेन वा) लिङ्गग्रहणे तदर्थं श्रुत्यनपेक्षणान्नानुमानैवयर्थ्यमिति

## भावप्रकाशः

[1]* सत्वादीति—आदिपदेन रजस्तमसोः परिग्रहः । महदादिकार्यस्य त्रिगुणसमन्वयहेतुश्शास्त्रत एव ज्ञेयः । एवं च तत एव प्रकृतिज्ञानं संभवतीति तदर्थमनुमानादरोऽयुक्त इति भावः । अत्र सुखादिसमन्वय इत्यनुक्त्वा सत्वादि समन्वय इत्युक्त्या जगतस्सुखदुःखमोहात्मकत्वं शास्त्रेण न प्रतिपाद्यते इति सूचितं । तथा हि बृहदारण्यके (५-९) 'किन्दैवत्योस्यां प्राच्यां दिश्यसीत्यादित्यदैवत

## भावप्रकाशः

इति स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच यस्माद्धृदयेन रूपाणि सर्वो लोको जानाति तस्माद्धृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्ति' इत्यत्र रूपस्य चक्षुर्जन्यज्ञानविषयत्वेन चक्षुषो रूपे प्रतिष्ठितत्वं मनसो बहिरिन्द्रियसहकारितया रूपस्य तदधीनज्ञानविषयतया ज्ञापके हृदये प्रतिष्ठितत्वमुक्तं। तावन्मात्रेण जगतस्सुखदुःखमोहात्मकत्वं न कथञ्चिदपि सिध्यति आनन्दरूपस्य जीवस्य स्वयंप्रकाशतायाश्शास्त्रतस्सिद्ध्या मनो न सुखात्मकं अस्वयंप्रकाशत्वात् यन्नैवं तन्नैवं यथा चेतन इति व्यतिरेकिणा सुखदुःखादेर्द्धर्मभूतज्ञानावस्थाविशेषरूपत्वस्वयंप्रकाशत्वादेर्व्यवस्थापयिष्यमाणतया सुखदुःखादिकं मनो भिन्नं स्वयंप्रकाशत्वादित्यन्वयिना चानुमानेन जडस्य मनस एव सुखाद्यात्मकता दूरोत्सारितेति का कथा जगतः? 'वस्त्वेकमेव दुःखाय सुखाय' इति सुखदुःखहेतुत्वं जगतोऽभिधाय;

तस्माद्दुःखात्मकं नास्ति नच किञ्चित्सुखात्मकम्।

इति सुखाद्यात्मकत्वनिषेधाच्च।

तत्सन्तु चेतस्यथवाऽपि देहे
सुखानि दुःखानि च किं ममात्र।

इति वंशीधरोदाहृतं मार्कण्डेयवचनं यदि प्रमाणं तदा भावलक्षणसप्तम्याश्रयणेन सुखदुःखयोःचेतोदेहप्रयुक्तत्वेनात्मस्वरूपप्रयुक्तत्वाभावपरतया—

'निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमला धर्माः प्रकृतेस्तेन चात्मनः॥

इति विष्णुपुराणवचनं यथा वेदार्थसंग्रहे व्यवस्थापितं तथा निर्वाह्यम्।

## सर्वार्थसिद्धिः

**मुह्येत। *[1]ननु सुख्यामि दुःख्यामि मुह्यामीति स्वानुभवसिद्धास्तावत्सुखादयः। ते च कार्यभूतास्स्वानुरूपं कारणमाक्षिपन्ति। तथा तथा तेषुतेषु विषयेषु कालभेदेन पुरुषभेदेन च**

## आनन्ददायिनी

**शङ्कते**—नन्वित्यादिना। तथेति। सर्वे पदार्थास्सुखदुःखमोहात्मकाः। यथैकमेव वस्तु कंचिद्दुःखाकरोति कंचित्सुखाकरोति कंचिन्मोही करोति; तथा कालभेदेनैक (मेव) पुरुषं प्रति यथाग्निः। तत्र सुखं सत्वात्मकं सत्वपरिणामः दुःखं रजःपरिणामः मोहस्तमःपरिणाम इति 'प्रीत्यप्रीतिविषादात्मान' इत्यादिना साङ्ख्यैरुपपादितैः सुखादिभिस्सत्वादिसमनुगतिरनुमीयते। न तदर्थं श्रुत्यपेक्षेति भावः।

## भावप्रकाशः

क्वचिद्दुःखसुखादिशब्दाः लोके प्रतिकूलानुकूलवस्तुन्युपचारेण प्रयुज्यन्ते इति। ननु सुखादिकं सकारणकं कार्यत्वादित्यनुमानेन सत्वादिसमन्वयस्सिध्यतीति शङ्कते [1]* नन्विति। तदुक्तं 'सत्वं लघु' (१२) इत्यादिविवरणतत्वकौमद्यां—'अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वं; तद्यथा—एकैव स्त्री रूपयौवनकुलशीलसंपन्ना स्वामिनं सुखाकरोति; तत्कस्य हेतोः? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीर्दुःखाकरोति; तत्कस्य हेतोः? तां प्रति तस्याः दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति; तत्कस्य हेतोः? तं प्रति तस्याः मोहरूपसमुद्भवात्। अनया च स्त्रिया सर्वे भावा व्याख्याताः। तत्र

## सर्वार्थसिद्धिः

प्रीत्यप्रीतिविषादजनकत्वं दृष्टं; तदपि तत्तद्गत[1]*विचित्र-गुणविशेषहेतुकं युक्तमिति तन्न; *संप्रतिपन्नदृष्टादृष्टहेतु-शक्त्यैव सर्वोपपत्तौ तदतिरिक्तत्रैगुण्यक्लृप्त्ययोगात्। गुणानां कार्यैकनिरूपणीयत्वभाषणमपि शास्त्रोपज्ञं। अन्यथा त्रैगुण्योन्मेष-

## आनन्ददायिनी

विचित्रगुणहेतुकं—सत्वरजस्तमोगुणहेतुकमित्यर्थः। आद्यं पक्षं दूष-यति—संप्रतिपन्नेति। दृष्टं—कण्टकवेधादिः। अदृष्टं—धातुवैषम्यादि। द्वितीयं दूषयति—गुणनामिति। भाषणं—भाष्ये प्रतिपादनमित्यर्थः। 'प्रीत्यप्रीतिविषादात्मानः' 'सत्वं लघु प्रकाशकम्' इत्यादि सांख्यनां भाषणमित्यन्ये। त्रैगुण्यक्लृप्त्ययोगादित्यत्र विपक्षबाधकमाह—अन्यथेति। न सत्वमात्रं सुखं जनयति सन्ततजननप्रसङ्गात् अपितून्मिषितम्। तथाचोन्मेषेऽपि विलक्षणास्त्रयो गुणाः कल्पनीयाः।

## भावप्रकाशः

यत् सुखहेतुः तत् सुखात्मकं सत्वं। यद्दुःखहेतुः तद्दुःखात्मकं रजः। यन्मोहहेतुः तन्मोहात्मकं तमः इति [1] *विचित्रेति—गुणेषु विचित्रत्वं परस्पराभिभाव्याभिभावकभावापन्नत्वं। अत्र वंशीधरः—निमित्तोपादा-नकारणद्वयकल्पने गौरवाल्लाघवानुकूलतर्कात्सुखाद्यात्मकत्वं बाह्यानां सिध्यतीत्याह। तदुक्तदिशा सत्वरजस्तमसामनङ्गीकारेऽतीव लाघवात् साङ्ख्यानां मूलोच्छेद इत्याह—[2]*सम्प्रतिपन्नेत्यादिना—

कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतसमुदायाच्च,

इत्यत्र 'प्रवर्तते त्रिगुणत इति खण्डमित्थं विवृतं माठरवृत्तौ—यद्येकं प्रधानं कथं तर्ह्यनेकं कार्यमुत्पादयति? तथाहि—नैकस्तन्तुः पटाख्यं कार्यं जनयति

## सर्वार्थसिद्धिः

**भेदस्याप्यतिरिक्तनिर्वाहकत्रैविध्यक्लृप्तावनवस्थाप्रसङ्गात्। सामग्र्यनवस्था तु सिद्धा न क्वापि दोषाय प्रत्युत गुणायेति सर्वैरेष्टव्या । [1]* गुणत्रयात्मकं च कारणमिच्छतस्ते विश्वस्यैकोपादानत्वं [2]* दुर्वचम् ।**

## आनन्ददायिनी

तथा परापरा (परम्परा) पेक्षायामनवस्था स्यादित्यर्थः । त्रयो गुणास्त्रैगुण्यं स्वार्थे ष्यञ् । सामग्र्यनवस्थात्विति । ननु पूर्वत्रापि सामग्र्यनवस्थैवेति चेत्; सत्यं; तथाऽप्यनुमानतः कल्प्यमानेऽपि कारणे तदुन्मेषादिकारणं ज्ञातव्यं; अत्र तु स्वरूपानवस्था बीजाङ्कुरादिवन्न दोषकरीति भावः । केचित्तु—एकपदार्थनिष्ठानेकपदार्थपरम्परा दोषः । सामग्र्यनवस्था तु न तादृशी (त्यदोष इ) त्याहुः। एकोपादानकत्वानुमानं च तव सिद्धान्तविरुद्धं चेत्याह—गुणत्रयेति ।

## भावप्रकाशः

इत्थं प्रधानमनेकं कर्यं जनयतीति न जाघटीति ; अत्र समाधीयते—प्रवर्तते त्रिगुणतः–प्रधाने सत्वरजस्तमसामवस्थानाद्बहुत्वसम्भवः इत्यादि। वंशीधरोऽप्येवमेव । तद्दूषयति–[1]* गुणत्रयात्मकमित्यादिना । [2]* दुर्वचमिति—सत्वरजस्तमसां तन्मते द्रव्यत्वाङ्गीकारेऽप्येकसंयोगाविशिष्टोपादानकत्वमेकोपादानकत्वमिति न सम्भवति 'अप्राप्तिपूर्विका प्राप्तिस्संयोगः' इति 'नापि सत्वरजस्तमसां परस्परं संयोगः; अप्राप्तेरभावात्' इति वाचस्पत्युक्तेः प्रकृतेः परिच्छिन्नापरिच्छिन्नत्रिविधगुणसमुदायरूपतया परिच्छिन्नगुणावच्छेदेन पुरुषसंयोगोत्पत्तिसम्भवात् । स्वस्वबुद्धिभावापन्नप्रकृतिसंयोगविशेषस्यैवात्र संयोगशब्दार्थत्वाच्च' इत्यादिवंशीधरोक्तिरकिञ्चित्करा ;

## सर्वार्थसिद्धिः

ननु [1]*साम्यावस्थानां सत्वरजस्तमसां संघातः प्रकृतिः; अतः कारणैकत्वं स्यात्? [2]* तन्न चित्रपटारम्भक शुक्लकृष्णादितन्तुसं-घातन्यायेन सूक्ष्मदृष्टौ कार्याणां यथास्वं कारणभेदस्यैवाङ्गी-कारात्। ततश्च भेदानां [3]* भिन्नत्वे सति विकारत्वादभिन्नहे-

## आनन्ददायिनी

यथास्वमिति—कार्यस्य सुखाद्यात्मकत्वे सत्वरूपत्वरजोरूपत्वतमोरूप-त्वांशभेदेन भिन्नत्वात्तत्तदंशे तत्तत्स्वरूपस्य हेतुत्वात्सर्वं प्रत्यपि नैकमु-पादानमिति भावः। नन्वेकमृत्पिण्डेन क्रमेणोत्पन्नानां घटशरावादीनां दर्शनात् विमतमेकोपादानकं भिन्नत्वे सति विकारत्वादेकमृत्पिण्डो-पादानकघटशरावादिवदित्यनुमानस्य किं दूषणमित्यत आह—ततश्चेति। सत्वादीनामेव त्वन्मते प्रकृतित्वाद्बाधो व्यभिचारश्चेति भावः।

## भावप्रकाशः

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्गः॥

इत्यत्र प्रकृतिपुरुषसंयोगस्य भोगापवर्गमहदादिसर्गहेतुत्वोक्त्या मह-दाद्युत्पत्तेः पूर्वं तथा संयोगोक्त्यसंभवादिति भावः॥

[1]*साम्यावस्थानामिति—प्रतिसर्गावस्थायां सत्वं रजस्तमश्च सदृशपरि-णामानि भवन्ति। 'सत्वं सत्वरूपेण' इति वाचस्पत्युक्तरीत्या सदृशपरिणामाश्रयाणामित्यर्थः। एतेन प्रतिसर्गभेदेऽप्यभिन्नत्वमेकत्वं वंशीधरोक्तमपि सूचितम्। संघातस्य प्रत्येकानतिरेकान्मुख्यमेकत्वं न संभवतीति दूषयति[2]*तन्नेत्यादिना। [3]* भिन्नत्वे सतीति—प्रतिसर्ग-

## सर्वार्थसिद्धिः

**तुकत्वक्लृप्तिश्च निरस्ता *[1]सत्वादीनां भिन्नत्वात् *[2] विकारित्वा-*[3]च्च । अथाभिन्नकारणान्तरक्लृप्तिः ; तथा सति स्वाभीष्टत-त्वसंख्याविरोधः । सत्वादिद्रव्यभेदाभ्युपगमाच्च । शक्तितः प्रवृत्तेश्चेत्येतदपि मन्दं ; यदि कारणशक्तितः कार्यं प्रवर्तते कथमव्यक्त।ि।द्धिः ?**

## आनन्ददायिनी

ननु तत्र न बाधः । ईश्वरानुमानवत्कारणान्तरस्य सिद्धेरित्यत्राह— तथासतीति । त्वन्मते न कल्प्यमानेनैव संख्याविरोधः अपि तु क्लृप्ते-नापीत्याह—सत्वादीति । यदपि महदादिकार्यं कारणशक्त्या प्रवर्तते कार्यत्वाद्धटवदिति शक्तितः प्रवृत्तेश्चेति विवक्षितमनुमानं तदनुवदति—शक्तितःप्रवृत्तेश्चेतीति । दूषयति—कथमिति । तत्तत्कार्याणां तत्त-त्कारणशक्त्या प्रवृत्तावपि महदादिकार्याणां नैकं कारणमव्यक्तं सिध्य-

## भावप्रकाशः

भेदेन भिन्नत्वे सतीत्यर्थः । अभिन्नहेतुकत्वेत्यत्रापि प्रतिसर्गभेदेनेति विवक्षितं । *[1]सत्वादीनां भिन्नत्वादित्यादि—सदृशविसदृशपरिणाम-भेदेन सत्वादीनामपि भेदादित्यर्थः । *[2]विकारित्वादिति—परिणा-माश्रयत्वादित्यर्थः । ननु—'परिणामैक्याद्वस्तुतत्वम्' इति योगसूत्रे (४-१४) वस्त्वैक्यव्यवहारे परिणामैक्यं निदानमिति स्पष्टं । तत्र च तत्ववैशारद्यां वाचस्पतिः—'बहूनामप्येकः परिणामो दृष्टः ; तद्यथा गवाश्वमहिषमातङ्गानां रुमानिक्षिप्तानां एको लवणत्वजातीयलक्षणः परिणामः । वर्तितैलानां च प्रदीप इति' इत्याह । एवं च प्रतिस-र्गावस्थायां सदृशपरिणामाश्रयत्वमेवैकत्वमिति चेत्तत्राह—*[3]चेति ।

## सर्वार्थसिद्धिः

**ननु कारणशक्तिर्नाम सत्कार्यपक्षे [1]* न कार्यस्याव्यक्तत्वादन्या यथा तिले तैलस्य; अतस्सर्वकार्योपादानाव्यक्तसिद्धिरिति ;**

## आनन्ददायिनी

तीति भावः । ननु सांख्यपक्षे कारणे शक्तिः कार्यमेव; सा चाव्यक्तादनन्यैव शक्तिविशिष्टस्यैवाव्यक्तत्वात् । तथा च महतस्तत्कारणाद (स्यज्ञात्र) भिन्नता । तथाहङ्कारस्यापि महदभिन्नत्वमेवमिन्द्रियादिकार्याणामपि महदभिन्नतया सर्वस्यापि महदुपादानभूतैककारणतया अव्यक्तसिद्धिरिति शङ्कते—नन्विति ।

## भावप्रकाशः

'सन्ति प्रागप्यवस्थाः' इत्यत्र वक्ष्यमाणरीत्या धर्म्यंश इव धर्मांशेऽपि सत्कार्यवादस्य साङ्ख्यैरङ्गीकारेण उभयोर्नित्यतया 'परमार्थतस्त्वेक एव परिणामः । धर्मिस्वरूपो हि धर्मो धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्चयते' इति योगभाष्ये धर्मलक्षणावस्थापरिणामानां तत्वत एकत्वाभिधानेन तन्न्यायेन परिणामस्य गुणत्रयस्वरूपत्वेन परमार्थतो बहुत्वस्यैव वाच्यत्वेनैकत्वासम्भवात् मृद्घटवत्तन्तुपटवद्वाऽत्र परिणाम इति युक्त्या निश्चयासम्भवेनैवमप्यप्रयोजकत्वादिति चार्थः ।

[1]* न कार्यस्याव्यक्तत्वादन्येति । धर्मधर्मिणोरभेदेनानाभिव्यक्तकार्यमेव शक्तिः; तच्च कारणमेव । अभेदेऽपि भेदव्यवहारो नीलघटयोरिव भेदविवक्षया युज्यते । शक्तिमतः कारणत्वकल्पनापेक्षया शक्तेः कारणत्वे लाघवादतिरिक्तशक्तिकल्पने मानाभावाच्चेत्ति भावः । अतिरिक्तशक्तिसाधने प्रमाणादिकं 'इत्यादिघोषो विरमति विदिते शब्दतश्शक्तितत्वे' इत्यद्रव्यसरे वक्ष्यते इत्याभिप्रेत्य प्रकृते 'अव-

## सर्वार्थसिद्धिः

***[1]मैवं; यदि तैलाश्रयतिलवदव्यक्ता वास्थाश्रयस्वीकारः तदा पूर्ववत्स्वेष्टतत्वसंख्याविरोधः। अथ न; विषमास्तिल-दृष्टान्तः। नोदाहरणमादर्तव्यं; क्षीराद्दधिवत्**

## आनन्ददायिनी

मैवमिति। सत्वाद्यात्मकस्याव्यक्तस्यापि नानात्वान्नैकोपादानसिद्धिरिति भावः। किंच तैलाश्रयस्य तिलस्यापि शक्त्याश्रयस्य कार्यत्वात्तद्वदेव महदादिशक्त्याश्रयस्यापि कार्यत्वनियमात्तस्य कारणशक्तितः प्रवृत्त्यनङ्गीकारे च तस्य कारणस्यापि द्रव्यान्तरत्वात्तत्वसंख्याविरोध इत्याह—यदि तैलाश्रयेति। अव्यक्तावस्थस्याश्रय इत्यर्थः। अथ नेति। अव्यक्ता-वस्थस्याश्रयो यदि न स्वीक्रियत इत्यर्थः। विषम इति तिलस्याव्य-क्तावस्थाश्रयस्यैक (व कारण)त्वादिति भावः। यद्यप्ययमुत्कर्ष-समभेदः व्यञ्जनवत्त्वापादनवत्; तथाऽपि नियतस्य सहचारस्य सत्त्वे तादृशो नेति भावः। समाधानमाशङ्कते—नोदाहरणमिति। तथा च सूक्ष्मावस्थस्यैकस्यैव जगदुपादानत्वाङ्गीकारे न तत्वाधिक्यं; ततोऽवस्थान्तरस्य सूक्ष्मत्वेन यावतीनां तादृशीनावस्थानामेकत्वेन भेद-

## भावप्रकाशः

मेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलम-स्त्यनागतावस्थं न सिकतासु' इति वाचस्पत्युक्तदृष्टान्ते अनागता-वस्थतैलादतिरिक्तः काठिनभागास्तिलेषु वर्तते दार्ष्टान्तिके त्वनभिव्यक्तं महत्तत्वमेव प्रकृतिरिति नोभयोरानुरूप्यमिति दूषयाति *[1]मैवमि-त्यादिना॥

## सर्वार्थसिद्धिः

सूक्ष्मावस्थात्स्वस्मादेः जगदुत्पत्स्यत इतिः तथाऽपि संप्रतिपन्नावधिस्तत्वपाङ्क्तिरस्तु। यद्वा तदपि सूक्ष्मं सूक्ष्मान्तरादिति कथं तत्वेयत्ता ?। एतेन सांख्यानां सूक्ष्मशरीरक्लृप्तिश्च निरस्ता। यदाहुः— पूर्वोत्पन्नम(व्यक्त)सक्तामित्यादिना, तन्न,

## आनन्ददायिनी

गणनाप्रयोजकत्वाभावादिति भावः। संप्रतिपन्नावधिरिति। महत्तत्वावधिरित्यर्थः। यद्यप्यहङ्कारादिकारणस्य महतस्सूक्ष्मत्वमस्ति (तथापि) तदपि सूक्ष्मान्तरसापेक्षं। तस्य च सूक्ष्मावस्थस्य न तत्रान्तर्भावः इति यद्युच्येत तदा तदप्युपादानत्वात्सूक्ष्मान्तरसापेक्षमिति कथं तत्वपङ्क्तीयत्तेत्याह—यद्वेति— यदीत्यर्थः। केचित्तु—कथमव्यक्तसिद्धिरिति—शक्तिसिद्धावपि नाव्यक्तसिद्धिरित्यर्थः। ननु शक्तित एव कार्यं प्रवर्तते। सा चाव्यक्तमेव। तिलेषु तैलमिव। यथा च तत्सूक्ष्मावस्थं तथाचाव्यक्तसिद्धिरिति शङ्कते—नन्विति। यदिति। तथाच तैलाश्रयतिलवदव्यक्ताश्रयात्मकशक्त्याश्रयोऽप्यङ्गीकार्य इति सिद्धान्तविरोध इत्यर्थः। विषम इति। तिलस्येव शक्त्याधारस्या(त्रा)नभ्युपगमादिति भावः। तर्हि तदुदाहरणं त्यजत इत्याह—नोदाहरणमिति। तथापि संप्रतिपन्नावधिरिति। सूक्ष्मभूतमहत्तत्वावधिरित्यर्थः। यद्वा—सूक्ष्मस्यापि सूक्ष्मान्तरसापेक्षत्वात्तत्वेयत्तासिद्धिर्न स्यादिति दूषणं तदवस्थमेवेत्याह—यद्वेति। अपिचेत्यर्थ इत्याहुः। ननु कारणेषु (कारणं) सूक्ष्मं कार्यं शक्तिरिति शरीरे सूक्ष्मशरीरवद्वर्तत इत्यत्राह—एतेनेति यथाहुरिति। सांख्या इति शेषः।

. . . नियतं महदादिसूक्ष्मपर्यन्तम्

संसरति निरुपभोगं भावैराधिवासितं लिङ्गम्।

## सर्वार्थसिद्धिः

**न ह्यत्र लिङ्गशब्दोक्तसूक्ष्मशरीरसद्भावेप्रमाणमस्ति स्थूलवत्प्रत्यक्षं,**

## आनन्ददायिनी

इत्यादिशब्दार्थः। अस्यार्थः—पूर्वं मातापितृजन्यशरीरस्य भस्म-कीटान्तत्वेन निवृत्तिः सूक्ष्मशरीरस्य नैयत्यं चोक्तं—

सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते।

इति। पूर्वोत्पन्नं प्रकृतस्थूलभूतोत्पत्तेः पूर्वं प्रकृतित उत्पन्नं प्रतिपुरुषमेकैकमित्यर्थः। अ (व्यक्तं) सक्तं—अव्याहतं शिलास्वप्यनुप्र-वेशसमर्थमिति यावत्। नियतं—आच महासर्गादाच प्रळयादवतिष्ठते। महदादिसूक्ष्मपर्यन्तं—महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तं तेषां समु-दाय इत्यर्थः। नन्वेतदेवास्तु किं षाट्कौशिकशरीरेणेत्यत आह—संसरतीति। उपात्तं षाट्कौशिकं शरीरं जहाति हायंहायं चोपादत्ते; तस्मान्निरुपभोगं—यतः षाट्कौशिकं विना सूक्ष्मशरीरं निरुपभोगं तस्मात्संसरति। ननु धर्माधर्मनिमित्तः संसारः; न च सूक्ष्मशरीर-स्यास्ति तद्योगः; तत्कथं संसरतीत्यत्राह। भावैरधिवासितं—धर्मा-धर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावाः। तदन्विता बुद्धिस्त-दन्वितं सूक्ष्मशरीरं तदपि भावैरधिवासितं; यथा सुरभिचम्पकसम्प-र्कोद्वस्त्रं तदामोदवासितं भवति। तस्मात्संसरति। तस्मात्प्रधानमिव महाप्रळये तच्छरीरं न तिष्ठतीत्यत्राह—लिङ्गमिति। लयं गच्छतीति लिङ्गं हेतु(मत्त्वा)त्वादिति भावः। किमत्र सूक्ष्मशरीरसद्भावे प्रमाणं प्रत्य-क्षमनुमानमागमो वेति विकल्पमभिप्रेत्य प्रथमं दूषयति। न हीति स्थूलवत्—स्थूलशरीर इव। सप्तम्यर्थे वतिः। द्वितीयमाशङ्कते—

## सर्वार्थसिद्धिः

**कैश्चिदप्यनुफलम्भात्, विभोरात्मनस्स्वर्गादिगत्युपदेशान्यथानुपपत्त्या तत्क्लृप्तिरिति चेन्न, तत्क्लृप्तावपि युष्मन्मते तद्गतेरात्मन्युपचारात्। ततो वरमदृष्टशक्त्या तत्रतत्र देहोत्पत्तिमात्रेण तत्तद्देशगत्युपचारः।**

## आनन्ददायिनी

विभोरिति स्वतः स्पन्दात्मकगतेरसम्भवादिति भावः। तत्तद्देशगत्युपचार इति—यद्यपि लिङ्गशरीरे साक्षाद्गतिरस्ति तथाप्यात्मनो न सेति तत्र गत्युपदेश औपचारिक एव। तथा च देशान्तरशरीरोत्पत्त्याप्यौपचारिकव्यवहारसम्भवान्नोक्तं गतिमत्त्वं लिङ्गमिति भावः। अनुमानान्तरं

## भावप्रकाशः

चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्॥

इति कारिका। 'चित्रमिति—लिङ्गनात् ज्ञापनाद्बुद्ध्यादयो लिङ्गं। तदनाश्रयं न तिष्ठति। जन्ममरणान्तराळे बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रिताः प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वात् दृश्यमानशरीरवृत्तिबुद्ध्यादिवत्। विना विशेषैरिति—सूक्ष्मैश्शरीरैरित्यर्थः॥

ततस्सत्यवतः कायात्पाशबद्धं वशं गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः॥ भारते।व।२९६श्लो—

इत्यङ्गुष्ठमात्रत्वेन सूक्ष्मशरीरवत्त्वमुपलक्षयति। आत्मनो निष्कर्षासम्भवात्। 'सूक्ष्ममेव शरीरं पुरुषः; तदपि पुरि स्थूलशरीरे शेते' इति तत्वकौमुदी। प्रधानवत्प्रलयावस्थायिशरीरसिद्ध्या अर्थान्तरवारणाय प्रत्युत्पन्नेति—सर्गे प्रत्युत्पन्नेत्यर्थः। न च दृष्टान्तासिद्धिः; दृश्यमानेत्यादेरुत्पन्नमात्रपरत्वात्' इति तद्विभाकरः। तत्र विपक्षे बाधकागमे पुरुषशब्दस्य प्रयोगभूयस्त्वेन शरीरिणि जीव एव स्वर-

## सर्वार्थसिद्धिः

* [1] ननु स्थूलदेहद्वयान्तराळवर्ती क्षेत्रज्ञस्तात्कालिकदेहवान् क्षेत्रज्ञत्वात् यस्तथा स तथा यथा कालान्तरवर्तीत्यनुमी (यते) येत । मैवं; विपक्षे बाधकाभावात् । गत्युपदेशानुपपत्तेः परिहृतत्वात्। अशरीरत्वे मुक्तत्वप्रसङ्ग इति चेन्न । प्रळयवदविरोधात् । तत्रापि सूक्ष्माऽचिद्विशिष्ट एव पुरुष इति चेन्न, अत्रापि तावन्मात्रसाधने सिद्धसाधनात् । आगमस्तु गत्यवस्थायां

## आनन्ददायिनी

शङ्कते—नन्विति शरीरवत्त्वे साध्ये सिद्धसाधनमिति तात्कालिकेति। विपक्षबाधमाशङ्कते अशरीरत्व इति । प्रळयवदिति । त्वयापि महाप्रलये लिङ्गशरीरनाशस्याङ्गीकारादिति भावः ।

तस्मादपिचासिद्धं परोक्षमाप्तागमात्सिद्धम् ।

इति न्यायेन तृतीयमाशङ्कते । आगमस्त्विति–'वेत्थ कतम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रश्ने; इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स यथा पेशसा मात्रामुपाददानोऽन्यन्नवतरं कल्याणतरं कल्याणतमं रूपं कुरुते ।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ।'

## भावप्रकाशः

सतामभिप्रेत्य अनुमानान्तरे तत्पर्यवसानमाकलय्य शङ्कते *[1] नन्वित्यादिना । अत्र—

कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं
प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि ।
लिङ्गाख्यं भस्त्रिकान्तःपरुवकवदवस्थायि सांख्यैः प्रगीतं

इत्याधिकरणसारावळीसूक्तिरनुसन्धेया ।

## सर्वार्थसिद्धिः

पूर्वशरीराकृष्टसूक्ष्मावयवसंघातमात्रेणापि (तत्वार्थः) गतार्थः। 'सूक्ष्मं प्रमाणतश्च तथोपलब्धेः' इति सूत्रमपि तावन्मात्रविषयं। पुर्यष्टकशरीरोक्तिश्च न शरीरान्तर्वर्तिसूक्ष्मदेहसद्भावपरा।

## आनन्ददायिनी

इत्यागमस्त्वित्यर्थः। नन्वत्र शरीरपदाभावात्कथं शङ्केति चेन्न। पुरुषशब्दस्य पुरि शेत इति व्युत्पत्त्या लिङ्गशरीरपरत्वात्। तस्यापि स्थूलशरीररूपपुरस्स्थत्वात्। तत्वार्थ इति अर्थवानेवेत्यर्थः। गतार्थ इति पाठस्तु सुगमः। ननु सूक्ष्मशरीरनिराकरणं सूत्रकारविरुद्धमित्यत्राह— सूक्ष्ममिति। चन्द्रसंवादादिकं तु तादात्विकशरीरान्तरमादाय नेयं सूक्ष्मशरीरस्यायोग्यत्वादिति भावः।

ननु

बुद्धीन्द्रियाणि खलु पञ्च तथापराणि
कर्मेन्द्रियाणि मनआदिचतुष्टयं च।
प्राणादि पञ्चकमथो वियदादिपञ्च
कामाश्च कर्म च तमः पुनरष्टमी पूः॥

इति। तथा च—

शब्दस्पर्शश्च रूपं च रसो गन्धश्च पञ्चकम्।
बुद्धिर्मनश्चाहङ्कारः पुर्यष्टकमुदाहृतम्॥

इति कालोत्तरसंहितादिवचनोपबृंहितया 'देवानां पूरयोध्या। अष्टाचक्रा नवद्वारा' इति श्रुत्या लिङ्गशरीरसिद्धिरिति चेत्तत्राह— पुर्यष्टकेति। स्थूलशरीर एव रूढत्वात्तस्याश्श्रुतेरिति भावः।

## सर्वार्थसिद्धिः

*[1]कारणकार्यविभागादविभागादिति हेतुश्च

## आनन्ददायिनी

भेदानां परिमाणादित्यु (त्याद्यु) क्तहेतुपञ्चकमध्ये त्रयो हेतवो निरस्ताः। परिशिष्टं हेतुद्वयं निराकर्तुमनुवदति। कारणकार्यविभागादिति ॥

## भावप्रकाशः

*[1]कारणकार्यविभागादित्यादि— अत्र तत्वकौमुद्यां वाचस्पतिः कारणे सत् कार्यमिति स्थितं। तथाच यथा कूर्मशरीरे सन्त्येवाङ्गानि निस्सरन्ति विभज्यन्ते इदं कूर्मशरीरं एतान्येतस्याङ्गानीति एवं निविशमानानि तस्मिन् अव्यक्तीभवन्ति एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा घटमकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते सन्त्येव च तन्मात्राण्यहङ्कारात्कारणात् सन्नेवाहङ्कारः कारणान्महतः सन्नेव च महान् परमाव्यक्तात्। सोऽयं कारणात्परमाव्यक्तात् साक्षात्पारम्पर्येणान्वितस्य विश्वस्य कार्यस्य विभागः। प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमकुटादयो विशन्तोऽव्यक्तीभवन्ति। तत्कारणरूपमेवानभिव्यक्तं कार्यमपेक्ष्याव्यक्तं भवति। एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति। एवं तन्मात्राण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति। एवमहङ्कारो महान्तं विशन् महान्तमव्यक्तयति। महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति। प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव। सोऽय-

## सर्वार्थसिद्धिः

*[1]महदादिपक्षसिद्ध्यसिद्धिविकल्पेन निरस्तः।

## आनन्ददायिनी

सिद्ध्यसिद्धिविकल्पेनेति–सिद्धिः श्रुत्यैवेति तयैव प्रकृतिसिद्धेस्सिद्धसाधनं आसिद्धावाश्रयासिद्धिरिति भावः। व्याप्त्यसिद्धिमप्याह—

## भावप्रकाशः

मविभागः इति। अत्र वंशीधरः; 'अयं प्रघट्टकार्थः—कारणात्कार्यस्याभिव्यक्तिः सा कारणकार्यविभागः। कार्यस्य लक्षणाख्यः परिणामः। अतीतलक्षणः तिरोभावापरपर्यायो विभागः। अव्यक्तत्वं च तत्र कारणस्य स्वस्वकार्यरूपधर्मपरिणामान्यपरिणामवत्त्वं। भवति घटोत्पत्तेः प्राक् तन्नाशानन्तरं च घटस्वरूपधर्मपरिणामान्यः पिण्डखर्परादिपरिणामस्तद्वत्त्वं मृदादेरिति' 'इत्थं च विवादाध्यासिता भेदा अव्यक्तकारणका अभिव्यक्तकार्यत्वात्कूर्माङ्गादिवत् घटादिवद्वा। न च भेदशब्दस्य महदादिभूतान्तपरत्वे भूतानां प्रसिद्धत्वेऽपि महत्तत्वाहङ्कारपञ्चतन्मात्राणामप्रसिद्ध्याऽप्रसिद्धिरिति वाच्यं; प्रकृतेर्महानित्यादौ तेषां साधनीयत्वात्। तथा च महत्तत्वपर्यन्तपक्षे हेतूनां साध्यं सिध्यत् परमाव्यक्तं मूलकारणं सिद्ध्यतीत्यभिप्रायः। एवमविभागादनभिव्यक्तकार्यत्वापरपर्यायात्' इति चाह। *[1]महदादिसिद्ध्यसिद्धीत्यादि–श्रुत्या महदादेस्सिद्धौ तत एवाव्यक्तसिद्धिः। प्रकृतेर्महानित्यादौ तन्मात्रेन्द्रियाण्यभिमानद्रव्योपादानकानि अभिमानकार्यद्रव्यत्वात्। अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्यद्रव्यत्वात् इत्याद्यनुमानेन महदादिसाधनं न सम्भवति कारणद्रव्येषु रूपाद्यभावेऽपि न्यूनाधिकभावेन कारणद्रव्यसंयोगात्तन्मात्रारूपत्वं यथा तथाऽत्रापि

## सर्वार्थसिद्धिः

*[1]किंच कार्याणां सतां क्वचित्कारणे विभागाविभागौ नियताविति कृत्वा विचित्रस्य कार्यवर्गस्य विभागाविभागस्थानतया प्रधानं सिषाधयिषितव्यं ; न त्वेवं नियमः । यथा मृदादिषु घटादीनामेतौ दृष्टौ न तथा तन्त्वादिषु पटादीनां । न हि तन्त्वेकदेशात्मकः पटः ; येन घटादिन्यायस्स्यात् । एकस्मादनेकोत्पत्तिनियमश्च *[2] अनेन

## आनन्ददायिनी

किंचेति । यथा मृत्पिण्डाद्विभज्य तदेकदेशो घटः क्रियते । पुनस्तदुपम(र्दन) र्दने मृत्पिण्ड एव निविशते न तथा पटस्तन्तोरेकस्माद्विभज्योत्पद्यते । न च स्वोपम (र्दन) र्दने निविशते इत्यर्थः । तत्र हेतुर्नहीति । तन्तूनामेव तदेकदेशत्वादिति भावः । अनेनेति- पटनिदर्शनेनेत्यर्थः । प्रत्येकं पटानामनेकतन्त्वारब्धत्वादिति भावः ।

## भावप्रकाशः

पक्षे साध्यहेत्वोरनङ्गीकारेऽप्यभिमाननिश्चयाद्यमुपपद्यते। महदादिसिद्धावपि तत्राभिव्यक्तकार्यत्वानभिव्यक्तकार्यत्वयोर्व्यक्तिसिद्धेःप्राङ्नैव निश्चयः । हेत्वन्तरेण तत्साधनेऽपि तत एवाव्यक्तं निश्चितमिति कथमनेन साध्यसिद्धिः? महदादिसिद्धौ चाश्रयासिद्धिरिति भावः । *[1] किञ्चेत्यादि । अयमाशयः—विभागाविभागव्यवहारो ह्यत्यन्तभिन्नयोरेव लोके दृश्यते इति सांख्यमते कार्यकारणयोरत्यन्तभेदानङ्गीकारेण यथाश्रुते मूलमयुक्तं ; समुदायादेकदेशस्य पृथग्भावादिदशायां विभागादिव्यवहारस्य मुख्यस्याङ्गीकारेऽपि तन्तुपटादिषु तदसम्भवेनाव्यक्तकारणकत्वसाधनं न सम्भवति । सांख्यानां सत्कार्यवादसाधनासंभवसूचनायैवारम्भणाधिकरणे 'पटवच्च' इति सूत्रमिति । *[2] अनेन—तन्तुपटस्थलेऽसम्भवेन ।

## सर्वार्थसिद्धिः

भग्नः। त्वयापि संहतैस्सत्वादिभिर्जगदारम्भोक्तेश्च। *[1] यत्र कार्याणां विभागाविभागदृष्टिः न तत्र सर्वत्रोपादानत्वं निमित्ते पि क्वचित्तदृष्टेः। अरणेरिवारणेयस्य। न हि काष्ठे पार्थिवांशो वह्नेरुपादानं नच वह्न्यंशो धूमस्य। *[2] एवं सति नाव्यक्तस्यैव सिद्धिः; विश्वनिमित्तस्यापि कस्यचिदेवमनुमातुं शक्यत्वात्। तस्य च विजातीयस्यापि संभवात्।

## आनन्ददायिनी

जगत एकप्रकृत्युपादानकत्वसाधने स्वमते बाधो विशेषविरुद्धश्चेत्याह—त्वयाऽपीति। पूर्वोक्तानुमाने व्यभिचारमप्याह—न तत्र सर्वत्रोपादानत्वमिति—उपदानत्वनियमो नेत्यर्थः। आरणेयस्य—अराणिजन्यस्य। शुभ्रादित्वादपत्यार्थे ढक्प्रत्ययः। व्यभिचारस्थलान्तरमप्याह—न च वह्न्यंश इति। अव्यक्तस्य—प्रकृतेः। उभयथा विभागाविभागदर्शनान्निमित्तोपादानयोरुभयोरप्यनुमानप्रसङ्गेन तत्वसंख्याव्याघातः; तत्परिहारार्थमन्यतरानुमाने निमित्तमात्रस्यैव सिद्धिप्रसङ्गेनार्थान्तरमित्याह—विश्वनिमित्तस्येति। नन्वस्त्वेकं निमित्तं सैव प्रकृतिरित्यत्राह—विजातीयस्यापीति। कार्यस्य सत्वाद्यात्मकतया तदात्मिका प्रकृतिस्त्वया

## भावप्रकाशः

विभागाविभागयोःससंबन्धिकत्वेन यद्यस्माद्विभक्तं तत्तदुपादानकमिति व्याप्तिरङ्गीकरणीया तथा सत्यनैकान्त्यमित्याह—*[1] यत्रेत्यादि। वंशीधरोक्तरीतिमपि दूषयति—*[2] एवं सति नाव्यक्तस्येत्यादिना। निमित्तकारणमादायार्थान्तरेण वंशीधरोक्तमयुक्तं। अभिव्यक्तिप्रकारश्च निरसिष्यते। अव्यक्तोपादानकारणकत्वसाधनेऽपि हेतुरप्रयोजक इति

## सर्वार्थसिद्धिः

[1]* किं च यथा मृदवयवसंघाते घटादेरविभागादिः तथा पार्थिवाद्यणुसंघाते तत्तद्भूतभौतिकानां स किं न स्यात्? ततश्च का कथा तदतिरिक्ततत्वकल्पनायां? कृत्स्नैकदेशसंयोगानुपपत्त्या अणुसंघातस्य कारणत्वक्लृप्तिरयुक्तेति चेन्न। सत्वादिविभुद्रव्यसंघातस्यापि तत्रैव संयोगविकल्पावतारात्। अणूनां मिथः कार्त्स्न्येन संयोगे पृथुकार्यानुपपत्तिस्स्यात् न तु विभूनामिति चेन्न। तेषामपि मिथः कार्त्स्न्येन संयुक्तानां स्वापेक्षयाल्पप-

## आनन्ददायिनी

सिषाधयिषिता; निमित्तत्वे कार्यगतसत्वाद्युपपादकत्वाभावादप्रयोजकतेति भावः। किंचाणुसंघात एव घटादीनां विभागाविभागदर्शनान्महदादीनामपि तेष्वेव विभागाद्यनुमानस्योचितत्वान्न तदतिरिक्तस्यैकस्य विभागाविभागभूमित्वानुमानं युज्यत इत्याह—किंचेति। तथा च महदादि(तत्वमेव)कमेव प्रमाणाभावात्पक्षीकर्तुं न शक्यत इति भावः। अर्थान्तरपरिहारमाशङ्कते—कृत्स्नेति। समौ चोद्यपरिहाराविति परिहरति नेति। वैषम्यमाशङ्कते—अणूनामिति। पुनस्समतामाह—नेति। बहुकार्योत्पत्तावित्यनन्तरमनुपपत्तिस्स्यादिति पदमनुषञ्जनीयम्। तथा च पृथुकार्यानुपपत्तिवदल्पपरिमाणानेकानुपपत्तिस्समेति भावः। अनुपपत्तिमे-

## भावप्रकाशः

भावः। प्रकारान्तरेणार्थान्तरमाह—*[1] किञ्चेत्यादि। लाघवेनैकोपादानकत्वसाधनं न सम्भवतीति पूर्वमेवोक्तं। लाघवादरे बाधकं च 'कल्पनागौरवभयात्' इत्यादिकारिकायां वक्ष्यते॥

एकजातीयेन धर्मपरिणामेनैव कार्यकारणत्वयोरुपपत्तौ धर्मपरि-

## सर्वार्थसिद्धिः

रिमाणबहुकार्योत्पत्तौ प्रतिकार्यं कारणस्य कृत्स्नैकदेशविनि-योगविकल्पे कार्यान्तराणामनुत्पत्तिर्वा कारणस्य सावयवत्वं वा स्यादिति चर्चा स्यात्। श्रौते तूपादाने 'श्रुतेस्तु शब्दमूल-त्वात्' इति समाधानं सूत्रितम्। [1]*अपिच क्षीरदधिरुचक-स्वस्तिकादिन्यायेन स्वस्यैव पूर्वावस्थाविशेषवतस्स्वोपादानत्वे सिद्धे किमन्यत्र कुत्रचिदविभागादिगवेषणया?। घटादयोऽपि मृत्पिण्डादिषु तत्तदंशैरेवोपादीयन्ते न तु पिण्डादिभिः।

## आनन्ददायिनी

वोपपादयति। प्रतिकार्यमिति। कृत्स्नविनियोगपक्षे कार्यान्तराणाम-नुत्पत्तिः एकदेशविनियोगपक्षे सावयवत्वमित्यन्वयः। कार्यान्तराणा-मनुत्पत्तिरित्यत्र स्वल्पपरिमाणानामप्यनुत्पत्तिर्बोध्या। पक्षद्वयानुपपत्तौ प्रकृत्युपादानत्वं वा तद्विशिष्टब्रह्मोपादानत्वं वा कथं युष्माभिरङ्गी-क्रियते इत्यत्राह—श्रौते त्विति। श्रुतान्यथानुपपत्त्या यागादावदृष्टक-ल्पनावदत्राप्यव्यापिपरिणामहेतुसंयोगकल्पनासम्भवादित्यर्थः। अपिचेति ननु महदादेरेव सूक्ष्मरूपावस्थाङ्गीकारे सैव प्रकृतिरिति चेन्न; तन्मते महदादीनां सूक्ष्मरूपेण स्थित्यङ्गीकारेण प्रकृतेस्ततो भिन्नत्वात्। ननु घटादयो हि स्वभिन्नमृत्पिण्डादुपादीयमाना-स्ततो विभक्ता अविभक्ताश्चेति व्याप्तिरस्तीति चेत्तत्राह—घटादयोऽपीति एवं च तत्तदंश एवोपादानं न तु ततो विभक्तांश इति भावः। अत्र यदुक्तं वाचस्पतिना विभागाविभागनिदर्शनतया—'यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरो भवन्ति निस्सरन्ति

## भावप्रकाशः

णामेन कार्यता लक्षणपारिणामेन कारणता चेत्यनुचितमित्याह [1]*अपिचेति।

## सर्वार्थसिद्धिः

कूर्मावयवदृष्टान्तश्चात्र मन्दः। तत्र ह्याकुञ्चनप्रसारणाभ्यां अवयवान्तरावृतानावृतत्वसिद्ध्या भवत्यव्यक्तव्यक्तावस्थाभेदः न तूपादानोपादेयभावात्। न च तत्र कस्यचिदवयवनाशोत्पत्तिव्यवहारः। अतो न कथञ्चिदप्यनुमानादव्यक्तादिसिद्धिः।

त्रिगुणपरीक्षायां प्रकृत्याद्यनुमनिानरासः प्रकृत्यादेरागमिकत्वंच

'आगमेन विना सिद्धिस्तन्मात्राणां च दुर्वचा।
उद्भवानुद्भवाद्यैस्तु लोके सूक्ष्मादिकल्पना ॥'

## आनन्ददायिनी

चाविर्भवन्ति; न तु कूर्मस्तदङ्गानि वोत्पद्यन्ते ध्वंसन्ते चेति' तद्दूषयाति कूर्मावयवेति तत्र व्यक्ताव्यक्तावस्थाभेदो नोपादानोपादेयभावात् किं त्वावृतत्वानावृतत्वाभ्यां। ततश्च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः। नचेति। उपादानोपादेयस्थले नाशोत्पत्त्यव्यवहारादिति भावः।

त्रिगुणपरीक्षायां प्रकृत्याद्यनुमाननिरासः प्रकृत्यादेरागमिकत्वं च

पूर्वं महदादीनां स्वरूपं किमागमेनानुमानेन वा सिद्धमिति विकल्प्य स्वरूपासिद्धिरुक्ता इदानीं तन्मात्राणां महदादिवद्वृत्तिभेदरूपलिङ्गाभासोऽपि नास्तीत्याह—आगमेनेति। ननु तन्मात्राणां यदि सूक्ष्मत्वेनाप्रत्यक्षत्वं तथा सति लौकिकानां तद्ग्रहणाभावेन क्वचिदपि सूक्ष्मादिव्यवहारो न स्यादित्यत्राह—उद्भवानुद्भवाद्यैस्त्विति। उद्भवः स्फुटतरप्रकाशः। अनुद्भवस्तदभावः। न्यूनपरिमाणाधिकपरिमाणादिकमादिशब्दार्थ इत्यन्ये। ननूद्भूतशब्दादिकं भूतं अनुद्भूतशब्दादिकं तन्मात्रं उद्भवोऽनुद्भवश्च लोकसिद्धावित्यत्राह—उद्भवेति सिध्यतां नामोद्भवानुद्भवौ लोके; तथाऽपि एकस्मिन्नेव तत्वे तौ सूक्ष्मस्थूलविभागं कुरुतः न तु तत्वान्तरत्वमापादयेतामिति

## सर्वार्थसिद्धिः

अक्षेषु वचनादीनामनुपहतैस्सहकारिमद्भिस्तदवयवविशेषैरेवोपपत्तौ न तावत्कर्मेन्द्रियक्लृप्तिः । रूपादिज्ञानादीनां च तत्तदाधिष्ठानभेदैरेव तदनुगुणदशाविशेषितैस्संभवात् । तदतिरिक्तकल्पनेऽपि काणादादिकल्पितन्यायेन स्मृतिविशेषानुगृहीतेन भौतिकत्वोपपत्तेराहङ्कारिकेन्द्रियसिद्धिरनागमतो न भवति ॥

कल्पनागौरवभयात्कलाकाष्ठा(ला)दि [1]*अकल्पयन् ।
अविशेषात्प्रधानादिकल्पनामप्यपास्यतु ॥

## आनन्ददायिनी

भाव इत्यपरे । इन्द्रियाणामप्यागमैकगम्यत्वमाह—अक्षेष्विति । वचनादिक्रिया करणसाध्या क्रियात्वात् भिदि (क्रिया) वदित्यनुमानमपि ताल्वाद्यवयवातिरिक्तेन्द्रियसाधकं न संभवतीत्याह—वचनादीनामिति । सहकारि–बलोत्साहादिदशा बाल्यादि। अभ्युपगम्याप्याह–तदतिरिक्तेति। यत्तावद्वाचस्पतिराह—'कालश्च वैशेषिकाभिमतोऽनागतादिभेदं प्रवर्तयितुं स्वतो नार्हति । ततश्च तपनपरिस्पन्दाद्युपाधिभेदेनानागतादिभावं प्रतिपाद्यते । सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः कृतं कालेनेति साङ्ख्याचार्याः' इति । तन्न्यायेन प्रधानादिकल्पनाया अपि युष्माभिर्भेतव्यमित्याह–कल्पनेति । कलाश्च कालश्च—उपाध्यधीनः कालःकलाः शुद्धस्तु कालशब्दार्थः । केचित्तु कलाकाष्ठादीति पाठः । तदर्थस्तु कालदिशाविति वदन्ति। प्रसङ्गाच्चैवमत-

## भावप्रकाशः

[1]*अकल्पयन्निति 'दिक्कालावाकाशादिभ्य' इति साङ्ख्यप्रवचनसूत्रभाष्ये (२१२) तत्वकौमुद्यां च (३३श्लो) स्पष्टमेतत् ।

## सर्वार्थसिद्धिः

[1]* षट्त्रिंशत्तत्ववादश्च

## आनन्ददायिनी

मप्युक्तन्यायेन दुष्टमिति सूचयति। षट्त्रिंशदिति। तदुक्तं श्रीकरभाष्ये—

पृथ्व्यादि पञ्चभूतानि तन्मात्रापञ्चकं तथा।
बुद्धीन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाणि च॥
मनो बुद्धिरहङ्कारः कला कालौ (काष्ठा) तथैव च।
नियती रागविद्ये च प्रकृतिस्तद्गुणास्त्र(श्र)यः॥
धर्माधर्मौ तथा जीवः ईशस्तत्वानि बुध्यतु।

इति। (अन्यत्रापि तेषां) शैवतत्वसंग्रहे च—

शैवागमेषु मुख्यं पशुपतिपाशा इति क्रमाश्रितयम्॥
तत्र पतिश्शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाशः।

इति।

मलं कर्म च माया च मायोत्थमखिलं जगत्॥
तिरोधानमयी शक्तिरर्थपञ्चकमिष्यते।

इति पाशविभागः।

शुद्धानि पञ्च तत्वान्याद्यन्तेषु स्मरन्ति शिवतत्वम्।
शक्तिसदाशिवतत्वे ईश्वरविद्याख्यतत्वे च॥
पुंसो ज्ञकर्तृतार्थं मायातस्तत्वपञ्चकं भवति।
कालो नियतिश्च तथा कला च विद्या च रागश्च॥
अव्यक्तान्मायातो गुणतत्वं तदनु बुद्ध्यहङ्कारौ।
चेतो धीकर्मेन्द्रियतन्मात्राण्यनु च भूतानि॥

इति। एतानि युक्त्या समर्थ्यन्ते आगमेन वेति विकल्पं मनसिकृत्याद्ये

## भावप्रकाशः

[1]* षट्त्रिंशदिति। न्यायसिद्धाञ्जनादौ चैतद्विस्तृतम्।

## तत्वमुक्ताकलापः

**सत्वाद्युन्मेषभिन्नान्महत इह तथा स्यादहङ्कारभेदः**

## सर्वार्थसिद्धिः

. . . . यदि युक्त्या समर्थ्यते ।
सांख्यवत्प्रतिवक्तव्यो न विस्रम्भस्तदागमे ॥
तं षड्विंशकमित्याहुस्सप्तविंशमथापरे ।
इत्यत्र न विरोधस्स्याच्छ्रुतिमात्रानुसारतः ॥

[illegible] महदादिषु कालभेदानियताविकारभेदाधीनं विशेषमाह सत्वादीति गुणत्रयाश्रयात्प्रधानात् सत्वादिगुणोन्मेषभेदेन सात्विको राजसस्तामसश्चेति त्रिधा महानुत्पद्यते । त्रिभ्यश्च महद्भ्यस्तथैव त्रिविधोऽहङ्कारः । तत्र प्राच्यादेकादशे-

## आनन्ददायिनी

आह—यदि युक्त्येति । सांख्यमतवत् दूषितव्यामित्यर्थः । द्वितीय आह—न विस्रम्भ इति । तादृश्याः श्रुतेरभावात्तदागमस्य सूत्रकृद्विद्विष्टत्वादिति भावः । नन्वौपनिषदपक्षेऽपि—

तं षड्विंशकमित्याहुः सप्तविंशमथापरे ।

इत्यादिना ह्यव्यवस्थया गणनान्न तत्वव्यवस्थेत्यत्राह—तं षड्विंशकमिति । सप्तविंशमिति यदि पाठस्तदा छान्दसो दीर्घः । यदा व्यक्तमादाय गणना क्रियते तदा षड्विंशकत्वं । यदा तत्पूर्वावस्थयोरक्षरतमसोरन्यतरदप्यादाय तदा सप्तविंशत्वमिति श्रुतमात्रस्वीकारान्न कल्पनादोषो नाप्यव्यवस्थितिरिति भावः । पद्यशेषं व्याख्याति—एवमित्यादिना । कालभेदः सर्गादिकालविशेषः । तथैवेति सात्विकादिभेदेनेत्यर्थः । प्राच्यात् सात्विकाहङ्कारात् भूतादिसंज्ञस्तामसाहङ्कारः ।

## तत्वमुक्ताकलापः

**प्राच्यादक्षाणि मात्राः प्रजनयति परो मध्यमस्तू-भयार्थः ॥ ११ ॥**

## सर्वार्थसिद्धिः

न्द्रियाणि। परस्तु भूतादिसंज्ञस्तन्मात्राः क्रमाज्जनयति। मध्यमस्तैजसाख्यः पूर्वापरयोरनुग्राहकतया तदुभयसाध्यसृष्टिद्वयार्थः। तुशब्दो मतान्तराद्व्यवच्छिनत्ति। कल्पितं हि कैश्चित्तन्त्रान्तरनिष्ठैः कर्मेन्द्रियाणां प्रवृत्तिशीलतया राजसाहङ्कारजन्यत्वं; तच्चायुक्तं; शब्दैकगम्येऽर्थे युक्तिभिरन्यथाकरणायोगात् ॥११॥

त्रिगुणपरीक्षायां तन्मात्रादेरागामिकता महदाद्युत्पत्तिप्रकारश्च

एवं प्रकृत्यादीनामागमगम्यत्वं सृष्टिप्रकारं च संजगृहे।

## आनन्ददायिनी

तैजसाख्यः राजसः अनुग्राहकतया प्रवृत्त्युत्पादनेनेति शेषः। तन्त्रान्तरनिष्ठैरिति—शैवशास्त्रनिष्ठैरित्यर्थः।

ज्ञानेन्द्रियकर्मेन्द्रियभूतान्यहङ्कारतः क्रमशः।

इत्युक्तेः। केचित्तु—मायिनस्तन्त्रान्तरनिष्ठाः इन्द्रियाणां भौतिकत्वेऽपि तन्मध्ये सात्विकांशैः भूतैर्ज्ञानेन्द्रियाणि राजसांशैः कर्मेन्द्रियाणि तामसांशैर्भूतानीत्युक्तेरित्याहुः। प्रमाणशून्यत्वादयुक्तं तदित्याह—तच्चायुक्तमिति॥

त्रिगुणपरीक्षायां तन्मात्रादेरागमिकता महदाद्युत्पत्तिप्रकारश्च

सत्वाद्युन्मेषभिन्नादित्यादिना सृष्टिरुक्ता। पुनस्तदुक्तौ पौनरुक्त्य-(मिति शङ्कां परिहरन्नवसरसङ्गतिं दर्शयति) माशङ्क्यावतारयति—एवं प्रकृत्यादीनामिति। श्रुतिस्मृतिविप्रतिपत्तेरिति—‘तन्मात्राणि

## भावप्रकाशः

तन्त्रान्तरं—शैवागमः। परमतभङ्गे च। (२४) (१५३) स्फुटमेतत्।

## तत्वमुक्ताकलापः

**तत्राहङ्कारजन्यं भजति परिणतेश्शब्दमात्रं**

## सर्वार्थसिद्धिः

**अथ तेषु तन्मात्रसृष्टौ श्रुतिस्मृतिविप्रतिपत्तेस्संशयं विपर्ययं वा निरस्यति तत्रे ति। *[1]श्रूयते हि 'तन्मात्राणि भूतादौ लीयन्ते' इति। [2]*न च श्रुतिविरुद्धा [3]*स्मृतिरुदीयेत। अतः पञ्चानामपि तन्मात्राणां तामसाहङ्कारादुत्पत्तिः बहुवचनात्। बहुत्वस्य च**

## आनन्ददायिनी

भूतादौ लीयन्ते ' इत्याथर्वणश्रुतिः ।

प्रधानं तत्वमुद्भूतं महत्तत्वं समावृणोत् ।

इत्यारभ्य—

विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ।
संघातो जायते तस्मात्तस्य गन्धो गुणो मतः ॥

इत्यन्ता विष्णुपुराणरूपा स्मृतिः । न चेति । विरोधाधिकरणन्याया-दित्यर्थः । ननु पञ्चत्वस्याश्रवणाद्विरोधो नास्तीत्यत्राह—बहुवचना-दिति । नन्वेवं आकाशाद्वायुरित्यादिकं विरुध्येत तत्राह—

## भावप्रकाशः

[1]*श्रूयते हीत्यादि । अयमत्र सौबालश्रुतिक्रमः—' पृथिव्यप्सु लीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते ' इत्यादि । [2]*नचेत्यादि । तदुक्तं पूर्वतन्त्रे ' विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानं' (३-३-३) इति । [3]*स्मृतिः—विष्णुपुराणादिकं । पञ्चरात्रवचनानि चान्यत्र (न्या-सि-व्या) उदाहृतानि ।

## सर्वार्थसिद्धिः

**प्रसिद्धितो नियमः। [1]*भूतानां तु यथास्वं तन्मात्रेभ्यः क्रमादुत्पत्तिरिति कश्चिन्मन्यते; तं प्रति [2]ब्रूमः*—न ह्यनुपबृंहणा श्रुतिराप्ततमा। [3]*अन्योन्यघटिता[4]*नेकोपबृंहणविरोधे तदनु-**

## आनन्ददायिनी

भूतानामिति। तत्र पौर्वापर्यमात्रे तात्पर्यं न त्वव्यवधानांशोऽपि स्वीकार्यः। तथा सत्याथर्वणश्रुतिबाधापत्तेः। न च स युक्तः; अबाधेनोपपत्तौ बाधस्यान्याय्यत्वात्। अत एव भट्टपादैर्विरोधाधिकरणे—

> यदि द्वित्राङ्गुलं मध्ये विमुच्योत्तरभागतः।
> वेष्ट्येतौदुम्बरी तत्र किं नाम न कृतं भवेत्॥

इति। श्रुतिस्मृत्योरविरोधोऽङ्गीकृतश्चेत् किं पुनश्श्रुत्योरिति भावः। कश्चित्—साङ्ख्यः। अनुपबृंहणेति—त्रिवृत्करणादिश्रुतिवदिति भावः।

## भावप्रकाशः

[1]*भूतानामित्यादि एतच्च अत्रैवोत्तरत्र 'भूतान्येकद्वित्रिचतुःपञ्चभिस्तन्मात्रैरारभ्यन्त इति साङ्ख्याः' इत्यत्र स्फुटम्। एवं प्रकृतेर्महान्.... पञ्चभ्यः पञ्चभूताति(२२) इति कारिकातत्वकौमुद्यामपि। उपबृंहणशून्यश्रुतेस्साङ्ख्याभिमतसाधकता न सम्भवतीत्याह—[2]*न हीति। विरोधाधिकरणविरोधो नेत्याह [3]*अन्योन्यघटितेति—तन्मात्रभूतघटितेत्यर्थः। [4]* अनेकेत्यनेन 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वं' (१२-२-२) इति न्यायस्सूचितः। अतः पञ्चरात्रस्मृतेः मानान्तरानपेक्षप्रामाण्योपपादनपूर्वकं श्रुत्या सह विकल्पस्यागमप्रामाण्ये साधिततया च न विरोधाधिकरणविरोध इति भावः। अत्र 'तन्मात्राणि भूतादौ लीयन्ते' इति श्रुतिस्तु न साक्षाद्यौगपद्येनाप्ययपरा; 'पृथिव्यप्सु

## तत्त्वमुक्ताकलापः

**नभस्त्वं तद्वत्तन्मात्रपूर्वास्तदुपरि मरुदग्न्यम्बु-भूम्यः क्रमात्स्युः। सूक्ष्मस्थूलस्वभावस्वगुणस-**

## सर्वार्थसिद्धिः

गुणं नेतव्या। अतः [1]*पाशवद्बहुवचनमनादरणीयं अंशभूयस्त्व-व्यक्त्यर्थं वा। तस्माच्छब्दतन्मात्रमेकमहङ्कारजन्यं। तच्च परिणतिविशेषादाकाशत्वं भजते। एतेन सर्वत्र सृष्टौ द्रव्यानुवृत्तिस्सूच्यते। तद्वत्—आकाशवत्। तन्मात्रपूर्वा(र्वका)णि वाय्वादिभूतानि स्युः। ननु यदि शब्दाद्याश्रयतया तत्तद्भूतत्वं तर्हि कथं तत्र पञ्चकद्वयक्लृप्तिरित्यत्राह—सूक्ष्मेति। स्वगुणा

## आनन्ददायिनी

तर्हि वहुवचनस्य का गतिरित्यत्राह—पाशवदिति। अग्नीषोमीये एक-पशुके पाशबहुत्वाभावात् 'अदितिः पाशानिति' बहुवचनमविवक्षितं अंशबहुत्वपरं वा तत्र निर्णीतं। तथात्राप्यविवक्षा शब्दतन्मात्राणामनेकत्वज्ञापनेन चरितार्थं वेति भावः। उपसर्जनस्यापि तात्पर्योत्परामर्शस्तच्छब्देनेत्याह—अकाशवदिति। मूले

## भावप्रकाशः

लीयते' इत्यादिपूर्ववाक्यविरोधात् 'आकाशाद्वायुः' इत्यादिश्रुत्यन्तर-विरोधाच्च। तथात्वे हि पृथिवी गन्धतन्मात्रे लीयते आपो रसतन्मात्रे लीयन्ते इत्यादिक्रममुक्त्वा तन्मात्राणि भूतादाविति वक्तव्यं। नचेयं श्रुतिरत्यन्तक्रमनिर्बन्धपरा; आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु इति भवतामप्यनभिमतक्रमाविशेषापातप्रतीतेः इति श्रीन्यायसिद्धाञ्जन-श्रीसूक्तिरनुसन्धेया। [1]*पाशवदिति—'विप्रतिपत्तौ विकल्पस्स्यात् गुणे त्व-

## तत्वमुक्ताकलापः

मुदयप्राक्रियातारतम्यात् तन्मात्राभूतभेदः कलल-
दधिनयात्कल्पितस्तत्वविद्भिः ॥ १२ ॥

## सर्वार्थसिद्धिः

इह शब्दादयः । तेषां समुदय उत्पत्तिः । तत्प्रक्रियातारतम्यं सूक्ष्मस्थूलस्वभावतयैव । तच्च शास्त्रगम्यं । कललशब्दोऽत्र दुग्धदधिमध्यावस्थाविषयः । तत्र हि निवृत्तभूयिष्ठमाधुर्यमीषदाम्लत्वमुपलभ्यते तथा स्यात् ॥१२॥

**त्रिगुणपरीक्षायां तन्मात्रभूतयोरुत्पत्तिः श्रुतिस्मृतिविप्रतिपत्तिनिरासश्च.**

एवं तन्मात्रभूतसृष्टिप्रकार उक्तः। तत्र तोयतेजसोस्सृष्टौ

## आनन्ददायिनी

कललदधिनयादित्यत्र नाडीमुष्ट्योश्चेति ज्ञापकादुपपत्तिरिति भावः॥१२॥

त्रिगुणपरीक्षायां तन्मात्रभूतयोरुत्पत्तिः श्रुतिस्मृतिविप्रतिपत्तिनिरासश्च.

सृष्टौ श्रुतिस्मृति (विप्रतिपत्तिः) विरोधः पूर्वश्लोके परि(हृता)हृतः अत्र स एव परिह्रियत इति पौनरुक्त्यं वारयन् पूर्वसङ्गतत्वान्न पृथक् संगतिरित्याह—एवं तन्मात्रेति । तोयतेजसोरिति । 'अग्नेराप' इति श्रुत्या तेजसस्सकाशादपामुत्पत्तिरुच्यते ।

अबावृतमिदं सर्वमद्भ्योऽग्निरुदपद्यत ।

इति स्मृत्या अद्भ्यस्तेजसस्सृष्टिः प्रतिपाद्यत इति श्रुतिस्मृत्योर्विप्रतिपत्तिः। न च श्रुत्या स्मृतिबाधः अबाधेनापि सम्भवे बाधस्यान्याय्यत्वादित्याह—

## भावप्रकाशः

न्याय्यकल्पनैकदेशत्वात्' (९-३-१५) इति जैमिनिसूत्रे चैतदर्थोऽवसेयः॥

## तत्वमुक्ताकलापः

अद्भ्योऽग्निस्तेजसस्ता इति न हि वचसोर्बाधितुं युक्तमेकं निर्वाहः कल्पभेदाद्यदि न दृढमिता-

## सर्वार्थसिद्धिः

प्रमाणविप्रतिपत्तिं शमयति—

अद्भ्योऽग्निरिति। [1]*अबाधेन गतिमत्त्वे श्रुतिविरोधप्रतीतावपि स्मृतिस्तद्वद्बाध्येति भावः। गत्यन्तरं निवारयति–निर्वाह इति।

## आनन्ददायिनी

अबाधेन गतिमत्त्व इति। तद्वदिति—श्रुतिवदित्यर्थः। तदुक्तं—

परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि।
स्मृतेः श्रुतिविरुद्धायास्ततो मूलान्तरं भवेत्॥

इति। यथा श्रुत्योर्विरोधे निर्वाहस्तथा विरुद्धाया अपि स्मृतेरिति भावः।

## भावप्रकाशः

*[1]अबाधेन गति मत्त्वे इति। तदुक्तं तन्त्रवार्तिके विरोधाधिकरणे कुमारिलेन—

वेदो हीदृश एवायं पुरुषैर्यः प्रकाश्यते।
स पठद्भिः प्रकाश्येत स्मरद्भिर्वेति तुल्यभाक्॥

इत्यारभ्य—

बाधिता च स्मृतिर्भूत्वा काचिन्नयायविदा यदा।
श्रूयते न चिरादेव शाखान्तरगता श्रुतिः॥
तदा का ते मुखच्छाया स्यान्नैयायिकमानिनः।
बाधाबाधानवस्थानं ध्रुवमेव प्रसज्यते।

## तत्वमुक्ताकलापः

**तत्वसृष्ट्यैकरूप्यात् । व्यष्टौ ताभ्यः कदाचित्तदुपजनिरतो व्यत्ययस्तत्समष्टौ आदावप्सृष्टिवादः श्रुतिमितमितरं न प्रतिक्षेप्तुमीष्टे ॥ १३ ॥**

## सर्वार्थसिद्धिः

स्वेष्टां गतिमाह—व्यष्टाविति । निमित्तभूताभ्य इति भाव्यं । अतश्शब्दो हेतुमवधिं वा ब्रूते । ननु 'आपो वा इदमग्रे' 'अप एव ससर्जादौ' इत्यादिश्रुतिस्मृतिदर्शनादग्न्यादेस्सर्वस्याद्भ्यस्सृष्टिस्स्यात् इत्यत्राह—आदाविति । महदादीनामिवा-

## आनन्ददायिनी

निमित्तभूताभ्य इति । 'अद्भ्योऽग्निरिति' वचनं व्यष्टिसृष्टौ तेजः प्रति निमित्तकारणत्वमाह यथा तप्ततैलेऽग्निमुत्पादयन्त्यापः । 'अग्नेराप' इति तु समष्टिसृष्टौ उपादानत्वमाहेति न विरोध इत्यर्थः । पञ्चीकृतेभ्यः (भूतत्वापन्नेभ्यः) उत्पत्तिर्व्यष्टिसृष्टिः ततः प्राक्तनसृष्टिस्समष्टिसृष्टिः । न्यायत? इत्यनेनैव हेतुत्वस्य सिद्धत्वादत इति शब्दवैयर्थ्यमिति पक्षान्तरमाह—अवधिमिति । अतस्तेजसस्सकाशादित्यर्थः । श्रुतिस्मृतिभ्यामपामेवादावुत्पत्तिश्रवणादुक्तनिर्वाहो नोपपद्यत इत्याशङ्क्य समाधत्ते—नन्वित्यादिना 'आपो वा इदमग्रे सलिलमासीत्' । 'अप

## भावप्रकाशः

ततश्च श्रुतिमूलत्वाद्बाध्योदाहरणं न तत् ।
विकल्प एव हि न्याय्यस्तुल्यकक्षप्रमाणतः ॥

इति । व्याकरणाधिकरणेऽपि—

स्मृतीनामप्रमाणत्वे विगानं नैव कारणम् ।

## सर्वार्थसिद्धिः

ग्नेरप्यब्भ्यः पूर्वभावित्वं बहुश्रुतिस्मृतिसिद्धं । अतस्तद्विरु-

## आनन्ददायिनी

एव ससर्जादाविति' श्रुतिस्मृती । इदमबादिकं कार्यं सलिलं प्रकृतिरासीत्प्रळयकाल इत्यर्थः । आचार्यैस्सालिलशब्दस्य प्रकृतिपरत्वस्य परमतभङ्गे प्रदर्शितत्वात् । न ह्यपां सर्वपूर्वभावः प्रतिपादयितुं शक्यः महदादीनां तत्पूर्वभाविनां दुरपह्नवत्वात् । नापि तेजःपूर्वभावः । नियामकाभावात् । तथा च "अग्नेरापः । तत्तेजोऽसृजत । आपस्तेजसि लीयन्ते । प्रधानं तत्वमुद्भूतमिति" बहुश्रुतिस्मृत्यन्तरानुगुण्येन

## भावप्रकाशः

इत्युपक्रम्य—

> विगानाद्धि विकल्पस्स्यात् नैकस्याप्यप्रमाणता ।

इति च । विरोधाधिकरणनिष्कर्षणं तु—

> यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते ।
> तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥
> ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत् ।
> तथाऽपि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥

इति । तदुक्तं न्यायपरिशुद्धौ—'श्रुतिस्मृत्योर्विरोधे तु स्मृत्या मूलान्तरानुमानादनुष्ठानविकल्पं केचिदाहुः' इति । एतदुत्तरं 'सर्वेषां गुणत्रयवतामाप्ततमत्वे हि कादाचित्कभ्रमसंभवाच्छ्रुत्या स्मृतिबाध इत्यपरे' इति सूक्तिः शाबरभाष्यपरिष्कृतिः । अत्राबाधेन गतिमत्त्वसम्भवे इत्यनेन 'तत्वविषये तु विरोधे बाध एव आन्यपर्यं वा वस्तुनि विकल्पासंभवात्' इति न्यायपरिशुद्ध्युक्तपक्षद्वये आन्यपर्यपक्ष एव स्वाभिमत इति सूचितम् ॥

## सर्वार्थसिद्धिः

**दुर्निवारमित्यर्थः । श्रुतिषु च न्यूननिर्देशेषु अनुक्तमधिकमन्यतो ग्राह्यं श्रुतहानायोगात् । अव्यवस्थितन्यूनाधिकसृष्टिकल्पने गौरवाच्च ॥ १३ ॥**

त्रिगुणपरीक्षायां तोयतेजसोः परस्परहेतुताप्रमाणगतिव्यवस्था.

**ननु कथमेवं तोयतेजसोः व्यष्टिसमष्टिसृष्टिव्यवस्था? विचित्रपरिणामशालिनस्त्रिगुणस्य कालभेदेनानियतपरिणामोपपत्तेः ।**

## आनन्ददायिनी

पृथिवीसृष्टेःव्यष्टितः पूर्वभावः प्रतिपाद्यत इति न विरोध इति भावः । नन्वेतच्छ्रुतिस्मृत्यनुसारेणैव श्रुत्यन्तराणां वा नयनं कुतो न स्यादित्यत आह—श्रुतिषु चेति । न्यूननिर्देशानुसारेणाधिकश्रुतेर्नयने विरोधादधिकश्रुत्यनुसारेण नयने शाखान्तराधिकरणन्यायेन विरोधाभावादिति भावः । नन्वन्यतरानुसारेण किमर्थमन्यतरा श्रुतिर्नेया ? विकल्पितयोः व्रीहियवयोः प्रयोगभेदेनेव कल्पभेदेनोभयोरुपपत्तेरित्यत आह—अव्यवस्थितेति 'धाता यथापूर्वमिति' व्यवस्थायाः सर्वकल्पेषु श्रुतत्वादिति भावः ॥१३॥

त्रिगुणपरीक्षायां तोयतेजसोः परस्परहेतुताप्रमाणगतिव्यवस्था.

आक्षेपिकीं संगतिमाह—कथमिति । व्यष्टिसमष्टिसृष्टिव्यवस्था—

## भावप्रकाशः

तत्वार्थाधिगमसूत्रेषु—पञ्चेन्द्रियाणि । द्विविधानि । निर्वृत्त्युपकरणे द्रव्येन्द्रियम् । लब्ध्युपयोगौ भावेन्द्रियम् । स्पर्शनरसनघ्राणचक्षुश्श्रोत्राणि । (२-अ १५-२०) इतीन्द्रियद्वैविध्यमभिधाय स्पर्शरसगन्धवर्णशब्दास्तदर्थाः (२-अ-२१) इत्युक्तम् । अत्र

## तत्वमुक्ताकलापः

## [1]*पृथ्व्याः स्पर्शादिभेदो द्रवमृदुकठिनीभावभेभावप्रकाशः

राजवार्तिके भट्टाकलङ्कः—स्पर्शादीनां कर्मभावसाधनत्वं द्रव्यपर्यायविवक्षोपपत्तेः। स्पर्शादीनामानुपूर्व्येण निर्देश इन्द्रियक्रमाभिसम्बन्धार्थो वेदितव्यः इति। इन्द्रियक्रमाभिसम्बन्धार्थः—स्पर्शश्च रसश्च गन्धश्च वर्णश्च शब्दश्च स्पर्शरसगन्धवर्णशब्दा इत्यानुपूर्व्येण निर्देशः स्पर्शनादिभिरिन्द्रियैः क्रमेणाभिसंबन्धो यथा स्यात् इति। एते पुद्गलद्रव्यस्य गुणा अविशेषेण वेदितव्याः। अत्र केचिद्विशिष्य तान् कल्पयन्ति—रूपरसगन्धस्पर्शवती पृथिवी। रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्च। तेजो रूपस्पर्शवत्। वायुः स्पर्शवानिति। तदयुक्तं—रूपादिमान् वायुः स्पर्शवत्त्वात् घटवत्। तेजोऽपि रसगन्धवत् रूपवत्त्वात् गुडवत्। आपोऽपि गन्धवत्यः रसवत्त्वादाम्रफलवत्। किञ्च अबादिषु गन्धादीनां साक्षादुपलब्धेश्च। पार्थिवपरमाणुसंयोगादुपलब्धिरिति चेन्न; विशेषहेत्वभावात्। नात्र विशेषहेतुरस्ति पार्थिवपरमाणूनामेते गुणाः संसर्गात्त्वन्यत्रोपलभ्यन्ते; न त्वबादीनामिति। वयं ब्रूमहे—तद्गुणाः तत्रोपलब्धेरिति। यदि हि संयोगादुपलब्धिः कथ्यते रसाद्युपलब्धिरपि संयोगादेव कल्प्यताम्। नच पृथिव्यादीनां जातिभेदोऽस्ति; पुद्गलजातिमजहन्तः परमाणुस्कन्धविशेषा निमित्तवशाद्विश्वरूपतामापद्यन्त इति दर्शनात्। दृश्यते हि पृथिव्याः कारणवशाद्द्रवता। द्रवाणां चापां करकात्मभावेन घनभावो दृष्टः। घनश्च द्रवभावः। तेजसोऽपि मषीभावः। वायोरपि दृष्टा रूपादयः। कथं गम्यते इति चेत्; परमाणुषु तेषां रूपादीनां कथं गतिः? तत्कार्येषु दर्शनादनुमानमिति चेत्? इहापि तत एव वेदितव्यम्। इति। एतद्वार्तिकार्थमनुवदति—मूले [1]*पृथ्व्या इत्यादि। तत्र पुद्गलस्येति शेषः।

## सर्वार्थसिद्धिः

[1]*उक्तं च जैनैः—[2]*पुद्गलाख्यमेकजातीयद्रव्यं तत्तत्सामग्री-

## आनन्ददायिनी

व्यष्टावनियता समष्टौ नियतेति व्यवस्थेत्यर्थः । उक्तं च जैनैरिति—विद्यानन्दादिभिरित्यर्थः । पुद्गलो नाम स्पर्शरसगन्धवर्णवद्द्रव्यं । तद्द्विविधं—परमाणुरूपं स्कन्धरूपं चेति । परमाणुसंयोगात् द्व्यणुकादयः

## भावप्रकाशः

[1]*उक्तं चेति··उदाहृतसूत्रादौ 'स्पर्शरसगन्धवर्णवन्तः पुद्गलाः । शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्च । अणवः स्कन्धाश्च । भेदसंघातेभ्य उत्पद्यन्ते । भेदादणुः । भेदसंघाताभ्यां चाक्षुषः (५ अ २३—२८) इत्यादिसूत्रेषूक्तमित्यर्थः । अत्र प्रथमसूत्रश्लोकवार्तिके विद्यानन्दः—

> अथ स्पर्शादिमन्तस्स्युः पुद्गला इति सूचनात् ।
> क्षित्यादिजातिभेदानां प्रकल्पननिराकृतिः ॥

पृथिव्यप्तेजोवायवो हि पुद्गलस्य पर्यायाः स्पर्शादिमत्त्वात् ये न तत्पर्यायास्ते न स्पर्शादिमन्तो दृष्टाः यथाऽऽकाशादयः स्पर्शादिमन्तश्च पृथिव्यादयः इति तज्जातिभेदानां निराकरणं सिद्धं । नन्वयं पक्षाव्यापको हेतुः स्पर्शादिः; जले गन्धाभावात् तेजसि गन्धरसयोः वायौ गन्धरसरूपाणामनुपलब्धेरिति ब्रुवाणं प्रत्याह—

> नाभावोऽन्यतमस्यापि स्पर्शादीनामदृष्टितः ।
> तस्यानुमानसिद्धत्वात् स्वाभिप्रेतार्थतत्ववत् ॥

इत्याह । [2]*पुद्गलाख्यमिति । पुद्गलशब्दः पारिभाषिकः यौगिको वा । यथाह—'अजीवकाया धर्माधर्माकाशपुद्गलाः' इति । तत्वार्थराजवार्तिके

## सर्वार्थसिद्धिः

भेदैः [1]*अव्यवस्थितक्रमान् भिन्नाभिन्नस्वभावान् विचित्रप-

## आनन्ददायिनी

स्कन्धा उत्पद्यन्ते । स्कन्धभेदनात्परमाणवः' इत्यादिभिरनियतवाच्या-दिरूपपर्याया उत्पद्यन्त इत्युक्तमिति भावः । भेदनात्परमाणवः' इत्या-

## भावप्रकाशः

(५–१) भट्टाकलङ्कः—धर्मादयस्संज्ञास्सामयिक्यः । क्रियानिमित्ता वा इत्यारभ्य पूरणगलनान्वर्थसंज्ञत्वात्पुद्गलः । यथा भासं करोति भास्कर इति भासनार्थमन्तर्नीय भास्करसंज्ञाऽन्वर्था प्रवर्तते तथा भेदात्संघाता-द्भेदसंघाताभ्यां पूर्यन्ते गलन्ते चेति पूरणगलनात्मिकां क्रियामन्तर्भाव्य पुद्गलशब्दोऽन्वर्थः पृषोदरादिषु निपातितः । यथा शवशायनं श्मशानमिति । पुङ्गिलनाद्वा—अथवा पुमांसो जीवाः तैःशरीराहार-विषयकरणादिभावेन गिल्यन्त इति पुद्गला इति ।

[1]*अव्यवस्थितक्रमान् भिन्नाभिन्नस्वभावान् विचित्रपर्यायानिति । तथाहि—'गुणपर्यायवद्द्रव्यं' इति सूत्रे राजवार्तिके भट्टाकलङ्कः–द्रव्यस्य द्वावात्मानौ सामान्यं विशेषश्चेति । तत्र सामान्यमुत्सर्गो गुण इत्यनर्था-न्तरं । विशेषो भेदः पर्याय इति पर्यायशब्दः । तदुभयसमुदितं रूपं द्रव्यमित्युच्यते । गुणा एव पर्याया इति वा निर्देशः । द्रव्यस्य परिणमनं पर्यायः । तद्भेदा एव गुणाः न भिन्नजातीया इति । 'द्रव्याश्रया निर्गुणा गुणाः' इति सूत्रे च; नित्यं द्रव्यमाश्रित्य ये वर्तन्ते ते गुणा । पर्यायाः पुनः कादाचित्काः इति न तेषां ग्रहणं । तेनान्वयिनो धर्मा गुणा इत्युक्तं भवति । तद्यथा जीवस्यास्तित्वादयः ज्ञानदर्शनादयश्च । पुद्गलस्याचेतनत्वादयो रूपादयश्चेति । पर्यायाः पुनर्घटज्ञानादयः कपाला-दिविकाराश्चेत्याह । पर्यायस्वरूपनिरूपणपरं च 'तद्भावः परिणामः'

## भावप्रकाशः

इति सूत्रं (४-१-२)। अत्र राजवार्तिकं—गुणा द्रव्यादर्थान्तरभूताः इति केषाञ्चिद्दर्शनं ; तत्किं भवत्संमतं? नेत्याह। यद्यपि कथञ्चिद्व्यपदेशादिभेदहेत्वपेक्षया द्रव्यादन्ये तद्व्यतिरेकात्तत्परिणामाच्चानन्ये। यद्येवं स उच्यतां कः परिणामः इति? तन्निश्चयार्थमिदमुच्यते—तद्भावः परिणामः। धर्मादीनां येनात्मना भवनं स तद्भावः परिणामः। तत्स्वरूपं व्याख्यातं इति। 'वर्तना परिणामः' इत्यादौ च 'एकस्मिन् अविभागिनि समये धर्मादीनि द्रव्याणि षडपि स्वपर्यायैरादिमदनादिमद्भिरुत्पादात्ययध्रौव्यविकल्पैर्वर्तन्त इति कृत्वा तद्विषया वर्तना' 'द्रव्यस्य स्वजात्यपरित्यागेन प्रयोगविस्रसालक्षणो विकारः परिणामः'। 'द्रव्यस्य चेतनस्येतरस्य वा द्रव्यार्थिकनयस्य अविवक्षातो न्यग्भूतां स्वां द्रव्यजातिमजहतः पर्यायार्थिकनयार्पणात् प्राधान्यं बिभ्रता केनचित् पर्यायेण प्रादुर्भावः पूर्वपर्यायनिवृत्तिपूर्वको विकारः प्रयोगविस्रसालक्षणः परिणाम इति प्रतिपत्तव्यः। तत्र प्रयोगः—पुद्गलविकारः। तदनपेक्षा विक्रिया विस्रसा। तत्र परिणामो द्विविधः अनादिरादिमांश्च। अनादिर्लोकसंस्थानमन्दराकारादिः। आदिमान् प्रयोगजो वैस्रसिकश्च। तत्र चेतनस्य द्रव्यस्यौपशमिकादिर्भावः कर्मोपशमाद्यपेक्षोऽपौरुषेयत्वात् वैस्रसिक इत्युच्यते। ज्ञानशीलभावनादिलक्षणः आचार्यादिपुरुषप्रयोगनिमित्तत्वात् प्रयोगजः। अचेतनस्य च मृदादेः घटसंस्थानादिपरिणामः कुलालादिपुरुषप्रयोगनिमित्तत्वात्प्रयोगजः। इन्द्रधनुरादिनानापरिणामो वैस्रसिकः। तथा धर्मादेरपि परिणामो योज्यः इति। एवं श्लोकवार्तिकमपि—

गुणवद्द्रव्यमित्युक्तं सहानेकान्तसिद्धये।
तथा पर्यायवद्द्रव्यं क्रमानेकान्तवित्तये ॥ ३८ ॥

## भावप्रकाशः

तद्भावः परिणामोऽत्र पर्यायः प्रतिवर्णितः ।
गुणात्सहभुवो भिन्नः क्रमवान् द्रव्यलक्षणम् ॥
पर्याय एवं च द्वेधा सहक्रमविवर्तितः ।
शुद्धाशुद्धत्वभेदेन यथा द्रव्यं द्विधोदितम् ॥ (४२सू)

इति । उत्पादव्ययध्रौव्ययुक्तं सत् (५-२९) इति सूत्रे उत्पादादीनां द्रव्यस्य च उभयथा लक्ष्यलक्षणभावानुपपत्तिरिति चेन्न ; 'अन्यत्वानन्यत्वं प्रत्यनेकान्तोपपत्तेः' इत्यादौ भिन्नाभिन्नत्वं व्यक्तं राजवार्तिके—

'स्यान्मतं ; उत्पादव्ययध्रौव्याणि द्रव्यादर्थान्तरभूतानि वा स्युः अनर्थान्तरभूतानि वा ? यद्यर्थान्तरभावः कल्प्येत तानिव सत्वानि ततोऽन्यत्वात् द्रव्यत्वाभावस्स्यात् । तदभावे च निराधारत्वादुत्पादादीनामभावः इति लक्ष्यलक्षणभावो नोपपद्यते । न हि असतां वन्ध्यापुत्राकाशकुसुमादीनां लक्ष्यलक्षणभावोऽस्ति । अथानर्थान्तरत्वमिष्येत लक्ष्यमेव लक्षणमिति दृष्टविरोधस्स्यादिति ; तन्न ; किंकारणं ? अन्यत्वानन्यत्वं प्रत्यनेकान्तोपपत्तेः । पर्यायिणः पर्यायाणां च स्यादन्यत्वं स्यादनन्यत्वं । यथैकस्य मनुष्यस्य जातिकुलरूपादिभिः अविशिष्टस्य अनेकसम्बन्धान्तराविर्भूतपितृपुत्रभ्रातृभागिनेयादयो धर्माः परस्परतो विशिष्टा उपलभ्यन्ते ; न तेषां भेदात्तस्य भेदः । नापि तस्याभेदात्तेषामभेदः । ततः पितृत्वादिशक्त्यपेक्षया नाना मनुष्यत्वापेक्षया न पृथक् । तथा द्रव्यस्यापि बाह्याभ्यन्तरहेतुविशेषापादिताः पर्यायाः कथञ्चिद्भिन्नाः द्रव्यार्पणात्कथञ्चिदभिन्ना इति नासत्त्वं लक्ष्यलक्षणभावाभावः । तस्मादुत्पादादित्रयैक्यवृत्तिः सत्ता तद्युक्तं द्रव्यमित्यवसेयं । अत्राह— द्रव्यस्यात्मभूतोऽन्वयो धर्मः । पर्यायोऽप्यात्मभूतो द्रव्यस्येति तन्निवृत्तिवद्द्रव्यनिवृत्तिकल्पनायामुच्छेद प्रसङ्ग इति, अत्र ब्रूमहे—स्यादेतदेवं ; यदि क्रमेण पिण्डघटकपालादिवद्रूपिद्रव्याजीवानुपयोगत्वादिलक्षणः परि-

## भावप्रकाशः

णामः कादाचित्कस्स्यात्; यतः सत्यपि व्ययोत्पादवत्त्वे पर्यायाणां 'तद्भावाव्ययं नित्यं' (३०सू) । किं अध्यवस्यामः । द्रव्यमिति वाक्यशेषः। तद्भाव इत्युच्यते; कस्तद्भावः? 'प्रत्यभिज्ञानहेतुना तद्भावः। तदेवेदमिति स्मरणं प्रत्यभिज्ञानं । तदकस्मान्न भवति इति योऽस्य हेतुः स तद्भावः । भवनं भावः तस्य भावस्तद्भावः इति । यद्योति उत्पद्यते च तत्सन्नित्यं चेत्यतिसाहसमेतत् दुरुपपादत्वात् कथं श्रद्धीयत इति; अत्रोच्यते; श्रद्धेहि; व्ययोत्पादवत्सु पर्यायेषु अव्यभिचारिणि सान्नित्यत्वे स्त इति । कुतः? यस्माद्द्रव्यार्थिकपर्यायार्थिकनयसंभवे अन्यतराविवक्षावशात् यथोक्ते उभे अपि । 'अर्पितानर्पितसिद्धेः (३१) । धर्मान्तरविवक्षाप्रापितप्राधान्यमर्पितं—अनेकात्मकस्य वस्तुनः प्रयोजनवशाद्यस्यकस्यचिद्धर्मस्य विवक्षायां प्रापितप्राधान्यमर्थरूपमर्पितमुपनीतामिति यावत् । 'तद्विपरीतमनर्पितम्' प्रयोजनाभावात् सतोऽप्यविवक्षा भवतीत्युपसर्जनीभूतमनर्पितमित्युच्यते । अर्पितं चानर्पितं च अर्पितानर्पिते । ताभ्यां सिद्धे सान्नित्यत्वे अर्पितानर्पिताभ्यां सिद्धे सान्नित्यत्वे अर्पितानर्पितासिद्धिः । तद्यथा—मृत्पिण्डः रूपिद्रव्यमित्यर्पितस्स्यान्नित्यः तदर्थापरित्यागात् । अनेकधर्मपरिणामिनोऽर्थस्य धर्मान्तरविवक्षाव्यापारात् रूपिद्रव्यात्मनानर्पणात् मृत्पिण्ड इत्येवमर्पितं पुद्गलद्रव्यं स्यादनित्यं तस्य पर्यायस्याध्रुवत्वात् । तत्र यदि द्रव्यार्थिकनयविषयमात्रपरिग्रहः स्यात् व्यवहारलोपः; तदात्मकवस्त्वभावात् । यदि पर्यायार्थिकनयगोचरमात्राभ्युपगमः स्यात् लोकयात्रा न सिद्ध्यति; तथाविधस्य वस्तुनोऽसद्भावात् । तावेकत्रोपसंहृतौ लोकयात्रासमर्थौ भवतः । तदुभयात्मकस्य वस्तुनः प्रसिद्धेः । इत्येवमर्पितानर्पितव्यवहारासिद्धे सान्नित्यत्वे इति । उदाहृतग्रन्थसंदर्भे पर्यायाणां विचित्रत्वं तेषामेव गुणानां अक्रमत्वमपि स्फुटम् ।

## सर्वार्थसिद्धिः

र्यायान् भजत इति। यथा कणादप्रभृतीनां एकैकभूतपरमाणवः; यथा च साङ्ख्यादीनामेकैकं भूतं। अतो न शाश्वतभूतभेदक्लृप्तिः। वाय्वादिचातुर्विध्योक्तिरपि पर्यायभेदनिबन्धना।

## आनन्ददायिनी

दिभिरनियतवाय्वादिरूपपर्याया उत्पद्यन्त इत्युक्तामिति भावः। यथा कणादप्रभृतीनामिति। अनियतमृत्पाषाणाद्युत्पत्तिरित्यर्थः। न शाश्वतभूतभेदक्लृप्तिरिति। तैर्नित्यत्वानभ्युपगमादिति भावः। ननु—

वायुस्तेजो जलं भूमिरिति भिन्नाश्च पुद्गलाः।

इति चातुर्विध्योक्तिः कथमित्यत्राह—वाय्वादीति। पर्यायः—परिणामः अवस्था इति यावत्। एकजातीयस्यैव परिणामभेदनिब-

## भावप्रकाशः

सहभवगुणात्मकपर्यायाभिप्रायेण मूले 'स्पर्शादिभेद' इत्युक्तं। क्रमभवपर्यायतात्पर्येण 'द्रवमृदुकठिनीभावभेदः' इति। एतद्विषयेऽप्यव्यवस्थितक्रमत्वं 'नित्यावस्थितान्यरूपाणि' (५–४–२) इति सूत्रेण गम्यते। यथाऽऽह विद्यानन्दः—

द्रव्यार्थिकनयात्तानि नित्यान्येवान्वितत्वतः।
अवस्थितानि साङ्कर्यस्यान्योन्यं शश्वदस्थितेः।
ततो द्रव्यान्तरस्यापि द्रव्यषट्कादभावतः॥
तत्पर्यायानवस्थानानित्यत्वे पुनरर्थतः।

इति। परिणामस्त्रिविधः सदृशः विसदृशः सदृशविसदृशश्चेति। तत्र गोत्वादिः सदृशपरिणामस्सामान्यं। विसदृशपरिणामो विशेषः खण्डत्वादिः। नाशः प्रागभावश्चायमेव। सदृशविसदृशपरिणामश्च मृत्कपालघटाद्युपादानोपादेयभावस्थले सर्वत्रेति बोध्यम्।

## तत्वमुक्ताकलापः

**दश्च दृष्टः तद्वत्पृथ्वीजलाग्निश्वसनपरिणतिर्लाघवा-
येति जैनाः । तत्र द्रव्यैक्यमिष्टं**

## सर्वार्थसिद्धिः

**नियतक्रमभूतसृष्टिकल्पना च*[1]लाघवयुक्तिविहता। तदेतदनुभाषते-पृथ्व्या इति (१६१पु.)। दूष्यांशव्यक्त्यै शेषमनुमनुते-तत्र द्रव्यैक्यमिति। [2]*त्रिगुणद्रव्यमेव हि वाय्वाद्यवस्थमिति भावः।**

## आनन्ददायिनी

न्धनेत्यर्थः। दूष्यांशेति। ननु जैनैरप्येकजातीयद्रव्यस्य परिणामभेदोऽङ्गीकृतः। सिद्धान्तेऽपि प्रकृतेः परिणामभेद इति तन्मतात्को भेदः? इति चेत्; न; सिद्धान्ते क्रमानियमस्याङ्गीकाराद्भेद इति भावः।

## भावप्रकाशः

*[1]लाघवयुक्तीति-बाधकं प्रमाणं चोदाहृतानुमानं स्याद्वादागमश्चेति भावः। द्रव्यैक्यमिति मूले अविशेषाद्द्रव्यपर्याययोरप्यैक्यं विवक्षितं प्रतीयते; तथा सति सिद्धान्तिनोऽपि जैनमतप्रवेशापत्तिः। अजामेकामित्यादिश्रुतिभिर्नित्यतयाऽङ्गीकृतायाः प्रकृतेरुत्पादविनाशाभ्युपगमेन ब्रह्मजीवयोः कार्यत्वाङ्गीकारेणोत्पादविनाशयोरकामेनापि स्वीकारस्यावश्यकत्वेन उत्पादव्ययध्रौव्याणामेकत्राङ्गीकारात् इति शङ्कां निराचिकीर्षुः कारणकार्यद्रव्ययोरैक्यं द्रव्यैक्यमिति मूले विवक्षितमित्याह—
*[2]त्रिगुणद्रव्यमिति 'सन्ति प्रागप्यवस्थाः' इत्यत्र अद्रव्यसरे च द्रव्यपर्याययोरभेदो निरासिष्यते। तत एव च सिद्धान्ते जैनमताद्विशेषो व्यक्तीभविष्यति। तथाहि—जैनाः खलु वस्तुनः स्थिरत्वे

## भावप्रकाशः

करणाकरणयोरेकत्र समावेशप्रसङ्ग इति भयात् सत्त्वेन वस्तु-सामान्यं क्षणिकं वदतां बौद्धानां प्रतिद्वन्द्विनः स्थिरं द्रव्यपर्यायार्थिकनयभेदेन विरुद्धानेकधर्मात्मकं वस्तु अभ्युपगच्छन्त्यनेकान्तवादिनः। अन्ये च नैयायिकादयो दार्शनिकाः विरुद्धानामपि धर्माणां देशकालाद्यवच्छेदकभेदेनैकत्र वृत्तिमङ्गीकृत्य स्थिरं वस्तु साधयन्ति। एवं स्थिते द्रव्यं नित्यं पर्यायस्यैवोत्पादो विनाशश्चेति द्रव्यांश एव सत्कार्यवादः द्रव्यपर्याययोर्भेद एवेति सिद्धान्ते विशेषणविशेष्यतत्सम्बन्धेषु सम्बन्ध्युभयात्मके विशिष्टवस्तुनि विशेषणान्तर्भावेन पर्याप्तधर्मावच्छेदेन उत्पादविनाशाङ्गीकारेऽपि तद्भिन्नधर्मावच्छेदेन शुद्धे तदनङ्गीकारः इत्यवच्छेदकभेदेन विरोधविरहात् वस्तु स्थिरमिति साधनेन कथं जैनमतप्रवेशः? वस्तुनि विरुद्धानेकधर्मात्मकत्वानङ्गीकारात्। इयं च सरणिरङ्गीकृता बौद्धाधिकारे शिरोमणिना—आत्मनामुत्पत्त्यभावेऽपि विशेषणस्य शरीरस्य तथात्वाद्विशिष्टस्य तथात्वव्यपदेशः। अपूर्वशरीरादिसम्बन्धरूपं तु न मुख्यो जन्यर्थः इति। व्याख्यातं चात्र गदाधरेण—विशेषणोत्पत्तिक्षणस्य विशेष्याधिकरणसमयध्वंसाधिकरणत्वेऽपि विशिष्टाधिकरणसमयध्वंसानधिकरणत्वरूपाद्यत्वाक्षतेः तत्सम्बन्धरूपजननस्य विशिष्टेऽपि निर्वाहाच्चैत्रो जात इत्यगौणः प्रयोग उपपन्नः। जात इत्यस्याद्यशरीरसम्बन्धवानित्याद्यर्थकत्वे च जात इत्यस्य लाक्षणिकत्वापत्तिः। अन्यथा भाष्याद्युपपादितदिशा—

कार्यात्मना च नानात्वमभेदः कारणात्मना।

इति कार्यकारणयोर्भेदाभेदवादी वाचस्पत्यादिरेव जैनस्स्यादिति भावः। यच्च—अकलङ्कविद्यानन्दाभ्यामबादौ गन्धादिसाधनानुमानं; तत्र सामानाधिकरण्येन साधने पञ्चीकृताबादौ गन्धादेः सिद्धान्तेऽप्यङ्गीकारेण सिद्धसाधनं जले गन्धप्रत्यक्षोपपत्तिश्च। अवच्छेदकाव-

## तत्वमुक्ताकलापः

. . . . [1]* क्रमजनिविलयौ त्वागमा-
दप्रकम्प्यौ तर्कैकालम्बिगोष्ठ्यां भजतु बहुमतिं
तादृशी लाघवोक्तिः ॥ १४ ॥

## सर्वार्थसिद्धिः

नियतक्रमत्वे कल्पनागौरवमागमबलादपनयति—क्रमेति । लाघवतर्कस्य का गतिरित्यत्राह—तर्केति । [2]* गुरुकल्पनाप्रवृत्तं प्रति हि लाघवोक्तिश्शोभते इति भावः ॥ १४ ॥

इति त्रिगुणपरीक्षायां जैनोक्तशाश्वतभूतभेदक्लृप्तिभङ्गनिरासः.

———

## आनन्ददायिनी

गुरुकल्पनेति । न तर्कावकाश इति भावः । मूलस्यायमर्थः—यथा पृथ्व्याः स्पर्शभेदः शूकशिम्बुपरिणामे द्रवत्वं घृतपरिणामे मृदुत्वं नवनीतपरिणामे काठिन्यं पाषाणादिपरिणामे दृष्टं तन्न्यायेनैकस्यैव

## भावप्रकाशः

च्छेदेन साधनेऽशतस्सिद्धेरदोषतापक्षेऽप्यप्रयोजकत्वमिति दूषणं स्फुटमित्युपेक्ष्य अपञ्चीकृतानामतीन्द्रियाणामनुमानतास्सिद्ध्यसंभवः पूर्वमुपपादित इति धर्मिग्राहकागमबाध एव *[1] क्रमजनिविलयौ त्वागमादप्रकम्प्यौ इत्यनेनोक्तः । स्याद्वादा (जैना)गमस्य त्वप्रामाण्यं बुद्धिसरे परमतभङ्गे च स्थाप्यते इति ।

*[2] गुरुकल्पनाप्रवृत्तश्च—नैयायिकः । स खलु अतीन्द्रियं जगतो निमित्तं ब्रह्म उपादानभूतं परमाण्वादिकमनुमानेन साधयति । एवं प्रकृत्यादिकमानुमानिकं वदन् साङ्ख्योऽपि तथा । आगमस्वाच्छन्द्यानभ्युपगमे भवन्मतेऽपि बहुवैयाकुली स्यादिति भावः ।

## तत्वमुक्ताकलापः

**तत्वेष्वाथर्वणेऽष्टौ प्रकृतय उदिताष्षोडशान्ये**

## सर्वार्थसिद्धिः

ननु तत्वसृष्टौ क्रमनियमो न सम्भवति 'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु' इति सुबालोपनिषदाम्नानात् । अव्यवस्थिताश्च सृष्टिव्यवहाराः पृथ्व्यादिषु दृश्यन्ते । अतो यथाश्रुतं कल्पभेदात्सृष्टिभेदस्स्यादित्यत्राह—तत्वेष्विति । अधीयते च केचिदाथर्वणिकाः 'अष्टौ प्रकृतयष्षोडश विकाराः' इति । अत्र तावदव्यक्तमहदहङ्कारतन्मात्राणां प्रकृतित्वमविप्रीतं । इन्द्रियेभ्यस्तत्वान्तरोत्पत्तिश्श्रुत्यन्तरेषु पुराणेषु वा न क्वचिद्दृश्यते । सौबाले च लया-

## आनन्ददायिनी

द्रव्यस्य पृथ्व्यादिपरिणतिर्लाघवाय स्वीकार्येति जैनमतस्था आहुः । तत्र—तदुक्तेषु एकस्य परिणतिरिष्टा । सा च क्रमनियता तथा लयश्च तथा दृढतरागमतः प्रतिपादनात् । या तु लाघवोक्तिः सा तर्कैकालम्बिगोष्ठ्यां बहुमतिं केवलानुमानतस्तत्वक्लृप्तिगोष्ठ्यां—साङ्ख्यगोष्ठ्यां भजत्विति ॥१४॥

इति त्रिगुणपरीक्षायां जैनोक्तशाश्वतभूतभेदक्लृप्तिभङ्गनिरासः.

---

आक्षेपिकी संगतिरित्याह—ननु तत्वसृष्टाविति । सुबालोपनिषदीति । 'पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते' इत्यादिलयानुक्रमणात् लयस्थानस्योपादानत्वप्रतीतेरिति भावः । पूर्वोक्तगत्यन्तरमेव ज्याय इत्याह—अत इति । ननु सुबालोपनिषद्वाक्यमस्तीत्याह—सौबाले चेति । न च

## तत्वमुक्ताकलापः

विकाराः निष्कर्षैदम्परेऽस्मिन् वचसि तदितरत्स-

## सर्वार्थसिद्धिः

नुक्रमे पूर्वापरवाक्यवदिन्द्रियतन्मात्रवाक्ययोर्न लीयत इति पदमावृत्तं । एवं वाक्यवैरूप्ये सति अनुषङ्गाद्वरं अधिकरण-विभक्त्याऽपि संसर्गमात्रग्रहणमिति स्थिते प्रकरणान्तरैक-कण्ठ्यं भवतीति केवलविकृतित्वमिन्द्रियाणां युक्तम् । भूतानां चाकाशादीनां चतुर्णां साक्षात्तन्मात्रद्वारेण वा तत्वान्तरोपा-

## आनन्ददायिनी

तत्र साक्षादुपादानत्वश्रुतिः। न च लयो वा तत्र श्रुतः येन तदन्यथानुपपत्त्योपादानत्वं सिध्येदिति भावः । ननु वाक्यवैरूप्यपरिहारायानुषङ्गः कल्प्यतामित्यत्राह—अनुषङ्गाद्वरमिति । श्रुतमात्रादेवोपपत्तेरिति भावः । अनुषङ्गपक्षे पूर्वापरवाक्ययोर्लयश्रवणं व्यर्थं सर्वत्रानुषङ्गादेवोपपत्तेः ; अतो नानुषङ्ग इति व्यनक्ति—प्रकरणान्तरैककण्ठ्यं—सृष्टिप्रकरणैककण्ठ्यं । अयं भावः—घ्राणादीनामिन्द्रियाणां पृथिव्यादिभूतैराप्यायनं श्रुतिषु प्रसिद्धं । तत्र तत्र पृथिव्यादिषु वायुपर्यन्तेषु प्रलीनेषु तत्तदाप्यायकभूतानामपि प्रलीनतया तेषामाकाशदशापन्नत्वात् सर्वैरपीन्द्रियैः स्वान्तर्गतेतरभूत-चतुष्टयस्याकाशस्यात्र लयं वक्तुं तस्य तन्मात्रावस्थापन्नस्येन्द्रियसंसर्ग-मनुवदति "इन्द्रियाणि तन्मात्रेष्विति" । पूर्वमाकाशे संसृष्टानीन्द्रियाणि पश्चाच्छब्दतन्मात्रेषु संसृष्टानीति । अथ सेन्द्रियाणां तन्मात्राणां स्वकारणे लयमाह 'तन्मात्राणि भूतादौ' इति । भूतादिशब्देनाहङ्कारमात्रं विवक्षितं । आकाशादेव वायुः वायोरेवाकाशसहितात्तेजः तेजस एवापः अद्भ्य एव पृथिवीत्यद्वारकपक्षः । शब्दतन्मात्रादाकाश-माकाशात् स्पर्शतन्मात्रं ततो वायुरिति सद्वारकपक्षः । तौ न युक्तावि-त्याह—भूतानां चाकाशादीनामिति। तथाचाथर्वणविरोध इति भावः। अत्र

## सर्वार्थसिद्धिः

दानत्वे प्रकृतयो विकृतयश्च द्वादश स्युः । [1]* ननूपबृंहण-विशेषानुसारादिन्द्रियाणि शब्दादिगुणाश्च षोडश विकाराः । भूततन्मात्रभेदानादरेण प्रकृतयश्चाष्टावभ्युपगम्यन्तां ; मैवं; द्रव्य-

## आनन्ददायिनी

यदुक्तं भट्टपराशरपादैः सुबालोपनिषद्विवरणे—'यदि भूतानामपि प्रकृतित्वं तर्हि 'अष्टौ प्रकृतयष्षोडश विकाराः' इति श्रुतेः का गतिरिति चेत् ; वेदोपबृंहणनिपुणतरपरमर्षिसन्दर्शितैव गतिः ; नास्माभि-स्ताद्विरुद्धनिर्वहणेऽभिनिवेष्टव्यमित्यारभ्य ; तदपि स्वारस्याभावाद्दूषयति—नन्वितीत्येके । विरोधपरिहारं शङ्कते नन्वितीति बहवः । मोक्षधर्मे याज्ञवल्क्यजनकसंवादे—

अष्टौ प्रकृतयः प्रोक्ताः विकाराश्चैव षोडश ।
अव्यक्तं च महांश्चैव तथाऽहङ्कार एव च ॥
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ॥
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ।
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ।
मनष्षोडशमित्याहुस्तथैव गतिचिन्तकाः ॥

इत्याद्युपबृंहणानि द्रष्टव्यानि । आथर्वणवाक्यस्य द्रव्यतत्वप्रकर-णस्थत्वादत्र गुणविवक्षा न सम्भवतीति परिहरति—मैवमिति । तर्हि

## भावप्रकाशः

[1]*ननूपबृंहणेत्यादि—अयमेवार्थो युक्त इति न्यायसिद्धाञ्जन-व्याख्याने स्पष्टम् ।

## सर्वार्थसिद्धिः

तत्वप्रकरणे गुणपरिगणनानौचित्यात् । गुणशब्देन च क्वचिद्गुणाश्रयविवक्षा स्यात् । गत्यभावे गुणविवक्षायामप्यत्र द्रव्यविवक्षोपपत्तेः । आकाशाद्वायुरित्यादीन्यपि स्थूलसूक्ष्मभेदानादरेणेति समाधानम् । एवं स्थिते तामसाहङ्कारोत्पन्ने तन्मात्रपञ्चके भूतानि एकद्वित्रिचतुःपञ्चभिस्तन्मात्रैरारभ्यन्त इति साङ्ख्याः । पूर्वपूर्वतन्मात्राणि उत्तरोत्तरतन्मात्रमेकैकं भूतं जनयन्तीति पौराणिकाः । तत्राप्युत्तरोत्तरभूतसृष्टौ पूर्वपूर्वेषां तन्मात्राणां भूतानां वा सहकारित्वमिति पक्षभेदः । एवमन्यो

## आनन्ददायिनी

द्रव्यतत्वप्रकरणस्थोपबृंहणविशेषस्य का गतिरित्यत्राह—गुणशब्देनेति । 'त्रीणि रूपाणि सत्यं' 'गन्धविक्रयिकस्तथा' इत्यत्रेव गुणवाचकशब्दे तदाश्रयविवक्षेत्यर्थः । नन्वाकाशाद्वायुरित्यादिश्रुतिविरोध इत्यत्राह—आकाशाद्वायुरित्यादीति । तथाचाकाशादित्यादिपञ्चम्यन्तास्तन्मात्राकाशादिपराः । वाय्वादिशब्दाः प्रथमान्ताः स्थूलसूक्ष्मोभयपराः । तथाचायमर्थः—आकाशात्तन्मात्राकाशाद्वायुः । सूक्ष्मद्वारा स्थूल उत्पद्यत इत्यर्थः । एवमन्यत्रापि द्रष्टव्यं । एकद्वित्र्यादीति—भूतादितः पञ्च तन्मात्राणि । तत्राकाशमेकस्माच्छब्दतन्मात्रादुत्पद्यते । वायुः शब्दस्पर्शगुणयोगाच्छब्दस्पर्शतन्मात्राभ्यामुत्पद्यते । तदुभयसहिताद्रूपतन्मात्राद्गुणत्रयवत्तेजः । तत्त्रयसहिताद्रसतन्मात्रात्तद्गुणवज्जलं । तथा पञ्चभ्यस्तन्मात्रेभ्यः पञ्चगुणा पृथिवीति सांख्यसप्ततिव्याख्याने वाचस्पतिना प्रतिपादितत्वादित्यर्थः । तत्राप्युत्तरोत्तरभूतसृष्टाविति । यदि भूतानां सहकारित्वं तदा तन्मात्राणामुपादानत्वमिति केचित् । अन्ये तदुभयस्यापि निमित्तत्वमेवेति वदन्ति । एवमन्योऽपीति—

## तत्वमुक्ताकलापः

वैमावर्जनीयम् । दृष्ट्वा सांख्यं पुराणादिकमपि बहुधा निर्वहन्त्येतदेके चिन्तासाफल्यमान्द्याच्छ्रमब-

## सर्वार्थसिद्धिः

यथामति । तदिदमाह—दृष्ट्वेति । एतत्—इतरत्सर्वं वाक्यजातमित्यर्थः। किमिति पूर्वाचार्यैरत्रोपेक्षितं तत्राह—चिन्तेति—

न प्रधानविरोधस्स्यादीदृशानवधारणे ।
इति शिक्षयितुं शिष्यान् प्राचां क्वचिदनिश्चयः ॥

इति त्रिगुणपरीक्षायां प्रकृति विकृति विभाग-
परीक्षा तद्गणनपरीक्षा च.

---

## आनन्ददायिनी

आकाशात् स्पर्शतन्मात्रं तस्माद्वायुः वायोः रूपतन्मात्रं तस्मात्तेज इत्यादिरूपः। मूलश्लोकस्यायमन्वयः-केचित्—सांख्यादयः सांख्यं योगं पुराणादिकं च दृष्ट्वा बहुधा निर्वहन्ति ; बहुधेत्यस्य दृष्ट्वेत्यत्रान्वयः । निर्वहन्ति—सृष्टिक्रमं वदन्ति। तादितरत् सर्वं—आथर्वणवाक्यादितरत् सर्वं। निष्कर्षैदम्परेऽस्मिन्- निस्सन्देहं प्रकृतिविकृतिविभागैदम्परे आथर्वणवचने । आवर्जनीयं—आथर्वणोक्तानुसारेण नेतव्यमिति । औदासीन्यस्य प्रयोजनमाह — न प्रधानेति । तत्वहितपुरुषार्थप्रमितिविरोधाभावादीदृशावधारणे नावश्यं यत्नः कर्तव्य इत्यर्थः । अत्र पौराणिकः पक्षः आथर्वणिकाभिमतत्वाद्ग्रन्थकारस्याभिमत इति द्रष्टव्यम् । न्यायसिद्धाञ्जने तु द्वादशप्रकृतिपक्षाङ्गीकारः प्रतीयते। तथा च पक्षान्तरमप्यस्तीत्याहुः ॥ १५ ॥

इति प्रकृतिविकृतिविभागपरीक्षा तद्गणनपरीक्षाच.

---

## तत्वमुक्ताकलापः

**हुलतयाऽप्यत्र तज्ज्ञैरुदास्ति ॥ १५ ॥**

**निश्शेषं कार्यतत्वं जनयति स परो हेतुतत्वै-**

## सर्वार्थसिद्धिः

प्रक्रान्तेषु प्रकृत्यादिकारणेषु—

पुरुषार्थ एव हेतुः न केनचित्कार्यते करणम् ॥

इति वदतस्साङ्ख्यस्य अनन्यथासिद्धैश्श्रुत्यादिभिर्बाधमाह—निश्शेषमिति। 'यत्किञ्चित्सृज्यते येन' 'जगत्सर्वं शरीरं ते' इत्यादिभिरेतत्सिद्धम्। 'तत्सृष्ट्वा' तदेवानुप्राविशत्' इत्या-

## आनन्ददायिनी

उत्तरपद्येन तत्वानामीश्वरनिघ्नताकथनस्य का सङ्गतिः? विवादाभावेन व्यर्थं चेत्यत्राह—प्रक्रान्तेति। प्रसङ्ग एव सङ्गतिर्विवादश्चास्तीति भावः। सांख्यपद्यं पठति—पुरुषार्थ इति। करणं चक्षुरादिकं सर्वं तत्वजातं केनचिदधिष्ठात्रा न कार्यते। कथं तर्हि तेषां प्रवृत्तिः? पुरुषार्थ एव हेतुः—स्वर्गापवर्गलक्षणः पुरुषार्थ एवानागतावस्थालक्षणसिद्धये प्रवर्तयतीत्यर्थः। चैतन्याभावेऽपि पुरुषार्थस्य प्रवर्तकत्वं संभवति—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।

इत्युक्तेः। एतत्सिद्धमिति—शरीरत्वं सिद्धमित्यर्थः।

यत्किञ्चित्सृज्यते येन भूतं स्थावरजङ्गमम्।
तस्य सृज्यस्य सम्भूता तत्सर्वं वै हरेस्तनुः ॥

## तत्वमुक्ताकलापः

**ऽशरीरी तत्तत्कार्यान्तरात्मा भवति च तदसौ वि-श्रुतो विश्वरूपः। तेजोऽबन्नाभिधेये बहुभवनमभि-**

## सर्वार्थसिद्धिः

**देश्यार्थमाह—तत्तदिति। अन्तर्यामिब्राह्मणसुबालोपनिषदादि-प्रसिद्धिमपि संवादयति—तदसाविति। विश्रुतः—प्रधान-पुरुषविलक्षणत्वेन विश्वशरीरकतया प्रत्यक्षश्रुतिसिद्धः। क्वचि-द्विश्वरूपशब्देनापि। 'तत्तेज ऐक्षत' 'बहु स्यां' 'ता आप ऐक्षन्त' 'बह्व्यस्स्याम' इति वाक्यविशेषाभिप्रेतं तद्व्यनक्ति-तेज इति। न ह्यचेतनमात्रस्य अनुत्पन्नकरणकळेबरस्य कर्मि-णो वा तदानीं बहुभवनसंकल्पाश्रयत्वं युक्तं; गौणत्वं चात्रापि 'गौणश्चेन्नात्मशब्दात्' इति सूत्रन्यायेन निरस्तम्।**

## आनन्ददायिनी

इति शरीरत्वोक्तिरिति भावः—अन्तर्यामीति। 'यस्य पृथिवी शरीरं यस्या-पश्शरीरम्' इत्यादिनाऽन्तर्यामिब्राह्मणादिषु शरीरत्वोक्तेरित्यर्थः। क्वचिद्वि-श्वरूपेति—'विश्वात्मन्' 'विश्वरूपाय वै नमः'।' सर्वात्मन्' 'विश्वरूप' इत्यादावित्यर्थः। एवं तेज ऐक्षत आप ऐक्षन्त इत्यादिश्रुत्या बाध इत्याह—तत्तेज ऐक्षतेत्यादि। तथा च चेतनाधिष्ठिता प्रकृतिः कारणमिति भावः। नन्वत्रेश्वराधिष्ठितत्वं न प्रतीयत इत्यत्राह—अभिप्रेतामिति। ननु प्रकृतेरचेतनायास्सङ्कल्पाश्रयत्वाभावेऽपि जीवस्य सम्भवाज्जीवस्स्रष्टाऽ-स्त्वित्यत्राह—अनुत्पन्नकरणकळेबरस्येति। नन्वैक्षतेतीक्षणं प्रवृत्ति-मात्रं। तच्चाचेतनायाः प्रकृतेः सम्भवतीत्युक्तमित्यत्राह—गौणत्वं चेति

## तत्वमुक्ताकलापः

**ध्यानाल्लिङ्गं च दृष्टं तस्मादीशाननिघ्नाः प्रकृति-विकृतयः स्वस्वकार्यप्रसूतौ ॥ १६ ॥**

## सर्वार्थसिद्धिः

प्रकृतं हि मुख्यमीक्षणम् । अत्रापि तत्सम्भवे नान्यथा गतिर्युक्तेति भावः । उक्तानिगमनव्याजेन—

विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ।
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ॥
सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् ।
मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम् ॥
यत्किञ्चिद्वर्तते लोके सर्वं तन्मद्विचेष्टितम् ।

इत्यादिकमपि (प्र) ख्यापयति—तस्मादिति ।

इति त्रिगुणपरीक्षायां प्रकृतिविकृतीनामीश्वराधिष्ठानेन कार्यकरत्वम्

---

तत्वान्तराणामीश्वराधीनत्वं व्यष्ट्याद्यारम्भवृत्तान्तैरपि

## आनन्ददायिनी

प्रकृतामिति । 'सेयं देवतैक्षत' इत्यादिनेत्यर्थः । अष्टरूपां—अष्टौ प्रकृतय इत्युक्ताष्टरूपां । ध्रुवां—विनाशरहितां । तेन—ब्रह्मणा । अध्यासिता—अधिष्ठिता पुरुषार्थं जगच्च सूयते ॥ १६ ॥

इति त्रिगुणपरीक्षायां प्रकृतिविकृतीनामीश्वराधिष्ठानेन कार्यकरत्वम्

---

पूर्वशेषत्वात्तत्संगतिरेव संगतिरित्याह—तत्वान्तराणामिति ।

## तत्वमुक्ताकलापः

द्वेधा भूतानि भित्त्वा पुनरपि च भिनत्त्यर्धमेकं चतुर्धा तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं च-

## सर्वार्थसिद्धिः

व्यनक्ति—द्वेधेति । स खल्वादिकर्ता स्वसृष्टानि [1]*पञ्च भूतानि द्विधा कृत्वा ऐकैकं भागं स्थापयित्वा अर्धान्तराणि चतुर्धा विभज्य तत्तद्भागैश्चतुर्भिर्भूतान्तराणामविभक्तान्यर्धान्तराण्यनुकलयति । यथोक्तम्—

[2]*एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः ।
चतुर्धा भिन्नमेकैकं अर्धमर्धं ततः स्थितम् ।
व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम् ॥

## आनन्ददायिनी

यद्यपि पञ्चधा विभागस्सिद्धान्तेऽपि ; तथापि एकस्य भूतस्य समतया न पञ्चधा विभागः । अपि तु द्विधा विभागे तत्रैको भागश्चतुर्धा विभज्यते

## भावप्रकाशः

[1]*पञ्च भूतानीति—अत्र 'पञ्च तन्मात्रा भूतशब्देनोच्यन्ते पञ्च महाभूतानि भूतशब्देनोच्यन्ते' इति मैत्रायणियश्रुत्या भूतशब्दस्य तन्मात्रसाधारण्येऽपि । त्रिवृत्करणश्रुतिस्मृत्यनुरोधान्महाभूतान्येव भूतशब्देनोच्यन्ते । परमतभङ्गे—'तन्मात्रेषु पञ्चीकरणं पञ्चीकृतांशा आकाशादयइत्युक्तिः तत्वपरिगणनपरश्रुतिस्मृतिपुराणादेरननुगुणा' इति सूक्तिरिह भाव्या । तन्मात्राणां न पञ्चीकरणं किन्तु व्योमादिभूतानामेवेत्यत्र मानमाह—[2]*एवं जातेष्वित्यादिना ॥

## तत्वमुक्ताकलापः

तुर्भिः । इत्थं पञ्चीकृतैस्तैर्जनयति स जगद्धेतुर-
ण्डादिकार्याण्यैदम्पर्यं त्रिवृत्त्वश्रुतिरितरगिरामक्ष-

## सर्वार्थसिद्धिः

अर्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम् ।

इति । ततः पञ्चधा विभक्तानां भागानां पञ्चस्वर्धान्तरेषु योजनमिति परोक्तं निरस्तं । एवं पञ्चीकृतानां व्यष्टि-कार्येषु विनियोगमाह—इत्थमिति । महदादिभिश्चेति भाव्यं; 'महदाद्या विशेषान्ताः' इत्याद्युक्तेः । ननु 'हन्ताहमिमास्तिस्रो देवताः' इत्याद्यारभ्य 'तासां त्रिवृतन्त्रिवृतमेकैकां करवाणि 'त्रिवृतन्त्रिवृतमेकैकामकरोत्' इति [1]* त्रिवृत्करणे श्रुते पञ्चीकर-णादिस्मृतिरन्यपरा स्यादित्यत्राह—ऐदम्पर्यमिति । तात्पर्य[illegible]-

## आनन्ददायिनी

इति ध्येयं । पञ्चीकरणमपि सप्तीकरणोपलक्षणमित्याह—महदादिभिश्चेति ।

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजास्स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
एकसंघातलक्षास्तु संप्राप्यैक्यमशेषतः ॥
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ।

तत इति महदादिसंसर्गस्यापि प्रतिपादनादिति भावः । विशेषाः—स्थूल-भूतानि । ऐदम्पर्यमिति; पञ्चीकरण इति शेषः ।

## भावप्रकाशः

[1]* त्रिवृत्करणे श्रुते इति 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रे

## तत्वमुक्ताकलापः

मैक्षा निरोद्धुम् ॥ १७ ॥

## सर्वार्थसिद्धिः

त्यर्थः । अत्र[1]*अनन्यपराणां [2]*भूयसां च बलीयस्त्वं ;

## आनन्ददायिनी

अनन्यपराणामिति—यद्यपि श्रुतिस्मृत्योर्विरोधे भूयसीनामपि स्मृतीनां बाध एव; तथाप्यबाधेनोपपत्तौ बाधस्यान्याय्यत्वादन्यतरस्यान्यतरानुसारे वाच्ये अविरोधेन वक्तुं च शक्येऽनन्यपरस्मृत्यनुसारो युक्तः ; तथा हि श्रुत्यर्थस्य वाच्यस्य त्रिवृत्करणस्य सहस्रे शतन्यायेन संभवाद्व्यवच्छेदस्तु संख्या-श्रवणकल्प्यः । स च श्रुतिमूलोऽपि भूयसां स्यादिति न्यायेन बाधित

## भावप्रकाशः

(३–१–२) त्रिवृत्करण एव व्यासतात्पर्यमिति व्यक्तम्' ॥

[1]* अनन्यपराणामित्यनेन अनन्यथासिद्धेनान्यथासिद्धं बाध्य-मित्यनुगत एव बाध्यबाधकभाव इति सूचितं । अन्यपरत्वे प्रयोजकं दर्शयति—[2]*भूयसां चेति । यथाऽऽह भूयस्त्वस्य बाधकताप्रयोजकत्वं पूर्वतन्त्रे जैमिनिः 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्' (१२–२–२४) इति । अत्र सूत्रे श्रुतिलिङ्गमात्रबोधकं पदं किमपि नास्ति । विप्रतिषिद्धधर्मपदं च श्रुतिस्मृतिसाधारणं । अत एव विरोधाधिकरणे वार्तिककृता—

श्रुतिलिङ्गे यथाचेष्टे व्यवस्थितबलाबले ।
सन्निकृष्टविकृष्टार्थे तथैवेह श्रुतिस्मृती ॥

इति श्रुतिस्मृत्योः श्रुतिलिङ्गतुल्यबलाबलत्वोक्तिस्संगच्छते । स्मृत्यनु-

## सर्वार्थसिद्धिः

[1]*अनुक्तानामविरुद्धानामपेक्षितानामन्यतोऽपि ग्राह्यत्वं स्थापितम्।

## आनन्ददायिनी

इत्यर्थः । अनुक्तानामिति—आचमनादीनां स्मार्तानामपि दर्शादिविधिना (ग्राह्यत्वं) ग्रहणं क्रमाविरोध्यपि कर्मकाण्डे स्थापितमित्यर्थः ।

## भावप्रकाशः

मितपठितश्रुत्योरवैलक्षण्यमुदाहृताविरोधाधिकरणकुमारिलवार्तिकासिद्धमिति 'भूयस्त्वेनोभयश्रुति' ३–३–२० इति सूत्रोक्तन्यायेन पञ्चीकरणस्यैव विधिः न त्रिवृत्करणस्येति बोध्यम् । अत्रानन्यपराणामित्यनेन छान्दोग्यश्रुतेरन्यपरत्वं दर्शितम् । अक्षपाददर्शनादौ आकाशस्य नित्यतायाः तस्य वायोश्चाप्रत्यक्षताया अङ्गीकारेणाकाशवाय्वोस्सृष्टिः शुश्रूषोश्श्वेतकेतोः झडिति न ज्ञातुं शक्यत इति पूर्वं छान्दोग्ये सृष्ट्यकथनं । तेन च त्रिवृत्करणमात्रमुक्तं । तेजोबन्नेषु त्रिवृत्करणज्ञानानन्तरमाकाशवाय्वोः श्रुत्यन्तरोक्तसृष्टेर्निर्धारणे सति स्थूलारुन्धतीन्यायेन पञ्चीकरणप्रकारोऽपि ज्ञायत इति भावः । एतावता पञ्चीकरणस्मृतेः त्रिवृत्करणश्रुत्या सह विरोधमभ्युपेत्य परिहार उक्तः; अथ विरोध एव नास्तीत्याह—*[1]अनुक्तानामित्यादिना । अयमाशयः—यद्यपि छान्दोग्ये आकाशवाय्वोः सृष्टिर्नोक्ता; तथाऽपि तैत्तिरीयोक्ता सा सर्वशाखाप्रत्ययन्यायेन तत्रापि विवक्षिता । तदुक्तं वियदधिकरणश्रुतप्रकाशिकायां—"किंच कुत्र चित् कस्यचिदवचनमन्यत्रापि तत्प्रतिपत्तिं वारयति चेत् सर्वशाखाप्रत्ययनयो निर्विषयस्स्यादिति भावः इति ।" एवंच 'तासां त्रिवृतं त्रिवृतमेकैकाम्' इति श्रुतौ तच्छब्दस्य पञ्चभूतान्यर्थः । त्रिवृतमित्यस्य भागत्रयविशिष्टतया वर्तमानामित्यर्थः । अत्र यद्यपि

## भावप्रकाशः

भागत्रयविशिष्टता वस्तुनः एकदैव हस्ताभ्यां पृथक् पत्रादिच्छेदने प्रथममेव त्रिधा विभागेन प्रथमतो द्वेधा छेदानन्तरमेकांशस्य पुनश्छेदेन चेति द्विधा संभवति ; तत्रापि समपरिमाणतया विषमपरिमाणतया वा छेदनेऽपीति श्रुतावेकत्र विनिगमकं न स्फुटं ; एवं मेलनांशोऽपि न स्फुटः ; तथाऽपि 'अन्नमशितं त्रेधा विधीयते' इतिवत् त्रेधा करवाणीति वा तिस्रः करवाणीति वा श्रौतपाठविरहेण प्रथमतः त्रिधा भेदो न विवक्षितः । प्रथमतो द्वेधा भेदानन्तरमेकांशस्य पुनर्भेद एवेति प्रतीयते समपरिमाणतया भेदः स्वार्धस्यान्यदीयपादांशैः मेलनं चेत्यत्र श्रुतेरौदासीन्येऽपि 'वैशेष्यात्तु तद्वादस्तद्वादः' त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रे स्मृतिवचनानि च प्रमाणं न त्वन्यत् । एवंच स्मृतिमन्तरा श्रुत्यर्थनिर्णयः कस्यापि न संभवतीति स्मृतेरवश्यमादरणीयत्वे तदनुरोधेन प्रथमतो द्वेधा विभागे तत एकांशस्य विभागानन्तरं अंशयोर्द्वयोः पुनर्विभागः श्रुत्यनुक्तोऽपि ग्राह्यः । इत्थं च प्रथमतो विभागानन्तरं चतुर्धा विभागस्संपद्यत इति वियदधिकरणे 'तासां त्रिवृतम्' इत्यत्र तच्छब्दस्य सर्वशाखाप्रत्ययन्यायेन पञ्चभूतार्थकत्वव्यवस्थापनमपि संगच्छते श्रुतिस्मृत्योरविरोधश्चेतीयं सांप्रदायिकी सरणिरिति । एतेनाद्वैतपरिभाषाव्याख्यानखण्डनव्यसनेन कल्पतरुकारपक्षपातिना वंशधरेण सांख्यतत्वकौमुदीविवरणे यदुक्तं—'संप्रदायाध्वना पञ्चीकरणाङ्गीकारे विनिगमनाविरहेण षडादिकरणापत्तिः । किंचैकैकं त्रेधा विभज्य ततोंऽशद्वयमेकैकं द्वेधा विभज्य स्वस्वेतरांशेषु मेलनमिति रीत्याऽपि स्वांशद्विकपञ्चविभागसंभवेन पञ्चीकरणसंभवे संप्रदायरीत्यैव पञ्चीकरणे विनिगमकाभावात् त्रिवृत्करणश्रुतिविरोधाच्च त्रिवृत्करणपक्ष एव मुख्यसिद्धान्तो भातीति' तत्परास्तं ; संप्रदायाध्वना पञ्चीकरणे भूतगतपञ्चत्वसंख्याया विनिगमकत्वेन षडादिकरणापत्तिविरहात् । किंच

## भावप्रकाशः

त्रिवृत्करणं त्रेधा विभागेन। स च प्रथमत एव त्रिधा करणेन उत प्रथमतो द्विधा विभज्य तत एकांशस्य विभागेन? आद्येऽपि समपरिमाणतया विषमपरिमाणतया वा? तत्र समपरिमाणतया प्रथमतस्त्रिधा विभागे 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रविरोधः; त्रयाणां समतया एकभागापेक्षयान्यभागस्य भूयस्त्वविरहात्। एवं 'वैशेष्यात्तु तद्वादस्तद्वादः' इति सूत्रविरोधोऽपि; विषमपरिमाणतया तदङ्गीकारे विषमपरिमाणं इयदेवेति निर्धारणं युक्त्या न संभवति। श्रुतिस्त्वत्रोदासीना। त्रेधा करवाणीत्यनुक्त्वा त्रिवृतं करवाणीत्युक्त्या प्रथमत एव त्रेधा विभागो न श्रुत्यभिप्रेत इति प्रतीयते। अत एव ईक्षत्याधिकरणकल्पतरौ प्रथमतो द्वेधा विभागानन्तरं पुनर्विभाग एवादृतः। भवताप्येतत्पक्षाङ्गीकारे तत्र प्रथमतस्समतया द्वेधा विभागे किं मूलम्? स्मृतिरिति चेत् तर्हि संप्रदायरीत्यैव पञ्चीकरणमङ्गीकृतं स्यात्। ईक्षत्यधिकरणकल्पतरौ—संप्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्—इत्यारभ्य तेजोऽबन्नानामेव त्रिवृत्करणस्य श्रुतौ विवक्षितत्वं युक्तत्वं चोपपाद्य पञ्चीकरणप्रकारः स्मृत्युक्त एवोक्तः। अतः संप्रदायाध्वना पञ्चीकरणं स्मार्तमेवेति।

स्मृतौ प्रथमतो भूतस्य द्विधा विभागानन्तरं एकार्धस्य चतुर्धा विभाग उक्तः। स च नैककालावच्छेदेन किंतु प्रथमतो द्विधा विभागानुरूप्येण श्रुत्यनुसारेण च पुनरपि द्विधावभागिः। अनन्तरमंशयोर्द्वयोरपि द्विधा विभाग इति क्रमेणेति त्रिवृत्करणं वियदधिकरणसिद्धान्तानुसारेण स्मार्तपञ्चीकरणे पर्यवस्यति। 'त्र्यात्मकत्वात्तु भूयस्त्वादिति' सूत्रं च पञ्चात्मकत्वोपलक्षणम्। यथोक्तं कल्पतरुपरिमले—'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रे शरीरकारणानां त्र्यात्मकत्वमुक्तं तत् पञ्चात्मकत्वस्योपलक्षणमिति। त्र्यात्मकत्वं च शरीरकारणानामपामेव विवक्षितं नान्यस्य। तदधिकरणे 'प्रथमे श्रवणा-

## सर्वार्थसिद्धिः

अभाष्यत च 'त्रिवृत्करणं पञ्चीकरणप्रदर्शनम्' इति ॥ १७ ॥

इति त्रिगुणपरीक्षायां पञ्चीकरणस्थापनम्

---

**ननु पञ्चीकरणाभिधानात्पञ्चसु भूतेषु स्वतस्सभागत्वं व्यष्टिसमष्टिभावो भूतांशानां चात्यन्तभिन्नत्वं समानन्यायतया प्रकृतिपर्यन्तेषु तत्वान्तरेष्वपि तत्सर्वं सिद्धं । भूत-**

## आनन्ददायिनी

अभाष्यतेति । 'वैशेष्यात्तु तद्वादस्तद्वादः' 'त्र्यात्मकत्वात्तु' इत्यादि-सूत्रभाष्ये ।

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।

इति । क्षेत्रारम्भकद्रव्याणीत्यादिकमुक्त्वा प्रकृत्यादिपृथिव्यन्तद्रव्यारब्ध-मिन्द्रियाश्रयभूतमिच्छाद्वेषसुखदुःखविकारि भूतसंघातरूपं चेतनसुख-दुःखोपभोगाधारत्वप्रयोजनं क्षेत्रमित्युक्तं भवतीति" गीताभाष्ये चोक्तमि-त्यर्थः । मूलश्लोकस्यायमर्थः—भूतानि द्वेधा भित्वा तत्र एकस्मिन् स्थित एव अपरमर्धं पुनश्चतुर्धा भिनत्ति । तैः पुनः भिन्नस्यार्धस्य भागैः स्थि(स्थापि) तेनार्धेन संयोजनार्थं (तु) परमर्धं अनुकलयति—संपादयतीत्यर्थः ॥ १७॥

इति त्रिगुणपरीक्षायां पञ्चीकरणस्थापनम्

---

ननु परमाणुकारणत्वनिराकरणं प्रकरणे न सङ्गतमित्या-क्षेपसङ्गतिमाह—ननु पञ्चीकरणाभिधानादिति । स्वतस्सभाग-त्वमिति—अन्यथा विभागकरणासंभवादिति भावः । भूतांशाना-मिति—भूतानामंशसंघातरूपत्वात्समष्टित्वं । अंशानां व्यष्टित्वं । समानन्यायतयेति—अन्यथा भूतानां सभागत्वं नानात्वं च न स्यादिति भावः । तत्सर्वं सिद्धमिति—सभागत्वादि सिद्धमित्यर्थः ।

## तत्वमुक्ताकलापः

**कार्यं नैवारभेरन् समधिकमणवस्सर्वतस्संप्रयुक्ताः**

## सर्वार्थसिद्धिः

**भागानां चात्यन्तभेदो वेणुरन्ध्रश्लोकेऽभाष्यत। एवं सत्यणुसमूह एव प्रकृतिरिति स्थिते; 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' इति औलूक्योपालम्भो न युक्त इत्यत्राह—कार्यमिति अयं भावः—अनन्यपरशास्त्रसिद्धेष्वर्थेषु 'श्रुतेस्तु शब्दमूलत्वात्' इति न्यायेन गत्यन्तराभावे काचिद्गमनिका स्वीकार्या। अनु-**

## आनन्ददायिनी

अभाष्यतेति—प्रथमसूत्रभाष्ये महासिद्धान्ते अभेदव्यापिनो वायोः वेणुरन्ध्रभेदेनांशभेदोऽभ्यधायि इति भावः। महद्दीर्घवद्वेति। ह्रस्वपरिमण्डलाभ्यां—द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् द्व्यणुकत्र्यणुकोत्पत्त्यनुपपत्तिवत् तदुक्तप्रक्रियान्तरमप्यनुपपन्नमिति सूत्रार्थः। ननु पृथकार्यारम्भाद्यनुपपत्तिः सिद्धान्तेऽपि समेत्यत आह—अयं भाव इति। यागस्य स्वर्गसाधनताबोधकश्रुतिबलाददृष्टकल्पनावादित्याहुः। श्रुतेस्त्विति—जगत्प्रति ब्रह्मणः कार्त्स्न्येन काणत्वमेकदेशेन वेति विकल्पे 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इति सूत्रेण पूर्वपक्षं कृत्वा समाहितं 'श्रुतेस्तु शब्दमूलत्वात्' इति। श्रुतेः—श्रुतिप्रामाण्यस्य सत्त्वान्नोक्तदोषः; कुतः? शब्दमूलत्वात्—इतरविसजातीयतया शब्दवेद्ये लोकदृष्टव्याप्त्यभावादित्यर्थः। अनुमानेन तु दृष्टसजातीयमेव साधनीयं न विजातीयं व्याप्त्यभावादिति भावः।

## सर्वार्थसिद्धिः

मेयेषु तु यथादृष्टमेव सिद्धिः। अन्यथा अतिप्रसङ्गात्। ततश्चावय-विवादिनामवयवास्स्वभागैर्मिथस्संयुज्य अवयविनमारभन्त इति सिद्धान्तः। एतच्च द्व्यणुकावधि निर्विघातम्। द्व्यणुकारम्भे तु निरवयवा अणवोऽवयवा इति कल्पितम्। तत्रैवं प्रसङ्गा-वतारः—यदि परमाणवस्स्वांशतस्संयुज्यावयविनमारभेरन् तदा तदंशोऽवयवरूपस्तदन्यो वा? आद्ये तस्यापि तथेत्यनवस्था। अन्यस्तु स्वाभाविक औपाधिको वा? पूर्वत्र भिन्नाभिन्नता स्यात्। उत्तरत्रोपाधिसबन्धेऽप्यंशभेदो दुर्वचः। परिशेषात्त-न्निरपेक्षरं[illegible]न्योन्यानाघ्रातभागभेदरहितैरणुभिरारम्भस्स्यात्; त्यक्तस्तर्हि सप्रतिघत्वाविरोधः। सर्वेषु च परमाणुष्वेकपरमाणु-प्रदेशमात्रावस्थितेषु स्वाधिकदेशव्यापिकार्यारम्भो न स्यात्।

## आनन्ददायिनी

अतिप्रसङ्गादिति। धूमादिना नित्यवह्निसिद्धिप्रसङ्गादित्यर्थः। एतच्चेति—सिद्धान्त इत्येतदित्यर्थः। तदन्यो वेति विकल्पं विकल्पयति—अन्य-स्त्विति। स्वाभाविक इति। तद्द्रव्यस्वरूपमेवांश इत्यर्थः। स्वभा-वेन स्वरूपेणागतं संजातं वा। स्वार्थिको वा। स्वरूपमेवांशांशि-भावापन्नमित्यर्थः। उत्तरत्रेति—उपाधिसंबन्ध एवांशांशिभावं भजत इति भावः। नन्वंशाभावेऽपि स्वरूपेण संयुक्ताः परमाणव आरम्भका भवन्त्वित्यत्राह—परिशेषादिति। अन्योन्यानाघ्रातेति—अन्योन्यासंयुक्तांशरहितैः—कृत्स्नसंयुक्तैरित्यर्थः। त्यक्त इति—एक-परमाण्ववष्टब्धेप्रदेश परस्या (परेणा) प्यवष्टम्भस्य वक्तव्यतया स्पर्श-वद्द्रव्यस्य सप्रतिघत्वनियमत्यागप्रसङ्गः; अन्यथा सर्वव्यापिसंयोगासं-भवादित्यर्थः। दूषणान्तरमाह—सर्वेष्विति। तदेवोपपादयति—

## तत्वमुक्ताकलापः

दिक्संयोगैकदेश्यान्नघटत इह ते दिक्कृतोऽप्ययं-

## सर्वार्थसिद्धिः

न खल्ववयवास्पृष्टे कुत्रचित्प्रदेशे अवयवी तिष्ठेत्? अदृष्टेरनिष्टेश्च। अवयवनाशादवयविनाशे क्षणमनाधारोऽवयवीति चेत्; तथा कल्पयतापि त्वया पूर्वं तन्तुसङ्घानवच्छिन्नप्रदेशे पटस्य वृत्तिर्न कल्पिता। एवमधिकारम्भानुपपत्तौ मेरुसर्षपादिवि- -त्रभेदासिद्धिः। सेयमसिद्धं सिषाधयिषतास्सिद्धहानिः। तथाचासिद्धसाधनं निर्मूलम्। ननु परिमितानां सर्वेषां दिग्भेदेन भागभेदे दृष्टे परमाणुष्वपि तथाऽङ्गीकारो दुर्वार इत्यत्राह—दिक्संयोगेति। दिक्संयोगायत्तोऽपि हि भागभेदस्सावयवेष्वेव दृष्टः। त्रसरेणोरपि त्वया सावयवत्वक्लृप्तेः। निरवयवेषु तु विश्वव्याप्ति-

## आनन्ददायिनी

न खल्विति। तथात्वे घटादेरपि परमाणुतारतम्यं नियामकाभावान्न स्यात्। सर्वकार्यद्रव्यस्यापि विभुत्वं च स्यादिति भावः। नन्ववयवं विनाऽप्यवयवी तिष्ठत्येव विनश्यदवस्थायां; तथाचावयवाभावप्रदेशेऽप्यविनश्यन्नपि तिष्ठ(ति)तु; अतिप्रसङ्गस्तु यथाकथञ्चिन्नेय इत्याशङ्क्य समाधत्ते—अवयवनाशादिति। अन्यथा विन्ध्यभागेऽवयवनाशे हिमवद्भागेऽवयविनाशप्रसङ्गादिति भावः। सेयमित्यादि—असिद्धं परमाणुं तदपेक्षयाऽधिकपरिमाणं द्व्यणुकं च साधयतः विचित्रपरिमाणत्वेन सिद्धस्य मेरुसर्षपादेस्सिद्धिर्न स्यादित्यर्थः। निर्मूलं—निष्प्रमाणकमित्यर्थः। ननु घटस्य परिमितस्य पूर्वो भागः दक्षिणो भागः पश्चिममुत्तरमूर्ध्वमित्यादिदिगधीनो भेदो दृष्ट इति परमाणुष्वपि तत्कृतभागक्लृप्तिरस्त्वित्याशङ्कते—नन्विति। दिक्संयोगेति—संयोगभेदादेव भागक्लृप्तिः

## सर्वार्थसिद्धिः

**कदिक्त्वत्ववादिनस्ते तन्निबन्धना भागक्लृप्तिस्त्वया ; तदुपाधिसंयोगात्तु स्यादपि ; यदि तत्राप्यंशानंशविकल्पक्षोभोऽतिलङ्घ्येत ; अतस्सर्वदिगुपाधिसंयोगानां परमाणुषु पृथक्प्रदेशरहितानां कथमौपाधिकभागभेदसाधकत्वम्? यदि चानंशभेदेन संयुक्ता उपाधयः क्वचिद्भागभेदकाः तर्हि परमाणव एव तथा**

## आनन्ददायिनी

कल्प्या ; नच संयोगभेदः ; प्रतियोगिभेदाभावादिति भावः । ननु दिगुपाधीनां भिन्नत्वात्संयोगभेदस्स्यादित्यत्राह — तदुपाधीति । यदि तत्रापीति—परमाणवः स्वांशैरुपाधिभिः संयुज्यन्ते उपाधयो वा तथा तैस्संयुज्यन्ते उत स्वरूपेणेति विकल्पेन पूर्वदोषानतिवृत्तेरिति भावः । दिगुपाधीनां परमाणुभिरेकदेशेन संयोगाभावे दोषमाह—अत इति । ननु स्वांशभेदेन विनाऽप्यु (विना संसृज्यमाना उ)पाधयः स्वसंयोगिनि परमाणावंशभेदकल्पका भवन्तु इति चेत् ; मैवं ; तथा सति परमाणूनामेवांशभेदकल्पकत्वमस्तु कृतमुपाधिभिः ? तदङ्गीकारेऽपि तत्संयोगस्य परमाणौ व्याप्य (परमाणाव) विद्यमानस्य अंशभेदक्लृप्तावनुपयोगादित्याह—यदि चानंशभेदेनेति -

## भावप्रकाशः

दिति चेन्न ता एव ह्युपपत्तेः' इति सूत्रे तच्छब्देन 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुत्युक्तानामपामभिधानात् । तासां त्र्यात्मकत्वं च त्रिवृत्करणश्रुत्यैव वाच्यं नान्यथा । एवं च सूत्रस्योपलक्षणत्वे त्रिवृत्करणश्रुतेरुपलक्षणत्वमकामेनापि स्वीकार्यं । एतत्सर्वमभिप्रेत्यैवाद्वैतपरिभाषायां आचार्योक्तरीतिरादृता । अतस्त्रिवृत्करणपक्षपञ्चीकरण-

## सर्वार्थसिद्धिः

**किं न स्युः? वृथा चैवमंशक्लृप्तिः; अभागेन संयोगावस्थितेरिति। तदिदं सर्वमभिप्रेत्याहुः—**

**[1]* षट्केन युगपद्योगात् परमाणोष्षडंशता।**
**षण्णां समानदेशत्वे पिण्डस्स्यादणुमात्रकः॥ इति।**

## आनन्ददायिनी

षट्केनेति—षड्भिः परमाणुभिरेकस्य परमाणोष्षट्सु पार्श्वेषु योगे परमाणोः षडंशत्वं। यदि पार्श्वभेदमन्तरेण संबन्धस्तदाऽधिकपरिमाणं न स्यादिति भावः। अणुमात्रक इति। स्वार्थे कः। अणुपरिमाण इत्यर्थः। ननु

## भावप्रकाशः

पक्षयोर्विरोधोत्प्रेक्षणेन ईक्षत्यधिकरणकल्पतरुविरुद्धस्य त्रिवृत्करणपक्षस्यैव मुख्यसिद्धान्तत्वोक्तिर्वंशीधरस्यायुक्तैवेति।

वैनाशिकमूर्धन्येन प्राचीनेन योगाचारमतानुयायिना वसुबन्धुना विंशतिकारिकाविज्ञप्तिमात्रतासिद्धौ वैभाषिकमतदूषणप्रसङ्गे यदुक्तं तदर्धवैनाशिकस्यापि दूषणं भवतीति तत्रत्यां कारिकामनुवदति—

*[1] षट्केनेत्यादिना।

विवृता चेत्थं तेनैव विज्ञप्तिमात्रतासिद्धौ—

षट्केन युगपद्योगात्परमाणोष्षडंशता।

षड्भ्यो दिग्भ्यः षड्भिः परमाणुभिर्युगपद्योगे सति परमाणोष्षडंशता प्राप्नोति एकस्य यो देशस्तत्रान्यस्यासंभवात्।

षण्णां समानदेशत्वात् पिण्डस्स्यादणुमात्रकः।

अथ य एवैकस्य परमाणोर्देशस्स एव षण्णां; तेन सर्वेषां समानदेशत्वात्सर्वः पिण्डः परमाणुमात्रस्स्यात् परस्परव्यतिरेकादिति न कश्चित्पिण्डो दृश्यस्स्यात्। नैव हि परमाणवस्संयुज्यन्ते निरवयवत्वात्

## सर्वार्थसिद्धिः

नन्तु बुद्धिस्तावत्सर्वतन्त्रासिद्धा। [1]* सांवृतीत्यपि हि तां माध्यमिको मन्यते !

## आनन्ददायिनी

सर्वशून्यवादिनः सा न सिद्धत्यत आह—सांवृतीति—दोषसिद्धेत्यर्थः ।

## भावप्रकाशः

इति । तदुत्तरं—

परमाणोरसंयोगे तत्संघातोऽस्ति कस्य सः ।
नचानवयवत्वेन तत्संयोगो न सिध्यति ॥ १२ ॥
दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यते ।

इति कारिकाक्रमः । तत्र दिग्भागभेद इति कारिकार्थः मूले द्वितीयपादेन विशदीकृतः । ननु योगाचारमते विज्ञानमात्रस्य सत्यत्वाङ्गीकारेण तदाकाररूपविषयतासंभवेऽपि माध्यमिकमते—

सर्वं च युज्यते तस्य शून्यता यस्य युज्यते ।
सर्वं न युज्यते तस्य शून्यं यस्य न युज्यते ॥ (माध्य-वृ)

इति सिद्धान्तेन विज्ञानमप्यसत्यं—

द्रष्टव्यं दर्शनं द्रष्टा त्रीण्येतानि द्विशो द्विशः ।
सर्वशश्च न संसर्गमन्योऽन्येन व्रजन्युत ॥ (माध्य—वृ)
सान्तराविन्द्रियार्थौ चेत् संसर्गः कुत एतयोः ।
निरन्तरत्वेऽप्येकत्वं कस्य केनास्तु संगतिः ॥
निरंशस्य च संसर्गः कथं नामोपपद्यते ।
संसर्गे च निरंशत्वं यदि दृष्टं निदर्शय ॥
विज्ञानस्य त्वमूर्तस्य संसर्गो नैव युज्यते । (बो-च-पं)

इति संसर्गोऽपि दूषितः । एवं च बुद्धेस्सर्वतन्त्रसिद्धता कथमिति शङ्कामपाकरोति । [1]* सांवृतीत्यादिना । उक्तं च माध्यमिकैः—

## भावप्रकाशः

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।

लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥ (माध्य-वृ)

इति । व्याख्यातं चैतत् चन्द्रकीर्तिना माध्यमिकवृत्तौ—

इह हि भगवतां बुद्धानां सत्यद्वयमाश्रित्य धर्मदेशना प्रवर्तते । कतमत् सत्यद्वयम्? लोकसंवृतिसत्यं च परमार्थसत्यं च । तत्र—

स्कन्धात्मा लोक आख्यातः तत्र लोकादिनिश्रितम्ः ।

इति वचनात् पञ्चधातूनुपादाय प्रज्ञप्यमानः पुद्गलो लोक इत्युच्यते । समन्ताद्वरणं संवृतिः । अज्ञानं हि समन्तात् सर्वपदार्थतत्वावच्छादनात् संवृतिरित्युच्यते । परस्परसंभवनं वा संवृतिः । अन्योन्यसमाश्रयणीयेत्यर्थः । अथवा संवृतिः संकेतो लोकव्यवहार इत्यर्थः । स चाभिधानाभिधेयज्ञानज्ञेयादिलक्षणः । लोके संवृतिः लोकसंवृतिः । किं पुनरलोकसंवृतिरप्यस्ति? यत एवं विशेष्यते लोकसंवृतिरिति? यथावस्थितपदार्थानुवाद एषा ; नात्रैषा चिन्तावतरति । अथवा तिमिरकामलाद्युपहतेन्द्रियविपरीतदर्शनावस्था लोकाः। तेषां या संवृतिः अतो विशेष्यते लोकसंवृतिसत्यामिति । एतच्च लङ्कावतारे विस्तरेणोक्तं ततो वेदितव्यं इति । एवमन्यत्रापि (बो. च)

संवृतिः परमार्थश्च सत्यद्वयमिदं मतम् ।

बुद्धेरगोचरस्तत्वं बुद्धिस्संवृतिरुच्यते ॥

इति । प्रज्ञाकरमतिश्च बोधिचर्यावतारपञ्जिकायामेतदित्थं व्याचख्यौ— संव्रियते आव्रियते यथाभूतपरिज्ञानं स्वभावावरणादावृतप्रकाशनाच्चानयेति सवृतिः । अविद्या मोहो विपर्यास इति पर्यायाः । अविद्या ह्यसत्पदार्थस्वरूपारोपिका स्वभावदर्शनावरणात्मिका च सती संवृतिरुपपद्यते । यदुक्तमार्यशालिस्तम्बसूत्रे—'पुनरपरं तत्वेऽप्रतिपत्तिर्मिथ्याप्रतिपत्तिरज्ञानमविद्या' इति । उक्तं च—

## भावप्रकाशः

अभूतं ख्यापयत्यर्थं भूतमावृत्य वर्तते ।
अविद्या जायमानेव कामलातङ्कवृत्तिवत् ॥

तदुपदर्शितं च प्रतीत्यसमुत्पन्नं वस्तुरूपं संवृतिरुच्यते । तदेव लोकसंवृतिसत्यमित्यभिधीयते लोकस्यैव संवृत्या तत्सत्यमिति कृत्वा । यदुक्तं—

मोहः स्वभावावरणाद्धि संवृतिः
सत्यं तथा ख्याति यदेव कृत्रिमम् ।
जगाद तत्संवृतिसत्यमित्यसौ
मुनिः पदार्थं कृतकं च संवृतिम् ॥

इति । सा च संवृतिर्द्विविधा लोकत एव । तथ्यसंवृतिर्मिथ्यासंवृतिश्चेति । तथाहि—किञ्चित् प्रतीत्यजातं नीलादिकं वस्तुरूपमदोषवदिन्द्रियैरुपलब्धं लोकत एव सत्यं । मायामरीचिप्रतिबिम्बादिषु प्रतीत्यसमुपजातमपि दोषवदिन्द्रियोपलब्धं यथास्वं तीर्थिकसिद्धान्तपरिकल्पितं च लोकत एव मिथ्या । तदुक्तं—

विनोपघातेन यदिन्द्रियाणां
षण्णामपि ग्राह्यमवैति लोकः ।
सत्यं हि तल्लोकत एव शेषं
विकल्पितं लोकत एव मिथ्या ॥

इति । एतत्तदुभयमपि सम्यग्दृशामार्याणां मृषा । परमार्थदशायां संवृतिसत्यालोकत्वात् । एतत् समनन्तरमेवोपपत्त्या प्रतिपादयिष्यामः । तस्मादविद्यावतां वस्तुस्वभावो न प्रतिभासत इति । परम उत्तमोऽर्थः परमार्थः अकृत्रिमं वस्तुरूपं । यदभिगमात्सर्वावृतिवासनानुसन्धिक्लेशप्रहाणं भवति । सर्वधर्माणां निस्स्वभावता शून्यता तथता भूतकोटिः धर्मधातुरित्यादिपर्यायाः । सर्वस्य हि प्रतीत्यसमुत्पन्नस्य

## भावप्रकाशः

पदार्थस्य निस्स्वभावता पारमार्थिकं रूपं। यथाप्रतिभासं सांवृतस्यानुपपन्नत्वात् इति । सत्यद्वयमिदमुक्तं । तत्राविद्योपप्लुतचेतसां तत्स्वभावतया संवृतिसत्यमिति प्रतीतं । परमार्थसत्यं तु न ज्ञायते कीदृक्किंस्वभावं किंलक्षणमिति । अतो वक्तव्यं तत्स्वरूपमिति अत आह—बुद्धेरगोचरस्तत्वामिति । बुद्धेः—सर्वज्ञानानां । समतिक्रान्तसर्वज्ञानविषयत्वादगोचरः—अविषयः। केनचित्प्रकारेण तत्सर्वं (बुद्धि) विषयीकर्तुं न शक्यत इति यावत् इति । कथं तत्स्वरूपं प्रतिपादयितुं शक्यम्? तथाहि—सर्वप्रपञ्चविनिर्मुक्तस्वभावं परमार्थ(सत्यं)तत्वं। अतः सर्वोपाधिशून्यत्वात्कथं कयाचित्कल्पनया पश्येत । कल्पनासमतिक्रान्तस्वरूपं च शब्दानामविषयः । विकल्पजन्मानो हि शब्दाः विकल्पधियामविषये न प्रवर्तितुमुत्सहन्ते । तस्मात्सकलविकल्पाभिलापविकलत्वादनारोपितमसांवृतमनभिलाप्यं परमार्थतत्वं कथमिव प्रतिपादयितुं शक्यते? तथापि भाजनश्रोतृजनानुग्रहार्थं (परिकल्पमुपादाय) संवृत्या निदर्शनोपदर्शनेन किञ्चिदभिधीयते—यथा तिमिरप्रभावात्तैमिरिकः सर्वमाकाशदेशं केशोण्डुकमण्डितमितस्ततोमुखं विक्षिपन्नपि पश्यति । तथा कुर्वन्तमवेत्यातैमिरिकः किमयं करोतीति तत्समीपमुपसृत्य तदुपलब्धकेशप्रणिहितलोचनोऽपि न केशाकृतिमुपलभते नापि तत्केशाधिकरणान् भावाभावादिविशेषान् परिकल्पयति। यदा पुनरसौ तैमिरिकोऽतैमिरिकाय स्वाभिप्रायं प्रकाशयति केशानिह पश्यामीति तदा तद्विकल्पापसारणाय तस्मै यथाभूतमसौ ब्रवीति नात्र केशास्सन्तीति । तैमिरिकोपलब्धानुरोधेन प्रतिषेधपरमेव वचनमाह । न च तेन तथा प्रतिपादयताऽपि कस्याचित्प्रतिषेधः कृतो भवति विधानं वा। तच्च केशानां तत्वं; यत्तैमिरिकः पश्यति नातैमिरिकः । एवमविद्यातिमिरोपघातादतत्वदृशो बाला यदेतत् स्कन्धधात्वायतनादि स्वरूपमुपलभन्ते तदेषां सांवृतं रूपं ।

## भावप्रकाशः

तानेव स्कन्धादीन्येन स्वभावेन निरस्तसमस्ताविद्यावासना बुद्धा भगवन्तः पश्यन्ति। अतैमिरिकोपलब्धकेशदर्शनन्यायेन तदेषां परमार्थसत्यमिति। यदाह शास्त्रवित्—

विकल्पितं यत्तिमिरप्रभावात्
　केशादिरूपं वितथं तदेव।
येनात्मना पश्यति शुद्धदृष्टिः
　तत्तत्वमित्येवमिहाप्यवेहि॥

इति। परमार्थतोऽवाच्यमपि परमार्थतत्वं दृष्टान्तद्वारेण संवृतिमुपादाय कथंचित्कथितम्। न तु तदशेषसांवृतव्यवहारविरहितस्वभावं वस्तुतो वक्तुं शक्यत इति। यदुक्तम्—

अनक्षरस्य धर्मस्य श्रुतिः का देशना च का?।
श्रूयते देश्यते चार्थः समारोपादनक्षरः॥

इति। तस्माद्व्यवहारसत्य एव स्थित्वा परमार्थो देश्यते। परमार्थदेशनावगमाच्च परमार्थाधिगमो भवति। तस्यास्तदुपायत्वात्। यदुक्तं शास्त्रे—

व्यवहारमनाश्रित्य परमार्थो न देश्यते।
परमार्थमनागम्य निर्वाणं नाधिगम्यते॥

इति। एवं परमार्थदेशनोपायभूता परमार्थाधिगमश्चोपेयभूत इति। अन्यथा तस्य देशयितुमशक्यत्वात्। ननु च तथाविधमपि तथाविधबुद्धिविषयः परमार्थतः किं न भवतीत्यत्राह—बुद्धिस्संवृतिरुच्यते इति। सर्वा हि बुद्धिरालम्बनानिरालम्बनतया विकल्पस्वभावा। विकल्पश्च सर्व एवाविद्यास्वभावः अवस्तुग्राहित्वात्। यदाह—

## भावप्रकाशः

विकल्पस्स्वयमेवायमविद्यारूपतां गतः ।

इति । अविद्या च संवृतिः इति नैव काचिद्बुद्धिः पारमार्थिकरूपग्राहिणी परमार्थतो युज्यते । अन्यथा सांवृतबुद्धिग्राह्यतया परमार्थरूपतैव तस्य हीयेत । परमार्थस्य वस्तुतः सांवृतज्ञानाविषयत्वात् । तत्र चेदमुक्तं भगवता आर्यसत्यद्वयावतारे—

यदि हि देवपुत्र परमार्थतः परमार्थसत्यं कायवाङ्मनसां विषयतामुपगच्छेत् न तत्परमार्थसत्यमिति संख्यां गच्छेत् । संवृतिसत्यमेव तद्भवेत् । अपि तु देवपुत्र परमार्थसत्यं सर्वव्यवहारसमतिक्रान्तं निर्विशेषं असमुत्पन्नमनिरुद्धं अभिधेयाभिधानज्ञेयज्ञानविगतं । यावत्सर्वाकारवरोपेतसर्वज्ञज्ञानविषयभावसमतिक्रान्तं परमार्थसत्यामिति विस्तरः इति च ।

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥

इति—

निस्स्वभावा अमी भावास्तत्वतस्स्वपरोदिताः ।
एकानेकस्वभावेन वियोगात्प्रतिबिम्बवत् ॥

इति—

यदन्यसंनिधानेन दृष्टं न तदभावतः ।
प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कथम् ॥

इति च । न रूपशून्यतया रूपं शून्यं रूपमेव शून्यं शून्यतैव रूपम् । न वेदनाशून्यतया वेदना शून्या वेदनैव शून्या शून्यतैव वेदना । न संज्ञाशून्यतया संज्ञा शून्या संज्ञैव शून्या शून्यतैव संज्ञा । न संस्कारशून्यतया संस्काराश्शून्याः संस्कारा एव शून्याः शून्यतैव संस्काराः । न विज्ञानशून्यतया विज्ञानं शून्यं विज्ञानमेव शून्यं शून्यतैव विज्ञानमिति विस्तरः । उक्तं च—

## सर्वार्थसिद्धिः

सा चैकाप्यनेकविषया दृष्टा इष्टा च। निरंशा च सा प्रत्येकं कात्स्न्र्येनांशतो वा विषयीकुर्यात्? नाद्यः; अन्यानुल्लेखप्रसङ्गात्। न द्वितीयः; निरंशत्वादेव। तत्र चेत्कश्चित्समाधिः

## आनन्ददायिनी

प्रतिबन्दीमुपपादयति—निरंशा चेति। अन्येति—एकविषय एव कृत्स्न-

## भावप्रकाशः

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता।
भावः स्वतन्त्रो नास्तीति सिंहनादस्तवातुलः॥

इति। एवं—

यः प्रत्ययैर्जायति स ह्यजातो
न तस्य उत्पादः स्वभावतोऽस्ति।
यः प्रत्ययाधीनस्स शून्य उक्तः
यश्शून्यतां जानाति सोऽप्रमत्तः॥

इति च। अङ्गीकृतश्च ज्ञानार्थयोः विषयविषयिभावस्सांवृतोऽत्रैव—

दृश्यते स्पृश्यते चापि स्वप्नमायोपमात्मना।
चित्तेन सह जातत्वाद्वेदना तेन नेक्ष्यते॥

इति। अत्र पञ्जिका—स्यादेतत्; यदि वेदको न स्यात् वेदना च नास्ति केनायं तर्हि सुखसाधनत्वादिना भावेषु दृष्टादिव्यवहारः प्रवर्तते? इत्यत्राह—दृश्यते इत्यादि। दृश्यते चक्षुरिन्द्रियजेन। स्पृश्यते कायेन्द्रियजातेन। चित्तेन ज्ञानेन। एवं तर्हि चित्तमेव वेदकं वस्तुसदस्तीति चेदाह—स्वप्नमायोपमात्मना। स्वप्नोपमस्वभावेन मायोपमस्वभावेन च प्रतीत्यसमुत्पन्नेन चित्तेन। न तु परमार्थसता। कथं चित्ताद्व्यतिरिक्तं चित्तेन दृश्यते? सहजातत्वात्—चित्तेन सहोत्पन्नत्वात्। चित्तेन

## तत्वमुक्ताकलापः

**बुद्धेस्त्वंशानपेक्षा स्फुरति विषयिता**

## सर्वार्थसिद्धिः

**अणुष्वपि तथा स्यात्। तत्राह—बुद्धेस्त्विति। तुः शङ्का-निवृत्त्यर्थः। विषयित्वं ह्यंशानपेक्ष(त)यैव दृष्टं। न ह्यन्यतोऽपि तस्यान्यथा दृष्टिः। अतो यथोपलम्भमेकवदनेकोऽपि विषय एकस्या बुद्धेः। एवमेकस्य निरंशस्यानेकबुद्धिविषयत्वमपि**

## आनन्ददायिनी

संविदोऽप्युपयुक्तत्वादिति भावः। उल्लेखो—विषयीकरणं। अंशानपेक्षयेत्यत्र अंशस्यापेक्षा न विद्यते यस्येति गमकत्वात्समास इति ध्येयम्। न ह्यन्यत इति—उपाध्यधीनांशभेदक्लृप्त्या वा बुद्धेर्विषयता दृष्टा नेत्यर्थः। यथोपलम्भमिति—एकविषयत्ववदनेकविषयत्वस्यापि दर्शनानुसारादुपपत्तिः ; वस्तुव्यवस्थाया उपलम्भानुसारित्वादित्यर्थः।

## भावप्रकाशः

सह जन्म (यस्य) तस्य दर्शनमेकसामग्रीप्रतिबद्धत्वात् प्रतीत्यसमुत्पादस्याचिन्त्यत्वाच्च। न तु परमार्थतो दर्शनमस्ति ; येनैवं दृष्टादिव्यवहारः। वेदना तेन नेक्ष्यते—येन दृष्टसुखसाधनादिव्यवहारोऽप्यन्यत एव तेन कारणेन वेदना नेक्ष्यते—न च दृश्यते वस्तुतः इति। ज्ञानार्थयोः परमार्थतो निराकारयोः संसर्गज अकार इति बुद्धिसरे संसर्गाद्बोध्यबुद्ध्योः (२८) इति श्लोके वक्ष्यमाणः पक्षो माध्यमिकाभिमत इति प्रतिभाति ॥

## सर्वार्थसिद्धिः

निरूढं। अवयव्यारम्भकसंयोगस्तु त्वयाऽपि न क्वचिदंशनिरपेक्ष उक्तः। क्वचिद्विशेषाङ्गीकारे नियामकाभावः। अथ सङ्घातारम्भकसंयोगेऽपि समः प्रसङ्ग इति; न समः; संयोगसाध्यसङ्घाताभावात्। तत्स्वीकारे ह्यवयविवाद एव परं। संयोगस्तर्ह्येकोऽनेकवृत्तिस्सन् अंशानंशविकल्पदौस्थ्यं नातिक्रामेत्। न ह्यसौ नास्त्येव; सिद्धयोः साध्यतया दृष्टेरिति। तदपि न; विषयित्ववन्निस्तारात्। सोऽपि हि द्वयोर्न स्वांशाभ्यां वर्तत इति दृश्यते। एवं स्वामित्वादयोऽपि न प्रतिबन्दिः। अस्तु तर्हि संयुक्तप्रतिबन्दिः; मूर्तैर्विभूनां संयोगोऽस्ति वा न वा? नचेदन्यतरकर्मजसंयोगलोपः अविशेषात्। अस्ति चेत्; यदि

## आनन्ददायिनी

निरूढमिति—उपपन्नमित्यर्थः। अवयव्येति—परमाणुव्यतिरिक्तस्थूल इति शेषः। ननु परमाण्वारब्धस्सङ्घात इत्यङ्गीकारेऽपि तत्रोक्तविकल्पदोषस्स्यादिति प्रतिबन्दिमाशङ्कते—अथेति। परिहरति—न सम इति—संयोगस्यैव सङ्घातत्वादिति भावः। ननु निरंशस्संयोग उभयवृत्तिरङ्गीक्रियते। तत्र स्वांशेन वर्तते उत कार्त्स्न्येन? नान्त्यः; एकत्र वृत्तावन्यत्राभावप्रसङ्गात्। न प्रथमः; अंशाभावादिति प्रतिबन्दीं शङ्कते—संयोगस्तर्हीति। सिद्धयोरिति—इदं वस्तुद्वयं दूरस्थं मया संयुक्तमिति सिद्धयोर्वस्तुनोः साध्यतया—जन्यतया संयोगस्य दर्शनादित्यर्थः। यथादर्शनमङ्गीकारादुभयवृत्तिताया नानुपपत्तिरित्याह—तदपि नेति। तदेवोपपादयति—सोऽपीति—संयोगोऽपीत्यर्थः। दासत्वादिरादिशब्दार्थः। न प्रतिबन्दिः—न प्रतिबन्दियोग्य इत्यर्थः। अविशेषादिति—यदा पक्ष्यादेरन्यतरस्य

## सर्वार्थसिद्धिः

कार्त्स्न्येन विभुद्रव्यमेकेन स्पर्शवता संयुज्यते कथं स्पर्शवदन्तरेण तस्य संयोगस्स्यात्? अंशतश्चेत्; सावयवत्वप्रसङ्गः। न हि विभुद्रव्यस्यावयवित्वं सङ्घातत्वं वा सुवचं ; पूर्वत्र स्पर्शवत्त्ववृत्तत्वकार्यत्वानित्यत्वादिप्रसङ्गात्। उत्तरत्र नानात्वभेदाभेदयोरन्यतरापातात्। तत्र च विभुद्रव्यांशानां मिथस्संयोगोऽस्ति न वा? अस्ति चेत्; तत्रापि स एव प्रसङ्गः। नास्ति चेत्; असंहतरूपता स्यात्। औपाधिको विभूनामंशभेद इति चेन्न; उपाधिसंयोगेऽप्यंशादिविकल्पानपायात्। निरंशेऽपि संयुज्यमानं स्वरूपेण तद्भेदोपाधिरिति चेन्न; स भेद उपाधिना छिन्ने चेदवयवविश्लेषात्मा स्यात्। अच्छिन्ने तु भेदाभेदवाद एव शरणं। अत एव स्वसमानपरिमाणेषु विभुप्रदेशेषु तत्तदुपाधि-

## आनन्ददायिनी

कर्मसत्त्वेऽपि विभुषु संयोगो नोत्पद्यते तदा तत्र व्यभिचारादन्यतरकर्म न संयोगकारणमिति कुत्रापि ततस्संयोगो न स्यादित्यर्थः। कथमिति—सप्रतिघत्वविरोधादित्यर्थः। इष्टापत्तिं निराचष्टे—न(हि) च विभुद्रव्यस्येति। अवयवित्वावयवसङ्घातत्वे मतभेदेन। उत्तरत्रेति—नानात्वाङ्गीकारे एकस्यैव सङ्घातत्वार्थं भेदाङ्गीकारे भेदाभेदप्रसङ्ग इत्यर्थः। अंशभेदमङ्गीकृत्याह—तत्र चेति। विभुद्रव्यस्यांशवत्त्व इत्यर्थः। स एवेति—स्वांशभेदेन संयुज्यते न वेत्यादिप्रसङ्ग इत्यर्थः। असंहतरूपता स्यादिति—एकं वस्तु विभुद्रव्यं न स्यादित्यर्थः। अच्छिन्ने—अखण्डिते। भेदाभेदेति अखण्डितस्याभिन्नत्वादिति भावः। स्वसमानपरिमाणेषु—उपाधिसमपरिमाणेषु। विभुप्रदेशेषु— विभुद्रव्य-

## सर्वार्थसिद्धिः

संबन्धव्यवस्थेति निरस्तं । तत्प्रदेशभेदस्यैव मृग्यमाणत्वात् । विभुद्रव्यमेव तत्तन्मूर्ततुल्यपरिमाणं जायत इति चेन्न ; विरोधादुक्तदोषानतिक्रमाच्च । काल्पनिकांशभेदेन मूर्तसंयोग इति चेत्तर्हि वस्तुतस्त्वखण्डेनेत्युक्तं स्यात् । अंशभेदकल्पना च किं विभुद्रव्यस्वरूपमात्रे उत तदंश एवेति दुस्तरो गर्तः । निरंशानामपि स्वभावत एव विभूनामनेकमूर्तसंयोगक्षमत्वमिति चेदणूनामप्येतदस्तु ; अविशेषात् । [1]*एवं त्रसरेणुप्रतिबन्दिश्च भाव्येति । [2]*अत्रोच्यते—यदि वयं प्रदेशवर्तिगुणानिह्नुवीय प्रव-

## आनन्ददायिनी

स्य प्रदेशेषु । तत्प्रदेशभेदस्यैवेति—उपाधिसमपरिमाणविभुप्रदेशस्यैवासिद्धेरित्यर्थः । विरोधादिति—विभुनः कार्यत्वाभावात्तथात्वे विभुत्वव्याघातादित्यर्थः । उक्तदोषेति—तत्तुल्यपरिमाणमप्यंशभेदेन जायते उत न? उपाधिना विच्छिन्नं न तत्तुल्यपरिमाणं जायते आविच्छिन्नं वा? इत्यादि दोषानतिक्रमादित्यर्थः । तर्हीति—कल्पानिकांशस्य वस्तुनः पारमार्थिकवस्तुनिर्वाहकत्वाभावादित्यर्थः । कल्पनापेक्षेऽप्युक्तदोषानिस्तार इत्याह—अंशभेदेति । सिद्धान्ते त्रसरेणूनां निरंशत्वात्तत्संयोगप्रतिबन्दिमप्याह—एवमिति । प्रदेशवर्तीति—प्रदेश-

## भावप्रकाशः

[1]* एवं त्रसरेणुप्रतिबन्दिश्च भाव्येत्यनेन 'संयोगस्तर्हीत्यारभ्य सोऽपि न स्वांशाभ्यां वर्तते' इति पूर्वग्रन्थार्थ आक्षिप्तः ।

[2]* अत्रोच्यत इत्यादि—अत्र न्यायसिद्धाञ्जने षट्केनेत्याद्युक्तदूषणं माध्यमिकैरेवोद्भावनीयं नान्यैरित्ययमर्थ उपपादितः । अत एव—

## भावप्रकाशः

अंशा अप्यणुभेदेन सोऽप्यणुर्दिग्विभागतः ।
दिग्विभागो निरंशत्वादाकाशं तेन नास्त्यणुः ॥

इति (बों. पं. ९-८७) कारिकाविवरणे प्रज्ञाकरमतिना एतत्कारिकोदाहरणं संगच्छते। एतेन संयोगोपपत्तेश्च (४-२-२४) इति सूत्रे वाचस्पतिना (न्या.वा.ता.टी) "द्रव्याणामेवात्र समवायेन समानदेशतां व्यासेधामो न तु संयोगेन । समवायेन हि समानदेशता स्थौल्यपरिपन्थिनी। यथा गन्धरसरूपस्पर्शास्समानदेशा न स्थौल्यमारभन्ते तत्कस्य हेतोः? एषाममूर्तानां समानदेशसमवायात्। मूर्तास्तु स्पर्शवन्तस्समवायेनासमानदेशाः परस्परसंयोगिनो यदि स्थौल्यमारभन्ते किं बाध्यते? तस्मात् संयोगेन समानदेशता न प्रतिषिध्यते। समवायेन तु प्रतिषिध्यते। सा हि स्थौल्यविरोधिनीति सिद्धम्" इति। दिग्देशभेदाश्च दिशस्संयोगा इत्युपक्रम्य 'तस्मादेकस्यापि परमाणोः परमाण्वन्तरसंयोगा अव्याप्यवृत्तय एव भागाः । एवं दिशोऽप्येकस्या अपि संयोगा एव भागाः । सोऽयं परमाणोष्षट्केन युगपद्योगो मूर्तत्वमात्रप्रयुक्तो न सावयवत्वप्रयुक्त इति न सावयवत्वं गमयितुमर्हतीति । तेन यदुच्यते प्रसङ्गसाधनं परैः—'यन्निरवयं तन्न षट्केन संयुक्तं यथा विज्ञानं तथाच परमाणुरिति व्यापकविरुद्धोपलब्धिः" इति; तन्निरस्तं। मूर्तत्वप्रयुक्तत्वेन षट्कसंयोगस्य सावयवत्वेन व्याप्तेरसिद्धेः। छायातपयोगोऽपि परमाणोरेकसंयोगस्याव्याप्यवृत्तित्वेनोपपन्नः" इति च यदुक्तं विंशतिकारिकोक्तदूषणपरिहरणं तत्परास्तं। माध्यमिकैः—

नाणोरणौ प्रवेशोऽस्ति निराकाशस्समश्च सः ।
अप्रवेशे न मिश्रत्वममिश्रत्वे न संगतिः ॥
निरंशस्य च संसर्गः कथं नामोपपद्यते ।?
संसर्गे च निरशत्वं यदि दृष्टं निदर्शय॥ (बो–पं ९-९५–९६)

## सर्वार्थसिद्धिः

**त्स्यामः तदा विभुप्रतिबन्धा अणुष्वपि तत्संभवः प्रदर्श्येत । किंत्ववयव्यारम्भकाणामवयवैरेव संयोग इति नियमस्य त्वयै-**

## आनन्ददायिनी

वर्तिसंयोगापह्नवायेत्यर्थः । विभुप्रतिबन्धेति । यद्यपि विभूनां तन्न्यूनपरिमाणसंयोगः स्वाश्रयभूतन्यूनपरिमाणद्रव्याभावे न संभवति आश्रयरहितप्रदेशे संयोगासंभवात् । यद्येकाश्रयसत्त्वमात्रात् प्रतियोग्यन्तराभावप्रदेशेऽप्याश्रयान्तरे संयोगस्स्यात् तथा सति प्रदेशान्तरवर्तिवह्निना पटस्य कार्त्स्न्येन संयोगस्स्यात् अविशेषादिति कृत्स्नपटदाहेनैकदेशेन पटदाहः कुत्रापि न स्यादिति युक्तमाकाशादावव्याप्यवृत्तिसंयोगवत्त्वं । परमाणौ तु तन्न्यूनपरिमाणप्रतियोग्यन्तरा भावान्नाव्याप्यवृत्तिसंयोगसंभवः; तथाऽप्यभ्युपगम्यैतदुक्तमिति द्रष्टव्यं । तत्संभवः—अव्याप्यवृत्तिगुणसंभवः । अवयव्यारम्भकाणामिति ।

## भावप्रकाशः

इत्यनेन षट्केनेत्याद्युक्तार्थदृढीकरणात् । अत्रैव पूर्वं अतस्सर्वदिगुपाधिसंयोगानां परमाणुषु पृथक्प्रदेशरहितानां कथमौपाधिकभागभेदापादकत्वमित्याद्युक्तदूषणानुद्धाराच्च । सिद्धान्ते निरंशसंयोगः "श्रुतेस्तु शब्दमूलत्वात्" इति सूत्रेण व्यवस्थापितः । त्रसरेण्वंशानामदर्शनेन तेषां निरवयवतया तत्संयोगस्सर्वजनप्रत्यक्षविषय इति 'संसर्गे च निरंशत्वं' इत्याद्युक्तदोषस्य न प्रसर इति;

संसर्गे च निरंशत्वं यदि दृष्टं निदर्शय ।

इति माध्यमिकोक्तौ 'यदि दृष्टं' इति भागमवलम्ब्यैव 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इति (२-२) सूत्रभाष्योक्तदूषणं संगमयति—किन्त्वित्यादिना ।

## तत्वमुक्ताकलापः

### विश्रमस्त्वस्तु दृष्टे

## सर्वार्थसिद्धिः

वान्येषु सर्वेष्वङ्गीकारात् कल्प्येष्वपि तत्प्रसङ्गो दुर्वार इति ब्रूमः। नचान्यत्रैवायं नियम इति स्थाप्यं; तादृशानामणूनामदृष्टेः। अनन्यथासिद्धलिङ्गाभावाच्च। यदि विभज्यमानेष्वभावपरिशेषायोगात् परमाणुरपि सत्त्वरजस्तमसां सर्वापकृष्टस्सङ्घात इति सांख्यमतस्य निर्मूलत्वात् महत्परिमाणतारतम्यविश्रान्तिवत् परिमाणतारतम्यत्वादणुपरिमाणतारतम्यविश्रान्तिरपि क्वचित्कल्प्येत तत्राह—[2]विश्रमस्त्वस्तु दृष्ट इति। दृष्टे त्रसरेणौ विश्रमसंभवे न मृग्यं ह्यन्यत्। तथा च सिद्धसाध्यता। यदि त्रसरेणुरेव परमाणुस्स्यात् अप्रत्यक्षस्तर्हि स्यादिति चेत्; हन्त;

## आनन्ददायिनी

यद्यपि द्व्यणुकस्य परमाणुरवयवः; तथाऽप्यवयव्यारम्भकाणामवयवानां संयोगः स्वावयवावच्छिन्नो दृष्ट इति त्वयाऽपि द्व्यणुकातिरिक्तकार्यस्थलेऽङ्गीकारादित्यर्थः। अत्र प्रत्यक्षदृष्टेस्संकोच उतानुमानादिति विकल्प्याद्यं दूषयति— तादृशानामणूनामदृष्टेरिति—अप्रत्यक्षत्वादित्यर्थः। द्वितीयं दूषयति—अनन्यथेति। लिङ्गं शङ्कते-यदीति। सर्वापकृष्टस्संघात इति—प्रकृतिकार्यत्वादिति भावः। निर्मूलत्वात्—निष्प्रमाणकत्वात्। महत्परिमाणेति। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवदिति प्रयोगो द्रष्टव्यः। यत्र विश्रमस्स निरवयवोऽणुरिति भावः। न मृग्यमिति—अन्यत्परमाणुद्रव्यं न कल्प्यमित्यर्थः। यदीति—परमाणोरतीन्द्रियत्वानियमादिति भावः।

## सर्वार्थसिद्धिः

कुत्रैषा व्याप्तिः ?

सिद्धो ह्यन्यत्र दृष्टान्तः साध्ये त्वन्योन्यसंश्रयः ।
त्रसरेणुः पराणुस्सन् किं नाध्यक्षोऽपराणुवत् ॥

चाक्षुषत्वप्रकर्षनिकर्षयोर्महत्त्वप्रकर्षनिकर्षानुविधानात् द्रव्यस्य चाक्षुषत्वं महत्त्वनियतमिति चेत् ; चाक्षुषावयवकस्यैव द्रव्यस्य चाक्षुषत्वनियमदर्शनात् । अचाक्षुषावयवकस्य त्रसरेणोरप्य-चाक्षुषत्वप्रसङ्गे कस्ते निस्तारः ? अगत्येति चेत् ; भवतु कुतश्चिन्महत्त्वाभावेऽपि क्वचिदेवं ।

## आनन्ददायिनी

कुत्रेति—गृहीतेति शेषः । प्रत्यक्षसिद्धो दृष्टान्त उतानुमानिक इति विकल्पमभिप्रेत्याद्यं दूषयति—सिद्ध इति । नात्र प्रत्यक्षसिद्धिरिति भावः । द्वितीयं दूषयति—साध्ये त्विति । तस्यापि दृष्टान्तापे-क्षायामनुमानान्तराधीनस्य दृष्टान्तत्वे चक्रकानवस्थाप्रसङ्गात्प्राथमिकानु-मानगम्यस्यैव दृष्टान्तत्वेऽन्योन्याश्रय इत्यर्थः । त्रसरेणोः परमाणु-त्वेऽपि प्रत्यक्षत्वं साधयति—त्रसरेणुरिति । परमाणुस्सन्—परमाणु-स्थानापन्नः । त्रसरेणुरध्यक्षः अणुत्वात् तदपेक्षया स्थूलजालमरीचि-मध्यभासमानाणुवत् । इन्द्रियस्याणुत्वं नास्तीति 'अणवश्चेति' सूत्रे प्रत्यपादीति भावः । महत्त्वस्य बहिर्द्रव्यप्रत्यक्षव्यापकत्वा-त्रसरेणौ तन्निवृत्तिमाशङ्कते—चाक्षुषत्वेति । बहिर्द्रव्यप्रत्यक्षत्वेत्यर्थः । यद्वा चाक्षुषत्वनिवृत्तिमाशङ्कत इत्यर्थः । साहचर्यमात्रं न व्याप्ति-ग्राहकमप्रयोजकत्वादित्याह—चाक्षुषावयवस्यैवेति । तथाचात्र त्रसरेणौ विश्रमानङ्गीकर्तुस्तदतिरिक्तपरमाण्वभ्युपगन्तुरपीत्यर्थः । कुतश्चित्—कारणान्तरात् । क्वचित्—त्रसरेणौ महत्त्वरूपपरिमाणाभावेऽपि । एवं—

## तत्वमुक्ताकलापः

**नो चेदारम्भकांशप्रभृतिषु नियता दुर्निवाराः**

## सर्वार्थसिद्धिः

[1]*अत एव मूर्तत्वे सति महत्त्वात्त्रसेरणुः कार्यद्रव्यारब्ध इति कल्पनापि निरस्ता। अस्तु बाह्येन्द्रियग्राह्यत्वादेतत्साध्यमिति? न। विपक्षे बाधकाभावात्। अन्यथा त्रसरेण्वारम्भकस्यापि कार्यद्रव्यारब्धत्वकल्पनायां निवारकाभावात्। तत्र विपक्षे बाधकं नास्तीति चेत्; अत्रापि तथेत्युक्तमेव। अतो न द्व्यणुकमित्यपि किञ्चित्। एवमारम्भकपरम्परायास्सावयवत्वं तद्व्यापकतयाऽभिमतमनित्यत्त्वं कुताश्चिन्महत्त्वं च प्रसज्यमानमनिवारणीयं स्यात्; एतत्सर्वमाभिप्रेत्याह—नो चेदिति।

## आनन्ददायिनी

प्रत्यक्षत्वमित्यर्थः। तथाच—महत्त्वोत्कर्षस्य चाक्षुषप्रत्यक्षोत्कर्षप्रयोजकत्वेऽपि न चाक्षुषप्रत्यक्षमात्रहेतुत्वमिति भावः। अत एवेति—त्रसरेणोः परमाणुत्वादित्यर्थः। तथाच स्वरूपासिद्धिरिति भावः। एतत्साध्यं — कार्यद्रव्यावस्थत्वरूपं साध्यं। त्रसरेण्वारम्भकस्येति। द्व्यणुकस्येत्यर्थः। व्याप्तिरविशेषादित्याह— निवारकाभावादिति। इष्टापत्तिमाशङ्क्य नित्यनिरवयवाणुत्वसिद्धिर्न स्यादित्याह—एवमारम्भकेति।

## भावप्रकाशः

[1]* अत एव — अप्रयोजकत्वादेव। . . . . . . . .

सिद्धान्त च प्रकृतेर्निरंशत्वे सांशत्वे वा न कोऽपि दोष इति न्यायसिद्धाञ्जने व्यक्तम्।

## तत्वमुक्ताकलापः

प्रसङ्गाः ॥ १८ ॥

**स्याद्भागानन्त्यसाम्ये परिमितिसमता सर्षपक्ष्माभृतोश्चेत् मैवं भागेष्वनन्तेष्वपि समधिकता**

## सर्वार्थसिद्धिः

**अणुषु स्वाभावसमानाधिकरणसंयोगसिद्धेरौपाधिकांशवत्त्वस्वीकारात् इष्टप्रसङ्गतां परिहर्तुमारम्भकशब्दः ॥ १८ ॥**

नन्वेवं सर्वत्रावयवानन्त्यप्रसङ्गे सर्षपमहीधरादिपरिमाणवैचित्र्यं न स्यादिति शङ्कते—स्यादिति। प्रसञ्जकस्याप्रयोजकत्वाभिप्रायेण प्रतिवक्ति—मैवमिति। आनन्त्यसाम्येऽप्यवयवानां न्यूनाधिकभावेन परिमाणवैषम्योपपत्तिमाह—भागेष्विति।

## आनन्ददायिनी

संयुक्तविभुप्रतिबन्धाऽणुष्वव्याप्यवृत्तिसंयोगौपाधिकांशवत्त्वस्वीकारसंभवादेकदेशेन संयुज्यते उत नेत्यादिविकल्पमुखेन प्रवृत्तानामिष्टप्रसङ्गतामाशङ्क्यारम्भकांशपदविशेषणेन परिहरतीत्याह—अणुष्विति। आरम्भकसंयोगानामवयवावच्छिन्नानामेव जनकत्वनियमादिति भावः। परमाणुस्सांशस्स्यात् आरम्भकत्वात् परमाणुरनौपाधिकदेशेन संयोगवान् स्यादारम्भकसंयोगवत्त्वादित्यादिप्रयोगो द्रष्टव्यः ॥ १८ ॥

मुखान्तरेणानवस्थापरिहारेण निरवयवपरमाणुसाधनमाशङ्क्य परिहरतीत्याह—नन्वेवमिति। आक्षेपसङ्गतिर्बोध्या।

## तत्वमुक्ताकलापः

**स्थौल्यहेतुर्गिरेः स्यात्। व्यक्त्यानन्त्येऽपि जात्योः**

## सर्वार्थसिद्धिः

एतच्चोत्तरमनन्तभागाभ्युपगन्तॄणां तत्प्रसञ्जकानां च समानम्।

अण्वंशानामनन्तत्वे गन्तॄणां तदतिक्रमः।
कदाऽपि न स्यात्, किं न स्यात् वेगातिशयवैभवात्?॥
द्युमणेरातपस्सर्पन्नुदयाद्रिशिखामणेः।
तत्क्षणं किं न निर्भाति पश्चिमाद्रिशिखण्डकः?॥

आनन्त्याविशेषे कथं न्यूनाधिकभावः? इत्यत्राह —व्यक्तीति। सत्ताप्रभृति घटत्वादिपर्यन्तानां सर्वासां जातीनां त्रैकालिका-

## आनन्ददायिनी

एतच्चोत्तरमिति। अधिकावयवारब्धत्वं न्यूनावयवारब्धत्वं च परिमाणतारतम्यप्रयोजकमित्युत्तरमित्यर्थः। अनवस्थया अनन्तभागाभ्युपगन्तॄणां तत्प्रसञ्जकानां क्वचिदवयवारब्धत्वमनभ्युपेत्य नित्यपरमाणुवादिनां नैयायिकानां च समानमित्याह–अनन्तभागेति। प्रकारान्तरेण परमाणुसाधनमाशङ्क्य निराकरोति–अण्वंशानामिति। तदतिक्रमः–अण्वतिक्रमः। न स्यादिति—अनन्तावयवत्वेन परमाणोरपि गगनादिवदनन्तत्वादातिक्रमणं न स्यादित्यर्थः। घटादीनामतिक्रमो न स्यादित्येतत्कैमुत्यन्यायसिद्धमिति द्रष्टव्यं। परिहरति—किं न स्यादिति। स्यादेवेति भावः। तत्र हेतुः–वेगातिशयेति। तत्र दृष्टान्तमाह—द्युमणेरिति। सर्पन्—गच्छन्। उदयाद्रिशिखामणेः—उदयं गतस्य। पश्चिमाद्रिशिखण्डकः—पश्चिमाद्रिशिखरगतः।

## तत्वमुक्ताकलापः

**परतदितरता पक्षमासाद्यनन्तं श्रौतोपादानसौक्ष्म्यं न भवदभिमतं तत्प्रथिम्नः श्रुतत्वात् ॥ ११ ॥**

## सर्वार्थसिद्धिः

नन्त[illegible]विशिष्टम्; तथाऽपि न्यूनाधिकवृत्त्यैव परापरभावो युष्माभिः कल्पितः [illegible] स्यादिति भावः। निदर्शनान्तराण्यप्याह—पक्षेति । अनन्ताः पक्षा मासाश्च। तथाऽपि मासापेक्षया द्वैगुण्यं पक्षाणामेष्टव्यम्। आदिशब्देन क्षणप्रभृतिपरार्धादिसंग्रहः। अन्यच्च घटसमुदायाद्घटपटसमुदायोऽधिकः। हिमवद्दक्षिणदेशान्मेरुदक्षिणदेशः। एकात्मदुःखजातादनन्तात्मदुःखजातमित्यादि स्वयमूह्यम्। 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इति जगदुपादानं निरतिशयसूक्ष्मं श्रूयते। अतोऽस्मदाद्यग्राह्यो दुस्त्यजः परमाणुरित्यत्राह—श्रौतेति । न हि सर्वन्यूनपरिमाणत्वं तत्सूक्ष्मत्वं; पूर्वोक्तसर्वगतशब्देन श्रुत्यन्तरैश्च विरोधात्। न च जात्यभिप्रायोऽसौ; एकस्य सर्वोपादानत्वोक्तेः ।

## आनन्ददायिनी

मासापेक्षयेति—एकैकस्य मासस्य पक्षद्वयात्मकत्वादिति भावः। मूले 'व्यक्त्यानन्त्येऽपि जात्योः परतदितरता पक्षमासाद्यनन्तम्' इत्यनन्तरं तथाऽपि न्यूनाधिकभावो दृष्ट इति शेषः। सर्वगतशब्देनेति—विभुशब्देनापीत्यर्थः। असाविति—सर्वगतशब्द इत्यर्थः। एकस्येति—अजामेकामित्यादिनेत्यर्थः। वस्तुतस्तु नेदं वाक्यं प्रकृति-

## सर्वार्थसिद्धिः

सर्वव्यापिस्वतस्सर्वज्ञजगत्कर्तृविषयत्वाच्च वाक्यस्य । सूक्ष्म-शब्दश्च न परिमाणविशेषनियतः । उक्तं च विभ्वीं प्रकृतिं महीयसश्च महदादीन् प्रकृत्य साङ्ख्यैः—'सौक्ष्म्यात्तदनुपलब्धिः' इति । ननु त्रसरेणोरष्टमष्षष्ठो वा भागः परमाणुरिति सर्वानुमतैश्शिल्पिनां शास्त्रैः धर्मशास्त्रैः तन्मूलस्मृत्या च परमाणुसिद्धिस्स्यात्? तन्न; शिल्पादिशास्त्राणां परमाणावतत्पर-

## आनन्ददायिनी

परं; येन परमाणुसिद्धिमाशङ्केतेत्याह—सर्वव्यापीति । उक्तं चेति—

सामान्यतस्तु दृष्टात् अतीन्द्रियाणां प्रसिद्धिरनुमानात् ।

इत्यादिना प्रकृत्यादिसिद्धिमुक्त्वा तेषामनुपलब्धिबाधात्सिद्धिर्न स्यादित्याशङ्क्य अनुपलब्धिमात्रं न बाधकं; अपि तु योग्यानुपलब्धिः; प्रकृते सा नास्ति । कुतः?—

सौक्ष्म्यात्तदनुपलब्धिः नाभावात् कार्यतस्तदुपलब्धेः ।

इति महत्स्वपीन्द्रियाग्राह्यत्वमात्रेण सूक्ष्मपदं प्रयुक्तमित्यर्थः । ननु देवताविग्रहादिप्रमाणनिर्णयार्थम्—

जालसूर्यमरीचिस्थं सूक्ष्मं यत्परिदृश्यते ।
तस्याष्टमो वा षष्ठो वा भागोऽणुः परिकीर्तितः ।

इति । तथा स्वर्णस्तेयादिनिर्णयार्थं स्मृतावपि—

जालसूर्यमरीच्यां यद्भाति सूक्ष्मं त्रुटेः परम् ।
भागोऽष्टमस्तृतीयो वा परमाणुरितीरितः ॥

इत्यादिना शिल्पशास्त्रधर्मशास्त्रेषूक्तेः कथं निराकरणम्? इति शङ्कते—नन्विति । अतत्परत्वादिति—परमाणुविषयतात्पर्याभावादित्यर्थः । ता-

## सर्वार्थसिद्धिः

त्वात् । मानोन्मानादिविशेषनिर्धारणं हि तत्र विधित्सितम् । तत्र हेतुकोक्तानुवादमात्रमिह स्यात् । तत्र च त्रसरेणुतः किञ्चित्सूक्ष्मं भवतु मा वा भूत्; इष्टोपक्रमं विवक्षितसिद्धिरित्यत्राकूतम् । शास्त्रतश्च क्वचिदनन्यथासिद्धात् परमाणुसिद्धावपि तदनुमानभङ्गात्तस्य मानभङ्गः । यथा प्रकृत्याद्यनुमायिनस्साङ्ख्यस्य ॥

शास्त्रैकविषयत्वे च परमाणोर्न सिध्यति ।
नित्यस्पर्शादियोगित्वं भूतानां विकृतित्वतः ॥
अस्पर्शांशसंयत्वात् कतिचित्प्रकृतेरतः ।

## आनन्ददायिनी

त्पर्याभावमेवोपपादयति—मानोन्मानादीति । तत्रेति । इदमुपलक्षणं—त्रसरेणुतस्सूक्ष्मभागपरिकल्पना च स्यादिति द्रष्टव्यम् । तदिदमाह—भवतु मा वा भूदिति—तावतैव माननिर्णयसम्भवादिति भावः । परमाणौ शास्त्रप्रमाणकथनं विवक्षितमित्याह—शास्त्रतश्चेति । ननु यथाकथञ्चित्परमाणुसिद्धिरेवालमित्यत्राह—शास्त्रैकविषयत्व इति । परमाणोर्नित्यस्पर्शरूपरसगन्धवत्त्वं च तदङ्गीकृतं न सिध्यतीत्यर्थः । तत्र हेतुमाह—भूतानामिति । अणूनां भूतविकृतित्वादित्यर्थः । यद्वा भूतानां परमाणुविकृतित्वाद्विकृतिवत्परमाणुरप्यनित्यरूपादिमानित्यर्थ इत्याहुः । इतरे तु स्पर्शादीनां भूतविकारत्वात्प्रकृतिभूतपरमाणौ स्पर्शादयो न स्युरित्यर्थ इति वदन्ति । किञ्चाणूनां निरवयवत्वमपि न सिध्यतीत्याह—अस्पर्शेति । कतिचित्—केचन । अस्पर्शांशसङ्गत्वात् अतः प्रकृतेः सकाशात् ।

## सर्वार्थसिद्धिः

एकैकाण्वंशभागेऽपि भागानन्त्यं प्रचक्षते ॥
निरंशा प्रकृतिस्सैव परिणामविभागिनी ।
अनन्तांशात्मिका चेति व्याहतं साङ्ख्यभाषितम् ।
अत्यन्तभिन्नसत्वादिद्रव्यसंघातप्रधानतः ॥
यथांऽशं विश्वसृष्टौ च न स्यात्रिगुणता क्वचित् ॥ १९ ॥

इति त्रिगुणपरीक्षायां परमाणुकारणतावादभङ्गः.

---

## आनन्ददायिनी

एकैकाण्वंशस्य पृथक्करणेऽपि तस्मिन्नंशेऽपि भागानन्त्यं प्रचक्षते तस्याप्यनन्तावयवत्वं वदन्तीत्यर्थः । तथाच क्वचिदपि पर्यवसानाभावान्निरवयवपरमाणुसिद्धिर्न स्यादिति भावः । साङ्ख्यास्तु प्रकृतिर्निरंशैव परिणामवशाद्विभक्ता सत्यनन्तांशा चेति वदन्ति। तदयुक्तं; सांशत्वनिरंशत्वविभागानां व्याहतत्वादित्याह—निरंशा प्रकृतिरिति । तैरेव साङ्ख्यैरत्यन्तभिन्नसत्वरजस्तमसां सङ्घातः प्रकृतिरित्युक्तं; तदपि दूषयति—अत्यन्तेति । यथांऽशं विश्वसृष्टौ चेति । सत्वांशस्सत्वरूपं कार्यं सृजति रजोंऽशो रजोरूपं तमोंऽशस्तमोरूपं चेत्यर्थः । न स्यादिति । क्वचिदपि कार्ये त्रिगुणता—सत्वादिरूपता न स्यादित्यर्थः । ननु त्रयाणामेकैकस्मिन्नेव कार्ये शुक्लकृष्णादितन्तूनामिव जनकत्वमस्त्विति चेत् मैवं; तैः प्रत्येकं तत्तदंशजनकत्वोक्तेः । किंच तथासत्यत्यन्तभेदाङ्गीकारो व्यर्थः । त्रयाणामेकात्मत्वस्य लाघवेनाभ्युपगन्तुं युक्तत्वात् ॥ १९ ॥

इति त्रिगुणपरीक्षायां परमाणुकारणतावादभङ्गः.

---

## सर्वार्थसिद्धिः

एवं पृथिव्याद्युपादानं चिन्तितम् । अथ उपादानातिरिक्तं कार्यद्रव्यं नास्तीति साध्यते । तत्र अवस्थाभेदमात्रं स्वीकृतम् । अयमेव च सत्कार्यवाद आरम्भणाधिकरणसाध्यः ॥

विसृष्ट्युल्लासविक्षेपाः कार्याणां कथिताः क्वचित् ।
कल्पनीया न सर्वत्र परिणामोक्त्यबाधतः ॥

## आनन्ददायिनी

प्रसङ्गात्मिकां सङ्गतिमाह—एवमिति । नन्ववस्थारूपकार्यभेदाङ्गीकारे तस्यावस्थावतो भेदात् 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यधिकरणविरोधः ; तत्र कार्यमात्रस्याभेदाङ्गीकारादित्याह — अयमेवेति । तत्रापि कार्यद्रव्यस्यैवाभेदस्साधित इत्यर्थः । ननु कार्यं कारणमिति विभाग एव नास्ति ; सतामेव द्रव्याणां विसृष्ट्युल्लासविक्षेपैः पुराणादिष्वाविर्भावमात्राङ्गीकारादुत्पत्त्यभावात्साङ्ख्यपक्ष एव युक्त इत्यत्राह—विसृष्टीति । विसृष्टिः—विसर्गः ; यथा कूर्मादेराकुञ्चितानामवयवानां प्रसारणम्। उल्लासः—विकसनं ; यथा मुकुळीभूतस्य (पद्मादेः) करवीरादेः । विक्षेपः—यथा पिण्डीभूतस्य रजसः सर्वतः स(सम)र्पणं (जालादेः विस्तारकारणम्)। यद्यपि क्वचिद्विसृष्ट्यादय उक्ताः; तथाऽपि ते न सर्वत्र कार्येषु; किन्तु कूर्माद्यङ्गप्रकाशनमिव पूर्वं विसृष्टप्रच्छन्नेष्वेव। तथाच क्वचित्पूर्वमुत्पन्नस्य नित्यस्य वा भगवद्विग्रहादेराविर्भाव इत्यर्थः । तत्र प्रमाणमाह—परिणामेति ' सदेव सोम्येदमग्र आसीत् ' 'तत्सृष्ट्वा' 'प्रकृतेः परिणामास्ते ' 'महदाद्या विशेषान्ताः' इत्यादौ परिणामवचनाबाधाय विसृष्ट्यादेः क्वाचित्कताकल्पनमिति भावः । ननु परिणामवचनमेव विसृष्ट्यादिपरं

## सर्वार्थसिद्धिः

[1]* आविर्भावतिरोभावजन्मनाशविकल्पवत् ।
नित्यं जगदिति स्मृत्या [1]* व्यवस्थाद्वयमीरितम् ।

## आनन्ददायिनी

भवत्वित्याह—आविर्भावेति । व्यवस्थाद्वयं—आविर्भावः जन्मेति व्यवस्थाद्वयमित्यर्थः । तथाच सर्वत्र विसृष्ट्याद्यङ्गीकारे आविर्भावस्यैव

## भावप्रकाशः

[1]* आविर्भावेत्यादि—इदमुत्तरार्धम्; तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । (विष्णुपुराणे १-२२-६०) इति पूर्वार्धम् । अत्र विष्णुचित्तार्याः—

अनन्तस्य न तस्यान्तस्संख्यानं वा (चा)पि विद्यते ।

इति जीवानामसंख्येयत्वं वक्ष्यति । अतः प्रतिसर्गमन्यूनं;

. . . . . . नित्यं तत्कार्यतः पृथक् ॥

अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ।

इति वचनात् प्रवाहरूपेण च नित्यम् । आविर्भावतिरोभावौ—संकोचविकासौ । तावेव जन्मनाशौ इति व्याचख्युः । जन्मनाशावेव विकल्प इति वा ताभ्यां विकल्प इति वा; असत्त्वादिकं न विकल्प इति भावः ।
[1]* व्यवस्थाद्वयं—नित्यत्वव्यवस्थैका जन्मनाशव्यवस्था चापरा ॥

'नान्योऽवयव्यवयवेभ्यो गुरुत्वान्तरकार्याग्रहणात्' इति न्यायवार्तिकम् । अत्र तात्पर्यटीका—'अवयवगुरुत्वाद्गुरुत्वान्तरमवयविनः; तस्य यत्कार्यमवनतिविशेषः तस्याग्रहणादित्यर्थः' इति । अत्र यद्यपि गुरुत्वान्तरकार्याग्रहणस्यानुमानविषयाऽवयवावयव्यभेदसाधकता न संभवति अपक्षधर्मत्वादित्यभिप्रेत्य न्यायवार्तिके 'गुरुत्वान्तरकार्याग्रहणादित्येतन्न

## सर्वार्थसिद्धिः

[1]*तदिह प्रत्यक्षागमबलादेकस्यैव कार्यद्रव्यस्यावस्थाभेदा-
दुपादानोपादेयभाव इति स्थिते द्रव्यान्तरं प्रागसदागन्तुकं

## आनन्ददायिनी

सार्वत्रिकत्वाद्व्यवस्था न स्यादिति भावः। तदिहेति—मृदयं कुम्भः
तन्तवः पट इति प्रत्यक्षं, सदेवेत्याद्यागमः। कार्यद्रव्यस्येति—तस्मिन्नपि

## भावप्रकाशः

कथञ्चिदपि पक्षेण संबध्यते' इत्यादिना दूषितम्; तथाऽपि प्रत्यक्षा-
गमाभ्यां उपादानोपादेययोरभेदसाधने कार्योपादानभेदे गुरुत्वान्तर-
कार्यप्रसङ्गः इति विपक्षे बाधकतर्कविषया गुरुत्वान्तरकार्या-
ग्रहणस्यावयवावयव्यभेदस्थापकत्वे प्राचामाशयमाविष्कुर्वन् मूलमवता-
रयति [1]*तदिहेत्यादिना। अत्र न्यायवार्तिकं 'समहीनाधिकप्रसङ्ग
इति चेत्—यदि तावत्कारणगुरुत्वैस्समं कार्यगुरुत्वं; यावद्द्विपलाभ्याम-
संबद्धेऽवनमनं द्विस्तावत्संबद्धे सति स्यात्। अथ कारणगुरुत्वाधिकं
कार्यगुरुत्वं तथाऽप्यधिकं प्रसज्येत; अथ कारणगुरुत्वाद्धीनं कार्य-
गुरुत्वं; तथाऽपि विशेषो गृह्येत। न त्विदमास्ति। तस्मान्न
कार्यगुरुत्वमस्ति। न। कार्यकारणगुरुत्वेयत्तानवधारणात्—यद्येत-
दवधारितं स्यात् एतावत्कारणगुरुत्वमेतावत्कार्यगुरुत्वमिति तदैतद्युज्यते
वक्तुं समाधिकहीनकार्यप्रसङ्ग इति। तत्त्वनवधारितमियत्कारणे गुरुत्वमि-
यत्कार्ये गुरुत्वमिति। यदि न कार्यकारणगुरुत्वमनवधारितं योऽयं
प्रत्ययस्तुलयोन्मीयमाने द्रव्ये द्विपलं पञ्चपलमिति न प्राप्नोति। न न
प्राप्नोति। द्रव्यसमाहारगुरुत्वावधारणात्। यदिदं भवता मन्यते द्विपलं
पञ्चपलमिति; नात्र कार्यकारणगुरुत्वे अवधार्येते; किन्तु आचरमादाच
परमाणोश्च द्रव्यसमाहार उन्मीयते। तत्र मनुष्यधर्मणो न युक्तं वक्तुं

## तत्वमुक्ताकलापः

**कार्योपादानभेदे न कथमधिकता गौरवादेः**

## सर्वार्थसिद्धिः

**वदतः प्रतिवक्ति—कार्येति। कार्यद्रव्यस्य स्वोपादानद्रव्याद्भेदे सति *[1]द्विपलिकैकपलिकन्यायेन तन्तुगुरुत्वं समं न्यूनमधिकं**

## भावप्रकाशः

इयत्कारणगुरुत्वमियत्कार्यगुरुत्वमिति। न च समाहारः कारणम्; अपि तु अनारब्धकार्यं चरमद्रव्यं कारणमिति, इति। 'द्रव्यसमाहार इति—कार्यकारणद्रव्यसमाहारो मृत्कणमृच्चूर्णशर्कराकपालकुम्भसमाहार इत्यर्थः' इति तात्पर्यटीकायां वाचस्पतिः। एवं 'निरनुमानं तर्हि कार्यगुरुत्वम्—यदि गुरुत्वान्तरवद्द्रव्योपचये सति कार्यभेदो न गृह्यते कथं प्रतिपद्येत? इति। क एवमाह कार्यगुरुत्वं (कार्यं) न गृह्यत इति? यदि गृह्यते किं तत्? पतनं। न हि कार्यगुरुत्वमन्तरेण कार्यपातेऽन्यो हेतुरस्ति। तस्माद्गुरुत्वान्तरवत्कार्यमिति। एतेन तुलावनतिविशेषान्न कार्यगौरवमिति प्रत्युक्तम्। अथ मन्यसे; कारणगुरुत्वेनैव कार्यं पात्यते न कार्यगुरुत्वमस्ति; अतः कार्यपातस्यान्यनिमित्तत्वान्न सिध्यति गुरुत्वान्तरवत्कार्यमिति; न; कार्यकारणयोरसंयोगात्' इत्यादिन्यायवार्तिकमपि। अस्मिंश्च संदर्भे कारणकार्यगुरुत्वेयत्तानवधारणेऽपि कारणगुरुत्वातिरिक्तकार्यगुरुत्वस्य कार्येऽङ्गीकारेण गुरुत्वाधिक्ये पतनाधिक्यस्यान्यत्र पटद्वयोन्मानस्थले दर्शनेन तद्वत्तन्तुतत्कार्यपटसमुदायोन्मानेऽपि पतनाधिक्यं न्यायवार्तिककारादिमते दुर्वारमेवेत्याह—

*[1] **द्विपलिकेत्यादिना**। न च पटद्वयोन्माने द्रव्यसमाहारद्वयगतगुरुत्वस्यावधारणमेकपटोन्माने चैकसमाहारगुरुत्वस्येति न दोष

## सर्वार्थसिद्धिः

**वा पटगुरुत्वं च संभूय पतनातिरेकं कथं न कुर्यात्? तद्करणे कश्चिदपि हेतुर्न सिद्ध्येदित्यर्थः। तथा हि—न तावदवयविनि गुरुत्वं न जायते; परमाणुगुरुत्वपरिशेषप्रसङ्गात् ।**

## आनन्ददायिनी

कारणगुणप्रक्रमेण गुरुत्वाङ्गीकारादिति भावः । संभूय—संहत्य । न सिध्येदिति—संभावनायां लिङ् । परमाणुगुरुत्वेति—द्व्यणुकादीना-

## भावप्रकाशः

इति वाच्यं; अन्यत्रावयविमात्रगतरूपादिगुणस्यैव प्रतीत्या भवन्मतेऽत्रावयवावयव्येतदुभयगतगुणप्रतीत्यङ्गीकारस्यानुचितत्वात्। तथासति अतिरिक्तमवयविनमनभ्युपगम्यावयवमात्रसमाहारगुणप्रतीतेस्सिद्धान्त्यभिमताया एव सर्वत्राङ्गीकारस्य युक्तत्वात् । किरणावल्यामुदयनेनावयवापेक्षयाऽवयविनोऽधिकपरिमाणत्वनियमादित्युक्तया तद्रीत्या अधिकगुरुत्ववत्तानियमस्याभ्युपगन्तव्यत्वेन कार्यगुरुत्वावधारणस्य सामान्यतस्संभवाच्च। यद्यपि न्यायवार्तिके कार्यगुरुत्वेन कारणगुरुत्वस्य प्रतिबन्ध पक्ष एक एव "यदि कार्ये पतति कारणमवतिष्ठेत प्रतिपद्येमहि कार्यगुरुत्वेन कारणगुरुत्वं प्रतिबद्धमिति। न त्विदमस्ति। अतोऽयुक्तमेतत्। अनाधारत्वप्रसङ्गाच्च—कार्ये पतति न कारणं पतेदिति कार्यमनाधारं स्यात्" इति ग्रन्थेन दूषितः; अथापि न्यायवार्तिके पूर्वं 'द्रव्यसमाहारगुरुत्वावधारणात् आचरमादा च परमाणोश्च द्रव्यसमाहार उन्मीयते' इत्युक्त्याऽवयवगुरुत्वप्रतीतेरङ्गीकारेणावयविगुरुत्वप्रतिबन्धपक्षोऽपि संभावित इति भावेन पक्षद्वयं दुदूषयिषुर्विकल्पयति—

## सर्वार्थसिद्धिः

तथा च त्वयाऽनभ्युपगमात् अयुक्तेश्च । कार्यगुरुत्वादेव द्व्यणुगुरुत्वं कल्पयसि । ज्ञातस्य च न स्वभावतः पतनहेतुत्वाभावः । प्रतिबन्धात्कार्यानतिरेक इति चेत्; [1]* किमयं प्रतिबन्धोऽवयविगुरुत्वस्य, उतावयवगुरुत्वस्य? नाद्यः; परमाणुगुरुत्वस्यैव पतनहेतुत्वप्रसङ्गात् । तथा सति गुरुत्वात्पतनं द्रवत्वात्स्यन्दनमिति तत्तत्क्रियावदिष्ट[2]गुरुत्वादिकल्पनाभङ्गापाताच्च । अतोऽत्र वरमवयविनि गुरुत्वानुत्पत्तिकल्पनम् । तत्र चोक्तो दोषः । न द्वितीयः; [3]* कदाचिन्निष्कम्पेऽवयविनि शाखाफलहस्तादिल-

## आनन्ददायिनी

मवयवित्वादिति भावः । इष्टापत्तिं निरस्यति—तथाचेति । अयुक्तिमेवाह—कार्यगुरुत्वादेवेति । जातस्य चेति—कार्ये उत्पन्नस्य गुरुत्वस्येत्यर्थः । परमाणुगुरुत्वस्यैवेति—द्व्यणुकादिगुरुत्वानामवयविगुरुत्वत्वादिति भावः । इष्टापत्तिं निरस्यति—तथा सतीति । ततो वरमिति—गुरुत्वकार्याभावादिति भावः । इष्टापत्तौ बाधकमाह—तत्र चोक्तो दोष इति।

## भावप्रकाशः

[1]* किमयं प्रतिबन्ध इत्यादिना ॥

[2]* गुरुत्वादिकल्पनाभङ्गेत्यादि—स्वाश्रयसमवेतद्रव्यत्वसंबन्धेनावयवगुरुत्वस्य कार्यद्रव्यपतनं प्रति हेतुत्वाङ्गीकारेण न्यायवार्तिकोक्तरूपादिपतनापत्तिशङ्काया अनुन्मेषादिति भावः ॥

अवयवगुरुत्वप्रतिबन्धपक्षे न्यायवार्तिकोक्तदूषणद्वयं न लगतीत्यभिप्रेत्य पृथग्दूषयति [3]* कदाचिदित्यादि ॥

## सर्वार्थसिद्धिः

म्बनाभावप्रसङ्गात् । तथा च कथमवयव्यपि तत्र लम्बेत? [1]*संयोगान्त(रा)र दर्शनाल्लम्बमानोऽवयवी स्वावयवमपि लम्बयतीति चेन्न; सर्वावयवलम्बनप्रसङ्गात् । संघातवादिनस्तु यथाऽर्हं (अ)प्रतिबन्धां(द्धां)शे अल(ल)म्बनोपपत्तिः । कार्यगुरुत्वोत्पत्तौ कारणगुरुत्वं नश्यतीति चेन्न; [2]*अपसिद्धान्तात्; रूपादिष्वपि

## आनन्ददायिनी

परमाणुगुरुत्वकल्पना न स्यादिति दोष उक्त इत्यर्थः । तथा चेति— अवयवलम्बनाभावे तत्समवेतावयविनो लम्बनासंभवादिति भावः । अप्रतिबद्धगुरुत्ववद्द्रव्यान्तरसंयोगात् बद्धपाषाणलतान्यायेनावयवी लम्बतामित्यत्राह—संयोगान्तरेति । संयोगान्तराद्दर्शनादिति क्वचित्पाठः । तदा संबन्धविशेषादवयवी स्वावयवमपि लम्बयतीति कल्प्यते प्रत्यक्षदर्शनादित्यर्थः । सर्वावयवेति—अविशेषादिति भावः । रूपादिष्विति । नन्वस्तु रूपादिष्वापादितः प्रसङ्गः को दोषः? इति चेन्न; तथा सति

## भावप्रकाशः

[1]* संयोगान्त(रा)रदर्शनादिति—एतेन यथा स्वसंयुक्तफलादिगतं गुरुत्वं स्वाश्रयसंयोगसंबन्धेन तूलादिपतनं प्रति हेतुः तद्वदवयविगुरुत्वस्य स्वाश्रयसमवायित्वसंबन्धेन अवयविपातं प्रत्यपि कारणत्वाङ्गीकारेण न्यायवार्तिकोक्तानाधारत्वादिदूषणं न संभवतीति सूचितम् ॥

[2]* अपसिद्धान्तादिति—तदुक्तमुद्योतकरेण—'यदि कार्यगुरुत्वेन कारणगुरुत्वं विनाश्येत कार्यद्रव्यविनाशात् कारणानां विभक्तानां पातो न स्यात् । गुरुत्वमेव च न स्यात् । यदि कार्यगुरुत्वेन कारणगुरुत्वं विनाश्यते अपि तर्हि न क्वचिद्गुरुत्वं स्यात्; न हि कस्यचित् परमाणोरतीतं कार्यं नास्ति अतोऽगुरवः परमाणवस्स्युः । परमाणुषु च गुरुत्वाभावात् कार्यगुरुत्वं

## सर्वार्थसिद्धिः

**तथा प्रसङ्गात्। अथ कार्यगुरुत्वस्यातिमन्दत्वात् सूक्ष्मं पतन-वैषम्यं दुर्ग्रहमिति; तदपि न; मान्द्यकारणादृष्टेः, कल्पकासंभवाच्च।**

## आनन्ददायिनी

तन्तूनां विभागेन पटनाशे उत्पादकाभावाद्रूपादिकं न स्यात्। न च कारणगुणप्रक्रमेणोत्पत्तिः; परमाणावपि नाशात्। न च नित्यत्वात्परमाणुगतानां न नाश इति वाच्यं; तथा सति पटदशायां तन्तूनां प्रत्यक्षता न स्यात्। न चेष्टापत्तिः; अस्मिन् पटे त एव तन्तव इति सर्वानुभवविरोधादिति भावः। कल्पकासंभवाच्चेति—नन्ववय-

## भावप्रकाशः

कुत उत्पद्येत' इति। ननु बहुभिस्तन्तुभिः न्यूनगुरुत्ववत्तया दृष्टैरारब्धे पटे कार्ये गुरुत्वमान्द्यासंभवेऽपि कारणेषु गुरुत्वं मन्दमेव दृश्यते इति कारणगुरुत्वस्य मन्दतया न पतनाधिक्यप्रसङ्गः। एवमभिप्रेत्य उद्योतकरेण 'तस्मादप्रतिषेधोऽयं कार्यगुरुत्वैः कारणगुरुत्वस्य विनाशप्रतिबन्धाविति' प्रतिबन्धविनाशपक्षाङ्गीकारेण गुरुत्वान्तरकार्याग्रहणादिति हेतुदूषणं न संभवतीत्यभिधाय 'अतः पूर्व एव प्रतिषेधो नानैकान्तादिति कार्यकारणगुरुत्वानवधारणाच्च' इति हेतुद्वयेन स्वमते दूषणोपसंहारः कृतः। तत्रानैकान्तादिति हेतुः पूर्वं तत्रैव स्फुटीकृतः— 'अवनमनविशेषानाधारत्वान्न गुरुत्वान्तरवत्कार्यद्रव्यवती तुलेति' प्रस्तुत्य 'अयमप्यनैकान्तत्वादहेतुः गुरुत्वान्तरवद्द्रव्यसंनिपाते सत्यवनमनाविशेषानाधरत्वस्य दृष्टत्वात्—यथा गुरुत्ववति द्रव्ये उन्मीयमाने त्रुटिभूते रजसि सन्निपतितः इति महागुरुत्वे चोन्मीयमाने गुरुत्वमात्रोपहितानामवनमनविशेषं न करोति' इति। अत्र 'गुरुत्वमात्रोपहितानामणूनामवनमनविशेषं न करोति तुल, इति तात्पर्यटीका; इति शङ्कामपनुदन् उपसंहरति—

## तत्वमुक्ताकलापः

### स्वकार्यं नान्यत्वं नामसंख्याऽव्यवहृतिधिषणाकार-

## सर्वार्थसिद्धिः

[1]*अतस्तन्तुतत्कार्यपटसमुदायोन्माने पटद्वयोन्मान इव गुरुत्वान्तरकार्यं दुस्त्यजम्। आदिशब्देन द्रवत्वगन्धादिसंग्रहः। स्वकार्य—तदुचितं कार्यमित्यर्थः। तथाऽप्यनन्यथासिद्धभेदकभूम्ना भेदसिद्धौ गुरुत्वान्तरकार्यादर्शनं कथञ्चिदन्यतरप्रतिबन्धेन नेयमित्यभिप्रायेण शङ्कमानं प्रत्याह—नान्यत्वमिति। यद्यपि नामभेदाभेदावर्थभेदाभेदयोरप्रयोजकौ; तथाऽपि पर्यायातिरिक्तो विशेष-

## आनन्ददायिनी

व्यातिरेक्यकल्पकमेव कल्पकमिति चेत् न; तस्यैवासिद्धेरिति भावः। रसादिरादिशब्दार्थः। कल्पकमाशङ्कते—तथापीति। अत्र—तन्तुपट-

## भावप्रकाशः

[1]*अतस्तन्तुतत्कार्यपटसमुदायेत्यादिना। अयं भावः—अत्र तात्पर्यटीकायां 'अणूनामवनमनविशेषं न करोति तुला' इत्यनेन अणुगुरुत्वमात्रस्य दुर्ग्रहताप्रतीतावपि 'द्रव्यसमाहारगतगुरुत्वावधारणात्' इत्युपक्रम्य 'आचरमादाच परमाणोश्च द्रव्यसमाहार उन्मीयते। तत्र मनुष्यधर्मणो न युक्तं वक्तुं इयत्कारणगुरुत्वमियत्कार्यगुरुत्वमिति। न च समाहारः कारणं अपि तु अनारब्धकार्यं चरमद्रव्यं कारणमिति' इति न्यायवार्तिकविवरणतात्पर्यटीकायां 'द्रव्यसमाहार इति मृत्कणमृच्चूर्णशर्कराकपालकुम्भसमाहार' इत्यनेन मृत्कणादिगुरुत्वावधारणं स्फुटं प्रतीयते। तत्र च अनारब्धकार्यस्य चरमद्रव्यस्य कारणत्वाङ्गीकारेऽपि कुम्भकारणपरम्परानन्तःपातिनः कुम्भस्यचोभयोरुन्माने गुरुत्वाधिक्यप्रतीतिवत्

## सर्वार्थसिद्धिः

णविशेष्यभावानर्हो वाचकभेद इह नामभेदः। स च सिंहव्याघ्र-शब्दवत् स्ववाच्यं भिन्द्यात्। सङ्ख्याभेदोऽप्येकस्यैव द्वितीयादि-योगाद्यद्यपि स्यात्; तथाऽपि नैवमत्र; बहवस्तन्तवः एकः पट इति विभजनात्। व्यवहृतिरिहार्थक्रियासिद्ध्यर्थो व्यापारः। पटाद्यर्थं तन्त्वादय उपादीयन्ते, पटादयस्त्वाच्छादनाद्यर्थम्। न च तन्त्वादिमात्रे पटादिधीः पटादिषु वा तन्त्वादिधीरिति धिषणाभेदः। आकारभेदश्च व्यवस्थिताश्रयो वृत्तचतुरश्रत्वादिः।

## आनन्ददायिनी

स्थले। नैवं—द्रव्यान्तरयोगनिमित्तव्यवहारो न भवतीत्यर्थः। तदेव दर्शयति—बहव इति।

## भावप्रकाशः

कुम्भकारणपरम्परान्तःपातिद्रव्यकुम्भैतत्समाहारोन्मानेऽपि कार्यकारण-योर्भेदपक्षे गुरुत्वाधिक्यप्रतीतिरनिवार्या। एवं 'त्रुटिभूते रजसि' इति वार्तिके 'अणूनां' इति तट्टीकायां चोक्त्या ततोऽपि महतां मृत्कणा-दीनामवनमनविशेषकारित्वं तुलायां वार्तिकतट्टीकाकाराभ्यामङ्गीकृतप्रा-यमेवेति कार्यकारणयोर्भेदे गुरुत्वकार्यावनमनमप्यपरिहार्यं इति। कुम्भो-दाहरणं परित्यज्य पटोदाहरणप्रदर्शनं तु 'पटवच्च' इति सूत्रोक्तादिशा चूर्णाद्युपमर्दमन्तरेण अनेककारणतन्तुसंघातात्मकत्वेन पटस्य सर्वानुभव-सिद्धत्वेन कार्यकारणयोरभेदस्थिरीकरणाय। एवं न्यायवार्तिके 'न पूर्वोत्तरकार्यद्रव्ये समानकालदेशे मूर्तत्वात् घटादिवत्' इत्यारभ्यार-म्भकत्वपक्षदूषणमनुचितमिति बोधयितुमपि। एतच्चोत्तरश्लोकसर्वार्थसिद्धौ विवेचयिष्यते। एवं 'नो चेदंशांशिनोस्स्यात्' इत्यादिना वक्ष्यमाण-दूषणमपि तत्पक्षेऽपरिहार्यं बोध्यम्॥

## तत्वमुक्ताकलापः

**कालादिभेदैः । द्रव्याभेदेऽप्यवस्थान्तरत इह तु ते पत्रताटङ्कवत्स्युः**

## सर्वार्थसिद्धिः

पूर्वकालीनास्तन्त्वादयः पटादयस्तु पश्चाद्भाविन इत्येवंविध इह कालभेदः । आदिशब्देन कारणभेदादिसंग्रहः । अंशुप्रभृतयस्तन्त्वादीनां; पटादीनां तु तन्त्वादय इति नियतोऽत्र कारणभेदः । कार्यभेदश्चैवं नियत एव । कारणस्यैव च कार्यत्वे कारकव्यापारवैयर्थ्यं स्यादिति भेदहेतवः । एषामन्यथासिद्धिमाह—द्रव्याभेदेऽपीति । तुशब्दोऽवधारणे । उपादानोपादेयतया अवस्थाद्वयवति द्रव्ये घटपटवद्भेदं साधयितुं न शक्नुवन्तीत्यर्थः । अत्र दुस्तरप्रतिबन्द्यभिप्रायेण निदर्शयति—पत्रताटङ्कवदिति । पत्रस्य हि *कुण्डलितस्य नियतं नामान्तरं दृष्टम् ।

## आनन्ददायिनी

कारणभेदादीत्यनेन कार्यभेद उच्यते । कार्यभेदश्चैवमिति—पटस्याच्छादनरूपं कार्यम्; तन्तूनां पटादिरूपं कार्यमित्यर्थः । एतेषामनुग्राहकं तर्कमाह—कारणस्यैवेति । अनुकूलतर्काभावान्न साधक इत्याह—एषामिति । दुस्तरेति—तथा च तत्र व्यभिचारोऽपीति भावः ।

## भावप्रकाशः

*कुण्डलितस्येति—एतेनाहिकुण्डलाधिकरणे 'पूर्ववद्वा' इति सिद्धान्तसूत्रेण 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इति पूर्वपक्षोक्ताहिकुण्डलनयस्य ब्रह्मणि नाङ्गीकारसंभव इति स्थापनेऽप्यचिद्विषये तत्स्वीकारस्संभवतीति सूचितम् । तेन न्यायवार्तिके 'अथाऽपि सर्पकुण्डलि-

## सर्वार्थसिद्धिः

सफलश्चावस्थान्तरेण कारकव्यापारः। न ह्यत्रावयव्यन्तरोत्पत्तिः; आकुञ्चनप्रसारणपद्मसंकोचविकासादिष्वपि तत्कल्पनाप्रसङ्गात्। *नचैकेनावयवेनावयव्यारम्भः; असमवायिकारणासंभवात्। अवयवावयवसंयोगस्तत्रासमवायिकारणमिति चेन्न; तस्यान्यार्थत्वात्। अन्यथा अंशूनां तन्तुवत् पटाश्रयत्वमपि स्यात्। न च तद्युक्तम्; आरब्धकार्यैरवयवैस्तदैवावयव्यन्तरारम्भानभ्युपगमात्। तत्र हि सप्रतिघत्वविरोधाद्बिभेषि। एवं संप्रतिपन्नावस्थाभेदमात्रानादरेण द्रव्यान्तरकल्पनेऽपि तमेव विरोधं प्रसञ्जयति-

## आनन्ददायिनी

व्यभिचारस्थलान्तरमप्याह—आकुञ्चनेति। असमवायिकारणेति—अन्यथा द्व्यणुकमेकस्मादेव परमाणोरुत्पद्येतेति भावः। अवयवावयवेति—अवयवस्य चेदवयवास्तेषां संयोग इत्यर्थः। अन्यार्थत्वादिति—अवयवजनकत्वेन पटरूपवदन्यथासिद्धत्वादित्यर्थः। अन्यथेति—कार्यद्रव्यस्यासमवायिसामानाधिकरण्यनियमादिति भावः। आरब्धकार्यैरिति—द्रव्यासमवायिकारणाश्रयस्य समवायिकारणत्वनियमादवयवावयवानां आरब्धावयव्यात्मकावयवतया तत्काल एवावयव्यन्तरजनकत्वं न संभवतीत्यर्थः। अनभ्युपगमे हेतुमाह—तत्रेति। यद्वा—नचैकावयवे-

## भावप्रकाशः

काद्युदाहरणं स्यात्' इत्यवयवावयव्यभेदवादिशङ्कामुपाक्षिप्य यद्दूषणं तत्सिद्धान्तेऽलग्नकमिति बोधितम्॥

* नचैकेत्यादि। उक्तं च किरणावल्यामुदयनेन—'तत्रैकमनारम्भकमवयवसंयोगानुपपत्त्यावसमवायिकारणाभावात्' इति॥

## तत्त्वमुक्ताकलापः

**नो चेदंशांशिनोस्स्यात्प्रतिहतिः उभयोः स्पर्श-वत्त्वाविशेषात् ॥ २० ॥**

## सर्वार्थसिद्धिः

नो चेदिति । अंशांशिनोः—अवयवावयविनोरित्यर्थः । उक्त-प्रसङ्गे तदभिमतमेव हेतुमाह—उभयोरिति । द्वयोर्द्रव्ययोरन्य-तरस्य वा स्पर्शहीनत्वे मिथः प्रतिरोधो नास्ति; इह तु न तथेत्यभिप्रायेणोभयोरित्युक्तम् । अवयवावयविनोरेकत्र वृत्तिर्ना-स्तीति चेत्; समवायिदेशैक्याभावेऽपि संयोगिदेशैक्य[1]*मङ्गी-करोषि; तत्र कथं तन्त्ववष्टब्धनभःप्रदेशे पटसंयोगः? माभू-दिति चेत्; मूर्तामूर्तसंयोगविलोपप्रसङ्गः; मेरुमन्दरादीना-

## आनन्ददायिनी

त्यारभ्य पत्रताटङ्कादिस्थलपरिहाराशङ्कापूर्वकं नो चेदित्यस्यावतारिका-ग्रन्थः । नन्ववयवस्य स्वावयववृत्तित्वं अवयविनोऽवयववृत्तित्वमिति नैकत्र वृत्तित्वमिति शङ्कते—अवयवावयविनोरिति । संयोगिदेशैक्यमिति—एकत्र नभस्स्थलेऽवयवावयविनोस्संयोगसंबन्धवृत्तिरिति भावः । मूर्ता-मूर्तेति—यद्यपि कार्यानारम्भकाले परमाण्वाकाशसंयोगे न विरोधः; तथाऽपि घटादीनां मूर्तानाममूर्तैस्संयोगं ब्रवीषि संयोगजसंयोगं स न स्यादिति भावः । यदि स्पर्शवतोस्सप्रतिघत्वविरोधो न स्यात्तत्राह—मेरुमन्दरेति । ननु सप्रतिघत्वाविरोधे नीरक्षीरयोरेकनभःप्रदेशवृत्तिः

## भावप्रकाशः

[1]* अङ्गीकरोषीति—‘ द्रव्याणामेकत्र समवायेन समानदेशतां व्यासेधामो न तु संयोगेन ’ इत्याद्युदाहृतवाचस्पतिवाक्ये व्यक्तमेतत् ॥

## तत्वमुक्ताकलापः

इत्थं वृत्त्यादिखेदो न भवति

## सर्वार्थसिद्धिः

मप्यविभक्ताकाशप्रदेशवृत्तावविरोधस्स्यात् । नीरक्षीरादिमेलने का वार्ता? हन्त! स्वसिद्धान्तं प्रस्मृत्य पृच्छसि । एतेन भूमावुन्मज्जति निमज्जतीत्यादि सिद्धनिदर्शनमपि विहतम् ; तस्माद्वयवावयव्यतिरिक्तविषय एव सप्रतिघत्वविरोधव्यवस्थापनमपि निर्मूलमिति ॥२०॥

परपक्षे प्रसञ्जितानां दोषाणामभावात् स्वपक्षस्य सम्यक्त्वमाह—इत्थमिति । इत्थं—अवस्थाभेदमात्रेण निर्वाहे सतीत्यर्थः । यद्वा त्वत्पक्षवदिति । उक्तस्सप्रतिघत्वविरोध इह वृत्तेः खेदः ।

## आनन्ददायिनी

कथं? भूमौ सिद्धादीनां निमज्जनं कथम्? तस्मात् स्पर्शवतां सप्रतिघत्वव्याप्तिरवयवावयविव्यतिरिक्तस्थले नीरक्षीरादिस्थल इव संकुचिता न वर्तत इत्यत्राह—नीरक्षीरेति । स्वसिद्धान्तं प्रस्मृत्येति—नीरक्षीरादिष्ववयवविभागेन परस्परानाक्रान्त प्रदेश एव परस्परावयवानां वृत्तिस्सिद्धा । निमज्जनादावपि भूविभागेन प्रवेशः; झडिति जलनिमज्जने विभक्तजलसन्धानन्यायेन पुनस्सन्धानम् । तच्च सूक्ष्मकालत्वात् ज्वालानाशन्यायेन न प्रतीयते इति किरणावल्ल्यादौ प्रतिपादितमित्यर्थः । तस्मादिति—तथाच संकोचे न प्रमाणमिति भावः ॥२०॥

संगतिं दर्शयति—परपक्ष इति । दृष्टान्तपरत्वे स्वारस्यादाह—यद्वेति । अथ प्रत्यवयवं अविभागेन वर्तते उत विभागेन? इति

## सर्वार्थसिद्धिः

अवयवेषु वृत्त्यनुपपत्तिर्वा; यदि प्रत्यवयवमविभागेनावयवी वर्तेत तदैकावयवदर्शनेऽप्यवयव्युपलभ्येत जातिरिव प्रत्याधारम्। अथ विभज्य; अवयवातिरिक्तांशभेदेना (त्व) नवस्थापातः। बलवत्प्रमाणोपनीतेऽर्थे संप्रतिपन्नवत् वृत्त्यनुपपत्तिर्विलीयत इति चेन्न; प्रमाणबलस्यात्र निरस्तत्वात्। आदिशब्देनोत्पत्तिनाशानुपपत्तिस्संगृह्यते। तथा हि—पृथुतरपटनिर्माणप्रक्रमे द्वितन्तुकादिपटपङ्क्तिरुत्पद्यते न वा? न चेत्; बुद्धिशब्दान्तरादिरवस्थाभेदादेवेति सिद्धं स्यात्। उत्पद्यते चेत्; त्रितन्तु[illegible]द्यारम्भदशायां पूर्वपूर्वं तिष्ठति न वा? पूर्वत्र तदनारम्भः; आरब्धकार्यैस्तदानीमवयव्यन्तरानारम्भात्। न च द्वितन्तुकादिस्तन्त्वन्तरसहितास्त्रितन्तुकाद्यारम्भक इति युक्तम्; इह तन्तुषु पटः इत्यादिस्वाभिमतव्यवहारविरोधात्।

पूर्वसिद्धपटैस्सार्धं तन्तुभिः पटसंभवे।

## आनन्ददायिनी

विकल्पमभिप्रेत्य आद्यं दूषयति—यदि प्रत्यवयवमिति। द्वितीयं दूषयति—अथेति। वि(अवि)भागस्त्ववयवमादायैव। पूर्वावयववृत्त्यर्थमवयवान्तरस्वीकारे तस्मिन्नप्यवयवसंबन्धस्य वक्तव्यतया तत्राप्युक्तविकल्पेनावयवान्तराङ्गीकारे अनवस्थेति भावः। संप्रतिपन्नवदिति—संयोगादिवदित्यर्थः। आरब्धकार्यैरिति—तथा सति कार्योत्पत्तेरविरामप्रसङ्गादिति भावः। नचेति—द्वितन्तुकपटादेस्तन्त्वन्तरस्य चानारब्धकार्यत्वादिति भावः। इहेति—इह पटः तन्तौ च पट इति व्यवहारप्रसङ्गादिति भावः। द्वितन्तुकपटादिभिः पटान्तरोत्पत्त्यङ्गीकारे उपलम्भविरोधोऽपीत्याह—पूर्वसिद्धेति। समीक्ष्येतेति—न दृश्यत इत्यर्थः। क्रियातिपत्तौ

## सर्वार्थसिद्धि

पटपङ्क्तिस्समीक्ष्येत क्रमादाधिक्यशालिनी ॥
प्राक्सिद्धानां पटादीनामुत्तरोत्तरजन्मनि ।
अहेतुको विनाशश्च स्थिरपक्षे न युज्यते ॥

न चेत्; उपलम्भविरुद्धनाशसन्ततिकल्पनाप्रसङ्गः । [1]* एवमेक-द्वित्र्यादितन्त्वपकर्षणदशायामपि खण्डपरम्परोत्पत्ति-नाशपर-म्पराक्लृप्तिः क्लिष्टतरा । लाघवशालिनि संघातमात्रपक्षे राशि-न्यायान्नासौ दोषः । ननु गौरवभयादवयविपरिहारे सौगत-वत् स्वरूपविशेषमालम्ब्य तन्त्वादीनां संयोगोऽपि त्यज्यता-

## आनन्ददायिनी

लिङ् । ननु पूर्वपूर्वेषां द्वितन्तुकानां त्रितन्तुककाले नाशात् पटपङ्क्त्य-नुपलम्भो न दोष इत्याशङ्क्याह—प्राक्सिद्धानामिति । स्थिरपक्षे इति—तथा च बौद्धपक्षपरिग्रहप्रसङ्ग इति भावः । द्वितीयं दूषयति—न चेदिति । न युज्यते इत्येतन्न चेदित्यर्थः—युज्यते चेदिति यावत् । तथा च नाशसन्ततिरनुपलम्भबाधितेति भावः । केचित्तु—प्राक्सिद्धाना-मित्यारभ्य न युज्यते इत्यन्तं पूर्वशेषतया व्याख्याय; द्वितीयं दूषयति—न चेदितीत्याहुः । एवमिति—अनुपलम्भबाधितेऽपीत्यर्थः । कल्पनीयेति शेषः । लाघवशालिनीति—अतिरिक्तद्रव्याभावेन लाघवादिमतीत्यर्थः ।

## भावप्रकाशः

[1]* एवमित्यादि—यथाऽऽह किरणावल्यामुदयनः—'कथं ताह चरमादितन्त्वपकर्षणेऽल्पतरतमादिपटोपलम्भ इति चेत्; प्रतिबन्धक-विगमेऽवस्थितसंयोगेभ्यः खण्डपटोत्पत्तेः आद्यादितन्त्वपकर्षणे त्वयाऽ-प्येषैव रीतिरनुसर्तव्या । अन्यथा द्वितन्तुकादिपटपर्यन्तसमस्तकार्यविनाशे

## तत्वमुक्ताकलापः

**न च नः कल्पनागौरवं स्यात्**

## सर्वार्थसिद्धिः

**मित्यत्राह—नचेति। अत्र हि [1]*परैरप्यसमवायिकारणतयाऽभिमता दृष्टा च संयुक्तावस्था स्वीकृतेति नास्माकमिह काचित्कल्पना; कुतस्तद्गौरवं संभवेदिति भावः। स्वलक्षणसमुदायवादिनाऽपि नैरन्तर्यरूपोऽतिशयः कश्चिदिष्यते; अन्यथा दूरस्थवदेकताभ्रान्तिः पुञ्जबुद्धिर्वा न स्यात्। [2]*त्वमपि विभू-**

## आनन्ददायिनी

अवयविवादिभिरपि तन्त्वादिसंयोगाङ्गीकारान्नास्माकमेव संयोगाङ्गीकारे गौरवमित्याह—अत्र हीति। किंचात्र संयोगस्य प्रत्यक्षासिद्धत्वान्न कल्पनेत्याह— दृष्टा चेति। स्वलक्षणवादिनाऽपि स्वलक्षणातिरिक्तं संयोगस्थानिकं व्यवहारार्थमङ्गीकृतमित्याह—स्वलक्षणेति। दूरस्थवदिति—दूरस्थपदार्थेष्विव समीपस्थपदार्थेष्वपि पुञ्जबुद्धिर्न स्यादित्यर्थः। नन्ववस्था विकारः। नच सा नित्यानां युक्ता। तथात्वे विनाशित्वप्रसङ्गेन नित्यताव्याघातादित्यत्राह—त्वमपीति। बहूनामाकाशादीनामपि शब्दा-

## भावप्रकाशः

खण्डपटानुत्पत्तौ च तन्त्वातिरिक्तं न किञ्चिदुपलभ्येतेति। [1]*परैरिति—तदुक्तं न्यायवार्तिके—'त एव तन्तवस्संस्थानविशेषावास्थिताः पटाख्यां लभन्ते इत्यारभ्य 'अस्माकं तु संस्थानविशेषस्संयोग' इति। [2]*त्वमपीति—

उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्।

इति परिभाषायाः अप्रामाणिकत्वं व्यवस्थापयितेति भावः।

## सर्वार्थसिद्धिः

नामणूनां च नित्यानामपि हेतुभेदैरवस्थान्तरापत्तिमङ्गीकरोषि । सर्वद्रव्यस्वरूपनित्यत्वं तदवस्थाभेदं च वदतामपि तथा किं न स्यात्? [1]*संयुक्तावस्थाऽपि हि परिणामः! कथं तर्हि नित्यानित्यविभागः? इत्थं; द्रव्यतदवस्थयोस्तथाभावादेव। द्रव्यविवक्षायां त्ववस्थाविशिष्टवेषेणानित्यव्यवहार इति। ननु तन्तव एव व्यतिषङ्गविशेषविशिष्टाः पट इति भवतां राद्धान्तः 'पटवच्च' इति सूत्रे दर्शितः; तथा सति दीर्घैकतन्तुपरिवर्तनविशेषनिष्पादितेऽवयविनि कथं पटबुद्धिस्स्यात्? अनेकतन्तु

## आनन्ददायिनी

दिरूपविकारवत्त्वं अणूनामपि द्व्यणुकसंयोगपाकजरूपादिविकारवत्त्वमङ्गीकरोषीत्यर्थः । तथेति—त्वदङ्गीकृतप्रकारेणेत्यर्थः । ननु परिणामो विकारः । सैवावस्था । नच नित्यानां सा अङ्गीकार्येत्यत्राह — संयुक्तावस्थाऽपीति । तद्वद्भवदभिमतासमवायिकारणसंयोगावस्थाऽपि न विरुद्धेत्यर्थः । ननु भवत्पक्षे नित्यस्यापि कार्यत्वान्नित्यानित्यव्यवस्था न स्यादित्याशङ्कते—कथं तर्हीति । इत्थमिति—नामान्तरभजनावस्थाभावादेव नित्यत्वव्यवहार इत्यर्थः । द्रव्यविवक्षायामिति—द्रव्यस्य

## भावप्रकाशः

[1]*संयुक्ताऽवस्थाऽपि हीत्यादि—एतेन 'अवस्थानिबन्धनैव कार्यतेति' 'न हि तन्तव आत्मानं कुर्वन्ति' इत्यादि वार्तिकोक्तदूषणमपास्तम् ॥

## तत्वमुक्ताकलापः

**वस्त्रे दीर्घैकतन्तुभ्रमणविरचिते वस्तुधीर्नापि बाध्या ।**

## सर्वार्थसिद्धिः

संघातासिद्धिरित्याह—वस्त्र इति । न हि वयं तन्तुगतं एकत्वं द्वित्वबहुत्वादिकं वा पटधीनिबन्धनं नियच्छामः; यथादृष्टि (सर्व) संभवात् । त्वं तु स्वपक्षदोषमस्मत्पक्षस्थं (ब्रवीषि) मन्यसे । प्रदर्शितं हि पत्रे ताटङ्कनिष्पत्तौ एकस्यावयवस्यानारम्भकत्वम् । अतिप्रसङ्गोऽपि तथैव । स्यादेतत्; अवयाविनमनभ्युपगच्छतामन्ततः पर्वतादयोऽपि परमाणव एव संहताः स्युः । ते च न प्रत्यक्षाः । अतः [1]*'सर्वाग्रहणमवयव्यसिद्धेः' इत्यक्षपादोक्तमनतिक्रमणीयं स्यात् । स्थूलद्रव्याभावे च अणु-

## आनन्ददायिनी

(द्रव्ये) ह्यनित्यताव्यवहारः स्वर्गिन्यायेन विशिष्टवेषेणेत्यर्थः । यथादृष्टीति—संयोगविशेषरूपावस्थाबलाद्व्यवहारः । तथा च तादृशावस्थाया अत्रापि सत्त्वात् पटव्यवहारादिसंभव इत्यर्थः । प्रत्युत तवैव तत्र पटबुद्ध्याद्यनुपपत्तिरित्याह— त्वं त्विति । संयोगासंभवेन तव कारणाभावात्; मम त्ववयवानामेव संयोगादिति भावः । ते च—परमाणवः । सर्वाग्रहणम्—परमाणुवत् पर्वतादेरग्रहणम् । अतिरिक्तस्य प्रत्यक्षयोग्यस्यावयविनोऽ-

## भावप्रकाशः

*सर्वाग्रहणमवयव्यसिद्धेः (२-१-३४) इति—'सर्वेषामर्थानामग्रहणं प्रसज्येत; यद्यवयव्यर्थान्तरभूतोऽवयवेभ्यो नास्ति इति' न्याय-

## तत्वमुक्ताकलापः

**देशाधिक्यं समेतेष्वणुषु न हि ततः स्थूलधीबाध-शङ्का**

## सर्वार्थसिद्धिः

संहतौ स्थूलत्वाध्यासोऽपि न सिध्येदिति ; तत्राह-देशाधिक्यमिति। अयं भावः—स्थूलधीरिति अवयविधीर्वा परिमाणविशेषधीर्वा प्रत्यक्षयोग्यत्वधीर्वा प्रत्येकदेशादधिकदेशत्वधीर्वा ? नाद्यः ; तदभावप्रसक्तेरिष्टप्रसङ्गात् । न द्वितीयः ; संहते (तै) रेव अवयविवत् परिमाणान्तरस्य सृष्ट्युपपत्तेः । अणुष्वेव कथं विरुद्धं स्थूलत्वं स्यादिति चेत्; एकत्वाद्याश्रयेष्वेव कथं द्वित्वादिकमिच्छसि ? अपेक्षाबुद्धिसंगृहीतान्यानुबन्धसामर्थ्यादिति चेत् ;

## आनन्ददायिनी

सिद्धेस्संघातस्याप्यणुवदग्राह्यत्वात् । स्थूलत्वाध्यासोऽपीति—आरोप्यस्यान्यत्र सत्त्वनियमात् । तथा च सर्वसिद्धस्थूलधीः क्वचिदपि न स्यादिति भावः। ननु देशाधिक्यं वा कथं भवेत्? भवतु वा आधिक्यम्; तथाऽप्यणुभूतस्य स्थौल्यं प्रत्यक्षं वा कथं भवेदित्यत्राह—अयं भाव इति। तदभावप्रसक्तेरिति—अवयव्यभावापादनस्येत्यर्थः । एकत्वेति—नच 'अणोरणीयान् महतो महीयान्' इत्यादिश्रुत्या ब्रह्मणि परपक्षवत् स्वाभाविकाणुत्वमहत्त्वप्रसङ्गः इति चेत्; यथैकव्यक्तिगतैकत्वसमनियतं द्वित्वं विरुद्धं तथैकपरिमाणसमनियतं परिमाणान्तरं विरुद्धमिति व्याप्तेः; भगवति तन्महत्परिमाणसमनियततदणुत्वं विरुद्धमिति न तत्स्वाभाविकमिति ध्येयम् । अन्यानुबन्धः—व्यक्त्यन्तरानुबन्धः—संबन्धः ।

## सर्वार्थसिद्धिः

बुद्ध्यनपेक्षसंभेदसामर्थ्यादेव परिमाणान्तरमपि पश्यन्तु भवन्तः। न तृतीयः; एकैकस्याप्यप्र(स्याप्र)त्यक्षत्वेऽपि समुदायदशायां दृश्यत्वोपपत्तेः। यथैकैकस्य दवीयसः केशाहिमादेरदर्शनेऽपि संहतानां दृश्यत्वम्। एकैकस्याप्यासत्तौ दर्शनाद्योग्यत्वमस्तीति चेत्; अणूनामपि त्रसरेणुमात्ररूपाणां [1]*सामग्रीसंभवे तथैव स्यात्। न चतुर्थः; माषादिराशिषु संहतिभेदैर्देशतारतम्यदृष्टेः। ननु तत्तत्परिमाणावयविद्रव्याभावे तत्प्रयुक्तदेशन्यूनाधिकत्वं दुर्निरूपं स्यात्; मैवम्; न ह्यवयविनिरूपणेनैव देशाधिक्यादिनिरूपणम्; सुरभित्वगन्धत्वादेरिव संबन्धिन्यूनाधिकभावेनापि तदु-

## आनन्ददायिनी

एकैकस्यापीति—तथा च सर्वथा दर्शनायोग्यत्वाभावात् दृष्टान्तवैषम्यमिति भावः। वैषम्याभावमाह—अणूनामिति। तथैव स्यात्—दर्शनयोग्यत्वं स्यादित्यर्थः। त्रसरेणुविश्रमादणुपरिमाणस्येति भावः। नन्विति—न्यूनाधिकपरिमाणद्रव्यावच्छिन्नस्यैव न्यूनाधिकदेशत्वादिति भावः। सुरभित्वेति—यथा कर्पूरधूळिषु पुष्पेषु वा सौरभ्यं न्यूनमधिकं वाऽऽश्रयन्यूनाधिकभावाद्भवति; तथा अत्रापि संयुक्तद्रव्यन्यूनाधिकभावेन अवयव्यभावेऽपि तारतम्यं संभवतीत्यर्थः। गन्धत्वमित्यत्र

## भावप्रकाशः

वार्तिकम्। स्थूलत्वं नानावयवानां विलक्षणस्संयोगः इति न दोष इति भावः। [1]*सामग्रीसम्भवे इति—जालसूर्यमरीचिसंयोगादिकारणसमवधाने इत्यर्थः। 'अभेद्यः परमाणुः। भिद्यते त्रुटिः' इत्यादि वार्तिके द्रव्यत्वे सति बाह्यकरणप्रत्यक्षत्वेन त्रसरेणोर्भेदनसाधनमयुक्तम्;

## सर्वार्थसिद्धिः

पपत्तेः । द्रव्येषु नैवमिति चेन्न; द्व्यणुकोत्पत्तेः पूर्वक्षणे संयुक्ताणुद्वयस्य प्रत्येकदेशादाधिकदेशत्वावश्यंभावात् । अन्यथा सर्वपरमाणूनां समानदेशत्वे प्रागुक्तदोषप्रसङ्गात् । द्व्यणुकान्तरपरिच्छिन्नस्स देश इति चेन्न; सह वृत्त्ययोगात् । अन्यथा परिच्छेदासिद्धेः । समवायिनस्संयोगिनो वा देशस्याभावे कथं तत्र देशाधिक्यमिति चेन्न; आकाशाद्यंशभेदेन तदुपपत्तेः । कथं

## आनन्ददायिनी

गन्धशब्दो द्रव्यपरः । तथा च गन्धत्वतारतम्यं—परिमलतारतम्यमित्यर्थः । द्व्यणुकोत्पत्तेःपूर्वमिति—देशविशेषापादकावयविनोऽभावादिति भावः । द्व्यणुकान्तर(रावच्छि)परिच्छिन्नेति—एतद्व्यणुकोत्पत्तेः पूर्वं द्व्यणुकान्तरस्य सम्भवेन तस्य देशावच्छेदकत्वेन नानुपपत्तिरित्यर्थः । सह वृत्त्ययोगादिति—द्व्यणुकान्तरावच्छिन्नप्रदेशे परमाणुद्वयस्य सप्रतिघत्वविरोधात्सहवृत्त्ययोगादित्यर्थः । ननु सहवृत्तिर्मास्तु; द्व्यणुकस्य देशतया तत्र वृत्त्यङ्गीकारे दोषाभावादिति चेत्; सह वृत्त्ययोगादिति—परमाण्वन्तरेणापि सहवृत्त्ययोगादित्यर्थः । अन्यथेति — तथाचैकपरमाणुदेश एव परमाण्वन्तरस्यापि वृत्तेः द्व्यणुकस्याप्यधिकदेशावच्छेदकत्वाभावादित्यर्थः । ननु न्यूनाधिकपरिमाणद्रव्यं देशः । स च संयोगी समवायी वा ? तदभावे कथं देशाधिक्यम् ? इति शङ्कते—समवायिन इति । आकाशेति—आकाशाद्यंशभेद इत्यर्थः ।

## भावप्रकाशः

सिद्धान्ते काले व्यभिचारात् अप्रयोजकत्वाच्च । त्रुटेर्भेदनं न प्रत्यक्षम् । अत एव तात्पर्यटीकायां 'अङ्गुल्यग्राभ्यां मृद्यमानस्यास्यादर्शनं सूक्ष्मतयाऽप्युपपद्यते' इत्युक्तिस्सङ्गच्छते इति भावः ।

## सर्वार्थसिद्धिः

निरवयवस्यांशभेद ? इति चेत् आत्मानं पृच्छ ; कर्णशष्कुल्या-द्युपाधिपरिच्छिन्नतया नभसि नानाश्रोत्राणि कल्पयसि। भेर्यादि-शब्देषु श्रूयमाणेषु तरङ्गवृत्त्या तत्तदनन्तरदेशेषु शब्दोत्पत्तिं साधयसि। वेणुरन्ध्रादिविशेषभागाश्च प्रसिद्धाः । आकाशा-देरप्रत्यक्षत्वात्तदंशतारतम्यं दुर्ग्रहमिति चेन्न ; प्रत्यक्षाकाश-वादिनं प्रति हेत्वसिद्धेः। त्वयाऽपि माषादवयविनो महीधर-स्याधिकदेशत्वं गृह्यते। आलोकमण्डलांशभेदैस्तत्र देशाधिक्य-मिति चेन्न ; अलोकस्यापि नभसि न्यूनाधिकदेशवृत्तित्वदृष्टेः। परिमाणाधिक्यमात्रमेव पर्वतादिषु गृह्यत इति चेत् ; अगृह्य-माणमपि देशाधिक्यं तत्रास्ति न वा ? अस्ति चेत् ; संघातेऽपि कश्चोद्यावकाशः ? न चेत् ; तत्तद्देशेषु चक्षुः प्रसरादिनिरोधकत्वं न स्यात्। अन्यथा अल्पदेशवर्तिनः सर्वत्र निरोधकत्वप्रसङ्गात्। अतः परस्परानाक्रान्तदेशावष्टम्भेन संहन्यमानेषु त्रसरेणुषु

## आनन्ददायिनी

प्रदेशभेदाश्च सर्वसिद्धा इत्याह—वेणुरन्ध्रेति। प्रत्यक्षेति—सिद्धान्ते प्रत्यक्ष-त्वादिति भावः। प्रतिबन्द्या समाधत्ते—त्वयापीऽति। आकाशाप्रत्यक्ष-वादिनाऽपि माषावयवापेक्षया महीधरस्योपरिभागेऽधिकदेशत्वं ग्राह्यम्। तत्राकाशव्यतिरेकेणान्यस्याभावादिति भावः। आलोकस्यापीति—आलो-कमण्डलान्तराभवादिति भावः। ननु माषापेक्षया महीधरस्योपरिभागे परिमाणाधिक्यमेव (दृश्यते) गृह्यते न देशाधिक्यमिति शङ्कते—परिमाणाधिक्यमिति। न चेदिति—तत्तद्देशाधिकदेशकत्वाभावादिति-भावः। ननु तत्तदधिकदेशकत्वाभावेऽपि तत्तद्देशे चक्षुःप्रवृत्तिनिरोधकत्वम स्त्वित्यत्राह—अन्यथेति। अविशेषादिति भावः। तथाचावयव्यनङ्गीका-

## तत्वमुक्ताकलापे

संसर्गादेर्विशेषादवयविपरिषद्राशिवन्यादिवादः ॥

## सर्वार्थसिद्धिः

सुग्रहमेव देशाधिक्यम् । देशस्तु आलोकादिर्यःकश्चिद्यथायोग्यमस्तु । अत एव [1]*प्रधानाभावादणुषु स्थौल्यारोपोऽपि न स्यादिति चोद्यमपि निस्तीर्णम् । तथाऽपि यदि संसृष्टास्तन्तव एव पटः; ततः तन्तुराशिमात्रेऽपि पटधीस्स्यात् इत्यत्राह— संसर्गादेरिति । न हि त्वयाऽपि तन्तुसंसर्गमात्रं पटस्यासमवायिकारणमिष्यते; तथा सति कुविन्दादिव्यापारनैरपेक्ष्यप्रसङ्गात् । अतो यादृशात्संसर्गविशेषादवयवी तवोत्पद्यते तादृशसंसर्गविशेषविशिष्टास्तन्तवः पटः इति क्वातिप्रसङ्गः? आदि-

## आनन्ददायिनी

रेऽप्यवयवसंघात एव न्यूनाधिकदेशत्वमित्युपसंहरति—अत इति । देशस्त्विति—तन्निर्धारणं व्यर्थमित्यर्थः । अत एवेति—देशाधिक्यरूपप्रधानस्योपपादितत्वादित्यर्थः । ततः स्थूलधीबाधशङ्केति (२२६) मूलस्यायमर्थः—स्थूलधियो या बाधशङ्का—स्थूलधीः कुत्राऽपि नास्तीति या शङ्केति यावत् । सा ततः देशाधिक्यरूपस्थौल्यस्योपपादनान्नेति । क्वातिप्रसङ्ग इति—तन्तुराशिमात्रे पटधीप्रसङ्गो नास्तीत्यर्थः । ननु तन्तूनामेवावस्थायोगिनां पटत्वे पटस्तन्तुमानिति प्रयागो न स्यादित्य-

## भावप्रकाशः

[1]* प्रधानाभावादिति—मुख्याभावादित्यर्थः ।

## सर्वार्थसिद्धिः

शब्देन संसर्गिद्रव्याणि देशकालौ च गृह्यन्ते। द्वितीयेन त्वादि-शब्देन यूथपङ्क्तिमण्डलसेनाव्यूहपूर्णचतुरश्रादिसंग्रहः । परिष-दाद्युपादानं दृष्टान्तार्थम् । मत्वर्थीयमपि शूरवती सेनेतिवत् प्रत्ये-कसमुदायभेदविवक्षया स्यादिति ।

> भिन्नानामेव संश्लेषे संघातैक्यानुसारतः ।
> संयुक्तौ द्वाविति प्रख्या राशिद्वित्वनयाद्भवेत् ॥
> महत्त्वैकत्वयुक्तत्वप्रभृतेरपि राशिवत् ।
> संयुक्तद्रव्यनिष्ठत्वाद् न संयोगे प्रसञ्जनम् ॥

## आनन्ददायिनी

त्राह—मत्वर्थीयमपीति । मतोरर्थ इवार्थो यस्येति बहुव्रीहिः । 'मत्व-र्थाच्छः' इति स्वार्थिकच्छप्रत्ययः । ननु घटादीनां संघातात्मकत्वे परस्परसंयोगे सत्येकसंघातत्वापत्त्या एकस्मिन्नेव संयुक्ताविमाविति च द्वाविति च बुद्धिर्न स्यादित्यत्राह—भिन्नानामेवेति । भिन्नानामवय-वानां संश्लेषे—संयोगविशेषे संघातैक्यानुसारतः—पृथक् संघात-त्वदशायां संघातद्वयस्य संयोगेऽपि संयोगविशेषावस्थोभयघटितैकसंघा-तात्मकत्वाभावात् संयुक्तौ द्वाविति बुद्धी राशिद्वय इव सम्भवतीत्यर्थः । अन्यथा महत्त्वादि राश्यादावपि न स्यादिति भावः । ननु संयोग-विशेषावस्थात एव घटादिव्यवहाराः; तर्हि महत्त्वादिकं संयोगस्य स्यादिति तस्यैव द्रव्यत्वापत्तिः; अवस्थाश्रयस्य त्वया द्रव्यत्वाभ्युपगमात् । तथा च घट्टकुट्यां प्रभातमित्यत्राह—महत्त्वैकत्वेति । राशिसंयोगादः द्रव्यनिष्ठतया न संयोगस्य द्रव्यत्वमिति भावः । ननु त्वन्मते संयोग-स्यैव घटाद्यवस्थारूपतया महत्त्वैकत्वद्वित्वयुक्तत्वादीनां संयोगविशेष-

## सर्वार्थसिद्धिः

घनत्वश्यामतादीनां वनैकाधिकरण्यतः ।
न स्याद्वृक्षबहुत्वादेर्घनत्वाद्यैर्विशेषणम् ॥
तन्तवस्सितरक्ताद्याः पटचित्रानुयायिनः ।
अवयव्यनपेक्षत्वं चूर्णसंहतिचित्रवत् ॥

## आनन्ददायिनी

घटादिनिष्ठत्वाभावे महान् घट इत्यादिविशेषणविशेष्यभावप्रतीतिर्न स्यादित्यत्राह—घनत्वेति । घनत्वं—निबिडत्वं संयोगविशेषः महत्त्वं वा । वनैकाधिकरण्यतः—वनसामानाधिकरण्यात् । वननिष्ठत्वाभावात्तत्रापि घनं वनं नीलं वनमिति प्रतीतिर्न स्यादित्यर्थः । वृक्षबहुत्वादेः—वनस्येत्यर्थः । केचित्तु—वनैकाधिकरण्यतः—घनं वनं श्यामं वनमिति प्रतीत्या वननिष्ठत्वस्य सिद्धेः वृक्षबहुत्वादेः—घनत्वाद्यैस्सह बहवो वृक्षाः घनाः श्यामा इति सामानाधिकरण्यप्रतीतिरित्यर्थः । आदिशब्देन देशसंयोगो विवक्षितः । ननु वननिष्ठमेव घनत्वादिकमित्यत्राह—वृक्षबहुत्वादेरिति । ततोऽतिरिक्तस्य वनस्य भवताऽप्यनङ्गीकारात् ; तस्य गुणत्वात् तत्र घनत्वादीनामसंभवादिति भावः । ननु सितरक्तादितन्त्वारब्धे पटे चित्ररूपधीरस्ति ; तन्तूनामेव पटत्वे प्रत्येकतन्तुव्यतिरेकेण चित्ररूपाधिकरणपटस्याभावात्तन्तूनां तदधिकरणत्वाभावादाश्रयाभावेन चित्ररूपाभावप्रसङ्गेन चित्रधीर्न स्यादित्यत्राह—तन्तव इति । सितरक्ताद्यास्तन्तव एव पटचित्रानुयायिनः । व्यतिषङ्गवशेन पटावस्थापन्नेषु सितरक्तादितन्तुषु विद्यमाननानारूपेष्वेव चित्ररूपव्यवहार इत्यर्थः । तथा च चित्ररूपाश्रयतया नावयव्यभ्युपेयमित्याह—अवयव्यनपेक्षत्वमिति । अनपेक्षत्वं—अनपेक्षा । तत्र दृष्टान्तः—चूर्णसंहतिचित्रवदिति । सितरक्तादिचूर्णसंहतावयव्यनभ्युपगमादिति भावः ।

## सर्वार्थसिद्धिः

रूपादीनामचित्रेऽपि वदन् वैषम्यदर्शनम् ।
अपह्नुवीत वैयात्यात् खपुष्पादेरदर्शनम् ॥
या चासौ [1]* धारणाकृष्ट्योरुपपत्तिरसूत्र्यत ।

## आनन्ददायिनी

ननु चूर्णचित्रापेक्षया विशेषात्तन्तुरूपातिरिक्तमेव चित्ररूपम्। नच तन्तवस्तदधिकरणं; युगपद्विजातीयरूपासंभवादित्यत्राह—रूपादीनामिति। तन्तुरूपपटरूपादीनामचित्रेऽपि—वैचित्र्याभावेऽपि भेदाभावेऽपीत्यर्थः। वैषम्यदर्शनं–वैषम्योपलम्भनं वदन्—खपुष्पादेरप्युपलम्भं वदेदित्यर्थः। नन्ववयव्यनभ्युपगमे एकावयवधृतेऽन्येषामवयवानां धारणं न स्यात्; एकावयवाकृष्टेऽन्येषामाकर्षणं न स्यात्; दृश्यते च मूले धृते वा कृष्टे वाऽग्रादीनां धारणमाकर्षणं च। अवयव्यङ्गीकारे तु एकत्वात् सर्वावयवेष्ववयविनस्तत्संभवादिति चेत् तत्राह—या चासाविति।

## भावप्रकाशः

[1]* धारणेत्यादि—'धारणाकर्षणोपंपत्तेश्च' (न्या. सू. २-१-३५) इति सूत्रमित्थं व्याचख्यावुद्योतकरः—'अवयव्यर्थान्तरभूतः इति चार्थः। किमिदं धारणं नाम? एकदेशग्रहणसाहचर्ये सत्यवयविनो देशान्तरप्राप्तिप्रतिषेधो धारणम्। यदाऽवयविन एकदेशं गृह्णाति तदैकदेशग्रहणेन सहावयविनमपि गृह्णाति। तेन च ग्रहणेन यदवयविनो देशान्तरप्राप्तिनिराकरणं तद्धारणम्। अकर्षणं नाम एकदेशग्रहणसाहचर्येण यदवयवविनो देशान्तरप्रापणं पूर्ववत्। कुत एतत्? लोकतः। लोकः खलु धारणाकर्षणे एवं प्रयुङ्क्ते इति। ते एते धारणाकर्षणे अवयविनं साधयतः। कथमिति! निरवयवे चावयवे चादर्शनात्' इति। अत्र

## सर्वार्थसिद्धिः

ताद्दग्भूतावयव्यर्थे संघाते सा भविष्यति ।
गाढावयवसंश्लेषरहितेऽवयविन्यपि ॥
धारणाकर्षणे न स्तः तथाचाभ्युपगच्छसि ।
धारणाकर्षणे चात्र *धृताकृष्ट्यनुबन्धतः ॥

## आनन्ददायिनी

'धारणाकर्षणोपपत्तेश्च' इति गौतमेनासूत्र्यतेत्यर्थः । अत्र विपर्यये पर्यवसानेनावयव्यङ्गीकारे धारणाकृष्टी उपपद्येते इत्युपपत्तिरेव सूत्रेण प्रतिपादितेत्यर्थः । ताद्दगिति—धारणाकृष्टियोग्यावयव्युत्पादकसंघातमात्रादेव तदुपपद्यत इत्यर्थः । धारणाकर्षणयोरवयविसाध्यताऽपि नेत्याह—गाढावयवेति । अवयव्युत्पादकासमवायिकारणसंयोगो यत्र द्दढो न भवति कोमललतादौ तत्र धारणाकर्षणे प्रति न प्रयोजकमवयवि ; नच तत्रावयव्यभावः । तथाचेति— धारणाकर्षणाद्यभावेऽपि तत्रावयव्यभ्युपगच्छसि । कुत्र तर्हि धारणाकर्षणे अभ्युपगम्येते इत्यत्राह— धारणेति । अवयविन्यपि सति गाढावयवसंश्लेषे सत्येव धृताकृष्टानुबन्धतः । धृताकृष्टसंबन्धेन धारणकर्षणे भवत इति वक्तव्यम् ; तथा-

## भावप्रकाशः

तात्पर्यटीका—'ते एते धारणाकर्षणे गोघटादिकमुपलभ्यमानमवयविनं साधयतः । कुतः? निरवयवे विज्ञानाकाशादौ अवयवे च परमाणौ चादर्शनात् । इदमेवं प्रयोगमारोहति—योऽयं द्दश्यमानो गोघटादिरवयविपरमाणुसमूहभावेन विवादाध्यासितः नासाववयवी धारणाकर्षणानुपपत्तिप्रसङ्गात्' इत्यादि । *धृताकृष्टानुबन्धत इत्यादि—यदाऽवयविन एकदेशं गृह्णाति तदैकदेशग्रहणेन सहावयविनमपि गृह्णाति 'इत्याद्युदाहृतन्या वार्तिके अवयवावयविभावसंबन्धसत्त्वादेवावयवग्रहाणेनाव-

## सर्वार्थसिद्धिः

दृढावयवसंश्लेषसहितेऽवयविन्यपि ।
अंशान्तरेषु तेऽस्माकं सिद्धे जतुगृहीतवत् ।
तृणोपलादिजतुसंगृहीतं यदुदाहृतम् ॥
तत्राप्यवयवी नेष्टः कश्चिज्जतुतृणादिषु ।
पाशाद्यैरपि पश्वादेर्धारणाकर्षणे (क्षमे) क्षणे ॥
किं तत्र पशुपाशादिष्ववयव्यभ्युपेयते ? ।

## आनन्ददायिनी

वान्तरेषु दृढतरसंश्लिष्टदृढाकृष्टावयवानुबन्धतो धारणाकर्षणे भवत इति नावयव्यपेक्षा । जतुगृहीतवदिति—तृणोपलायस्कान्तादीनामप्युपलक्षणम् । जतुगृहीतिस्थले एकस्य धारणाकर्षणमात्राज्जतुगृहीतयोरुभयोर्धारणाकर्षणवदित्यर्थः । ननु जतुगृहीतादिष्ववयव्यस्तु इत्यत्राह—तृणोपलेति। तृणग्राही उपलस्तृणोपलः; शाकपार्थिवादिः । यदुदाहृतं—यद्दृष्टान्ततयोक्तं तृणोपलादिकं तत्र जतुतृणाद्यवयवेषु तव कश्चिदवयवीष्टोऽपि न ; तथाऽपि धारणाकर्षणे वर्तेते इत्यर्थः । अपिस्त्वर्थः । स्फुटतरव्यभिचारस्थलमाह—पाशाद्यैरिति । धारणाकर्षणयोरीक्षणे—दर्शने सतीत्यर्थः । धारणाकर्षणे क्षमे इति पाठान्तरम् । किं तत्रेति—किमिति नाभ्युपेयत इत्यर्थः । ननु जतुसंगृहीत्यादिस्थलेषु पक्षिलभाष्यादिषु

## भावप्रकाशः

यावद्धारणादीति स्फुटम् । एवं सत्यवयविनोऽतिरिक्तस्यानङ्गीकारेऽप्येकदेशग्रहणे सत्यंशान्तराणां तेन गाढसंश्लेषेण धारणादिकमुपपद्यत इति धारणाकर्षणानुपपत्तिप्रसङ्गविरहेण गोघटादिरुपलभ्यमानो गाढसंश्लिष्टाव-

## सर्वार्थसिद्धिः

[1] * संग्रहप्रभवं चात्र धारणाद्यनुभाष्य तु ॥
पक्षिलस्तन्मतस्थो वा

## आनन्ददायिनी

व्यभिचारः परिहृत इत्यत्राह—संग्रहप्रभवं चेति । संग्रहप्रभवं—जतुसंगृहीतिजन्यमित्यर्थः । एवं सप्रतिघत्वविरोधोऽपि द्वितन्तुकपटाद्युत्पत्तिस्थले टीकाकारादिभिः शङ्कितो न सम्यक्परिहृत इत्याह—

## भावप्रकाशः

यवसमुदाय एव नातिरिक्तोऽवयवीति भावः । [1] * संग्रहप्रभवमित्यादि-यथाऽऽह न्यायभाष्ये पक्षिलः—'संग्रहकारिते वै धारणाकर्षणे ! संग्रहो नाम संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितमपां संयोगादामे कुम्भेऽग्निसंयोगात्पक्के।यदि त्ववयवि(व)कारितेऽभविष्यतां पांसुराशिप्रभृतिष्वप्यज्ञास्येताम्। द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसंगृहीतेष्वपि नाभविष्यताम्' इति । उद्योतकरश्च तन्मतस्थो न्यायवार्तिकेऽपि—'यानि तृणोपलकाष्ठानि जतुसंगृहीतान्याकृष्यन्ते धार्यन्ते चेत्यवयविन एवैते । यदि च निरवयवे चावयवे च धारणाकर्षणे स्याताम्; स्याद्विरोधः । यदिदमुच्यते संग्रहकारिते इति ; न ; विशेषहेत्वभावात् । संग्रहकारिते धारणाकर्षणे नावयविकारिते इति नच भवता विशेषहेतुरपादिश्यते इति पांसुराशिप्रभृतिषु च कस्मात्संग्रहो नास्तीति वाच्यम् । य एवात्र संग्रहाभावे भवतो हेतुः स एवावयविनो विद्यमानस्य धारणाकर्षणयोरभावे इति । कः पुनरसौ? उक्तोऽसावेकदेशगृहीतस्य तत्सहचरितस्य संबन्धविशेष इति । स च पांसुराशिप्रभृतिषु नास्ति ; तस्मान्न तत्र धारणाकर्षणे इति' इति । अत्र यानि

## सर्वार्थसिद्धिः

. . . . . नोत्तरं *[1] सम्यगब्रवीत् ॥
आरब्धकार्यैरारम्भो मिथस्सप्रतिघत्वतः ॥
न्यायवार्तिकटीकादौ क्षिप्तः संमतिरत्र नः ।

## आनन्ददायिनी

आरब्धकार्यैरिति । क्षिप्तः—आक्षिप्तः । अवयव्यारम्भपक्षे प्रतिक्षणं पृथिव्यादीनां परमाणुसंयोगविभागाभ्यां पूर्वविनाशोऽपूर्वोत्पत्तिश्चावश्यकाविति । प्रत्यक्षं खण्डपृथिवी अतीन्द्रियः परमाणुः ताभ्यामुत्पन्नायाः

## भावप्रकाशः

तृणोपलेत्यादिवार्तिकोक्तिः तृणोपलेत्यादिश्लोकेन प्रतिक्षिप्ता । [1]* सम्यगिति—अतिरिक्तावयव्यङ्गीकारे गौरवेण इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीदित्यादिप्रतीतिविरोधेनातिरिक्तावयविसाधकप्रमाणान्तरविरहेण च सिद्धान्ते लाघवादेर्विनिगमकत्वेन 'विशेषहेत्वभावात्' इति न्यायवार्तिकोक्तमुत्तरं तु न सम्यगिति भावः। न्यायवार्तिके चोद्योतकरेण 'नान्योऽवयव्यवयवेभ्योऽप्रत्यक्षत्वप्रसङ्गात्—प्रत्यक्षाप्रत्यक्षवृत्तिरवयव्यप्रत्यक्षस्स्यात् यद्यवयव्यर्थान्तरं स्यात्; यथा गर्भमातृसंयोगः प्रत्यक्षाप्रत्यक्षवृत्तिर्न प्रत्यक्षः; प्रत्यक्षस्त्ववयवी; तस्मान्नासौ तेभ्योऽर्थान्तरं इति प्राचां दूषणमनूद्य प्रत्यक्षत्वादेव नार्थान्तरामिति विरुद्धो हेतुः । गर्भमातृसंयोगश्चाप्रत्यक्ष इति किमयं प्रत्यक्षाप्रत्यक्षाभ्यामारम्भादप्रत्यक्षः उत प्रत्यक्षाप्रत्यक्षवृत्तित्वादप्रत्यक्षः? यद्याद्यः हिमवत्परमाणुकमप्रत्यक्षं प्राप्नोति । तस्यह्येक एव प्रत्यक्षः एक एवाप्रत्यक्षः' इत्यादिना तत्परिहार उक्तः । तत्र प्राचीनोक्तदूषणपरिहरणमसंगतमिति बोधयन् प्राचीनोक्तदूषणमेव

## सर्वार्थसिद्धिः

प्रत्यक्षातीन्द्रियोपात्ते प्रत्यक्षत्वं च दुर्भणम् ।
चाक्षुषाचाक्षुषद्रव्यसंयोगे चाक्षुषत्ववत् ॥

## आनन्ददायिनी

पृथिव्याः प्रत्यक्षातीन्द्रियोपात्ततया तादृशगगनघटसंयोगवत् प्रत्य(क्षत्वं)क्षं न स्यादित्याह—प्रत्यक्षातीन्द्रियेति । न्यायवार्तिकादौ हिमवत्परमाणुकमे-

## भावप्रकाशः

दृढीकरोति—* प्रत्यक्षातीन्द्रियोपात्ते इत्यादिना । एतेन तात्पर्यटीकायां—'परमाणुग्रहणं सूक्ष्मद्रव्योपलक्षणार्थम् । न पुनः परमाणोः द्व्यणुकादन्यत्रारम्भसंभवः । न च विवादाध्यासितः परमाणुः महद्द्रव्यमारभते परमाणुत्वात् द्व्यणुकारम्भकपरमाणुवत् ; अमहत्त्वाच्च न हिमवत्परमाणुकं प्रत्यक्षं स्यात्' इति वार्तिकयथाश्रुतार्थासांगत्यमुपपाद्य तस्माद्धिमवद्धिमबिन्दुभ्यां संसर्गिभ्यां संयोगादवयवि द्रव्यमारभ्यते । महत्त्वं चास्यावयवमहत्त्वादुत्पद्यते । तथाच चाक्षुषत्वमस्य भवति । एवं तोयदविमुक्तोदबिन्दूदधिसंयोगात् द्रव्यान्तरोत्पत्तिः प्रतिपत्तव्या' इति वार्तिकपरिष्करणमपि मुधेति बोधितम्; तथा हि — हिमबिन्दौ अप्रत्यक्षत्वमभ्युपेत्य महत्त्वाङ्गीकारेऽपि तदारब्धे प्रत्यक्षातीन्द्रियोपात्तत्वविरहात् । अतीन्द्रियत्वस्येन्द्रियजन्यप्रत्यक्षायोग्यत्वरूपत्वात् । अतएवाप्रत्यक्षपदपरित्यागः । 'यादृशात्संसर्गविशेषादवयवी तवोत्पद्यते तादृशसंसर्गविशिष्टास्तन्तवः पट' इत्यनेन पूर्वमेव सर्वत्रावयवी निरस्त इति क्व द्रव्यान्तरकथा? अतश्चाक्षुषाचाक्षुषद्रव्यसंयोग उभयसंमतो यदि चाक्षुषोऽभविष्यत् तदा भवत उदाहरणमल-

## सर्वार्थसिद्धिः

मुधा चोदाहृतं [1]*कैश्चि[2]*द्धिमवत्परमाणुकम् ।
टीकाकारस्तु तत्राह सूक्ष्मद्रव्योपलक्षणम् ।
विशेषानुपलम्भेऽपि राश्येकत्वमतिर्यथा ।
वृक्षादिष्वपि तद्वत्स्याद्यथादृष्टि व्यवस्थितेः ॥

## आनन्ददायिनी

वाप्रत्यक्षमित्याशङ्कितं न तु पृथिव्यादिकमित्यत्राह--मुधा चोदाहृतमिति हिमवत्सहितः परमाणुरस्येति बहुव्रीहिः; 'तदस्य परिमाणम्' इति वा निर्वाहमाहुः । 'स एषां ग्रामणीः' इति मान्याः; हिमवत्परमाणू ग्रामण्यौ निर्वाहकौ—कारणे इति निर्वहन्ति। व्रीह्यादित्वात् मत्वर्थे इनिरिति केचित् । पृथिव्यादिकं परित्यज्याविमृश्य विशेषत उदाहरणं व्यर्थमित्यर्थः । अत एव टीकाकारस्तदुदाहरणमुपलक्षणमित्युक्तवानित्याह—टीकाकारस्त्विति। ननु अवयव्यनभ्युपगमे संघातस्य बहुत्वात्कथमेकत्वधी-व्यवहारावित्यत्राह — विशेषानुपलम्भेऽपीति । विशेषोऽवयवी तस्य राश्यादिष्वभावेऽपीत्यर्थः । वृक्षादिष्वपीति—स्कन्धपलाशादिव्यतिरिक्ता-वयव्यनभ्युपगमेऽपि वृक्षधीः राश्यादाविव स्यादित्यर्थः । ननु संघातस्यैव

## भावप्रकाशः

प्स्यत ; स च खपुष्पसोदर एवेति । [1]* कैश्चित्—न्यायवार्तिककृद्भिः ।
[2]*हिमवत्परमाणुकमिति–उदाहृततात्पर्यटीकापर्यालोचने हिमवान् परमाणुरस्येत्यादिव्युत्पत्त्या हिमवत्परमाणुकं द्व्यणुकमिति यथाश्रुतार्थः प्रतीयते। न वयं बौद्धवदतिरिक्तावयव्यङ्गीकारे वृत्तिविकल्पानुपपत्त्यादिबाधकमात्र-मुद्भाव्य अवयवातिरिक्तमवयविनं व्यासेधामः;' किंतु करणाकरणरूप-विरुद्धधर्माध्यासेन पूर्वापरकालस्थायि वस्तु नैकं अपि तु क्षणिकमेवेति वादिनो वैनाशिकान् प्रतिक्षिपतां भवतां पूर्वापरकालस्थायिवस्त्वैक्यं साधयति यत् प्रत्यभिज्ञाप्रमाणं तदेवार्धवैनाशिकान् युष्मानपि परिभूय पूर्वा-

## सर्वार्थसिद्धिः

एकदेशे समस्ते च वृक्षलक्षणसम्भवे ।
वृक्षधीरुपपद्येत सङ्ग्रहाच्चापृथङ्मतिः ॥
सर्वाग्रहणमवयव्यसिद्धेरिति सूत्रयन् ।
प्रत्यक्षव्यतिरिक्तान्तक्लृप्तिदौस्थ्यपराहतः ॥
सेनावनवदित्यादावप्रत्यक्षाणुसूत्रणम् ।
त्रसरेण्ववधिस्थाणुस्थापकेषु न शोभते ॥ २१ ॥

एवं तन्तुपटादीनां भेदे बाधकं तत्साधकानामन्यथासिद्धत्वं चोक्तं ; तथाऽप्यभेदे किं प्रमाणमिति वदन्तं प्रति [1]*स्थिरत्वे

## आनन्ददायिनी

वृक्षत्वे समुदायप्रतीतावेव वृक्षधीस्स्यात् न त्वेकदेशशाखादिप्रतीतावित्यत्राह—एकदेश इति । एकदेशस्यापि जलावयवस्य जलवत् वृक्षत्वादित्यर्थः । तर्हि शाखादीनामपि वृक्षलक्षणयोगाद्वृक्षत्वे वृक्षैकत्वधीर्न स्यादित्यत्राह—संग्रहाच्चेति । सर्वेषां शाखाद्यवयवानां जलराशिवद्दृढतरसंश्लेषादेकवृक्षबुद्धिरित्यर्थः । यदुक्तमक्षपादोक्तमनतिक्रमणीयं स्यादिति ; तद्दूषयति—सर्वाग्रहणमिति । प्रत्यक्षव्यतिरिक्तपरमाण्वन्ततत्वपङ्क्तिक्लृप्ताविदं दूषणं स्यात् ; नच तदन्तक्लृप्तिः ; दौस्थ्यपराहतत्वात् ; तथाच तत्कल्पकोऽक्षपादोऽपि पराहत इत्यर्थः। किंच 'सेनावनवद्ग्रहणमिति चेन्न अतीन्द्रियत्वादणूनाम्' इति अवयव्यभावमाशङ्क्य अप्रत्यक्षत्वप्रसङ्गादवयविसाधनं चायुक्तमित्याह—सेनेति ॥२१॥

उत्तरश्लोकेनाप्यवयविखण्डनं क्रियते इति पौनरुक्त्यं (परिहरन्) पूर्वशेषत्वात् (संगत्यन्तरंन्ना)नास्तीत्यभिप्रायेणाह—तन्तुपटादीनामिति।स्थिरत्वे

## भावप्रकाशः

परकालस्थायिमृद्घटाद्यैक्यं साधयितुमलमिति व्यञ्जयति—[1]*स्थिरत्वे प्रमाणमेवात्र प्रमाणमित्यनेन ।

## तत्वमुक्ताकलापः

**द्रव्यैक्यं प्रत्यभिज्ञा प्रथयति परिमित्यन्तरेऽन्याप्रतीतेः**

## सर्वार्थसिद्धिः

प्रमाणमेवात्र प्रमाणमित्याह—द्रव्यैक्यमिति । परिमित्यन्तरे—सत्यपीति शेषः । इदं च भेदसाधकानामुपलक्षणम्; यथा—प्रसारितस्याकुञ्चितस्य च दीर्घत्वह्रस्वत्वे यथा च घनीकृतस्य विरलीकृतस्य च तूलपिण्डस्य अल्पत्वविपुलत्वे दृश्येते एवं वृत्तचतुरश्रत्वादिविशेषे दृष्टेऽपि स्यात्? कुतः? अन्याप्रतीतेः—द्रव्यान्तरस्यादर्शनादित्यर्थः । अन्यथा सर्वत्र यत्किञ्चिदवस्थाभेदमात्रेऽपि द्रव्यभेदो दृश्यते इति धृष्टवादे का प्रत्युक्तिः?

## आनन्ददायिनी

प्रमाणमेवेति—बाधकाभावे प्रत्यभिज्ञायाः जातिविषयत्वादिना अन्यथासिद्धिवर्णनमयुक्तम् अन्यथा कस्यापि वस्तुनः स्थैर्यं न सिद्ध्येदिति भावः । भेदसाधकानामिति—नामसंख्यादीनामित्यर्थः । यथा च घनीकृतस्येति—यद्यपि द्रव्यान्तरोत्पत्तिस्तूलपिण्डादौ प्रचयस्य परिमाणहेतुत्वं वदताऽङ्गीकृता; तथाऽपि पद्मसंकोचविकासादिस्थले न्यायवार्तिकादावनारम्भस्योक्तत्वा(तुल्यत्वा) न्नात्राऽप्यवयव्यारम्भ इति सिद्धवत्कृत्योक्तिः । नन्ववयव्यन्तरसाधकबलात् प्रत्यभिज्ञा जातिविषया भवतु इत्याशङ्क्य; किं द्रव्यान्तरमुपलब्ध्या वदसि उत लिङ्गात्? इति विकल्प्य आद्यं दूषयति—अदर्शनादिति । नन्ववस्थाभेदस्थले घटपटादौ भिन्नद्रव्यप्रतीतिनियमादत्राप्युपलम्भोऽस्त्येव; तन्तुपटावस्थाभेदात् इत्यत्राह—अन्यथेति । तथाच अवस्थाभेदस्थले भिन्नद्रव्यप्रतीतिनियमो नास्तीत्यर्थः । ननु-

## सर्वार्थसिद्धिः

पद्मसंकोचविकासादिषु च द्रव्यान्तराभावो न्यायवार्तिकटीकायामुक्तः। किंच अन्त्यावयवित्वं पटादीनामिष्यते, तैरनेकैरच्छिन्नावयवैरेकपटादिनिर्माणे अवयव्यन्तरमुत्पद्यते नवा? पूर्वत्र तेषामन्त्यावयवित्वव्याघातः। उत्तरत्र तन्त्वादिभिरपि तथा स्यात्; अविशेषात्। अन्यस्तर्हि अन्त्यावयवी भवतु! इति चेन्न; सर्वत्रैवं कस्यचित्कार्यस्य सहकारिभेदैस्संभवात्। सन्ति चास्मदाद्यशक्यस्रष्टारः केचित् अन्तत ईश्वरश्च। किंच योऽसौ गोपुरादिरन्त्यावयवी तत्र यदि कश्चित् सुधाभि-

## आनन्ददायिनी

चेष्टापत्तिरिति चेत्तत्राह—पद्मसंकोचेति। तत्र द्रव्यान्तराभावात्तत्प्रतीतिर्दूरे इति तत्र व्यभिचार इति भावः। द्वितीयं दूषयति—किञ्चेति। तत्र लिङ्गं सामग्र्येव उतान्यत्? नान्त्यः; तथाविधस्यानुपलम्भात्। न प्रथमः; अवयवसंयोगो हि सामग्री; तस्याः पद्मादिस्थले व्यभिचारादलिङ्गत्वामिति दूषणे सत्येव दूषणान्तरमाह—अन्त्यावयवित्वं घटादीनामिष्यते इति। उत्तरत्रेति—तन्त्वादिस्थलेऽपि द्रव्य न्तरारम्भकाभावात् द्रव्यान्तरं न स्यादित्यर्थः। ननु अन्त्यावयविस्वीकारो मत्सिद्धान्ते; न तु पटादिरेवान्त्यावयवीति निर्बन्ध इत्याह—अन्यस्तर्हीति सर्वत्रैवमिति—सवत्राप्यवयव्यन्तरोत्पत्तौ न किञ्चिदप्यन्त्यावयवि सिध्येदित्यर्थः। ननु कार्यस्य कर्तृसापेक्षत्वाद्यदवयव्यन्तमादायास्मदादीनां द्रव्यान्तरसृष्टिसामर्थ्यं नास्ति तत्रैवान्त्यावयवि; तत्र द्रव्यान्तरोत्पत्त्यभावात् इत्यत आह—सन्ति चेति। ननु गोपुरादिभिः पटादिभिर्बृहत्पटादिवद्रव्यान्तरारम्भासंभवात् अन्त्यावयवि गोपुरादिकं भवतु! इत्यत्राह—किंच योऽसौ गोपुरादिरिति। केचित्तु—'त्वदभिमतद्रव्या(न्तरा)रम्भकस्य

## सर्वार्थसिद्धिः

रवयवान्तरं घटयेत् तदा तत्पूर्वं गोपुरं तिष्ठति नश्यति वा? पूर्वत्र कथमन्त्यः? उत्तरत्र अनन्यथासिद्धोपलम्भविरोधः; नाशकारणाभावे नाशानुपपत्तिः; अपि च तूलपिण्डमध्यस्थमंशुं यदि कश्चित् सूच्यापकर्षेत् तदा तस्य परिमाणह्रासो न दृश्यते, न च तस्य नाशः; अथाऽपि तत्र ते नाशः कल्प्यः। असमवायिनाशात् समवायिविगमाच्च। संघातवादे तु अवयवोत्कर्षापकर्षवादमात्रान्न किञ्चिद्द्रव्यमुत्पद्यते नश्यति वा। केवलमाषादिराशिवत् उपचयापचयमात्रमेव। अतो

## आनन्ददायिनी

व्यभिचारस्थलान्तरमप्याह—किंचेति' इत्याहुः। पूर्वत्रेति—सप्रतिघत्वविरोधेन पूर्वगोपुरावयवानामनारम्भकतया तस्यैवोत्तरगोपुरारम्भकत्वेन तत्समवायित्वादिति भावः। ननु दीपप्रभान्यायेन उपलम्भविरोधो नेत्याह—नाशकारणेति। तदा तस्येति—अवयविवादिमते द्रव्यनाशेन पूर्वपरिमाणनाशात् पुनरारब्धद्रव्यस्य तन्न्यूनावयवप्रशिथिलसंयोगकत्वेन न्यूनपरिमाणनियमात् तद्दर्शनप्रसङ्गः। अथाऽपीति—पूर्वपरिमाणोपलम्भेऽपि आश्रयनाशकल्पनं साहसमिति भावः। ननु तत्र नाशो मास्त्वित्यत्राह—असमवायीति। त्वदुक्तनाशसामग्रीसत्त्वान्नाशकल्पनायास्तवावश्यकत्वादिति भावः। संघातवादे न दोष इत्याह—संघातवादे इति। उपचयापचयौ—अवयवाधिक्यन्यूनते। अंशुविदारणं—अवयवविच्छेदः। संधानं—योजनम्। तथाच मूलस्यायमर्थः—भवतामवयविस्थाने स्थूलसंघातमेकम्। राशिवत्—राशि-

## तत्वमुक्ताकलापे

अंशूत्कर्षक्षयादिक्षममपि च ततो राशिवत् स्थूलमेकम्। नोचेत् अश्रान्तचण्डानिलजलधिधुनी-

## सर्वार्थसिद्धिः

यथोपलम्भं संघातपक्ष एव साधीयान् इत्याह—अंशूत्कर्षेति। आदिशब्देन अंशुविदारणसंधाने गृह्येते। यदि क्वाचित्कावयवभेदमात्रात् पूर्वद्रव्यनिवृत्तिरवयव्यन्तरोत्पत्तिस्स्यात्; तत्रानिष्टमाह—नो चेदिति। अव्यवस्थितेषु प्रदेशभेदेषु तैस्तैर्भेदकैरणुद्वयविघटने द्व्यणुकविनाशादिक्रमेण महापृथिवीपर्यन्तनाशे सति अवस्थितसंयोगैरपि पुनस्तदारम्भावसरो न सेत्स्यति;

## आनन्ददायिनी

न्यायेन। अंशूत्कर्षात् क्षयः—अपचयः। आदिशब्दादुपचयः। तत्क्षमं—तद्योग्यमिति संघातपक्षे न दोष इति। अतिरिक्तावयविवादिनोऽप्यतिरिक्तावयव्यारम्भकां (म्भावता) शाभावात् अणुत्वावस्थाया अपरित्यागात् तद्व्यतिरिक्तद्व्यणुकाद्यभावात् द्रव्यमात्रं प्रत्यक्षं न स्यात् इति गौतमोक्तदूषणप्रसङ्गात् अकामेनापि सिद्धान्त्युक्तरीत्या संघातपक्ष एवाश्रयणीय इत्यनिष्टप्रसञ्जनव्याजेनाह—यदीति। न सेत्स्यतीति—द्रव्यान्तरोत्पादकानामपि विनाशसामग्रीनियतत्वेन तदुत्पादनसमये समवायिनाशस्यैवोत्पत्तेरित्यर्थः। मूलस्यायमर्थः—नोचेत्—संघात एवेत्यनङ्गीकारे। अनवरतचण्डवाय्वादिभिः अवयवशोऽभिघातेन विभज्यमाना क्षणकालमप्यण्ववस्थां न परित्यजेत्—सर्वदा अणुसंघातरूपैव स्यादिति।

## सर्वार्थसिद्धिः

तदेतत् समुद्रादिषु कैमुत्यसिद्धम् । यदप्येवं कल्प्यते—'द्वाभ्यामेवाणुभ्यामाद्यं कार्यद्रव्यमारभ्यते एकस्यानारम्भकत्वात्; असमवायिविरहात् । संयोगो हि न स्वेन स्वस्य! बहुभिरारब्धत्वे महत्त्वप्रसङ्गेन प्रत्यक्षत्वापातात्; बह्वारब्धस्याप्यणुत्वेऽतिप्रसङ्गः । तत्परिमाणं च अवयवसंख्याविशेषेण; अवयवमहत्त्वप्रचययोरसंभवात्; नित्यपरिमाणस्यानारम्भकत्वात् । स्वातिशयपरिमाणारम्भकत्वनियमेन अणुतरपरिमाणारम्भकत्वप्रसङ्गाच्च । सा च द्वित्वसंख्या सर्वज्ञापेक्षाबुद्धिजन्या; तद्विनाशकाभावेऽपि कार्यत्वादनित्या । एवं त्रिभिरेव द्व्यणुकैः त्रसरेण्वारम्भः तावतैव महत्त्वलाभात्; द्वाभ्यामारम्भे त्ववयवप्रचयमहत्त्वरूपकारणान्तराभावेन महत्त्वानुत्पत्तावदृश्यत्वप्रसङ्गात् । स च त्रसरेणुरप्रत्यक्षावयव (क) तद्रूपोऽपि स्वयं प्रत्यक्षः

## आनन्ददायिनी

खननादिरादिशब्दार्थः । ननु पृथिव्यवयव्यभावेऽपि जलावयव्यस्तु! इत्यत्राह—तदेतत् समुद्रादिष्विति 'कार्यं नैवारभेरन्' इत्यादिपद्यत्रयेण दूषणं तन्मते क्वचिदर्थे दूषणोक्तिः वेदान्तविरुद्धार्थेषु सर्वत्र दूषणस्योपलक्षणमित्याह—यदपीति । आद्यं कार्यं द्व्यणुकमित्यर्थः । एकस्येति—परमाणोरिति शेषः । संयोगो हीति—स्वस्य स्वेन नेत्यर्थः । बहुभिरिति—कारणबहुत्वस्य महत्त्वप्रयोजकत्वादिति भावः । अतिप्रसङ्ग इति—त्र्यणुकमप्यणु स्यात्; तथाच महदेव न स्यादित्यर्थः । तत्परिमाणं चेति—द्व्यणुक परिमाणमित्यर्थः । (संख्याविशेषेण) आरभ्यते इति शेषः । अवयवमहत्त्वं—कार्यगत (परमाणुपरिमाणातिरिक्त) परिमाणं । पारिशेषात् संख्याविशेषो द्वित्वसंख्येत्याह—सा चेति । कार्यत्वादिति—भावकार्यत्वादित्यर्थः । अप्रत्यक्षेति—अप्रत्यक्षत्वमवयवतद्रूपयोर्विशेषणम् । प्रत्यक्षरूपारब्ध-

## तत्वमुक्ताकलापः

**दन्तिदावानलाद्यैः क्षोणीयं क्षुद्यमाना क्षणमपि चरमामण्ववस्थां न जह्यात् ॥ २२ ॥**

## सर्वार्थसिद्धिः

प्रत्यक्षरूपश्च । यद्वा—अन्यरूपेणालोच्यते; यथाऽऽहोदयनः–'दृश्यमेव ह्यालोकरूपमारोप्य पिञ्जरस्त्रसरेणुरालोच्यते' इति। उत्तरावयविनां तु अनियतसंख्यैरारम्भः। भावरूपस्य सर्वस्य समवाय्यसमवायिनिमित्तसापेक्षत्वेऽपि प्रध्वंसस्तु निमित्तमात्र-जन्यः' इत्यादि; एतादृशं कल्पनाजातं न विद्यावृद्धा बहु-मन्यन्ते । तथाच सूत्रम्—'अपरिग्रहाच्चात्यन्तमनपेक्षा' इति ॥

इति त्रिगुणपरीक्षायां सद्रव्यवादसाधनम्.

---

## आनन्ददायिनी

रूपस्यैव प्रत्यक्षत्वात् त्रसरेणुरूपमप्रत्यक्षमिति पक्षमवलम्ब्याह—यद्वेति। आलोच्यते इति—पीतश्शङ्ख इतिवत् चक्षुषा गृह्य(दृश्य)ते इत्यर्थः । पिञ्जरः—पीतरूपः । विद्यावृद्धाः—पाराशर्यादयः । पाराशर्यवचनमुदा-हरति–अपरिग्रहादिति । महद्भिः सांख्यपक्षः क्वचित्त्यक्तोऽपि प्रायेण परिगृह्यते काणादपक्षस्त्वत्यन्तं त्यज्यते इत्यर्थः । यद्यपि 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'—'इति लक्षणात् प्रथयति परिमि'इत्यत्र यतिभङ्गः ; तथाऽपि—

स्वरसन्ध्याप्तसौन्दर्ये यतिभङ्गो न दोषभाक् ।

इति वृत्तरत्नाकरव्याख्यानोक्तेरदोष इति ध्येयम् । एवमुत्तरत्राऽपि समा-धेयम् ॥ २२ ॥

## तत्वमुक्ताकलापः

**संघातो नैकभूतैरपि भवति यथा ह्येकभूतस्य**

## सर्वार्थसिद्धिः

या चान्या कल्पना—'शरीरादिषु पृथिव्याद्यनेकभूतसद्भावेऽप्येकमेव भूतमुपादनम्; अन्यत् संसर्गिमात्रम्' इति; तामपि निरस्यति–संघात इति। अवयविसद्भावे हि एकप्रकृतित्वं नियन्तव्यं न वा त्वया? संघातवादे तु यथादर्शनं सर्वमुपादानम्। न च विजातीयानां संहतिर्नास्ति! दृष्टविरोधात् युष्मात्सिद्धान्तविरोधाच्च, अन्यथा कथं तैजसत्वाभिमते काञ्चनादौ गुरुत्वादिक्लृप्तिः? किंच त्रिवृत्करणं नामरूपव्याकरणार्थम्। 'चतुर्विधाहारमयं शरीरम्' इति च गर्भोपनिषत्। 'पञ्चभूतात्मकं

## आनन्ददायिनी

प्रसङ्गसंगतिमाह—या चान्या कल्पनेति। अनेकप्रकृतित्वेऽपि बाधकाभावस्य उत्तरत्र वक्ष्यमाणत्वादिति भावः। संघातवादेत्विति—अत्रानेकप्रकृतिकत्वमेकप्रकृतिकत्वमिति विचारस्यैवानुत्थानमित्यर्थः। दृष्टविरोधादिति—नीरक्षीरादिसंहतिदर्शनादित्यर्थः। दृष्टिविरोधादिति क्वचित्पाठः। सिद्धान्तविरोधमेवोपपादयति—अन्यथेति। उपष्टम्भकपार्थिवांशगुरुत्वं स्वर्णे प्रतीयते इति युष्मत्क्लृप्तिः। आदिशब्देन रूपादिर्गृह्यते। निगमाद्युक्तिभिश्चेत्यस्यार्थमाह—किंचेति। ननु त्रिवृत्करणश्रुतिर्न देहस्य पाञ्चभौतिकत्वं वदतीत्यत्राह—त्रिवृत्करणमिति। रूपवत्त्वाच्छरीरस्येति भावः। साक्षाद्विवक्षितार्थप्रतिपादिकां श्रुतिमाह—चतुर्विधाहारमयमिति। यद्यपि पेयं लेह्यं चोष्यं खाद्यमिति चतुर्विधा-

## तत्वमुक्ताकलापः

**भागैः देहादिः पञ्चभूतात्मक इति निगमाद्युक्तिभिश्च प्रसिद्धम् । न त्वेवं संकरस्स्यात्**

## सर्वार्थसिद्धिः

वपुः' इत्यादि च स्मर्यते; तदिदमाह—देहादिरिति । यथा विजातीयवृक्षपोतव्यतिषक्तोपचये वृक्षैकत्वधीः; एवमेकस्मिन्ननेकभूतारब्धे विरुद्धजातिसमावेशगन्धोऽपि न स्यादित्याह—न त्विति । एवंशब्द उक्तहेतुपरो वा । अपूर्वद्रव्यानुत्पादादित्यर्थः । तदुत्पादेऽपि न च जातिसंकर इत्याशयः । नरसिंहादिन्यायेनोभयविलक्षणावयव्युत्पत्तेस्संभवात् । कल्प्यते च युष्माभिश्चित्रं रूपान्तरम् । एतेन तज्जातीयोपात्तं कथमत-

## आनन्ददायिनी

हाराणामप्यपार्थिवरूपवत्वमेव ; तथाऽपि भूतद्वयमयत्वे शरीरस्य भूतान्तरमयत्वमपि तद्वद्भवतीति भावः । वृक्षैकत्वधीरिति—यथा चूतवटाश्वत्थव्यतिषक्ताङ्कुरजन्ये नानोपादानके एकोऽवयवीति धीरित्यर्थः । व्यतिषक्तवृक्षपोतोपचयस्यासन्निहितत्वात्तत्परामर्शो न युक्त इति पक्षान्तरमाह—एवंशब्द इति । पूर्वश्लोके प्रतिपन्नत्वात् । एवं च पाञ्चभौतिकत्वे शरीरस्य नियतजातिर्न स्यात् नियामकाभावात् । नाऽपि नाना ; साङ्कर्यप्रसङ्गात् ; नापि तद्रहितम् ; द्रव्यत्वावान्तरजातिराहितस्य कार्यस्याद्रव्यत्वापातात् । नापि जात्यन्तरम् ; अधिकद्रव्यापत्तेः इत्याद्यनुपपत्तयः परोत्प्रेक्षिताः अवयव्यनभ्युपगमपक्षे न प्रभवन्तीति भावः । अवयव्यङ्गीकारेऽपि नैते दोषाः स्युरित्याह—तदुत्पादेऽपीति । ननु

## सर्वार्थसिद्धिः

ज्जातीयामित्यपि प्रत्युक्तम्; तन्त्वादिजातीयैः अतन्त्वादिजातीयोत्पत्त्यभ्युपगमाच्च। भवतु वा पृथिवीत्वतोयत्वादिजातीनामेकत्र समावेशः! तथाऽपि का हानिः? परस्परपरिहार्युपाधिद्वयसमावेशन्यायेन दर्शनादर्शनाभ्यामेव सर्वातिप्रसङ्गशान्तेः। ननु पाञ्चभौतिकेषु कथमेकभूतशब्दः तत्तदर्थक्रियानियमश्च? वर्णितो हि भवद्भिरेव भूतान्तरोपसृष्टेष्वपि देहादिषु पार्थिवाप्यादिविभागः। कथं मन्त्रार्थवादेषु 'पृथिवी शरीरम्' इत्यादि-

## आनन्ददायिनी

तर्हि क्लृप्तानन्तर्भावाद्द्रव्यान्तरतापत्तिरित्यत्राह--कल्प्यते चेति। क्लृप्तानन्तर्भावे रूपन्यायादतिरिक्तत्वमिति भावः। द्रव्येष्वयं नियम इत्यत्राह—तन्त्वादीति। ननु जातिसंकराङ्गीकारे गवां क्षीरं पातव्यं नोष्ट्रादेरिति शास्त्रार्थनियमो न स्यात्; गव्यप्युष्ट्रत्वजातिसम्भवादित्यत्राह—परस्परेति। यथा स्वादुत्वरसवत्त्वकाश्यादिदेशप्रभवत्वादिरूपोपाधिसाङ्कर्येऽपि गोपयस्त्वोष्ट्रपयस्त्वादेः साङ्कर्याभावात् शास्त्रार्थनियमः; यथा गृहस्थत्वयतित्वादेरेककाले न साङ्कर्यं यथा वा शूद्रान्नत्वब्राह्मणान्नत्वादेरसाङ्कर्यं दर्शनबलादङ्गीकार्यम्; तथाऽत्रापि यथादर्शनं व्यवस्थासंभवान्न दोष इत्यर्थः। ननु शरीरस्य पाञ्चभौतिकत्वे कथं पार्थिवत्वव्यपदेशः? इत्याशङ्क्याह—नन्वित्यादिना। तत्तदर्थक्रियानियमः— पार्थिवत्वप्रयुक्तगुरुत्वकाठिन्यादिहेतुकक्रियैव। न तु सेचनदहनादिक्रियाः। वर्णितो हीति — अस्थित्वगादिकं पार्थिवं रुधिरादिकमाप्यमित्यादिविभाग इत्यर्थः। मन्त्रार्थवादेष्विति—निरूढपश्वङ्गहोमकरणमन्त्रार्थवादे इत्यर्थः। तत्र यद्यपि; 'पृथिव्यै शरीरम्' इति पाठो दृश्यते; तथाऽपि 'अन्तरिक्षमात्मा' इत्यादिसाहचर्यात् विभक्तिव्यत्ययेनार्थतोऽनु-

## तत्वमुक्ताकलापः

**व्यवहृतिनियमस्सूत्रितस्तारतम्यात् देहादौ येन**

## सर्वार्थसिद्धिः

विशेषव्यपदेशः? इत्यत्राह—व्यवहृतीति! सूत्रितो ह्यसौ! 'वैशेष्यात्तु तद्वादस्तद्वादः' इति त्र्यात्मकत्वात्तु भूयस्त्वात्' इति च। अत्र प्रतिबन्दीं प्रथयति—देहादाविति। येनेति तारतम्यपरामर्शः। तवाप्यनारब्धावयविकेषु विजातीयराशिषु भूयसा व्यवहारो लोकसिद्धस्संमन्तव्यः। विजातीयदारुशिलाद्यारब्धेषु च खट्वागोपुरादिषु किञ्चिज्जातीयत्वनियमः। तत्रावयव्यनारम्भे सर्वत्रैवमस्मन्मतसिद्धिः।

## आनन्ददायिनी

वादः। तथैव पाठ इत्येके। शाखान्तरे तथा पाठ इत्यपरे। वैशेष्यादित्यादि—एकभूतांशस्याधिक्यात्तद्भूतव्यवहार इत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्तिद्योतिका। त्र्यात्मकत्वादिति – त्रित्वमुपलक्षणम्; पञ्चभूतात्मकस्यापि त्र्यात्मकत्वात्। कथमेकभूतव्यवहारः? इति शङ्कायामेकांशस्य भूयस्त्वात्तद्व्यवहार इत्यर्थः। तारतम्यपरामर्श इति—तथाच मूलस्यायमर्थः—भूतान्तरयुजि—पञ्चभूतानां देहारम्भात्पूर्वकाले संहतानां सत्त्वात् शरीरं पृथिव्यारब्धमेव कुतः अप्यं वा भवतु? इति शङ्कायां पृथिव्यवयवानां बहुत्वात्तस्या एव शरीरारम्भकत्वमित्यादि किञ्चिद्व्यवस्थापकं वक्तव्यम्; तदत्रापि समानमिति। आदिशब्दद्वयार्थमप्याह—तवापीति। विजातीयराशिषु—अधिकैकजातीयमाषतिलादिराशिषु। अस्मन्मतसिद्धिरिति—तत्रातिरिक्तावयव्यभावेऽपि शब्दान्तरादिसर्वकार्यसिद्धौ सर्वत्राऽपि तथा शब्दान्तरादिसंभवात् अवयवी न स्यादित्यर्थः।

## तत्वमुक्ताकलापः

**भूतान्तरयुजि भवतो भौमतादिव्यवस्था ॥२३॥**

## सर्वार्थसिद्धिः

**[1]*विभागादविभागाच्च भूतभौतिकभेदधीः**
**स(त्यै)त्येव [2]*यदि वा द्रव्ये सिद्धसाध्यदशान्वयात् ।**
**एकत्वं च बहुत्वं च मृत्पिण्डघटादिवत् ॥**

## आनन्ददायिनी

ननु अवयव्यभावे सर्वेषां भूतसंघात्मकत्वेन भूतत्वात् भूतभौतिकभेदधीरसत्या स्यात् इत्याशङ्क्य विभागाविभागाभ्यां वा सिद्धसाध्यावस्थायोगेन वा सत्या संभवतीत्याह—विभागादिति । नन्वतिरिक्तावयविनिरासे प्रकृतेरेकत्वात् बहुरूपप्रजारूपता न संभवतीत्यत्राह—एकत्वं चेति । केचित्तु—अजामेकां बह्वीं सरूपां प्रजां जनयन्तीमिति

## भावप्रकाशः

[1]* विभागादित्यादि—अत्र विभागो भूतभौतिकभेदधीरित्यत्र हेतुः अविभागश्च सत्येव द्रव्ये इत्यत्रेति विवेकः । 'सदेव सोम्येदमग्र आसीदेकम्' 'तदैक्षत बहुस्याम्' 'हन्ताहमिमास्तिस्रो देवताः नामरूपे व्याकरवाणि' 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयम्' 'नामरूपं च भूतानाम्' इत्यादिश्रुतिस्मृतयोऽत्र मूलभूताः ॥ नन्वद्रव्यसरे 'विभागस्संयोगनाशरूपः सोऽपि भावान्तराभावपक्षे संयोगन्तरात्मक इत्यपि व्यवस्थापयिष्यते । अतो भूतभौतिकयोस्तत्वतोऽभेदेन विभागो न संभवति । एवं नीरक्षीरयोरिवाविभागोऽपीति नामरूपव्याकरणश्रुत्यनुरोधेन धर्मपुरस्कारेण तौ वाच्यौ अतोऽवस्थाभेदनिबन्धनैव भूतभौतिकभेदधीरिति पर्यवस्यतीत्याह [2]* यदिवा इत्यनेन ।

## सर्वार्थसिद्धिः

समष्टिव्यष्टीत्यैव त्रिगुणे वदति श्रुतिः ।
ईदृक् सत्कार्यवादश्च वैदिकैः परिगृह्यते ।
द्रव्यस्य पूर्वसिद्धस्य साध्यावस्थाविशेषतः ।

ननु यदि पूर्वं नित्यं सद्द्रव्यम्! तत्कथं साङ्ख्यपक्षमुज्झतः कार्यं स्यात्? या त्वागन्तुक्यवस्था सा न प्राक्सती ; अतः कथं सत्कार्यवादं ब्रूथ? इत्थम्! प्राक्सदेव द्रव्यमवस्थान्तर-विशिष्टवेषेण कार्यम् ; तथैव लोकवेदव्यवहारस्थितिरिति ॥२३

इति त्रिगुणपरीक्षायां देहादेः पाञ्चभौतिकत्वं
सद्द्रव्यवादनिगमनं च.

---

## आनन्ददायिनी

प्रकृतिविशेषणं बहुत्वमित्याहुः । ननु आगन्त्ववस्थायोगित्वमेव कार्यत्वं द्रव्यस्य ; न त्वसत उत्पत्तिः ; अत एव शरीरस्यापि पाञ्चभौतिकत्वमिति इयता प्रतिपन्नम् ; तदयुक्तम् ; ईदृशसत्कार्यवादस्य साङ्ख्यैरनङ्गीकारे सत्कार्यवादत्वाभावात् इत्यत आह—ईदृक्सत्कार्यवादश्चेति । ननु अगन्तुक्योऽवस्थाः; तथाऽपि तद्वत्त्वेन सत्कार्यपक्षो नोपपद्यते इत्याशङ्कते—नन्विति । साङ्ख्यमतमुज्झत इति—अभिव्यक्तिपक्षमनभ्युपगच्छत इत्यर्थः ॥ २३ ॥

इति त्रिगुणपरीक्षायां देहादेः पाञ्चभौतिकत्वं
सद्द्रव्यवादनिगमनं च.

---

## तत्वमुक्ताकलापः

### सन्ति प्रागप्यवस्थाः सदितर (जनना) कर-

## सर्वार्थसिद्धिः

ईदृशसत्कार्यवादमसहमानस्य साङ्ख्यस्य नित्यैकान्तवाद-नियतान् प्रयोगानन्वाह—सन्तीति। द्रव्यपक्षीकारे अस्मान् प्रति सिद्धसाध्यता; अतोऽवस्था इत्युक्तम्। यदाहुः साङ्ख्याः—

असदकरणात् उपादानग्रहणात् सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥

इति। तत्रायं सदितरकरणादृष्टेरि[1]*त्येको हेतुः। अप्राप्तनिष्पत्त्य-दृष्टेरिति द्वितीयः। सदितरशब्देन प्रागसत्त्वमिह विवक्षितम्।

## आनन्ददायिनी

आक्षेपिकी संगतिरित्यभिप्रायेणाह—असहमानस्येति। नित्यैकान्तवादित्वात्तस्य देहादेः पञ्चभूतोपादानकत्वायोगादित्यर्थः। एकान्तता चैकरूपता। तथाच सर्ववस्तूनामेकरूपत्वान्नागन्तुकावस्थाऽपीति भावः। असदकरणादिति। कार्यं—कार्यत्वेनाभिमतं घटपटाद्यात्मकमिति पक्षः। सदिति साध्यम्; सर्वदा सदित्यर्थः। एवमपरमपि द्रष्टव्यम्। उपादानग्रहणादित्यस्य उपादानेन संबन्धात्कार्यस्येत्यर्थः। कार्यं सत् उपादानेन संबद्धत्वात् इति द्वितीयः। तमपि व्यतिरेकव्याप्ति-प्रदर्शनमुखेन व्याख्याति—अप्राप्तनिष्पत्त्य(सिद्धेः)दृष्टेरिति। तथा च

## भावप्रकाशः

[1]* एको हेतुरिति—अत्राह वंशीधरः—हेतुपदस्य व्यतिरेकव्याप्ति-

## सर्वार्थसिद्धिः

**न ह्यसत् खपुष्पादि क्रियेत! माभून्नित्यासतः करणम्! अत्र प्रागसत्त्वमात्रं विवक्षितमिति चेन्न; तद्वदेव कदाचिदसतस्सर्वदैवासत्त्वापातात्। न चासतः कदाचित् सत्त्वापत्तिः; विरोधात्। [1]*न हि चिच्छक्तेः कदाचिदपि जडत्वं जडस्य वा चित्त्वम्;**

## आनन्ददायिनी

मूलेऽपि सदितरजननाप्राप्तनिष्पत्त्ययोगात् इति व्यतिरेकव्याप्तिप्रदर्शनमुखेन उक्तहेतुद्वयमभिप्रेतम्; अन्यथा वैयधिकरण्यप्रसङ्गात्। कारणभावात्—काणात्मकत्वादिति तृतीयो हेतुः। सर्वसंभवाभावात् शक्तस्य शक्यकरणात् इति आद्यद्वयस्यानुग्राहकम्। तथाच प्रथममुक्तं तर्कतद्धेतुद्वयं दूषयितुं हेतुद्वयं व्याख्यातामिति द्रष्टव्यम्। व्यतिरेकव्याप्तौ नित्यासत्त्वं साधनावच्छिन्नसाध्यव्यापकमुपाधिरिति शङ्कते—माभूदिति। साध्यस्यासत्त्वमात्रस्य अनुकूलतर्कबलाद्व्याप्तिग्रहे साधनाव्यापकता नास्तीत्याह—नेति। साधनाव्यापकत्वभङ्गमेवोपपादयति—नचासत इति। कालभेदेनाऽप्यविरोधासंभवादित्यर्थः। ननु एकस्यानेक-

## भावप्रकाशः

परत्वेन तत्साधकत्वात्; तथा हि—विमतं कालत्रये सत् जन्यत्वादित्यादि। अत्र तत्वकौमुद्यां 'असच्चेत्कारणव्यापारात्पूर्वं कार्यं नास्य सत्त्वं केनापि कर्तुं शक्यम्। न हि नीलं शिल्पिसहस्रेणाऽपि पीतं कर्तुं शक्यम्' इत्युक्तम्; तत्र नीलवस्त्रादेः क्षारादिना नीलरूपपरावृत्त्या हरिद्रादिना पीततासंभवमालोच्य तत्वकौमुदीवाक्यस्य अन्यस्यान्यथाभावानुपपत्तौ तात्पर्यमाकलय्य दृष्टान्तान्तरमाह [1]*नहि चिच्छक्तेरित्यादिना। एतेन साङ्ख्यमते धर्मधर्मिणोर्भेदो नाङ्गीक्रियते इति तत्वकौमुदीविभाक-

## सर्वार्थसिद्धिः

एवं यद्यतोऽन्यत् न तत्सर्वं कदाचिदपि तत्स्यात्; प्रमाणादेरपि कदाचिदप्रमाणत्वप्रसङ्गात्। [1]*नचातीतादेर्वर्तमानतादिरीश्वरेणापि सुनिष्पादः; असत्त्वं सत्त्वं च वस्तुनोऽवस्थेति

## आनन्ददायिनी

धर्मवत्त्वमविरुद्धम्; तथाच सत्त्वासत्त्वे धर्मौ घटस्य सत एवेति शङ्कते— असत्त्वं सत्त्वं चेति। तर्हि सत्त्वासत्त्वाश्रयस्यानादितया सत्त्वकाले सत्तये

## भावप्रकाशः

रोक्त्या नीलपीतयोः प्रकृतिपरिणामत्वेन प्रकृत्यनतिरिक्ततया यथाश्रुतेऽसंगतिरिति चोद्यस्यापि नावकाशः। कारणात् कार्यस्याविभागः अनभिव्यक्तिरूपः अतीताख्यो लक्षणपरिणामः। कारणात् कार्यस्य विभागः अभिव्यक्त्यात्मकः वर्तमानताख्यो लक्षणपरिणामः। तयोरैक्ये सृष्टिप्रलययोरैक्यं स्यादिति भेद एवास्थेय इत्याह-- [1]*नचातीतादेरित्यनेन। अयमेव हि सत्कार्यवादिनामसत्कार्यवादिभ्यो विशेषः—यत् तैरुच्यमानौ प्रागभावप्रध्वंसौ सत्कार्यवादिभिः कार्यस्यानागतातीतावस्थे भावरूपे प्रोच्येते। वर्तमानाख्या चाभिव्यक्त्यवस्था घटाद्यतिरिक्तेष्यते घटादेरवस्थावत्त्वानुभवादिति विज्ञानभिक्षुणावस्थातद्वतोर्भेदोक्तेः नात्र पूर्ववच्चोद्यमुदेतीति बोध्यम्। उपादानग्रहणादिति हेतुः तत्वकौमुद्यामित्थं विवृतः—उपादानानि कारणानि। तेषां ग्रहणं कार्येण संबन्धः। उपादानैः कार्यस्य सम्बन्धादिति यावत्। एतदुक्तं भवति—कार्येण सम्बद्धं कारणं कार्यस्य जनकम्। सम्बन्धश्च कार्यस्यासतो न सम्भवति इति अत्रोपादानपदस्य निमित्तोपादानोभयसाधारण्येन कारणमात्रपरत्वोक्त्या कार्यं स्वसम्बद्धकारणकं कारणनिष्पन्नत्वात् इति मूलविवक्षितानुमाने यत्र स्वसम्बद्धयत्कारणकत्वं नास्ति तत्र

## सर्वार्थसिद्धिः

**चेत्; वस्तुनस्तर्हि अनादितैव! न च सन्निव असन् घटः प्रागुपलभ्यते! अस्माकं तु अव्यक्तावस्थयाऽनुपलब्धिरप्युक्ता। 'नह्यसन् घटादिर्न घटादिः' इति तु कस्यचिद्वचनं बालप्रता-**

## आनन्ददायिनी

वासत्त्वकालेऽप्यसत्तया चोपलब्धिः प्रसज्येत; नचेष्टापत्तिः; अनुभव-विरोधादित्याह—वस्तुनस्तर्हीति। ननु सर्वदा सत्त्वे तवाऽपि सर्वदा सत्त्वेन प्रतीतिस्स्यादित्यत्राह—अस्माकं त्विति। यद्यप्यव्यक्तावस्था-व्यक्तावस्थयोर्विरोधात् कथं व्यक्तस्यैवाव्यक्तत्वम्? कालभेदेनाविरोधेऽ-प्यव्यक्तावस्थस्याप्रतीतिवदसत्त्वावस्थस्याप्यप्रतीतिरिति वक्तुं शक्यम्; तथाऽप्येकस्यैव व्यञ्जकसन्निधानासन्निधानाभ्यां समावेशो दृष्टः; न तथा सत्त्वासत्त्वसमावेश इति भावः। सत्त्वविशिष्टस्य कारणत्वखण्डनाय; 'किञ्च स्वरूपसत्त्वं स्वरूपाद्घटाद्यात्मनो नाधिकम्। असतोऽपि च स्वरूपं स्वरूपमेव। न ह्यसन् घटादिर्न घटादिः। तथा सति घटादिर्नेत्यपि न स्यात्; असतोऽघटादित्वात्, इति खण्डनोक्तमनुवदति—न ह्यसन् घटादिरिति। अ त्वेन स्वरूपेण व्यवह्रियमाणं घटादि घटादिरूपं न भवतीति न स्वरूपमेव सत्त्वमिति यावत्। तत्र प्रतिबन्दिः—तथा सति स्वरूपसत्त्वाभावे घटादिसत्ताऽपि स्वरूपं न स्यात्; तथा च सत्त्वं न स्यात्। तत्र हेतुः असतोऽघटादित्वात्—स्वरूप-त्वाभावात्; तथाच निषेधो न स्यात्। प्रतियोगिनोऽभावादिति भावः। तथाच सत्त्वस्य घटरूपत्वे असत्त्वस्यापि घटरूपत्वमविशेषा-दिति सत्त्वासत्त्वात्मकत्वयोर्विरोधात् सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं पर्यवस्यतीति असन् घटादिः—असत्त्वेन व्यवह्रियमाणघटादिः न

## तत्वमुक्ताकलापः

णाप्राप्तनिष्पत्त्य(योगात्)दृष्टेः

## सर्वार्थसिद्धिः

रणम् । अभावप्रतियोगिवचने विवक्षितविरुद्धोक्तेः । अभावमात्रविवक्षायां विरोधात् इति । उपादानग्रहणादित्यनेन विवक्षितं हेतुं व्यतिरेकेण व्यनक्ति—अप्राप्तनिष्पत्त्यदृष्टेः इति । [1]* न हि

## आनन्ददायिनि

घटादिः—स्वरूपमेव नास्तीति वक्तुं न शक्यत इत्यर्थः । कुतः? तथा सति घटादिस्वरूपं न स्यात् । तत्र हेतुः–असतोऽघटादित्वात् घटादिस्वरूपस्यातद्रूपत्वादित्यर्थः । तथाचायं निर्गलितार्थः—सत्त्वस्य घटरूपत्वे असत्त्वस्यापि घटरूपत्वमविशेषादिति सत्त्वासत्त्वात्मकत्वयोर्विरोधात् । अन्यतरपरिशेषे स्वरूपशून्यतायां पर्यवस्यतीति खण्डनतात्पर्यम् । किमत्र असत्त्वमभावप्रतियोगित्वं विवक्षितं उताभावात्मकत्वमिति विकल्पमभिप्रेत्य आद्यं दूषयति—अभावेति । अभावप्रतियोगित्वेऽपि सत्त्वविरोधाभावेन असत्त्वासिद्धेरित्यर्थः । द्वितीय आह—विरोधादिति । भावात्मकत्वेन घटादेरुपलम्भादभावात्मकत्वाभावा (त्वविरोधा) दित्यर्थः ॥

ननु सांख्यकारिकायां उपादानग्रहणादित्युक्तम्; मूलेऽप्राप्तनिष्पत्त्ययोगादित्यनुवादोस्ति ; स न युक्त इत्यत्राह—उपादानग्रहणादित्यनेनेति ।

## भावप्रकाशः

तत्कारणनिष्पाद्यत्वमपि नास्तीति व्यतिरेकव्याप्तिरापि निमित्तोपादानसाधारणीत्यभिप्रेत्याह— [1]* न हीत्यादि–कारणपदस्य परिणामिकारणपरतया संकोचकल्पनं वंशीधरस्याचुत्र्यभाति भावः । तत्वकौमुद्यां सम्बन्धश्च

## तत्वमुक्ताकलापः

शक्ताशक्तप्रभेदादिभिरपि यदि

## सर्वार्थसिद्धिः

घटादिकार्यमप्राप्तैरन्यत्र दण्डचक्रादिभिस्तस्योत्पत्तिः; तन्त्वादिभिर्वा पटादेः! अतोऽवगम्यते स्वकार्यं प्राप्तैरेव निमित्तैरुपादानैश्च स्वसाध्यसाधनमिति। [1]*प्राप्तिश्च द्विनिष्ठेति [2]*साध्यस्यापि साधनवत्पूर्वभावित्वात् सदेव साध्यमिति। 'शक्तस्य शक्यकरणात्' इत्युक्तहेत्वभिप्रायेण शक्ताशक्तप्रभेदवचनम्।

## आनन्ददायिनी

उपादानग्रहणमुपलक्षणमित्याह—दण्डचक्रादिभिरिति। सदेव साध्यमिति—पूर्वमपि सदेव कार्यं साध्यमित्यर्थः। ननु शक्ताशक्तप्रभेदादिभिरित्यनुवादो न युक्तः कारिकायामदृष्टेरित्याशङ्क्याह—शक्तस्येति। ननु घटादिकार्यं प्रागपि सत् शक्तकारणजन्यत्वादित्यत्र

## भावप्रकाशः

कार्यस्यासत्त्वे न संभवतीत्युक्तम्; तत्र प्रयोजकमाह—[1]* प्राप्तिश्च द्विनिष्ठेति। 'इतश्च कारणव्यापारात्प्राक् सदेव कार्यम् उपादानग्रहणात्' इति तत्वकौमुदीवाक्येन मूले सत्कार्यमित्यत्र उपादानग्रहणादिति हेतुर्विवक्षित इति प्रतीयते इति भावेनाह—[2]* साध्यस्येत्यादि। एतेन 'अत्र चेदमनुमानं—मृदादयः स्वसंबद्धकार्यजनकाः उपादानकारणत्वादिति वंशीधरोक्तिर्मूलाननुगुणेति बोधि-

## सर्वार्थसिद्धिः

[1]* असतोऽप्यप्राप्तस्यापिसृष्टिः हेतुशक्तिनियमात् स्यादित्यस्योत्तरमेतत्—अयं भावः—यदि कारणेष्वसत् तदप्राप्तं च कार्यमुत्पद्येत तदा तिलेभ्य एव तैलं किमुत्पद्यते न सिकताभ्यः? शक्ताशक्तप्रभेदादिति चेत्; सिद्धं नस्समीहितम्! * तिलानां तैलोत्पादनशक्तिर्हि तद्गर्भत्वमेव! अन्यादर्शनात्। तदशक्तिश्च

## आनन्ददायिनी

व्याप्तिरसति ग्राह्या; तत्र जन्यत्वादित्येव हेतुस्स्यात्; तथाच प्रथमहेत्वभेद इत्याशङ्क्य पूर्वहेतौ विपक्षे बाधकस्तर्क इत्याह—असतोऽपीति। ननु शक्तस्य जनकत्वं कथमप्राप्तस्योत्पत्त्यभावव्याप्तौ बाधकस्तर्क इत्यत्राह—अयं भाव इति। तद्गर्भत्वमेवेति—तैलगर्भत्वमेवेत्यर्थः!

## भावप्रकाशः

तम्। असदकरणादुपादानग्रहणादित्यत्र विवक्षितहेतुद्वयाप्रयोजकत्वमपाकरोति मूले शक्तस्य शक्यकरणादितीत्याशयेनाह—

[1]* असत इत्यादि—एतेन तत्वकौमुद्यां द्वितीयहेतुमात्राप्रयोजकत्वशङ्काप्रदर्शनं प्रथमहेत्वप्रयोजकत्वस्याशङ्काया अप्युपलक्षणामिति। 'अत्र चेदमनुमानम्—विमतं शक्तिमत्कारणकं कार्यत्वात्' इति। शक्तितः प्रवृत्तेश्चेत्येतद्विवरणतत्वकौमुद्यनुरोधेनाह—[2] *तिलानामित्यादि—यद्यपि तत्वकौमुद्यां उपादानग्रहणादिति हेतोरप्रयोजकत्वशङ्कावारणार्थं सर्वसम्भवाभावादिति हेतुरित्येतावन्मात्रमेवोक्तं; तथाऽपि मध्यमणिन्यायेन हेतुचतुष्टये तच्छङ्कानिवारणाय मूले सर्वसम्भवाभावादित्युक्तमित्येव युक्तमित्यभिप्रेत्याह—

## सर्वार्थसिद्धिः

सिकतानां तद्भावः। तथासति तद्वतस्तन्निष्पत्तेः प्रागपि तत्सिद्धिरनिवार्येति। आदिशब्देन कारणभावात् सर्वसंभवाभावादिति हेतुद्वयग्रहणम्। कारणभावात् कार्यस्य कारणात्मकत्वादित्यर्थः। प्रागेव सति कारणे कथं तदा तदाभिन्नं कार्यमसद्भवेत्? [1]* नन्वस्तु प्रागसदेव कार्यम्? मा च भूवन् हेतुप्राप्तितद्वृत्तितदैक्यानि; तथाऽपि कस्यचिदेव किंचित्कार्यमित्यत्र सर्वसम्भवाभावादिति [2]* प्रसङ्गतद्विपर्ययाभ्यां प्रत्युक्तिः तथाहि—यदि प्रागसत् हेतुभिरप्राप्तं हेतुवृत्तितादात्म्यरहितं च तत उत्पद्यते सर्वस्मात्सर्वसम्भवस्स्यात्; न चासावस्ति! इति

## आनन्ददायिनी

तद्भावः—सिकतादिषु तैलाभावः। तद्वतः—कार्यरूपशक्तिमतो हेतोः। तन्निष्पत्तेः—कार्यनिष्पत्तेः; प्रागपि तत्सि (द्धिरनिवार्येत्यर्थः) द्धिः कार्यसत्ताऽस्तीत्यर्थः। हेतुद्वयं—तर्कमूलभूतव्याप्ति (के आपादक) द्वयमित्यर्थः। प्रसङ्गतद्विपर्ययावेवोपपादयति—तथाहीति। सर्वस्मात्सर्वसंभवस्स्यात्—सर्वकारणादपि सर्वं कार्यं स्यादिति प्रसङ्गः। न चासौ

## भावप्रकाशः

[1]* नन्वस्तु इत्यादिना। [2]* प्रसङ्गताद्विपर्ययाभ्यामित्यादि—

'प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्'

इत्यत्र तत्वकौमुद्यां वाचस्पतिना 'पूर्ववच्छेषवत्सामान्यतो दृष्टम्' इति न्यायसूत्रानुरोधेन अनुमानत्रैविध्यमुक्तम्; न तु अनुपलब्धिः स्वभावकार्ये चेति बौद्धमतानुसारेण; अतः प्रसङ्गताद्विपर्यययोः शेषवद-

## तत्वमुक्ताकलापे

**न स्वोचितात्कार्यदृष्टेः ।**

## सर्वार्थसिद्धिः

**पञ्चानामप्याभासत्वाभिप्रायेण प्रतिवक्ति—नेति । तत्र प्रथमस्य प्रतिक्षेपे हेतुः कार्यदृष्टेरिति । शेषाणां तु स एव स्वोचितादिति विशेषितः । न तावत् कार्यमिति किमपि न दृष्टम्! सर्वलोकवेदविरोधात् । व्यक्तिसाधनस्यापि निराश्रयत्वप्रसङ्गाच्च । न च दृष्टमपि न सत्यम्! माध्यमिकादिमतानां निराकरिष्यमाणत्वात् । न च सत्यमपि न कारणाद्व्यतिरेकेण गृह्यते! उक्तोत्तरत्वात् । प्रकृतिविकृतीत्यादिविभागभङ्गप्रसङ्गाच्च ।**

## आनन्ददायिनी

सर्वकार्यसम्भवोऽस्तीति विपर्ययः । पञ्चानामिति—साधकानिष्टापादकरूपाणामनुमानतर्काणामित्यर्थः । विशिष्टस्य सर्वहेतुदूषणपरत्वे विशेषणवैयर्थ्यमाद्यहेतावित्यभिप्रायेणाह—तत्रेति । किञ्चिद्विशेषस्य किञ्चिद्विशेषं प्रति अन्वयव्यतिरेकवशात् कारणत्वोक्तौ नोक्तदूषणमिति शेषाणां दूषणमाह—शेषाणां त्विति । स्वोचितत्वं—कार्यानुकृतान्वयव्यतिरेकित्वम् । कार्यदृष्टेरित्येतदुपपादयति—न तावदिति । तथाच सत उत्पत्तिदर्शनाद्बाध इत्यर्थः । न चासत उत्पत्तौ शशशृङ्गस्याप्युत्पत्तिः । अन्वयव्यतिरेकासिद्धकारणाभावात् । निराश्रयत्वप्रसङ्गाच्चेति—तथाच आश्रयासिद्धिरिति भावः । लोकविरोधपरिहारमाशङ्कते—न च दृष्टमपीति । परिहरति—माध्यमिकादिमतानामिति । बाधादर्शनेऽप्यसत्यत्वे सर्वत्राप्येवं प्रसङ्गेन माध्यमिकमतप्रसङ्गः ; स च निराकरिष्यत इत्यर्थः । उक्तोत्तरत्वादिति—पूर्वं घटो नासीदिदानीमासीदिति कारणाद्व्यतिरेकेण लोकदृष्टेरित्यर्थः । प्रकृतीति—असदवस्थाया

## सर्वार्थसिद्धिः

[1]*अतः कारणाद्भिन्नत्वेन दृष्टं कार्यं तेनाकारेण पूर्वं नासी-दिति त्वयैवाकामेनापि स्वीकर्तव्यम्। न हि घटाकारेण निष्पन्नस्य

## आनन्ददायिनी

अभावे सर्वेषां स्वस्वावस्थाविशिष्टानां प्राक्सत्वात् किंचिन्न कस्य-चिद्विकृतिरित्यर्थः । न च यद्यतः कदाचिदभिव्यक्तं तत्तद्विकृतिरिति विभागः ; अभिव्यक्तेः प्रकाशात्मकत्वे प्रकृतेरपि कदाचिच्छब्दादिभिः प्रकाशात्तद्विकृतित्वप्रसङ्गात् । आपरोक्ष्यविवक्षायां प्रकृत्यादि (त्यादीनां) (प्रति) महदादि विकृतिर्न स्यात् । तस्या (तेषामा) परोक्ष्याभावात् । न च यद्यस्माद्विभज्यते सा तस्य प्रकृतिरिति विभागः ; विभागस्य प्राक्सत्त्वे असत्त्वे च ( उक्तदोषात् ) असाध्यत्वप्रसङ्गात् । न चाभिव्यक्तिरन्या ; तस्याः पराभिमतोत्पत्तेरन्यस्या दुर्वचतया आद्यक्षणसम्बन्धात्मिकायाः प्रागसत्त्वनियमादिति भावः । अवस्थायाः प्राक्सत्वे कारकव्यापार-वैयर्थ्यमित्याह—<u>नहीति</u> । <u>निष्पन्नस्य</u>—सिद्धस्य निष्पाद्यत्वायोगात् ; अन्यथा घटस्योत्पन्नस्य सर्वदोत्पादप्रसङ्गादिति भावः। ननु न कारक-

## भावप्रकाशः

नुमाने पर्यवसानं बोध्यम् । [1]*अतः कारणाद्भिन्नत्वेनेत्यादि—एतेन कार्यदृष्टेरिति मूलस्य कारणाद्भिन्नत्वेन कार्यस्य दर्शनादित्यर्थ इति सिद्धम् । इत्थं च अवस्थानां कारणव्यापारात्पूर्वं सत्त्वसाधने प्रत्य-क्षबाधो दोष उद्भावितो भवति । कारणाच्चास्य सतोऽभिव्यक्तिरव-शिष्यते ; 'सतश्चाभिव्यक्तिरुपपन्ना' इति वाचस्पत्युक्तिं दूषयति—

## सर्वार्थसिद्धिः

पुनरपि दण्डादिव्यापारनिष्पाद्यत्वमास्ति ! [1]* किंच कार्यव्यङ्ग्यशब्दौ च व्यवस्थितविषयौ लोके दृष्टौ कारकव्यञ्जकभेदश्च । कारकं समग्रमप्येकमुत्पादयति ; व्यञ्जकं तु सहकारिसंपन्नं समानेन्द्रियग्राह्याणि समानदेशस्थानि तादृशानि सर्वाण्यपि व्यनक्ति । तदत्र घटादिव्यक्तिसामग्र्यैव तद्वन्मृत्पिण्डगतानां करकादीनामपि व्यक्तिस्स्यात् । व्यञ्जकत्वे सिद्धे अवान्तरव्यङ्ग्यभेदप्रतिनियतव्यञ्जकभेदव्यवस्थाक्लृप्तिः ! न

## आनन्ददायिनी

व्यापारस्य वैयर्थ्यं; तेषां व्यञ्जकत्वादित्यत्राह—किञ्चेति । कारकव्यञ्जकयोर्व्यापारभेदादपि नैक्यमित्याह—कारकं समग्रमिति । व्यञ्जकं त्विति—एकस्य दीपस्य युगपद्घटपटादिव्यञ्जकत्वदर्शनादिति भावः । कारकस्य व्यञ्जकत्वमेव यदि तदा बाधकमप्याह—तदत्रेति । न च मृत्पिण्डे करकाद्यभावः ; क्रमेणोत्पद्यमानानां दर्शनादिति भावः । ननु व्यञ्जकानां स्वभावभेदः कल्प्यते ; केषांचिद्युगपदनेकव्यञ्जकत्वं केषांचित् किञ्चिज्जातीयव्यञ्जकत्वं ; तथा च नोक्तदोष इत्यत आह—व्यञ्जकत्वे सिद्धे इति । ननु आगन्तुकं नास्ति; सर्वं पूर्वमेव सत्; तथाच तदनुरोधाद्घटादिकारणानां दण्डादीनां व्यञ्जकत्वमङ्गीकरणीयमित्याशङ्क्य प्रत्यक्षादिभिरागन्तवस्सन्त्येवेत्यभ्युपगन्तव्यम्; अन्यथा

## भावप्रकाशः

[1]* किंचेत्यादिना । धर्मधर्मिणोरभेदेनावस्थानां प्राक्सत्ता न सिध्यतीत्याह—

## सर्वार्थसिद्धिः

चेह तथा! [1]* आगन्तुकाभावे च पुरुषवत् प्रकृतिरपि ते निर्व्यापारैव स्यात्। तथा च गतं सृष्टिप्रलयादिवादैः सिद्धान्तसृष्ट्यादिभिश्च! किंच सत्कार्यमिति कार्यस्य सत्त्वमात्रे साध्ये सिद्धसाध्यता [2]* कारकव्यापारात्प्रागपि सदिति साध्ये कार्यस्य कारकव्यापारस्य प्रागसत्त्वमङ्गीकृतं स्यात्। असदकरणात् शक्तस्य शक्यकरणादिति हेत्वोश्च करणशब्देनापूर्वोत्पादने विवक्षिते स्ववचनव्याघातः। व्यक्तिविवक्षायां तु व्यज्यमानत्वात्प्रागपि सदिति स्यात्; तदा अन्यतरासिद्धो हेतुः। ननु

## आनन्ददायिनी

दोषमाह—आगन्तुकाभाव इति। व्यापारस्यागन्तुकस्याभावादित्यर्थः। तस्यापि पूर्वसत्त्वाङ्गीकारे सृष्टिप्रलयादिकं युगपत्स्या (सर्वदा स्या) दिति भावः—सिद्धान्तसृष्ट्यादिभिश्चेति। सिद्धान्तकल्पनयेत्यर्थः। यद्वा त्वत्सिद्धान्तसृष्ट्यादिक्रमादिभिश्चेत्यर्थः—कारकव्यापारात्प्रागिति। प्राक्(प्राक्सत्त्व) स्य तदभावघटितत्वादिति भावः—अपूर्वोत्पादने इति। उत्पादनस्योत्पत्तेः पूर्वमविद्यमानस्य विवक्षितत्वे इत्यर्थः। व्यक्तिविवक्षायामिति। अभिव्यक्तिविवक्षायामित्यर्थः। विपर्ययमुखेन पर्यवसितं हेतुमाह—व्यज्यमानत्वादिति। हेत्विति—व्याप्तं लिङ्गमित्यर्थः।

## भावप्रकाशः

[1]* आगन्तुकाभावे इति। 'सत्कार्यं; कारणव्यापारात्प्रागपीति शेषः। तथा च न सिद्धसाधनं नैयायिकतनयैरुद्भावनीयम्' इति वाचस्पतिव्याख्यानं दूषयति [2]* कारकव्यापारात्प्रागपीत्यादि ॥

## सर्वार्थसिद्धिः

सतोऽभिव्यक्तौ घटतैलतण्डुलादि निदर्शनमस्ति असत उत्पत्तौ न किञ्चित्! इति चेत्; किमतः? नहि निदर्शनमेव प्रमाणम्! हेतुनैष्फल्यप्रसङ्गात्। न च निदर्शनाभावो बाधकः! सर्वत्र प्रतिनियतस्वभावलोपप्रसङ्गात्। अपि च असदकरणादित्यत्र कार्यस्य प्राक्सत्वे क्रियमाणत्वादित्येव हेतुस्स्यात्। तथा च [1]* प्रतिज्ञाहेतुविरोधः। विपक्षात् खपुष्पादेः सपक्षाच्च सर्वस्मात् व्यावृत्तत्वेन हेतोरसाधारणत्वप्रसङ्गश्च। भावत्वेन तु प्राक्सत्त्वं साधयाम इति चेत्; तदाऽपि प्रत्यक्षविरोधः। अन्यथा नित्या-सतोऽपि [2]* कुताश्चिन्नित्यसत्त्वसाधने निवारकाभावात्। असत-स्सत्त्वापादनमशक्यमित्युक्तमिति चेन्न; अत्यन्तासत्त्वे विव-क्षिते कार्येषु तदभावात्। प्रागसत्त्वे तु सृष्टयनुगुणस्यैव तद्वि-रुद्धत्वोपन्यासात्॥

## आनन्ददायिनी

सर्वत्रेति। तेजस उष्णस्पर्शः पृथिव्या गन्ध इत्यादिलोपप्रसङ्गादित्यर्थः। अपूर्वोत्पादनविवक्षायां विरुद्धत्वमपीत्याह—अपिचेति। सपक्षाच्चेति—नित्यत्वेनाभ्युपगतादात्मादेरित्यर्थः—अन्यथेति। शशशृङ्गादेरप्युत्पत्त्य-भावादिना नित्यसत्त्वसाधनप्रसङ्गादित्यर्थः—प्रागसत्त्वे त्विति। तस्यो-त्पत्तियोग्यतावच्छेदकत्वात् उत्पत्तेश्च आद्यसमयसंबन्धरूपायाः प्राग-सत्त्वस्यानुकूलत्वात् तस्य तद्विरुद्धत्वोपन्यासो व्याहत इत्यर्थः।

## भावप्रकाशः

[1]* प्रतिज्ञाहेतुविरोध इति—प्राक्सतस्सिद्धस्य कृतिसाध्यत्वासंभवादिति भावः। [2]*कुताश्चित्—विषयत्वादिना। समानतन्त्रे 'शब्दज्ञानानुपाती वस्तु-शून्यो विकल्पः' इति असतोऽपि वृत्तिविषयत्वव्यवस्थापनादिति भावः।

## सर्वार्थसिद्धिः

प्राग सत्तुच्छमेव स्यात् सच्च नित्यं सदित्यसत् ।
अयथादृष्टि निर्णेतुरशेषाभीष्टविप्लवात् ॥
अन्योऽपि घटवान् कालः कालत्वादिति वादिनः ।
पक्षदृष्टान्तबाधादिप्रसङ्गःप्रणिधीयताम् ॥

यच्च कारकाणां कार्यं प्राप्तानामेव तदुत्पादकत्वमिति; व्याहतमेतत्; किञ्च किं दृष्टत्वादेवमङ्गीक्रियते अव्यवस्थाभयाद्वा? नाद्यः; अनन्यथासिद्धनियतपूर्वभावित्वादतिरिक्तायाः

## आनन्ददायिनी

अन्यथा अनभिव्यक्तस्य शशशृङ्गवदभिव्यक्तिसंपादन (मशङ्क्यम्) मप्यशक्यं; अतिप्रसङ्गात् । ननु प्रागसत्त्वे चासत्त्वाविशेषात् शशशृङ्गवत् तुच्छता स्यात्; कदाचित्सत्वे सत्त्वाविशेषात् आत्मादिवत् सर्वदा सत्त्वमेव स्यादित्यत्राह—प्रागसदित्यादिना । प्रागसत एव घटादेः कदाचित्सत्वस्य सत एव घटादेः पश्चादसत्त्वस्य च प्रत्यक्षदृष्टेः दहनानुष्णत्वानुमानवद्बाधितमिति भावः । अनुभवातिक्रमे बाधकमाह—अयथेति । आत्मा जडो विकारी वस्तुत्वात्; प्रकृतिरपि स्वोपादानानिष्ठा जडद्रव्यत्वात्; प्रकृत्यादि प्रत्यक्षं स्यात् उपादानद्रव्यत्वात् इत्यादिप्रसङ्गादित्यर्थः । सत्त्वसाधकानुमानान्तरं दूषयति—अन्योऽपीति । घटवत्त्वेन वादिद्वयसंप्रतिपन्नकालान्यः काल इत्यर्थः—इतिवादिनः—सांख्यस्य । भवद्भिः कालरूपपदार्थानङ्गीकारात् पक्षासिद्धिरित्यर्थः—प्रणिधीयतां—प्रतिसन्धीयताम् । परसिद्धस्य पक्षत्वे तु बाध इति ध्येयम् । द्वितीयमपि हेतुं विशिष्य दूषयति—यच्च कारकाणामित्यादिना । व्यहतमेतादिति—

## सर्वार्थसिद्धिः

कार्यप्राप्तेः कारणानां मिथः प्राप्तिवत् [1]* त्वयाऽप्यदृष्टत्वात् । [2]* तदिहानङ्गाङ्गीकारो युक्ताङ्गहानिश्च प्रागसत्त्वयुक्तस्योपेक्षणात् । अविषयवृत्तित्वं वा कारकाणां सम्बन्धस्य ; विरुद्धस्थले संचरणात् । समश्च प्राप्तावप्यतिप्रसङ्गः । न हि प्राप्तयोरपि रज्जुघटयोर्जन्यजनकता ! तत्र नित्यप्राप्तिर्नास्तीति चेत् ; निमित्तानामपि घटादिभिर्नित्यप्राप्त्यसम्भवात् । उपादाने तु स्यादिति

## आनन्ददायिनी

कार्यस्या (स्यासिद्धत्वनियमात्) सिद्धत्वे सिद्धं प्रत्युत्पादकत्वस्यासंभवादित्यर्थः—अनङ्गाङ्गीकार इति । अनपेक्षितस्वीकारो निग्रह इत्यर्थः—युक्ताङ्गहानिः । सिद्धत्वस्य प्रतिबन्धकतया तदभावरूपस्यासिद्धत्वस्योत्पत्त्यनुकूलतया तत्त्यागो युक्ताङ्गहानिर्निग्रह इत्यर्थः । अविषयवृत्तित्वं चेति । अविषये—स्वविषयतानर्हे स्वव्यापारफलप्रतिकूल एव वृत्तित्वं वेत्यर्थः । विरुद्धस्थले—स्वव्यापारफलप्रतिबन्धकस्थले । एवं च तव निग्रहत्रयमिति भावः । अव्यवस्थाभयादिति द्वितीयं दूषयति—समश्चेति । तदेव दर्शयति—न हीति ।

## भावप्रकाशः

[1]* त्वयाऽप्यदृष्टत्वादिति—अनभिव्यक्तं कारणं अभिव्यक्तं कार्यं ; अनाभिव्यक्तिश्च अतीताख्यो लक्षणपरिणामः अभिव्यक्तिश्च वर्तमानताख्य इति भवत्सिद्धान्तेन कार्यनियतपूर्ववृत्तित्वस्य कारणे भवताऽप्यङ्गीकारादिति भावः । जातिदोषानाह—[2]* तदिहेत्यादिना एतेषां स्वरूपं तु बुद्धिसरे 'युक्तत्यागस्त्वयुक्तग्रहणमविषये वृत्तिरप्यत्रदोषा' 'इत्येतद्विवरणे स्फुटीभविष्यति ॥

## सर्वार्थसिद्धिः

चेन्न; *निमित्तवदेव नित्यप्राप्तिनैरपेक्ष्यात्। त्वत्पक्षेण च यद्येन नित्यप्राप्तं न तत्तस्योपादेयं यथा पटस्य तन्तुः तथा च पटः तस्मान्न तन्तूपादेय इति प्रसङ्गात्। प्रकृतिपुरुषयोर्नित्य-प्राप्तयोर्नोपादानोपादेयभावः। अतो यद्येन नित्यप्राप्तं न तत्तस्योपादेयं यथा प्रकृतिपुरुषयोरन्योन्यमिति। पटादिकमपि येन नित्यप्राप्तं कथं तस्योपादेयं स्यात्; तयोरन्योन्यप्राप्ति-र्नास्तीति चेन्न;

पङ्ग्वन्धवदुभयोरपि संयोगः तत्कृतस्सर्गः ॥

## आनन्ददायिनी

निमित्तवदेवेति—निमित्ते अतिप्रसङ्गपरिहारवदुपादानेऽपि संभवादिति भावः। प्रतिपक्षमाह—त्वत्पक्षेण चेति। तथाच पट इति—नित्यप्राप्त इत्यर्थः। व्यभिचारमप्याह—प्रकृतिपुरुषयोरिति। विरुद्धत्वमप्याह—अतो यद्येनेति। तयोः—प्रकृतिपुरुषयोः। पङ्ग्वन्धवदिति—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।

इति पूर्वार्धम्। अत्रेत्थं वाचस्पतिना व्याख्यातम्—'ननु चेतनोऽहं चिकीर्षन् करोमी'ति कृतिचैतन्ययोः सामानाधिकरण्यमनुभूयते तन्नोप-पद्यते चैतन्यस्याकर्तृत्वात् कर्तुश्चाचैतन्यात् इति शङ्कायाम्;—

तस्मात्तत्संयोगात् अचेतनं चेतनावदिव लिङ्गम्।

इति परस्परसंयोगाधीनो भ्रम इत्युक्त्वा; अवच्छिन्नयोस्संयोगोऽपेक्षां विना न संभवति; अपेक्षा चोपकार्योपकारकभावं विना नेति अपेक्षा-

## भावप्रकाशः

*निमित्तवदेवेति—एतेन वंशीधरोक्तानुमानमप्यप्रयोजकमिति दर्शितम् ॥

## सर्वार्थसिद्धिः

इति [1]* स्वसमयविरोधात् । [2]* अजसंयोगपक्षे विभूनामपि नित्यप्राप्तेः ॥

व्याप्तिरूपेण सम्बन्धः तस्याश्च पुरुषस्य च ।
दारुण्यग्निर्यथा . . . . . . ॥

इत्यागमविरोधाच्च । 'जहात्येनां भुक्तभोगामजोऽन्यः' इति [3]* श्रुत्या मुक्तस्य प्रकृतिप्राप्तिर्निवर्त्स्यतीति चेन्न ; तदाऽपि परस्परधर्माध्यासाधिकारभूतदर्शनमात्रनिवृत्तेस्त्वदिष्टत्वात् ॥

## आनन्ददायिनी

हेतुमुपकार्योपकारकभावं पूर्वार्धेन प्रतिपाद्य पङ्ग्वन्धवदित्यनेन संयोग-उक्तः' इति । तत्कृतस्सर्गः—महदादिसर्गस्संयोगकृत इत्यर्थः । अजसंयोगपक्षे इति—विभूनामात्मनां परस्परसंबन्धाव्यभिचार इत्यर्थः । प्रकृतिपुरुषयोस्संबन्धानङ्गीकारे आगमबाधमप्याह — व्याप्तिरूपेणेति । ननु प्रकृतिपुरुषयोर्न नित्यस्संयोगः ; मुक्तस्य तन्निवृत्तिश्रवणात् । तथाच यावद्द्रव्यं सम्बन्धोऽत्र विवक्षितो नास्तीति शङ्कते—जहात्येनामिति । निवर्त्स्यतीति—'न वृद्भ्यश्च' इति इडभावः । तदाऽपीति—जहातीति

## भावप्रकाशः

[1]* स्वसमयविरोधादिति — एतेन 'नापि सत्वरजस्तमसां संयोगः अप्राप्तेरभावात्' इति वाचस्पत्युक्तिरपि स्वसमयविरुद्धेति सिद्धम् । वंशीधरोक्तरीत्या प्रकृतिपुरुषसंयोगाङ्गीकारेऽपि स्वसमयविरोधः (१३३) पूर्वमेवोपपादितः । [2]* अजसंयोगपक्षे इति—अजसंयोगश्च आकाशादिकमात्मना संयुज्यते संयोगित्वादित्यादिना तत्वकौमुदीप्रथमपद्यविवरणे वंशीधरेण साधितः [3]* श्रुत्येति— अत्र वंशीधरविवरणम्—भोगस्सुखादिग्रहणम् । ग्रहणं च तदाकारता । सा च कूटस्थ-

## सर्वार्थसिद्धिः

**यद्बूथ—**

**[1]* या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य । इति । अतः कार्यप्राप्तिः कारणानङ्गम् । उक्तं चाक्षपादेन—[2]*'घटादिनिष्पत्तिदर्शनात् पीडने चाभि(व्यभि)चारादप्रतिषेधः ' इति।**

## आनन्ददायिनी

परस्पराध्यासरूपभ्रान्तेरेव निवृत्तिर्भवदभिमता न तद्धेतुभूतसंयोगनिवृत्तिरिति व्यभिचारस्तदवस्थ इत्यर्थः । उक्तेऽर्थे तदुक्तिं संवादयति—यद्बूथेति—

प्रकृतेस्सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।

' प्रकृतेस्सुकुमारतरत्वं—पुनर्दर्शनासहत्वम् । अतिमन्दाक्षवैलक्ष्यमन्थरा प्रमादाद्विगळितवसना चेदालोक्यते वधूः पुरुषेण पुनस्सा दर्शनं न याति तथा प्रकृतिरपि पुनर्न द्रक्ष्यते इत्यर्थः' इति वाचस्पतिना व्याख्यात इत्यर्थः । उक्तेऽर्थे अक्षपादसंमतिमाह—उक्तं चेति। अप्राप्तैरेव घटादिनिष्पत्तिदर्शनात् दर्शनानुरोधेनैवातिप्रसङ्गभङ्गात् । पीडने च–

## भावप्रकाशः

चितौ बुद्धेरर्थाकारवत्पारिणामो न संभवतीत्यगत्या प्रतिबिम्बरूपतायां पर्यवस्यति । तथा च सुखादिरूपबुद्धिवृत्तिप्रतिबिम्बः कूटस्थचितौ भोगः । तस्मिन् भुक्तत्वं अतीतकालोत्पत्तिकत्वम् । अत्रत्यधात्वर्थस्य भोगपदेनैव लाभे विवक्षाऽसम्भवात् । तथाच अतीतकालोत्पत्तिकोक्तभोगानुकूलसुखादिपारिणामवतीत्यर्थ इति । त्यागश्च उक्तदुःखजनकसंयोगविरोधिविभागाकूलव्यापारः । स च सत्वपुरुषान्यताख्यातिरूप इति च ।

[1]*या दृष्टाऽस्मीति । अत्र वंशीधरः—'वस्तुतस्तु अविवेकनिमित्तकसंयोगविशेषाभावादेव पुनः प्रवृत्तेरसंभवादित्यर्थः' इत्याह । [2]* घटादीत्यादि–

## आनन्ददायिनी

सम्बन्ध आवश्यक इति निर्बन्धकरणे च उक्तरीत्या व्यभिचारात्—संबद्धादपि रज्ज्वादेरुत्पत्त्यदर्शनात् असंबद्धोत्पादनेऽपि न विरोध इत्यर्थः।

## भावप्रकाशः

'घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः' (५-१-७) इति न्यायभाष्यवार्तिकतात्पर्यटीकासंमतः पाठः। शतदूषण्यामप्येवमेव। एतत्पूर्वसूत्रं च—'प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ' इति। अत्र न्यायवार्तिकम्—यदि तावदयं हेतुः साध्यं संप्राप्नोति; प्राप्त्या अविशिष्टः। कोऽविशेषार्थः? उभयोर्विद्यमानता। नाविद्यमानस्संप्राप्यते इति हेतोस्साधनार्थो हीयते। अथ न प्राप्यते; अप्राप्तेन हेतुना अविशिष्टत्वादहेतुर्भवति। न ह्यग्निरप्राप्तो दहति! प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः। अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः। अनयोर्भेदेनोपन्यासो विवक्षातः। भेदविवक्षायां प्राप्त्यप्राप्तिसमाविति। अभेदविवक्षायामेकमेवोत्तरम्। यथा वृक्षा वनमिति'। अत्र तात्पर्यटीका 'असत्साध्यते न तु सत्। प्राप्तं च सत्। असतः प्राप्त्यसम्भवात्; तस्मान्न साध्यम्। अपि च येन यस्य प्राप्तिस्तेन तस्यैक्यमेव। यथा—गङ्गा सागरं प्राप्ता सागरेण सङ्गता सागरेणाभिन्ना; तद्वदेवाभिन्ने चेत्साध्यसाधने नास्ति साध्यसाधनभावः। तस्य भेदाधिष्ठानत्वादित्यपि द्रष्टव्यम्। अप्राप्तिसमस्तु स्फुट एवेति॥

ननु प्राप्त्यप्राप्तिसमयोर्मिलितयोः साधनप्रतिषेधस्यैकत्वात् कथं प्राप्त्यप्राप्तिसमौ विभिन्नौ इति? अत आह—अनयोर्भेदोपदेशो विवक्षातः इति। साधनप्रतिषेधस्यैकत्वेऽपि प्राप्य वाऽप्राप्य वेति विकल्पभेदाद्भेदविवक्षेत्यर्थः। अभेदविवक्षायां त्वेकमेवोत्तरं; यथा वृक्षाणां बहुत्वं

## भावप्रकाशः

विवक्षित्वा बहुवचनप्रयोगो वृक्षा इति; तद्बहुत्वसंख्याया एकत्वं विवक्षित्वा एकवचनं एकं वनमिति' इति। अस्मिन् सूत्रे च— 'मृत्पिण्डप्राप्तानां दण्डादीनां नाविशेषो न च साध्यसाधनभावनिवृत्तिः; न हि मृत्पिण्डप्राप्तो दण्डः साधनत्वं जहाति! नापीतरत् साध्यत्वं जहाति! अथ मन्यसे! घटस्तत्र साध्यः; तस्यचाविद्यमानस्य किं साधनेन? नाविद्यमानस्य साधनम्; अपितु मृत्पिण्डो घटीक्रियते। किमिदं घटीक्रियत इति? मृदवयवाः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते व्यूहान्तराच्च घटोत्पत्तिः। पीडने चाभिचारादप्राप्तयापि साधकत्वं दृष्टम्। कोऽप्राप्तयर्थः? परस्परोपश्लेषमन्तरेण साधकत्वम्। अन्यथा तूद्देशेनायं प्राप्त एव नियमात्। इयं च जातिः सर्वहेत्वपवादद्वारिका। यदि ज्ञापको हेतुरपदिश्यते तथाऽपि। यदि कारकस्तथाऽपीति' इति न्यायवार्तिकम्। अत्र तात्पर्यटीका—सूत्रं तद्व्याचष्टे—मृत्पिण्डप्राप्तानां दण्डादीनां न गङ्गासागरवदविशेषः। मृदवयवाः पूर्वव्यूहपरित्यागेनेति। साध्यं—कर्म। तच्च मृदवयवाः ते च सिद्धा एवेत्यव्यभिचारः। घटस्तु फलं न साध्य इति भावः। उत्तरं परस्परोपश्लेषमन्तरेण साधकत्वमिति। अन्यथा तूद्देशेनासौ प्राप्त एव; यदुद्देशेनाभिचारः श्येनादिना क्रियते तस्यैव प्रत्यवायो भवति नान्यस्येति नियमः; अत्रापि संयुक्तसंयोगादिः सम्बन्ध उपेयः। तस्यापि हेतुत्वं क्रियां प्रति दृष्टम्। यथा पङ्काख्यायां भुवि' इति। अत्र यद्यपि 'अनयोरुत्तरं' इत्युत्तरसूत्रावतरणे; 'उभयथा खल्वयुक्तः प्रतिषेधः' इत्युत्तरसूत्रे च न्यायभाष्यवाक्यमनुरुध्य पूर्वसूत्रात् 'प्राप्य साध्यम्' इति भागस्य आप्राप्तयाऽसाधकत्वादित्यत्र नञ्व्यतिरिक्तांशस्य चानुवृत्तिमाश्रित्य मृदवयवानां साध्यत्वमुपपाद्य उत्तरसूत्रार्थो वर्णितः; तथाऽपि पूर्वसूत्रे हेतुसाध्यपदे परस्परसम्बन्धद्यर्थद्वये स्वरसे;

## सर्वार्थसिद्धिः

[1]* अत्र कार्यमप्राप्तैरित्युपस्कार्यम् । एतेन—

असत्त्वान्नास्ति सम्बन्धः कारकैस्सत्त्वसङ्गिभिः ।
असम्बन्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥

इति साङ्ख्यवृद्धगाथाऽपि प्रत्युक्ता । इह तु स्वोचितात्कारकचक्रात्तत्सम्बन्धतश्च कार्यदृष्टेरित्यव्यवस्थामूलघातः । एतेन

## आनन्ददायिनी

उपस्कार्यं—अध्याहार्यम् । एतेनेत्यस्यार्थमाह—इह त्विति । एतेनेति—पूर्वं कालपक्षकानुमानस्य परपक्षानुसारेण दूषणमुक्तम् । इदानीं प्रत्यक्षादिभि-

## भावप्रकाशः

कार्यबोधकं चान्यन्न किञ्चिदपि पदमस्ति । उत्तरसूत्रे च अभिचारादिति हेतुविशेषसमर्पकं पदं पीडनपदं च तत्सम्बन्धिकार्यविशेषार्थकम् । घटादिपदमपि कार्यविशेषवाचि । अत एव वार्तिके कारकज्ञापकोभयसाधारण्योक्तिः ; 'असत्साध्यते' इत्यादितात्पर्यटीकोक्तिश्च स्वरसतस्संगच्छते । प्राप्त्यप्राप्तिसमयोरेकोत्तरत्वं च तत्रैवोक्तम् । अतः पूर्वसूत्रात् साध्यमप्राप्य हेतोः इति त्रयमनुवर्तते । हेतोरिति पञ्चमी । जातावेकवचनम् । हेतोस्साध्यमप्राप्य घटादिनिष्पत्तिदर्शनादप्रतिषेध इत्येकोऽर्थः । घटादेर्हेतोश्च परस्परोपश्लेषसम्भावनां प्रत्यक्षबाधेन विफलयितुं 'निष्पत्तिदर्शनात्' इति । यत्र च सा सम्भावना नास्ति तदभिप्रायेण पीडने चेत्यादि । हेतोरभिचारात् साध्यमप्राप्य पीडने चाप्रतिषेध इति तदर्थ इत्यभिप्रेत्य पर्यवसितमाह—[1]* अत्र कार्यमप्राप्तैरित्युपस्कार्यमिति । एतेन पूर्वसूत्रे विश्वनाथेन वृत्तौ कार्यप्राप्त्यप्राप्तिपरतया विवरणमपि संगच्छते इति बोध्यम् । न्यायभाष्यादिकमक्षपादहृदयाननुसारीति बुद्धिसरे (५६) वक्ष्यते ॥

## सर्वार्थसिद्धिः

**विमतं पूर्वापरकालयोरपि सत् प्रमेयत्वात् सत्त्वाद्वा आत्मवत् । विगीतः काल एतद्घटादिमान् कालत्वात् एतत्कालवदित्यादि-र्निरस्तः; सर्वलोकप्रत्यक्षादिबाधात् ।**

**[1]*कारकव्यञ्जकानां च व्यवहारव्यवस्थितिः ।**

**[2]* किन्निमित्तेति वक्तव्यं [3]* सर्वनित्यत्ववादिना ॥**

## आनन्ददायिनी

बाधोऽपीति वक्तुं (कार्यप्रागसत्कारणानामेवोत्पादकत्वमिति सत्त्वसाधकरूपस्य निरस्तत्वात् प्रत्यक्षादिभिर्बाधोऽपि सिद्ध इति विशेष इति दूषितस्यापि) पुन-रनुवादः । अन्यथा आदिशब्दोक्तानुमानादीनां तुल्यतया प्रतिपक्षत्वप्रसङ्ग इति ध्येयम् । व्यञ्जकत्वमेवोत्पादकत्वं तदतिरेकेणोत्पादकत्वाभावात् । तत्र सिद्धत्वमनुकूलमेव । न च कारकव्यञ्जकव्यवस्थिती न स्यातामिति वाच्यम्; तारतम्यमादाय व्यवस्थासंभवात् । तथाच पूर्वोक्ता दोषा इत्याह—कारकव्यञ्जकानां चेति ।

## भावप्रकाशः

[1]* कारकव्यञ्जकानां च व्यवहारव्यवस्थितिः ।

इत्यत्र व्यवहारव्यवस्थितिरित्यनेन 'न व्यवस्थानुपपत्तेः, इत्य-क्षपादसूत्रस्थव्यवहारशब्दार्थ उक्तः । तेन वाचस्पतिना स्वायम्भुवमत-मात्रापाकरणपरतया योजितमपि तत्सूत्रं कापिलस्वायम्भुवमतद्वयनिरसन एव स्वरसमिति बोधितम् ।

[2]* किन्निमित्तेति—पातञ्जलभाष्ये—

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।

वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥

इत्युक्त्या कारकव्यञ्जकभेदस्य पूर्वपक्षिणाऽपि व्यवस्थापनीयत्वादिति भावः । [3]* सर्वनित्यत्ववादिनेति—नात्र निरन्वयविनाशाप्रतियोगित्वरूपं

## भावप्रकाशः

नित्यत्वे विवाक्षितम्; वैनाशिकावैनाशिकमतद्वये निरन्वयविनाशाङ्गीकारेऽपि सांख्यवत् सिद्धान्तेऽपि भावान्तराभावपक्षाश्रयणेन अवस्थानामनित्यत्वाङ्गीकारेऽपि निरन्वयविनाशानभ्युपगमेन विवादस्यैव विलयप्रसङ्गात्। किंतु सर्वकालसम्बद्धत्वम्। सिद्धान्तेऽवस्थानां कारकव्यापारात्पूर्वमसत्त्वाङ्गीकारेण न नित्यत्वम्। सांख्यमते तु न तथा; यथाऽऽहाक्षपादः—'सर्वं नित्यं पञ्चभूतनित्यत्वात् ४-१-२९ इति। अत्र तात्पर्यटीका—'पञ्चभूतात्मकं खल्वेतत् गोघटादिकार्यमुपलभ्यते। व्यपदिशन्ति हि मृद्घटो मृच्छरीरमिति। भूतानि च नित्यानि। तेषामुच्छेदस्य नैयायिकैरनभ्युपगमात्। तेन भूतानां गोघटादीनां नित्यतेति पूर्वःपक्षः। एतद्विचारावसरे 'न व्यवस्थानुपपत्तेः' इति सूत्रावतरणभाष्यम्—'अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमुपजायते। स खलूत्पत्तिविनाशयोर्विषयः। यच्चोपजायते तत् प्रागप्युपजननादास्ति। यच्च निवर्तते तन्निवृत्तमप्यस्तीति। एवं च सर्वस्य नित्यत्वमिति' इति। एवं 'न पयसः परिणामगुणान्तरप्रादुर्भावात्' ३-२-१४ इति सूत्रेऽपि 'पयसः परिणामो न विनाशः इत्येक आह; परिणामश्च अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति। गुणान्तरप्रादुर्भाव इत्यपर आह; गुणान्तरप्रादुर्भावश्च सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यते इति। स खल्वेकपक्षीभाव एव; अत्र तु प्रतिषेधः' इति च। अत्रापि तात्पर्यटीका—'भाष्ये गुणान्तरप्रादुर्भाव इति--द्रव्यं तावत्सदेव। गुणोऽपि सन् केवलमनुद्भूत आसीत्। एकश्चोद्भूतो गुणः। तत्र य उद्भूतस्तिरोभवति पूर्वगुणस्य निवृत्तौ तिरोभूतौ गुणान्तरमुत्पद्यते तद्भवतीत्यर्थः' इति। अत्र न्यायभाष्ये 'अवस्थितस्य द्रव्यस्य' इत्यादिपातञ्जलसूत्रभाष्यानुपूर्वीदर्शनेन कापिलाः पातञ्जलाश्च सर्वनित्यत्ववादिनः इति सिध्यति। एवं पातञ्जलसाङ्ख्यदर्शन योरेकपक्षीभावोऽपि।

## भावप्रकाशः

योगसूत्रे (१-९) तत्ववैशारद्यां—'न खलु सांख्यीये राद्धान्ते अभावो नाम कश्चिदस्ति वस्तुधर्मः!' इति वाचस्पतिना पातञ्जलराद्धान्तस्यापि सांख्यीयत्वोक्तेः; न्यायकणिकायां तेनैव 'त्रिस्रःखल्विमा भावपरिणतिविधा भवन्ति सांख्यानाम्' इति एतेन (३–१–१३) इत्यादि योगसूत्रार्थस्य सांख्यसम्बन्धित्वाभिधानात् वेदान्तेषु पातञ्जलानां सेश्वरसांख्यव्यपदेशदर्शनात् योगभाष्ये पादान्ते 'इति पातञ्जले सांख्यप्रवचने' इत्युक्तेश्च। एतेन 'सांख्यस्य नित्यैकान्तवादनियतान् प्रयोगानन्वाह' इति 'सन्ति प्रागप्यवस्थाः' इत्येतदवतरणाचार्यसूक्तिरपि निर्व्यूढा; उभयोरप्यवस्थानां सर्वकालसम्बन्धित्वस्य सम्मतत्वात्। निरन्वयविनाशानङ्गीकारेण प्रागभावध्वंसयोरतीतानागतावस्थारूपतया अभिव्यक्तेर्वर्तमानावस्थारूपतयाऽवस्थानां परस्पराभावरूपत्वेन नाशाभावस्यापि वर्तमानावस्थारूपत्वाभ्युपगमेन कालादिभेदेनावस्थानामेकत्र विरोधविरहात्। अवस्थानां धर्मतया अतीतादिलक्षणपरिणामस्य धर्मनिष्ठत्वात्; तथाहि—'एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः' (३–१३) इति पातञ्जलं सूत्रं सर्वनित्यतापूर्वपक्षानिदानमिति प्रतीयते। तत्र योगभाष्यम्—'एतेन–पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणावस्थारूपेण भूतेन्द्रियेषु धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोक्तो वेदितव्यः। तत्र व्युत्थाननिरोधयोर्धर्मयोरभिभवप्रादुर्भावौ धर्मिणि धर्मपरिणामो लक्षणपरिणामश्च निरोधस्त्रिलक्षणः त्रिभिरध्वभिर्युक्तः। स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा धर्मत्वमनतिक्रान्तो वर्तमानं लक्षणं प्रतिपन्नो यत्रास्य स्वरूपेणाभिव्यक्तिः; एषोऽस्य द्वितीयोऽध्वा; नचातीतानागताभ्यां लक्षणाभ्यां वियुक्तः' इति। अत्र तत्ववैशारदी—'अभिव्यक्तिः समुदाचारः। एषोऽस्य प्रथममनागतमध्वानमपेक्ष्य द्वितीयोऽध्वा। स्यादेतत्; अनागतमध्वानं हित्वा

## भावप्रकाशः

चेद्वर्तमानतामापन्नस्तां च हित्वाऽतीततामापत्स्यते ! हन्त भोः ! अध्वनामुत्पत्तिविनाशौ स्याताम् ! न चेष्येते ! न ह्यसत उत्पादो नापि सतो विनाशः ! इत्यत आह—न चेति । नचातीतानागताभ्यां सामान्यात्मनाऽवस्थिताभ्यां वियुक्त इत्यर्थः' इति । एवं 'एतेन भूतेन्द्रियेषु धर्मधर्मिभेदात् त्रिविधः परिणामो वेदितव्यः । परमार्थतस्त्वेक एव परिणामः । धर्मिस्वरूपमात्रो हि धर्मः । धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यत इति । तत्र धर्मस्य धर्मिणि वर्तमानस्यैवाध्वस्वतीतानागतवर्तमानेषु भावान्यथात्वं भवति ; न द्रव्यान्तरत्वम् । यथा सुवर्णभाजनस्य भित्त्वाऽन्यथा क्रियमाणस्य भावान्यथात्वं भवति न सुवर्णान्यथात्वमिति' इति भाष्यम् । 'एष त्रिविधः परिणामो धर्मधर्मिभेदात्—धर्मधर्मिणोर्भेदमालक्ष्य । तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादिर्वा धर्मपरिणामः । धर्माणां च अतीतानागतवर्तमानरूपता लक्षणपरिणामः । वर्तमानलक्षणापन्नस्य गवादेर्बाल्यकौमारयौवनवार्धक्यमवस्थापरिणामः । घटादीनामपि नवपुरातनताऽवस्थापरिणामः । एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचने धर्मपरिणामः । धर्मस्य वर्तमानतादिर्लक्षणपरिणामः । लक्षणस्य रत्नाद्यालोचनस्य स्फुटत्वास्फुटत्वादिरवस्थापरिणामः । सोऽयमेवंविधो भूतेन्द्रियपरिणामो धर्मिणो धर्मलक्षणावस्थानां भेदमाश्रित्य वेदितव्यः । अभेदमाश्रित्याह—परमार्थतस्तु इति । तुशब्दोऽभेदपक्षाद्विशिनष्टि । पारमार्थिकत्वमस्य ज्ञाप्यते न त्वन्यस्य परिणामस्य निषिध्यते । कस्मात् ? धर्मिस्वरूपमात्रो हीति ! ननु यदि धर्मिविक्रियैव धर्मः ! कथं तर्हि असङ्करप्रत्ययो लोके परिणामेषु इत्यत आह—धर्मद्वारेति । धर्मशब्देन धर्मलक्षणावस्थाः परिगृह्यन्ते । तद्वारेण धर्मिण एव विक्रियेत्येका चासङ्कीर्णा च । तद्वाराणामभेदेऽपि धर्मिणः परस्परासङ्करात् । ननु धर्मिणा धर्माणामभिन्नत्वे धर्मिणोऽध्वनां च भेदे

## भावप्रकाशः

धर्मिणोऽनन्यत्वेन धर्मेणापीह धर्मिवद्भवितव्यमित्यत आह—तत्र धर्मस्येति । भावः—संस्थानभेदः । सुवर्णादेर्यथा भाजनस्य रुचकस्वस्तिकव्यपदेशभेदो भवति; तन्मात्रमन्यथा भवति । न तु द्रव्यं सुवर्णमसुवर्णतामुपैति । अत्यन्तभेदाभावादिति वक्ष्यमाणोऽभिसन्धिः इति तत्ववैशारदी । 'अत्र लक्षणपरिणामे सर्वस्य सर्वलक्षणायोगादध्वसंकरः प्राप्नोतीति परैर्दोषश्चोद्यत इति तस्य परिहारः—धर्माणां धर्मत्वमप्रसाध्यम् । सति च धर्मत्वे लक्षणभेदोऽपि वाच्यः । न वर्तमानसमय एवास्य धर्मत्वम्; एवं हि न चित्तं रागधर्मकं स्यात् । क्रोधकाले रागस्यासमुदाचारात् इति । किञ्च त्रयाणां लक्षणानां युगपदेकस्यां व्यक्तौ नास्ति संभवः । क्रमेण तु स्वव्यञ्जकाञ्जनस्य भावो भवेदिति । उक्तं च—रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते । सामान्यानि त्वतिशयैस्सह प्रवर्तन्ते तस्मादसंकर' इति योगभाष्यं ; अत्र तत्ववैशारदी—'परोक्तं दोषमुत्थापयति—अत्र लक्षणपरिणाम इति । यदा धर्मो वर्तमनस्तदैव यद्यतीतोऽनागतश्च तदा त्रयोऽप्यध्वानः संकीर्येरन् । अनुक्रमेण चाध्वनां भावेऽसदुत्पादप्रसङ्ग इति भावः । परिहरति—तस्य परिहार इति । वर्तमानतैव हि धर्माणामनुभवसिद्धा ततः प्राक्पश्चात्कालसंबन्धमवगमयति । न खल्वसदुत्पद्यते! न च सद्विनश्यति! तदिदमाह—एवं हि न चित्तं इति । क्रोधोत्तरकालं हि चित्तं रागधर्मकमनुभूयते! यदा च रागः क्रोधसमये अनागतत्वेन नासीत् तत्कथमसावुत्पद्येत? अनुत्पन्नश्च कथमनुभूयेत? इति । भवत्वेवं तथाऽपि कुतोऽध्वनामसंकर इति पृच्छति—किञ्चेति ; किं कारणमसंकरे? चः पुनरर्थे । उत्तरमाह—त्रयाणामिति । त्रयाणां लक्षणानां युगपन्नास्ति संभवः । कस्मिन्? एकस्यां चित्तवृत्तौ । क्रमेण

## भावप्रकाशः

तु लक्षणानामेकतमस्य स्वव्यञ्जकाञ्जनस्य भावो भवेत्—संभवेत् । लक्ष्याधीननिरूपणतया लक्षणानां लक्ष्याकारेण तद्वृत्ता । अत्रैव पञ्चशिखाचार्यसंमतिमाह—उक्तंचेति । एतच्च प्रागेव व्याख्यातम् । उपसंहरति—तस्मादिति । आविर्भावतिरोभावरूपविरुद्धधर्मसंसर्गादसंकरोऽध्वनामिति' इति । अत्रोदाहृतं पञ्चशिखाचार्यवाक्यं 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' २-१५ इति सूत्रभाष्येऽप्युदाहृतम् । तथाच तद्भाष्यम्—'प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रा भूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवारभन्ते । चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम् । रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामान्यानि त्वतिशयैस्सह प्रवर्तन्ते । एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति । गुणप्रधानभावकृतस्त्वेषां विशेष इति' इति । तत्र तत्ववैशारदी—'तदेवमौपाधिकं विषयसुखस्य परिणामतस्संस्कारतस्तापसंयोगाच्च दुःखत्वमभिधाय स्वाभाविकमादर्शयति—गुणवृत्तिविरोधाच्चेति । व्याचष्टे—प्रख्येति । प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिरूपेण परिणता गुणाः । सत्वरजस्तमांसि परस्परानुग्रहतन्त्राः शान्तं—सुखात्मकं घोरं—दुःखात्मकं मूढं—विषादात्मकमेव प्रत्ययं सुखोपभोगरूपमपि त्रिगुणमारभन्ते । न च सोऽपि तादृशप्रत्ययरूपोऽस्य परिणामः स्थिर इत्याह—चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तं इति । नन्वेकः प्रत्ययः; कथं परस्परविरुद्धशान्तघोरमूढत्वान्येकदा प्रतिपद्यते? इत्यत आह—रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते इति । रूपाणि अष्टौ भावा धर्मादयः । वृत्तयः—सुखाद्याः । तदिह धर्मेण विपच्यमानेनाधर्मस्तादृशो विरुध्यते । एवं ज्ञानवैराग्यैश्वर्यैः सुखादि-

## भावप्रकाशः

मिश्च तादृशान्येव तद्विपरीतानि विरुध्यन्ते। सामान्यानि तु असमुदाचरद्रूपाण्यतिशयैस्समुदाचरद्भिस्सहाविरोधात्प्रवर्तन्ते इति। ननु गृह्णीम एतत्; तथाऽपि विषयसुखस्य कुतस्स्वाभाविकी दुःखता? इत्यत आह—एवमेत इति। उपादानाभेदादुपादानात्मकत्वाच्चोपादेयस्याप्यभेद इत्यर्थः। तत्किमिदानीमात्यन्तिकमेव तादात्म्यम्? तथाच बुद्धिव्यपदेशभेदौ न कल्प्येते इत्यत आह—गुणप्रधानेति। सामान्यात्मना गुणभावोऽतिशयात्मना च प्राधान्यम्। तस्मादुपाधितः स्वभावतश्च दुःखमेव सर्वं विवेकिन इति॥

सर्वस्य सर्वात्मकत्वेऽपि विशेषः प्रकृतसूत्रानन्तर ३-१४ सूत्रभाष्ये प्रकटीकृतः। सर्वं सर्वात्मकमिति प्रक्रम्य 'देशकालाकारनिमित्तापबन्धान्न खलु समानकालमात्मनामभिव्यक्तिरिति' इति। तत्र तत्ववैशारदी— 'यद्यपि कारणं सर्वं सर्वात्मकम्; तथाऽपि यो यस्य कार्यस्य देशः; यथा कुङ्कुमस्य काश्मीरः; तेषां सत्त्वेऽपि पञ्चालादिषु न समुदाचारः इति न कुङ्कुमस्य पञ्चालादिष्वभिव्यक्तिः। एवं निदाघे न प्रावृषस्समुदाचार इति। तस्मात् देशकालाकारनिमित्तानां अपबन्धात्—अपगमात् न समानकालमात्मनां—भावानां अभिव्यक्तिरिति' इति। एवं 'क्रमान्यत्वं परिणामान्यत्वे हेतुः; इति तदुत्तरसूत्रभाष्यादिकं च। प्रकृतसूत्रे भाष्यम्—'अवस्थापरिणामे कौटस्थ्यदोषप्रसङ्गः कैश्चिदुक्तः। कथम्? अध्वनो व्यापारेण व्यवहितत्वात्। यदा धर्मः स्वव्यापारं न करोति तदाऽनागतो यदा करोति तदा वर्तमानो यदा कृत्वा निवृत्तः तदा अतीत इत्येवं धर्मधर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोतीति परैर्दोष उच्यते; नासौ दोषः; कस्मात्? गुणिनित्यत्वेऽपि गुणानां विमर्दवैचित्र्यात्। यथा संस्थानमादिमत् धर्ममात्रं शब्दादीनां विनाश्य-

## भावप्रकाशः

विनाशिनां। एवं लिङ्गमादिमद्धर्ममात्रं सत्वादीनां गुणानां विनाश्य-विनाशिनां; तस्मिन् विकारसंज्ञेति । तत्रेदमुदाहरणं—मृद्धर्मी पिण्डाकाराद्धर्माद्धर्मान्तरमुपसंपद्यमानो धर्मतः परिणमते घटाकार इति । घटाकारोऽनागतं लक्षणं हित्वा वर्तमानलक्षणं प्रतिपद्यते इति लक्षणतः परिणमते। घटो नवपुराणतां प्रतिक्षणमनुभवन् अवस्थापरिणामं प्रतिपद्यते इति । धर्मिणोऽपि धर्मान्तरमवस्था। धर्मस्यापि लक्षणान्तरमवस्थेत्येक एव द्रव्यपरिणामो भेदेनोपदर्शित इति। एवं पदार्थान्तरेष्वपि योज्यमिति । एते धर्मलक्षणावस्थापरिणामा धर्मिस्वरूपमनतिक्रान्ता इत्येक एव परिणामः सर्वानमून् विशेषानभि-प्लवते। अथ कोऽयं परिणामः? अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मा-न्तरोत्पत्तिः परिणामः' इति। अत्र तत्ववैशारदी—अत्रान्तरे परोक्तं दोषमु-त्थापयति—अवस्थेति। अवस्थापरिणामे—धर्मलक्षणावस्थापरिणामे। कौट-स्थ्यदोषप्रसङ्ग उक्तो धर्मिधर्मलक्षणावस्थानाम् । पृच्छति—कथमिति । उत्तरमाह—अध्वनो व्यापारेणेति । दध्नः किल योऽनागतोऽध्वा तस्य व्यापारः क्षीरस्य वर्तमानत्वम्; तेन व्यवहितत्वाद्धेतोः। यदा धर्मः—दधिलक्षणः स्वव्यापारं—दाधिकाद्यारम्भं क्षीरे सन्नपि न करोति तदाऽनागतः; यदा करोति तदा वर्तमानः; यदा कृत्वा निवृत्तस्सन्नेव स्वव्यापाराद्दाधिकाद्यारम्भात् तदातीत इत्येवं त्रैकाल्येऽपि सत्त्वात् धर्म-धर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोति । सर्वदा सत्ता हि नित्यत्वम्! चतुर्णामपि च सर्वदा सत्त्वेऽसत्त्वे वा नोत्पादः। तावन्मात्रं च लक्षणं कूटस्थनित्यतायाः । न हि चितिशक्तेरपि कूटस्थनित्यायाः कश्चिदन्यो विशेष इति भावः। परिहरति—नासौ दोष इति। नासौ दोषः । कस्मात्? गुणिनित्यत्वेऽपि गुणानां विमर्दः—अन्योऽ-न्याभिभाव्याभिभावकत्वं; तस्य वैचित्र्यात्। एतदुक्तं भवति—यद्यपि

## भावप्रकाशः

सर्वदा सत्त्वं चतुर्णामपि गुणिगुणानां; तथाऽपि गुणविमर्दवैचित्र्येण तदात्मभूततद्विकाराविर्भावतिरोभावभेदेन परिणामशालितया न कौटस्थ्यम्। चितिशक्तेस्तु न स्वात्मभूतविकाराविर्भावतिरोभाव इति कौटस्थ्यम्। यथाऽऽहुः—

नित्यं तमाहुर्विद्वांसो यत्स्वभावो न नश्यति।

इति। विमर्दवैचित्र्यमेव विकारवैचित्र्ये हेतुं प्रकृतौ विकृतौ च दर्शयति—यथेति। यथा संस्थानं—पृथिव्यादिपारिणामलक्षणं आदिमत् धर्ममात्रं विनाशि–तिरोभावि। शब्दादीनां—शब्दस्पर्शरूपरसगन्धतन्मात्राणां स्वकार्यमपेक्ष्याविनाशिनां—अतिरोभाविनां। प्रकृतौ दर्शयति—एवं लिङ्गमिति। तस्मिन् विकारसंज्ञा न त्वेवं विकारवती चितिशक्तिरिति भावः। तदेवं परीक्षकसिद्धां विकृतिं च प्रकृतिं चोदाहृत्य विकृतावेव लोकसिद्धायां गुणविमर्दवैचित्र्यं धर्मलक्षणावस्थापरिणामवैचित्र्यहेतुमुदाहरति—तत्रेदमुदाहरणमिति। न चायं नियमो लक्षणानामेवावस्था परिणाम इति सर्वेषामेव धर्मलक्षणावस्थाभेदानामवस्थाशब्दवाच्यत्वादेक एवावस्थापरिणामस्सर्वसाधारण इत्याह—धर्मिणोऽपीति। व्यापकं पारिणामलक्षणमाह—अवस्थितस्येति। धर्मशब्द आश्रितत्वेन धर्मलक्षणावस्थावाचकः' इति॥

अत्र विज्ञानभिक्षुणा योगवार्तिके 'एवं च सति पूर्वधर्मातीततायां धर्मान्तराभिव्यक्तिरित्येवंरूपपारिणामलक्षणान्नित्यत्वमवस्थानामपि भवद्भिर्वक्तव्यं न तु विनाशः। अवस्थानां च नित्यत्वे किमप्यनित्यं न स्यादित्येवं धर्मधर्म्यादिकं सर्वं जगत् कूटस्थं स्यात् इति परैर्दोष उच्यते इत्युपसंहार' इत्याद्युक्तम्। अत्र योगभाष्ये धर्मधर्मिपदे परित्यज्य गुणिनित्यत्वेऽपीत्याद्युक्त्या अविशेषशब्दवाच्यशब्दादितन्मात्रपरिणामः लिङ्गशब्दवाच्यमहत्तत्वपारिणामश्च तत्वान्तरहेतुभूतः। 'विशेषाविशेष-

## भावप्रकाशः

लिङ्गमात्रालिङ्गानि गुणपर्वाणि २। १९। इति सूत्रोक्तः कथितः। एतेन यद्यपि विशेषाणां भूतेन्द्रियाणां धर्मलक्षणावस्थापरिणामस्तु न तत्वान्तरोत्पत्तौ हेतुः। अथाऽपि उभयोरवैलक्षण्यमेव अनुगत-लक्षणाक्रान्तत्वादिति बोधितम्। गुणानां न नाशः अपितूद्भवाभिभ-वावेवेति विशेषाविशेषेत्यादिसूत्रभाष्ये स्पष्टम्। एवं च 'न पयसः परिणामगुणान्तरप्रादुर्भावात्' इत्यक्षपादसूत्रे तत्वान्तरोत्पत्तिहेतुपरिणा-माभिप्रायेणैव गुणान्तरप्रादुर्भावादित्युक्तमिति बोध्यम् ॥

ननु 'न व्यवस्थानुपपत्तेः' इत्येतदवतरणन्यायवार्तिके 'सर्वं नित्यमित्येतद्यथा वर्णयन्ति' इत्येतद्विवरणे तात्पर्यटीकायां 'तदेवं साङ्ख्यानां मतमपास्य स्वायम्भुवानां मतमपाकर्तुमुपन्यस्यति—अपरे तु सर्वं नित्यं इत्येतदन्यथा वर्णयन्तीत्यवतार्य त्रिविधपरिणामं धर्मधर्मिणोर्भेदाभेदं स्वाय-म्भुवसम्मतं प्रदर्श्य 'न व्यवस्थानुपपत्तेः' इति न्यायसूत्रस्य तन्निरास-कत्वमुपपाद्य साङ्ख्यवत्सत्कार्याभ्युपगमे स्वयं वार्तिककार आह' इत्यु-क्तम्। एतत्पर्यालोचनायां स्वायम्भुवानामेव परिणामत्रैविध्यभेदाभेद-वादितयाऽनेकान्तवादित्वं; साङ्ख्यानामभेदवादित्वेन एकान्तवादित्वमे-वेति प्रतीयते। त्रिविधपरिणामयोगसूत्रभाष्ये च पातञ्जलानामनेकान्त-वादित्वं स्फुटमुक्तमित्युभयोर्नित्यैकान्तवादिता न घटते इति चेत्; उच्यते—न्यायकणिकायां वाचस्पतिरेव साङ्ख्यानां त्रिविधपरिणाम-वादितामभाणीत्। अनुपदमेवाचार्यास्तेषां भेदाभेदवादितां व्यक्तीक-रिष्यन्ति ॥

अत्र योगभाष्ये—साङ्ख्यशास्त्रप्रवर्तकपञ्चशिखाचार्यवाक्योदाहरण-पूर्वकं धर्माणां (अवस्थानां) सर्वदा सत्त्वं स्थापितम्। वाचस्पतिनाऽपि तद्दृढीकृतम्। यथोक्तं कुमारिलेन रूपादिकं प्रस्तुत्य श्लोकवार्तिके

## सर्वार्थसिद्धिः

न हि व्यक्तौ विशेषोऽस्ति न चावरणवारणम् ॥

## आनन्ददायिनी

किमभिव्यक्तिरावरणनिवृत्तिः तदनुकूलव्यापारो वा? नोभयत्र तारतम्य-

## भावप्रकाशः

उपमानपरिच्छेदे—

पृथिव्यादिषु चैतेषां सतामेव स्वभावतः ।
परिणामादिभिर्व्यक्तिर्यथादृष्टघवधार्यते ॥
न हि शक्त्यात्मना किञ्चिदसज्जन्म प्रपद्यते ! ।

इति । आत्मवादेऽपि—

नचावस्थान्तरोत्पादे पूर्वात्यन्तं विनश्यति ।
उत्तरानुगुणत्वात्तु समान्यात्मनि लीयते ।
स्वरूपेण ह्यवस्थानां अन्योन्यस्य विरोधिता ।
अविरुद्धस्तु सर्वासु सामान्यात्मा प्रवर्तते ॥

इति । एतच्च उदाहृतपञ्चशिखाचार्यवचनसमानार्थकम् । एवंचावस्थानामपि संर्वकालसंबन्धित्वमुभयसंमतमेव । योगभाष्ये अर्थक्रियाकारित्वतदभावोपपादनमनेकान्ताश्रयणेन कृतम् । नावस्थानां सर्वकालासंबन्ध उक्तः । सांख्यैस्तु—

अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ।
. . . . प्रवर्तते त्रिगुणतस्समुदयाच्च ।
परिणामतस्सालिलवत्प्रातिप्रातिगुणाश्रयविशेषात् ।

इत्यनेन 'गुणिनित्यत्वेऽपि' इत्यादियोगभाष्योक्त एवार्थोऽनेकान्तपक्षमनवष्टभ्यैवोक्त इति पक्षद्वयतात्पर्यमाकलय्य वाचस्पतिना तात्पर्यटीकायां तथोक्तमिति सुधीभिरूह्यम् ॥

## सर्वार्थसिद्धिः

**तयोरपि भवत्पक्षे नित्यत्वात्साध्यता कथम्? ।**
**आवारकं च नित्यं चेत् नित्यमावरणं भवेत् ॥**
**अन्यथा त्वपसिद्धान्तः तत्तिरोधिश्च दुर्वचः ।**
**तिरोधिं तन्निवृत्तिं च नानित्यौ तस्य मन्यसे! ॥**

## आनन्ददायिनी

मस्तीत्यर्थः । तत्तारतम्याङ्गीकारेपि तदादाय न व्यवस्था संभवतीत्याह—तयोरपीति । अभिव्यक्त्यावरणयोरित्यर्थः । आवरणतद्वारणयोरित्यन्ये । सर्वनित्यत्ववादिनः आवरणानिवारणमेव न स्यात्; दूरे तत्तारतम्यमिति भावः । आवरणतन्निवृत्त्योर्यौगपद्ये विरोधमप्याह—आवारकं चेति । अन्यथा—अनित्यत्वे सर्वनित्यत्ववादिनः कादाचित्कसत्त्वप्रसङ्गेन अपसिद्धान्त इत्यर्थः । तत्तिरोधिश्चेति—तिरोधानं नाम ज्ञानप्रतिबन्धो वा तत्सामग्रीरूपसन्निकर्षप्रतिबन्धो वा? उभयत्र ज्ञानसन्निकर्षौ स्तो न वा? आद्ये विद्यमानयोस्सर्वदा सत्त्वेन नित्यतया निवृत्त्यनुत्पत्तिप्रयोजकत्वरूपप्रतिबन्धासंभवात् । द्वितीये असतस्तव सर्वदैवासत्त्वान्निवृत्त्यनुत्पत्तिप्रयोजकत्वं शशशृङ्गादेरिव न सम्भवतीत्यर्थः । तिरोधानतन्निवृत्त्योरनित्यत्वे चासत उत्पत्तिप्रसङ्गः । तन्नित्यत्वाङ्गीकारे दूषणान्तरमाह—तिरोधिमिति । अनित्यश्चानित्या चानित्यौ । 'पुमान् स्त्रिया' इति पुंसश्शेषः ।

अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥

इति सृष्ट्यर्थं सत्वरजस्तमसामन्योन्याभिभवोक्तिरनुपपन्नेत्यर्थः । सत्वं रजस्तमसी अभिभूय शान्तात्मानो वृत्तीर्लभते । रजस्सत्वतमसी अभिभूय घोरात्मानो वृत्तीः । तमस्सत्वरजसी अभिभूय मूढात्मानो

## सर्वार्थसिद्धिः

मिथश्चाभिभवाद्युक्तिर्गुणेष्वेवमनर्थिका ।
समानदेशकालत्वमभावप्रतियोगिनोः ॥
सहन्ते क्वाप्यगत्यैव न तथाऽत्रान्यथा गतेः ।
अपिचाशेषनित्यत्वे पौर्वापर्यं न कुत्रचित् ॥
व्यक्तिभोगापवर्गादिसाध्यतोक्तिरतो मुधा ।
स्वप्रवृत्त्यादिनैष्फल्यं शास्त्रादेरप्यनुत्थितिः ॥

## आनन्ददायिनी

वृत्तीरिति सृष्ट्यर्थमन्योन्याभिभवोक्तिर्व्यर्था अभिभवस्य नित्यत्वेन स्वतस्सिद्धत्वादित्यर्थः । केचित्तु—तिरोधेर्दुर्वचत्वमेवाह—तिरोधिं तन्निवृत्तिं चेति । भावाभावयोरेकत्र वृत्त्यसम्भवा(वृत्त्ययोगा)दिति भावः । एवं च सति दूषणान्तरं च भवतीत्याह— मिथश्चेतीत्याहु । भावाभावयोरेकदैकत्र वृत्तिस्संयोगतदभावयोरिवोपलब्ध्यन्यथानुपपत्त्या साधयितव्या । तथाच तिरोधितदभावयोर्नित्यत्वेऽपि तिरोधेर्न दुर्वचत्वमित्यत्राह—समानदेशेति । यद्वा तिरोधितदभावयोर्नित्यत्वाङ्गीकारे भावाभावात्मकयोस्तयोस्समानदेशकालत्वं विरुद्धमङ्गीकरणीयमिति दूषणान्तरमाह—समानेति । असदुत्पत्त्यङ्गीकारेणापि निर्वाहसम्भवान्नान्यथा गतिरिति भावः । किञ्चाशेषनित्यत्वे पौर्वापर्याभावात्तद्व्यवहारोच्छेदः ; अभिव्यक्त्यादीनां साध्यतोक्तिश्चार्थशून्येत्याह— अपिचेति । साध्य साधनभावस्य सर्वनित्यत्वमते बाधात् प्रवृत्तिनिवृत्तिवैयर्थ्यं शास्त्राप्रामाण्यं च स्याच्चार्वाकस्येवेत्याह—स्वप्रवृत्तीति । प्रथम आदिशब्दो निवृत्तिपरः । अपगोरणादेर्नित्यस्य निवृत्त्या परिहारसम्भवादिति भाव । कृष्यादेर्ज्योतिष्टोमाद्यपूर्वस्य प्रयत्नसाध्यत्वासम्भवाच्च साध्यताबोधकानुमानादिकं द्वितीयस्यार्थः । अनुत्थितिः—अनन्तरस्थिति । प्रमाणा-

## सर्वार्थसिद्धिः

साङ्ख्यचार्वाकयोस्स्यातां साध्यसाधनबाधनात् ।
अयोग्यत्वं तिरोधानं योग्यत्वं व्यक्तिरित्यपि ॥
तन्नित्यानित्यताभ्यां ते विवक्षितविघातकृत् ।
इन्द्रियप्रतिघातेन भागैर्भाग न्तरावृतिः ॥
यथाऽन्यत्र तथा नात्र कादाचित्कदशात्यजः ।
असम्भवनिरस्तं च ग्रसनोद्गसनादिकम् ।

## आनन्ददायिनी

(अनुमाना)पेक्षया पश्चात् स्थितिः—अप्रामाण्यमिति यावत् । केचित्तु अनुत्थितिः—व्यर्थप्रवृत्त्यनुसरणमित्यर्थ इत्याहुः । साङ्ख्यचार्वाकयो-रित्यत्र चार्वाकग्रहणं दृष्टान्तार्थम् । यथा चार्वाकमते कार्यकारण भावस्य साधनाभावात् प्रवृत्त्यादिवैफल्यं शास्त्रादेरप्रामाण्यं च तथा साङ्ख्यस्यापि स्यादित्यर्थः । अयोग्यत्वमिति—प्रत्यक्षायोग्यत्वं तद्यो-ग्यत्वं चेत्यर्थः । विवक्षितविघातकृदिति—अनभिव्यक्तस्य कदाचिद-भिव्यक्त्यर्थं प्रवृत्त्यादिसाफल्यसमर्थनभङ्गकृदित्यर्थ । ननु परेषां यस्ति-रोधानपदार्थस्तदभावश्च तावेवास्माकमपि स्त इत्यत्राह—इन्द्रियेति । इन्द्रि-यप्रतिघातः—इन्द्रियप्रवृत्तिनिरोधः । अन्यत्र—अन्येषां पक्षे । अत्र—त्वत्पक्षे । कादाचित्केति—इन्द्रियप्रवृत्तेर्नित्यत्वे तत्प्रतिघातायोगात् तत्प्रतिघाताङ्गीकारे प्रतिघातस्य नित्यतयाऽनभिव्यक्तस्य कदाचिद-भिव्यक्त्ययोगादित्यर्थः । ननु दन्तिकपित्थादिग्रसनोद्गसनादिवन्मृदा-दिभिर्घटादेर्ग्रसनोद्गसनादिकं तिरोध्यभिव्यक्तिशब्दार्थौ भवत इत्यत आह — असम्भवनिरस्तं चेति । मृत्पिण्डापेक्षयाऽधिकपरिमाणस्य घटादेःमृदादिभिः ग्रसनोद्गसनासम्भवादित्यर्थः । ननु "यथोर्णनाभ-

## सर्वार्थसिद्धिः

मृत्पिण्डादिषु दुस्साधं शास्त्रमप्यनिदम्परम् ॥
अप्राप्तावव्यवस्थोक्ता प्राप्तावपि तवापतेत् ।
व्यक्तिवादोऽत एवेत्यप्ययुक्तं तन्निरासतः ॥
सत्वादिगुणभूयिष्ठभागभेदाव्यवस्थितेः ।
त्रिगुणद्रव्यसम्बन्धः प्रवाहानादिरात्मनाम् ॥

## आनन्ददायिनी

स्सृजते गृह्णते च' 'ग्रसते च चराचरम्' इत्यादिशास्त्राणां का गतिरित्यत्राह—शास्त्रमपीति । तत्राप्यवस्थाविशेषोत्पत्तिलयावादायोपपत्तिरि(पपन्नमि)ति भावः । नन्वप्राप्तानां जनकत्वे अतिप्रसङ्गात् प्राप्तस्य जनकत्वायोगादकामेनाप्यभिव्यक्तिर्वक्तव्या; दोषाश्च यथाकथंचित्परिहार्या इत्याशङ्कते—प्राप्ताविति । अत एव तव व्यक्तीत्यन्वयः । अभिव्यक्तिं प्राप्याप्राप्य वा करोतीति विकल्पक्षोभस्य समानत्वादित्याह—इत्यप्ययुक्तमिति । ननु भवन्मते प्रकृतिसम्बन्धोऽनादिरित्युच्यते स च कर्मसाध्य इत्यपि; तद्वत् कार्याणां पूर्वसत्त्वेऽपि साध्यत्वमस्त्वित्यत आह—सत्त्वादिगुणभूयिष्ठेति । सत्वरजस्तमोभूयिष्ठभागानामंशानां देहादिरूपेण परिणतानां अव्यवस्थितेः—अनियतत्वात् सम्बन्धस्याप्येकत्वाभावेन भिन्नाभिन्नत्वात् बीजाङ्कुरन्यायेन पूर्वपूर्वेषां प्रकृतिसम्बन्धानामुत्पत्तिरित्यर्थः । नन्वेवमनादित्वोक्तिः कथम्? इत्यत्राह—प्रवाहानादिरिति । ननु जीवानां ज्ञानं संसारदशायां तिरोहितमितीष्यते । तिरोधानं चास्य तत्प्रागभाव एव । स चानादिः । स च कर्मणेति कर्मकृतत्वं कथम्? इत्याशङ्क्य प्रवाहानादि(तया) संविद्विकाससङ्कोचरूपसंतन्यमानकादाचित्कावस्थारूपत्वात्प्रागभावस्य क-

## तत्वमुक्ताकलापे

### तस्मिन् सत्येव तस्माज्जनिरपि नियता

## सर्वार्थसिद्धिः

सार्वज्ञ्यप्रागभावात्मा तिरोधिरपि कर्मिणाम् ।
संविद्विकाससंकोचप्रवाहान्नातिरिच्यते ॥
तत्तत्कर्मप्रवाहेण तयोरेवं व्यवस्थितेः ।
न हि स्वरूपतोऽनादेर्हेतुरस्माभिरिष्यते ॥

यत्तु—कारकशक्तिर्नाम तद्गतं सूक्ष्मं कार्यमिति कल्प्यते; तत्प्रतिबन्द्या प्रतिरुणद्धि—तस्मिन्निति । तस्मादित्यत्रापि स्वोचितादिति विशेषणीयम् । यथा सर्वेषु द्रव्येषु तिला एव तैलगर्भास्स्वकारणशक्त्या सृज्यन्ते तथा तत्तत्कार्यनियतपूर्व-भावितया तत्तदुत्पादकस्वभावास्तेते भावास्तथैवेति स्वीका-र्यम् । अन्यथा दृष्टहानमदृष्टकल्पनं च । प्रतिबन्द्यन्तराणि

## आनन्ददायिनी

मसाध्यता न विरुद्धेत्याह—सार्वज्ञेति । कर्मिणां—जीवानां । मूल एव 'शक्तस्य शक्यकरणात्' इत्युक्तहेतुं विशिष्य दूषयतीत्याह—यत्त्विति । प्रतिबन्दिमेवोपपादयति—यथेति । तिलकारणपरम्पराया एव तैलादिरूपशक्तिमत्त्वं न तु सिकतातत्परम्पराया इत्यत्र किं निदानम्? इति शङ्कायां तथा दर्शनादिति व्यवस्थापनीयं; तथा मृदादीनामेवान्वयव्यतिरेकदर्शनात् घटादिजनकत्वं नान्येषामिति वक्तुं शक्यत्वादित्यर्थः । दृष्टहानं—दृष्टयोरन्वयव्यतिरेकयोर्हानम् । अदृष्टस्य

## तत्वमुक्ताकलापः

तन्निमित्तादिनीतेः

## सर्वार्थसिद्धिः

स्वव्याघातं चाभिप्रेत्याह—तन्निमित्तेति। निमित्तादीनां कार्योत्पादनशक्तिरस्ति वा न वा? न चेत्; कथं तन्निमित्तत्वम्? अन्येषां वा कथमतन्निमित्तत्वम्? अस्ति चेत्; सा किं कार्यस्य सूक्ष्मावस्था अन्या वा? न पूर्वः? अपसिद्धान्तात्। उपादाने हि तत्सत्त्वमङ्गीकरोषि! अन्यथा प्रकृतेरिवात्मनोऽपि प्रपञ्चगर्भत्वेन प्रकृतित्वप्रसङ्गात्। आत्मा खलु अयस्कान्तवन्निर्व्यापारोऽपि सन्निधिमात्रेण निमित्तमिष्यते। तथा सति निमित्तोपादानवैषम्यविलयाच्च। नाशकेषु च नाश्यवृत्तिरस्ति वा न वा? अस्ति चेत्; वह्नौ तूलवद्विरोधः। नचेत् कथं तदेव तस्य नाशकम्? न ह्यतद्वृत्तिस्तेन नाश्यते! शुक्तावविद्यमानस्य रूप्यस्य तया

## आनन्ददायिनी

कार्यगर्भत्वस्य। अन्येषां—कारणाद्भिन्नानामित्यर्थः। सिद्धान्तातिक्रमे त्वत्पक्षे शक्तिमत्त्वाविशेषादिदं निमित्तमेव नोपादानमिति व्यवस्था न स्यादिति दूषणे सत्येव दूषणान्तरं वक्तुं विकल्पयति—सा किमिति। दूषयति—अन्यथेति। आत्मनो निमित्तत्वं नास्तीत्यत आह—आत्मा खल्विति। किञ्च नाशकेषु नाश्यमस्ति नवेति विकल्पमुखेन प्रतिबन्ध्यन्तरमाह—नाशकेष्विति। वह्नौ नाशके यथा तूलं विरुद्धं तथा नाशकान्तरेऽपि नाश्यं विरुद्धमित्यर्थः। कथं तदेवेति—वह्निरेव तूलस्य नाशकः न जलमिति नियमः कथमित्यर्थः। परापादितातिप्रसङ्गमिहापि दर्शयति—न ह्यतद्वृत्तीति। शुक्ताविति—अनिर्वचनीयरजतपक्षेऽपि अधिष्ठानतया रजतनाशनिमि-

## सर्वार्थसिद्धिः

नाशप्रसङ्गात् । सर्वत्र वा अतिप्रसङ्गात् । दूषणेषु च दूष्यं वर्तते न वा? पूर्वत्र दूषणत्वादेरिव तद्वृत्तेस्तेन दूषणायोगः । उत्तरत्र तद्वृत्तिरहितस्य घटादेरिव तद्दूष्यत्वं न स्यात् । अथैतेषु यथादर्शनं व्यवस्थेष्यते ; प्रकृतेऽपि तथा स्यात् । एवं निमित्तादिप्रतिबन्धैव कार्यस्य कारणभावस्सर्वत्र सर्वसम्भवप्रसङ्गश्च निरस्तः । यानि च सांख्यानां अवस्थातद्वतोरभेदसाधकानि तेषु यदेतत्;– पटस्तन्तुभ्यो न भिद्यते तद्धर्मत्वादिति; अत्र तावत्प्रतिज्ञाहेतुविरोधः स्पष्टः । दृष्टान्ताभावेन व्याप्तिश्च नास्ति । यद्यतो भिद्यते न तत्तस्य धर्म इति व्यतिरेकव्याप्तिरस्तीति चेन्न; सपक्षेभ्यस्तन्तुभ्योऽपि व्यावृत्तत्वेन केवलव्यतिरेकित्वायोगात् ।

## आनन्ददायिनी

त्त्वात् प्राप्तरजतनाशकत्वं दृष्टं नाप्राप्तमिति प्रतिबन्धन्तरमित्यर्थः । केचित्तु—साङ्ख्यमत एव भ्रमस्थले रजतस्य शुक्तावविद्यमानस्य दोषादिघटितसाम्ग्र्याऽभिव्यक्तिरिति वक्तव्यम्, अन्यथाख्यात्यङ्गीकारे तस्य नित्यत्वप्रसङ्गेनानिर्मोक्षप्रसङ्गात् । तथाच तस्य भ्रमत्वमधिष्ठानसाक्षात्कारमात्रस्य निवर्त्यत्वात् । निवृत्तिश्च तिरोधानमेव । तथाच प्राप्तनिवर्तकत्वे शुक्तौ रजतसत्त्वप्रसङ्गः । तथाऽङ्गीकारे च सर्वं सर्वत्र वर्तेत; सर्वत्र भ्रमसम्भवात् । तथाच अप्राप्तमेव रजतम(मित्य)भिव्यक्तं तिरोहितमिति वाच्यं; तदा शुक्तिरूप्यतत्तुल्यता प्रसजेत्; तथा(एवं) च आपणस्थरजतस्यापि (सत्यरूप्यस्य शुक्तिभावस्स्यान्निवर्तनामिति न्यायेन) शुक्तिरूप्यवन्निवृत्तिस्स्यादित्यर्थः । प्रतिबन्धन्तरमाह—दूषणेष्विति । अनेन सर्वसम्भवाभावादिति विवक्षितहेतुश्च दूषित इत्याह—प्रतिज्ञाहेतुविरोध इति । धर्मत्वस्य भेदघटितत्वादिति भावः । सपक्षेभ्य इति—

## सर्वार्थसिद्धिः

यदपि तदुपादेयत्वात्तदभिन्न इति; एतदपि पूर्ववदेव। तदुपादेयत्वं च तज्जन्यत्वमात्रं वा तद्विकार्यत्वं वा तत्सम्बन्धित्वं वा तद्धर्मत्वं वा तदभिन्नत्वं वा अन्यद्वा यत्किञ्चित् इति? नाद्यः; निमित्तैरप्यभेदप्रसङ्गात्। न द्वितीयः; तद्धर्मत्वहेतूक्तदोषादेव। उभयत्र पटावस्था तन्त्वात्मा न भवति तन्तुभ्यो भिन्नत्वात् घटवत् इति प्रतिप्रयोगस्य शक्यत्वाच्च। [1] *इष्टोऽपि हि त्वयाऽपि

## आनन्ददायिनी

तथाच असाधारणानैकान्तिकत्वमिति भावः। 'पटस्तन्तुभ्योऽभिन्नः तदुपादेयत्वात् यदुक्तसाध्यं न तदुक्तसाधनं न यथा घटः' इत्यनुमानान्तरं दूषयति—यदपीति। अभेदस्तादात्म्यं। पूर्ववदेवेति—व्याप्यत्वासिद्ध्यादिदूषणदुष्टमित्यर्थः। दूषणान्तरं च वक्तुं विकल्पयति—तदुपादेयत्वमिति। तत्सम्बन्धित्वं वेति—संयोगसमवायान्यतरवत्त्वमित्यर्थः। निमित्तैरिति—तत्र व्यभिचार इति भावः। तद्धर्मत्वहेतूक्तेति—दृष्टान्तासिद्ध्यादिदोषादेरित्यर्थः। उभयत्र—विकल्पद्वयेऽपि। हेत्वसिद्धिं परिहरति—इष्टोऽपीति। भवता कारणे सत्त्वं

## भावप्रकाशः

[1] *इष्टोऽपि हीत्यादि—यथोक्तं तत्वकौमुद्याम्-(९)'स्वात्मनि क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति। एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात्' इत्युपक्रम्य 'इह तन्तुषु पटः इति व्यपदेशोऽपि इह वने तिलका इत्युपपन्न इति' इति(१०) 'कार्याणामभेदेऽपि कथञ्चिद्भेदाविवक्षयाऽऽश्रयाश्रयिभावः! यथेह वने तिलका इत्युक्तः' इति च।

## सर्वार्थसिद्धिः

**तत्र भेदोऽपि! न तृतीयः; कारणेषु परस्परसम्बन्धिषु व्यभिचारात् त्वत्पक्षेणासिद्धेश्च । न हि [1]* धर्मधर्मिणोस्तादात्म्यवादिनस्तत्सम्बन्धित्वसम्भवः!**

## आनन्ददायिनी

हि कार्यस्याङ्गीकृतं! तस्य तद्भेदाभावे तत्र सत्त्वायोगादिति भावः । तथाच अत्रानुमाने भिन्नत्वे सति अभिन्नसत्ताकत्वं तादात्म्यं साध्यमिति ध्येयम् । असिद्धिमेवोपपादयति—न हीति । तत्र हेतुमाह—

## भावप्रकाशः

[1] * धर्मधर्मिणोस्तादात्म्यवादिन इति—उदाहृतवाचस्पतिग्रन्थे भेदाभेदस्य स्फुटत्वात् तत्वकौमुद्यां सविकल्पकनिरूपणावसरे 'अस्ति-ह्यालोचनम्!

ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥ '

(श्लो+वा+प्रत्य+सू १२०)

इति भेदाभेदवादिकुमारिलश्लोकवार्तिकोदाहरणात् ।

भिन्नाभिन्नत्वमेकस्य कुतोऽत्र परिकल्पितम् ।
त्वया सांख्यमतेनैव मुक्त्वा बुद्धस्य शासनम् ॥

(शून्यवादे १२३)

इति ।

तस्मादत्यन्तभेदो वा कथञ्चिद्वाऽपि भिन्नता ।
सन्तानस्येत्ययं चात्मा स्याद्वैशेषिकसांख्ययोः ॥

(आत्मवादे ४२)

## सर्वार्थसिद्धिः

समवायस्यानभ्युपगमात् । अन्यतरस्याद्रव्यत्वे तु संयोगायोगाच्च । न चतुर्थः प्रागेव दूषितत्वात् । न पञ्चमः तस्यैव साध्यत्वात् । न षष्ठः अभेदव्याप्यस्य कस्यचिदन्यस्य त्वयाऽप्यदर्शनात् इति । यच्चैतत्—पटस्तन्त्वात्मकः तत्संयोगतदप्राप्तिरहितत्वात् । तादात्म्याभावे हि कुण्डबदरयोरिव संयोगो वा स्यात् हिमवद्विन्ध्ययोरिवाप्राप्तिर्वा ! तदुभयमिह निवर्तमानं तादात्म्यविरहमपि निवर्तयतीति । तदपि मन्दम् ; तादात्म्यविरहेऽपि अन्यतरस्याद्रव्यत्वात्संयोगाभावः तद्धर्मस्वभावत्वादे[illegible]प्तिपरिहार इत्यन्यथासिद्धस्यासाधकत्वात् । अन्यथा तादात्म्यभाव इव भेदसद्भावेऽपि घटपटयोरिव धर्मधर्मिभावो न

## आनन्ददायिनी

समवायस्येति । तस्यैव साध्यत्वादिति—साध्याविशेषो दोष इत्यर्थः । तदुक्तमनुमानान्तरं दूषयति—यच्चैतदित्यादिना । तत्संयोगेति—तत्संयोगरहितत्वे सति तदप्राप्तिरहितत्वादित्यर्थः । तत्संयोगरहितत्वादित्युक्तौ हिमवद्विन्ध्ययोर्व्यभिचारः । तदप्राप्तिरहितत्वादित्युक्तौ कुण्डबदरयोर्व्यभिचारः इति विशिष्टहेतुः । व्यतिरेकव्याप्तिं दर्शयति—तादात्म्याभावे हीति । अप्रयोजकतामाह—तादात्म्यविरहेऽपीति । इष्टापत्त्यादिना अवस्थातद्वतोर्भेदस्यैवोपपादनादिति भावः । इतश्च न पटस्तन्तुभ्यो भिद्यते गुरुत्वान्तरकार्यादर्शनादित्यनुमानान्तरं दूषयति—

## भावप्रकाशः

इति च कुमारिलेन सांख्यस्य भेदाभेदवादित्वाभिधानाच्चेति भावः । भेदाभेदस्य सम्बन्धता निरसिष्यते । यद्यपि वर्तमानावस्थैवाभि-

## सर्वार्थसिद्धिः

स्यादिति प्रसज्येत। गुरुत्वान्तरकार्यादर्शनं तु द्रव्यान्तरोत्पत्तिं प्रतिरुन्ध्यात् न त्ववस्थातद्वतोरभेदं विदधीत । ननु जनिरपि व्यक्तिरेव । 'जनीप्रादुर्भावे' इति धात्वर्थपाठात्? न; जनिव्यक्तिशब्दयोरर्थभेदेनैव निरूढेः। प्रादुर्भावपाठोऽप्युत्पत्ति-परस्स्यात्। निर्वर्त्यप्राप्यभेदासिद्धेश्च। जन्यं हि निर्वर्त्यम्! व्यङ्ग्यं तु प्राप्यं । अभूततद्भावादिषु च प्रागसत्त्वमनुस्मृतमेव ।

## आनन्ददायिनी

गुरुत्वान्तरेति । द्रव्यस्यैव गुरुत्वाश्रयत्वादिति भावः । ननूत्पत्ति-वादिभिरपि अभिव्यक्तिरेव नामान्तरेणाभ्युपगता । अन्यथा पद-गताविति शाब्दस्मृतिविरोधः । गतिर्हि ज्ञानमभिव्यक्तिः; अतस्त-दूषणं स्वमतदूतषणमेव स्यादिति शङ्कते—नन्विति । परिहरति—पाठोऽपीति । धातुपाठोऽपीत्यर्थः । ननु जन्मनोऽभिव्यक्तित्वे निर्वर्त्यं च विकार्यं च प्राप्यं चेति भेदेन कथनमनुपपन्नं स्यादित्याह—निर्वर्त्येति । ननु जनीप्रादुर्भावे इत्यत्र प्रादुर्भावशब्दः कथमि-त्यत्राह—अभूतेति । पूर्वमविद्यमानं यत् तद्भावः तादृशा-वस्थावत्त्वमित्यर्थः । तथाच असत उत्पत्तिस्मृतिबलाल्लक्षणेति भावः । अस्तु वा प्रादुर्भावशब्दो मुख्यः; तथाऽपि तस्यासत्त्वात् असत

## भावप्रकाशः

व्यक्तिरिति सांख्यनिष्कर्षः; तथाऽपि वर्तमानावस्थाया अभिव्यक्ति-हेतुत्वमात्रमेव । तस्या अभिव्यक्तिशब्दमुख्यार्थत्वं तु न सर्वसंप्रति-पन्नम्; अमुख्ये सांख्यव्यवहारे ।

## सर्वार्थसिद्धिः

भवतु वा जनिशब्दो व्यक्तिपरः—

[1] * न व्यक्तिरुपलब्धिस्ते दृष्टादृष्टदशान्वयात् ।
अथोपलब्धियोग्यत्वं न तद्व्यापकत्वतः ॥
[2] * सत्स्वलक्षणपूर्तिश्चेदभिव्यक्तिः तदप्यसत् ।
साऽपि नः प्राक्तनी नो चेत् न सिध्येद्धेतुरप्यसन् ॥

## आनन्ददायिनी

उत्पत्तिरिति न ते विवक्षितसिद्धिरित्याह—भवतु वेति । अभिव्यक्तिः किमुपलब्धिरेव उत तद्योग्यत्वं? नाद्य इत्याह—दृष्टादृष्टदशान्वयादिति । उत्पत्तिरभिव्यक्तिश्चेत् सोपलब्धिरिति घटस्य यावद्विनाशमभिव्यक्तिमत्त्वात् दृष्टत्वादृष्टत्वरूपदशान्वयो न स्यात् । ऊत्पत्त्यनन्तरं विद्यमान एव घटः कदाचिद्दृश्यते कदाचिन्न दृश्यते चेति भावः । न द्वितीय इत्याह—अथेति । अथेन्द्रियाणामुत्पत्तिरस्ति; तन्न स्यात्; उपलब्धियोग्यत्वरूपाभिव्यक्तेरभावादित्यर्थः । सत्स्वलक्षणेति—सतो विद्यमानस्य स्वलक्षणस्य वस्तुस्वरूपस्य पूर्णता अभिव्यक्तिः । सा कारकव्यापाराद्भवतीत्यर्थः । पूर्तिरपि पूर्वमस्ति नवेति विकल्प्य आद्यं दूषयति—साऽपि प्राक्तनीति । कारकव्यापारवैयर्थ्यमित्यर्थः । द्वितीयं दूषयति—नो चेदिति । असतस्सर्वदा असत्वात् पूर्तिर्न सिध्येदित्यर्थः । हेतुरप्यसन्निति—कार्यपूर्वसत्त्वसाधकस्सत्स्वलक्षणपूर्तिरूपाभिव्यक्तौ व्यभिचारादसन्नित्यर्थः ।

## भावप्रकाशः

निदानं न पश्यामः इति भावेन दूषयति ।

[1]* न व्यक्तिरित्यादिना । व्यक्तिः—अभिव्यक्तिः । [2]* सत्स्वलक्षणपूर्तिरिति । सतां — कारकव्यापारात्पूर्वमपि शक्त्यात्मना

## सर्वार्थसिद्धिः

**[1] * किञ्च—व्यक्तिरपि नित्या कार्या वा ?**
**पूर्वत्र कारकाणामिव [2] * व्यञ्जकानामपि नैष्फल्यम् ;**

## आनन्ददायिनी

असत उत्पत्तिपक्षे दूषणानां स्वव्यापकत्वाज्जातित्वमित्याह—किञ्चेति ।

## भावप्रकाशः

विद्यमानानां स्वलक्षणेन—स्वज्ञापिकया कारकव्यापारसामग्र्या पूर्तिः—व्यवहारविशेषरूपफलोपयोगितेत्यर्थ । एतेन—सांख्यचन्द्रिकायां 'व्यवहारोपयोगितत्तत्कार्याभिव्यक्तेस्तत्तत्कार्यनिष्ठसत्त्वगुणरूपतया नित्यत्वेऽपि तमसा प्रतिबद्धत्वान्न व्यवहारोपयोगित्वं अभिव्यञ्जकसामग्र्या तूत्तेजकेन मणेरिव तमसः प्रतिबन्धाद्व्यवहारक्षमत्वमिति सामग्र्या उत्तेजकत्वमात्राङ्गीकारात् सत्कार्यवादबाधाभावः' इत्युक्तिरपास्ता । पूर्वमपि—

> न हि व्यक्तौ विशेषोऽस्ति नचावरणवारणम् ।
> तयोरापि भवत्पक्षे नित्यत्वात्साध्यता कथम् ? ॥

इत्यारभ्य—

> इन्द्रियप्रतिघातेन भागैर्भागान्तरावृतिः ।
> यथाऽन्यत्र तथा नात्र कादाचित्कदशात्यजः ॥

इत्यन्तग्रन्थेनायमर्थः स्फुटीकृतः । ध्वंसप्रागभावौ अतीतानागतावस्थारूपौ अभिव्यक्तिश्च वर्तमानावस्थैवेति निष्कर्षमपि दूषयति—

[1] * किञ्चेत्यादिना । नित्या—कालत्रये सती ॥

[2] * व्यञ्जकानां—वर्तमानावस्थासम्पादकानां । उदाहृतयोगभाष्यादिषु लक्षणशब्दाभिधेयानामवस्थानां सदासत्त्वरूपनित्यत्वमङ्गीकृतम् । इत्थं च विज्ञानभिक्षुणा स्वोपज्ञसाङ्ख्यप्रवचनसूत्रभाष्ये अभिव्यक्तेर्वर्तमाना-

## भावप्रकाशः

वस्थया प्रागसत्तया तन्निवृत्तये कारकव्यापारसाफल्योक्तिरपि हेया। तन्मते अवस्थानां परस्पराभावरूपतया वर्तमानावस्थया प्रागसत्त्वमतीतावस्थारूपं तन्निवृत्तिश्च वर्तमानावस्थारूपैवेति तस्यास्सदा सत्त्वे कारकव्यापारवैफल्यस्यापरिहार्यत्वात्। एवं च योगवार्तिके तेनैव 'अतीतानागतावस्थावत्त्वस्वरूपमनित्यत्वं घटादावभिव्यक्तौ चेष्यत एव। आद्यन्तयोः कार्यस्यात्यन्तासत्त्वप्रतिषेधाय ध्वंसादिप्रतियोगित्वस्यैव प्रतिषेधात्। अतीतानागतावस्थयोः ध्वंसप्रागभावस्थलाभिषेकमात्र एवास्माकं विशेषादिति। एवं स्वीयसांख्यभाष्ये च विशेषप्रदर्शनमपि अभिव्यक्तेस्सर्वदा सत्त्वाङ्गीकारेऽकिञ्चित्करमेव। यद्यपि सिद्धान्तवत् सांख्यैरपि निरन्वयविनाशानङ्गीकारेण प्रागभावप्रध्वंसौ भावरूपावेव; अथाऽपि धर्मांशेऽपि सत्कार्यवादिभ्यस्सांख्येभ्यः धर्म्यंशमात्रे सत्कार्यवादिनां सिद्धान्तिनामयमेव विशेषः—धर्मितत्प्रागभावतन्नाशाः अत्यन्तविभिन्नरूपास्सिद्धान्ते। सांख्यमते तु वर्तमानावस्थाया अतीतावस्थाकालेऽपि शक्त्यात्मनाऽवस्थानाङ्गीकारेण पूर्वापरधर्मिणामिव तादृशावस्थानामप्यभेदस्य स्वीकार्यतया अतीतावस्थारूपतया अभिन्नधर्मरूपास्ते धर्म्यभिन्ना वा इत्यादिसरणिरभ्युपेया। एवं च वर्तमानावस्थाभावरूपाया अतीतावस्थायाः प्रतियोगिभूतवर्तमानावस्थारूपत्वाङ्गीकारे वर्तमानावस्थायास्तत्क्षणे धर्मरूपेण सत्त्वे च—

> समानदेशकालत्वमभावप्रतियोगिनोः।
> सहते क्वाप्यगत्यैव न तथाऽत्रान्यथा गतेः॥

इति पूर्वोक्तदोषोऽपीति। एवमेतत्पक्षे—

> अपि चाशेषनित्यत्वे पौर्वापर्यं न कुत्रचित्।

इत्यादिना पूर्वोक्ता अपि दोषा अनुसन्धेयाः। धर्माणां धर्म्यभेदो निरस्त एवेति।

## तत्वमुक्ताकलापः

**व्यक्तिर्व्यक्तानवस्थां भजति**

## सर्वार्थसिद्धिः

**[1]* उत्तरत्र अर्धजरतीयस्सत्कार्यवादः । व्यक्तेरपि व्यक्त्यर्थं कारकापेक्षेति चेत् तत्रानवस्थाप्रसङ्गमाह—व्यक्तिरिति । व्यक्तेः**

## भावप्रकाशः

[1]* उत्तरत्रेत्यादि—एतत्पक्षे अपसिद्धान्तः असदकरणादित्यादि-हेतुविरोधश्चानुपदमेव वक्ष्यते । योगभाष्यव्याख्याने तत्ववैशारद्यां वाचस्पतिना योगवार्तिके विज्ञानभिक्षुणा च असत्कार्यवादप्रसङ्ग-भयेन धर्मलक्षणावस्थानां सर्वदासत्त्वरूपनित्यत्वस्य सिद्धान्तिततत्वेन अभिव्यक्तेः प्रागसत्त्वाङ्गीकारेऽपसिद्धान्त इत्यर्थः । असदकरणादिति हेतुविरोधः स्फुटः । योगवार्तिके 'सत एवाभिव्यक्तिरिति सत्कार्य-वादिनो नियमः । उत्पत्तेरुत्पत्तिरिवाभिव्यक्तेरभिव्यक्तिरपि स्वरूपमेव । अभिव्यक्तेश्चाभिव्यक्त्यन्तरास्वीकारेण तस्या असत्या एवोत्पादेऽपि न क्षतिः' इति विज्ञानभिक्षूक्तावपि अभिव्यक्तेर्वर्तमानावस्थया प्राग-सत्त्वमेव विवक्षितं न तु अत्यन्तासत्त्वं । तेनैव सांख्यप्रवचनभाष्ये अभिव्यक्तेः प्राक्सत्त्वमसत्त्वं वेति विकल्प्य सर्वकार्याणां सर्वदा-सत्त्वस्य सिद्धान्तिततत्वात्; योगवार्तिके 'घटादेरनागतातीतावस्थे एवाभिव्यक्तेरनागतातीतावस्थे नातिरिक्ते इति अनागतातीतावस्थावत्त्व-रूपानित्यत्वस्य घटादौ अभिव्यक्तौ चाभ्युपगतत्वात् । अत आचार्य-विकल्पेऽभिव्यक्तेर्नित्यत्वपक्ष एव विज्ञानभिक्षुसंमत इति तत्पक्षे कारक-व्यापारस्य वैफल्यदोषो बोध्यः । ननु परिणामसूत्रे विज्ञानभिक्षुणा—स्यादेतत् लक्षणाभिव्यक्तेरपि नित्यत्वात् कथं क्रमिकत्वमित्याशङ्क्य

## तत्वमुक्ताकलापः

**नच कृतामात्थ**

## सर्वार्थसिद्धिः

**कार्यत्वपक्षे अपसिद्धान्तं असदकरणादिति हेतुविरोधं चाभिप्रेत्याह—नचेति । ननु कार्यस्य कृतिस्तावत् न कार्यस्वरूपमेव । कार्यं क्रियते घटः क्रियते इति सामान्यतो विशेष(षाच्च)तश्च सह प्रयोगात् । अतिरिक्ता च सा । तथा सति कार्यव्यक्तौ कः प्रद्वेषः ? कृतिरपि कृता वा व्यक्ता वा ? पूर्वत्रानवस्था ।**

## आनन्ददायिनी

हेतुविरोधं चेति—सतः कृतत्वायोगात् कृतत्वे (वा). प्रागसत्त्वनियमात् असदकरणादिति हेतुविरोध इत्यर्थः । कार्यव्यक्तौ—कार्यस्याभिव्यक्तौ । कःप्रद्वेषः—कृतितुल्यत्वादित्यर्थः । तुल्यतामेवोपपादयति—कृतिरपीति । कृतिर्हि कृतैव । नचानवस्था ; सिद्धानवस्थारूपतया

## भावप्रकाशः

नित्यानित्योभयरूपत्वस्योक्ततया नित्यत्वेऽपि सर्वकार्येष्वनित्यरूपेण क्रमस्संभवतीति योगभाष्योक्तानेकान्तवादावलम्बनेन दूषणोद्धारः कृत एवेति चेत् ; कस्याप्यनित्यरूपस्य कारकव्यापारात्पूर्वमतीतावस्थयाऽप्यसत्त्वानङ्गीकारे क्रमः कारकव्यापारसाफल्यं च न संभवति । अङ्गीकारे च तत्र सत्कार्यवादक्षतिरिति समाधानमाचार्यैरुक्तप्रायम् । 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' इत्यादिश्रुतयः वस्तुसामान्यस्य

## तत्वमुक्ताकलापः

**नैवं कृतौ नः ॥ २४ ॥**

## सर्वार्थसिद्धिः

उत्तरत्र कारकनैष्फल्यापसिद्धान्तौ। व्यक्तिरपि कृता व्यक्ता वेत्युभयथाऽप्यनवस्था तत्राह—नैवमिति। कृतिर्हि कारकाणां व्यापारः। स च आगन्तुकस्वकारणव्यापारेण जन्यते। सोऽपि तथेति सिद्धानवस्थैषा। सा च सर्वसम्मता न दो(षकृत्)षः। त्वयाऽप्यभि (त्वयाऽपिहि) व्यञ्जकव्यापारो व्यञ्जकान्तरव्यापार-व्यङ्ग्य इति वाच्यम्। ननु व्यक्तिर्न व्यज्यते न क्रियते च। अव्यक्तैव नित्यं स्वयंव्यक्तैव वा कार्याणां व्यक्ति-स्स्यात्? न स्यात्; तदर्थकारकव्यापारवैयर्थ्यप्रसङ्गात्। कार्याणां नित्यव्यक्तिप्रसङ्गाच्च। ननूत्पत्तिर्नाम सत्तासमवायो वा स्वकारकसमवायो वा। स च नित्यः। न तदर्थ-(र्थःका) श्च कारकव्यापारः कृतिरिति समा (नं।) ना चर्चा? न;

## आनन्ददायिनी

मूलक्षयकरत्वाभावात् बीजाङ्कुरस्थल इव न दोष इति परिहरति—कृतिर्हीति। अभिव्यञ्जकव्यापारे त्वयाऽपि दृश्यानवस्था वक्तव्ये (स्थाङ्गीकार्ये) त्याह—त्वयापीति। ननु अभिव्यक्त्युत्पत्तिपक्षयोस्तुल्य-त्वेऽभि(त्वादभि)व्यक्तिपक्षे कः प्रद्वेषः? इति चेन्न; अभिव्यक्तिवादिनस्तव सर्वनित्यत्वाङ्गीकारादीदृशावस्थयाऽप्यभिव्यक्तिकादाचित्कत्वादिसमर्थनं दुर्घटं (मत्त्वा) आगन्त्ववस्थावादिनस्तादृशव्यापाराङ्गीकारात्सुलभमभि-त्युत्पत्तिपक्ष एव श्रेयानिति द्रष्ट (मन्त) व्यम्। नन्वभिव्यक्तेर्नाभि-व्यक्त्यन्तरमपेक्षितं; तथा च नानवस्थेति त्वदुक्तप्रतिबन्ध्यवकाशो नेति शङ्कते—नन्विति। ननु परस्यापि कारकव्यापारवैयर्थ्यमिति प्रति-बन्दीमाशङ्कते—नन्विति। सत्ता—सत्ताजातिः। चर्चा—विचारः।

## सर्वार्थसिद्धिः

**समवायस्यास्माभिरनभ्युपगमात् । तदेतदस्मच्छब्दान्वादेशेन सूचितम् । का तर्ह्युत्पत्तिः? [1]* कृतिरेव । अन्यधर्मः कथमन्यस्योत्पत्तिः? इति चेत्; [2]* तादर्थ्येन तद्धर्मतोपचा-**

## आनन्ददायिनी

अस्मच्छब्देति— षष्ठीबहुवचनान्तस्य विहितान्वादेशाख्येन नश्शब्देनेत्यर्थः । अन्यधर्म इति । कृतिरात्मधर्मः कथं घटधर्मरूपोत्पत्तिस्स्यादित्यर्थः । यद्वा कृतिर्व्यापारः कारकधर्मः । तादर्थ्येनेति । ज्ञातो घट इत्यादौ ज्ञातताऽनभ्युपगन्तुर्ज्ञानस्येव घटधर्मत्वमि-

## भावप्रकाशः

वर्तमानावस्थया प्रागसत्त्वं अतीतावस्थया सत्तां च न प्रतिपादयन्ति; किं तु धर्मिणां प्राक्सत्त्वं न धर्माणां इत्यादिकमेवेत्यादि स्फुटम् । सिद्धान्ते पूर्वोत्तरावस्थानाशप्रागभावयोर्भावरूपत्वेऽपि परस्परं धर्मिणा च सहाभेदानङ्गीकारान्न कोऽपि दोषः । विज्ञानभिक्षुणाऽपि श्रीभाष्यादिसिद्धान्तितकतिपयार्थसाधयित्रा अत्राप्येवमेव यद्यङ्गीक्रियते तदा नास्माकं प्रद्वेष इति । एतच्च 'एकस्य प्रागसन् भेद,' इति कारिकया आचार्यैर्वक्ष्यते इति । अतिरिक्तावयविजनकतया पराभ्युपगतासमवायिकारणभूतसंयोगविशिष्टावयवानामेव यथा घटाद्यवयविरूपता; अन्यथाख्यातिजनकत्वेन परसंमतज्ञानद्वयस्यैव यथा भ्रमत्वं; एवमुत्पत्तिप्रयोजकत्वेन पराङ्गीकृतः कारकव्यापार एवोत्पत्तिः; सैव कृतिः; कार्योत्पाद्यशब्दयोर्लोके पर्यायेण प्रयोगदर्शनादिति भावेनाह—

[1] * कृतिरेवेति [2] *तादर्थ्येनेति— घटतदवस्थयोः कृत्युद्देश्यत्व-

## सर्वार्थसिद्धिः

रात् । यदा हि तन्त्वादयो व्याप्रियन्ते तदा पट उत्पद्यत इति व्यवहरन्ति [1]*आद्यक्षणावच्छिन्नपटत्वावस्थैव वा पट-

## आनन्ददायिनी

त्यर्थः । कृतेरुत्पत्तित्वे लोकव्यवहारं प्रमाणयति—यदा हीति । व्याप्रियन्ते—कृतिविषया भवन्ति । व्यापारावस्थावत्त्वयोरुत्पत्तित्वे भाष्यं

## भावप्रकाशः

साध्यत्वाख्यविषयतावत्त्वेन उत्पन्नत्वव्यवहार उपपद्यत इति भावः । ननु अन्यत्र सिद्धान्त्यभ्युपगमानुरोधेन घटतदवस्थयोरुभयोरुत्पत्तिव्यवहारैकरूप्यानुसारेण च कारकव्यापारस्योत्पत्तिशब्दार्थता किं विशिष्य उत सामान्येन? आद्ये उत्पत्तिशब्दस्य नानार्थत्वप्रसङ्गः । अन्त्ये धनेन धनवानित्यादेरिव कारकव्यापारेण घट उत्पन्न इत्यादिप्रयोगाणामप्यनुपपत्तिः? इति शङ्कायां भाष्योक्तमेव परिष्कृत्य समाधत्ते—[1] *आद्यक्षणावच्छिन्नेत्यादिना । विद्यावानुत्कृष्टः चन्द्रसदृशं मुखं सुन्दरं घटः प्रमेयवान् इत्यादौ उद्देश्यत्वविधेयत्वाद्यवच्छेदकयोरभेदवत् व्युत्पत्तिवैचित्र्येण घट उत्पन्न इत्यादावप्यन्वयितावच्छेदके घटत्वे उत्पन्नपदार्थतावच्छेदकधर्माभेदो भासते इति तात्पर्येण पटत्वेत्युक्तं; न तु तस्याप्युत्पत्तिपदशक्यता ; अनन्यलभ्यश्शब्दार्थः इति न्यायविरोधात् नानार्थत्वप्रसङ्गाच्च । एतेन—

आगन्तुकापृथक्सिद्धधर्मोऽवस्थेति कीर्त्यते ।

इति शतदूषणीतत्वटीकानुसारेणावस्थापदार्थस्याङ्गीकारे घटवायुसंयोगोत्पत्तिकाले घट उत्पद्यते इति व्यवहारापत्तिः वायुसंयोगस्यागन्तुकत्वात् ; अतः स्वाभिन्नत्वस्वसामानाधिकरण्यैतदुभयसम्बन्धेन परिमाणविशिष्टपरिमाणमेवावस्थापदार्थो वाच्य इति केषाञ्चित्प्रयासो व्यर्थः।

## सर्वार्थसिद्धिः

**स्योत्पत्तिरुच्यते। [1]* 'सैव तदवस्थस्योत्पत्तिः' इति भाष्यमपि [2]* तदभिप्रायमेव (येणैव) स्यात्।**

## आनन्ददायिनी

प्रमाणयति—सैवेति। तदभिप्रायमिति। आद्यक्षणावच्छिन्नाभिप्रायं

## भावप्रकाशः

घटत्वे वायुसंयोगाभेदाविरहेण पूर्वोक्तदोषाभावेन शतदूषणीतत्वटीकोक्तादिशा अवस्थाशब्दार्थाङ्गीकारे बाधकाविरहात्। ननु उत्पत्तिराद्यक्षणसम्बन्ध इत्येव युक्तं लाघवात् घटत्वावस्थाया अवयवसंयोगरूपाया उत्पत्तेश्शतदूषण्यामङ्गीकारेण तत्र घटत्वावस्थाविरहेणावस्थाया उत्पत्तित्वे तदनुपपत्तेश्च। एवं रूपादेरुत्पत्तिव्यवहारानुपपत्तिश्च। 'सैव तदवस्थस्योत्पत्तिः' इति भाष्ये आद्यक्षणावच्छिन्नत्वबोधकपदाभावात्तस्योत्पत्तिपदार्थनिर्वचनपरत्वोक्तिश्चानुचितेति शङ्कायामाह—[1]* सैव तदवस्थस्येत्यादि। [2]* तदभिप्रायकमिति—आद्यक्षणावच्छिन्नावस्थाभिप्रायकमित्यर्थः। 'जातस्य हि ध्रुवो मृत्युः' इति गीताभाष्ये—'तत्र पूर्वावस्थस्य द्रव्यस्य उत्तरावस्थाप्राप्तिर्विनाशः; सैव तदवस्थस्योत्पत्तिः' इति सूक्तिक्रमः। अत्र तात्पर्यचन्द्रिका—सैवोत्तरावस्थाप्राप्तिरित्यर्थः। अत्र प्राप्तिशब्देन प्रथमक्षणागमस्य विवक्षितत्वादुत्तरक्षणेषूत्पत्तिशब्दयोगाभाव उपपन्न इति सूचितं इति। इत्थं च उत्पत्तिराद्यक्षणावच्छिन्नत्वघटितैवेति भाष्यकृतामाशयस्सिद्धः।

अथचैनं नित्यजातं नित्यं वा मन्यसे मृतम्।

इत्यादिश्लोकत्रयेण देहात्मवादमभ्युपेत्य समाधानप्रकरणे 'जातस्य हि ध्रुवो मृत्युः' इति गीताश्लोके 'ध्रुवं जन्ममृतस्य च' इत्यनेनाचेतनस्यापि

## भावप्रकाशः

नष्टस्य पुनर्जन्माभिधाय जननमरणयोरुभयोरवर्जनीयत्वरूपैकधर्मकथनेन द्वयोरेकजातीयता सूचिता। एतत्तात्पर्येणैव भाष्ये उभयोः परिणामरूपत्वस्थापनं। तेन सिद्धान्ते जायते नश्यतीत्युभयत्राख्यातार्थ आश्रयत्वमेकरूपमेव। नैयायिकमते तु नश्यतीत्यत्र प्रतियोगित्वमेवाख्यातार्थः न तु आश्रयत्वं; तथा सति घटादिनाशस्य प्रतियोगिसमवायिकारणकपालादिवृत्तितया घटादेर्नाशाश्रयत्वासम्भवेन घटो नश्यतीत्यादिप्रयोगानुपपत्तेः। स्पष्टं चेदं व्युत्पत्तिवादे। किञ्च घटः कपालोऽभवत् चूर्णोऽभवत् इत्यादिशब्दप्रयोगेष्वपि घटादेर्नाशप्रतीतिरनुभवसिद्धा; सापि नैयायिकमते स्वरसतो न सङ्गच्छते। अपिच जायते म्रियते इति व्यवहारतुल्यावेव उत्पद्यते नश्यतीति व्यवहाराविति सर्वलोकसाक्षिकमेतत्। तत्र जायते इत्यत्र आद्यप्राणशरीरसंयोगः म्रियते इत्यत्र चरमप्राणशरीरवियोगो विषय इति प्रतिपादयद्भिः उत्पद्यत इत्यत्राद्यक्षणसम्बन्धः नश्यतीत्यत्र क्षणावियोगविलक्षणो नाशो विषय इति भाषणमप्ययुक्तम्। किञ्च घटोऽजायत जनिष्यते जायते इत्यत्राद्यक्षणसम्बन्धेऽतीतानागतवर्तमानकालसम्बन्धो लकारेण बोध्यते इति तैर्वाच्यम्। तच्च 'जनीप्रादुर्भावे' इत्यादेरनुभवस्य च दूरतमम्। एतेन साङ्ख्यमतेऽपि वर्तमानावस्थैवोत्पत्तिरभिव्यक्तिर्जनिधात्वर्थः। इत्थं च घटो जायते इत्यादौ वर्तमानकालीनवर्तमानावस्थाविषयकबोधस्तन्मते वाच्यः। स च पौनरुक्त्यानुभवविरोधपराहत इति सिद्धम्। एतेन; 'इदमत्रावधेयम्—सर्वत्रोत्पत्तिः कालनिरूपिताधेयत्वमेव। तस्य च यत्र व्यासज्यवृत्तीतरधर्मस्यान्वयितावच्छेदकता तत्र स्वविशिष्टधर्मवत्त्वसम्बन्धेन तदवच्छिन्नेऽन्वयः। धर्मे स्ववैशिष्ट्यं स्वावच्छेदकत्वस्वानिरूपककालपूर्वकालवृत्तितावच्छेदकत्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन। यत्र च

## सर्वार्थसिद्धिः

[1]*अत एव [2]*सह प्रयोगोपपत्तिः ।

## आनन्ददायिनी

कृत्यभिप्रायं चेत्यर्थः । एतेन उत्पत्तिर्न तावत् स्वरूपं घट उत्पन्न इति सह प्रयोगानुपपत्तेः इति सांख्योक्तदूषणं निरस्तमित्याह—अत एवेति ननु उत्पत्तिरुत्पद्यते न वा? आद्येऽनवस्था; अन्त्ये उत्पत्तावुत्पत्तिव्यवहारो

## भावप्रकाशः

व्यासज्यवृत्तिधर्मस्यान्वयितावच्छेदकता तत्र तादृशधर्मधर्मितावच्छेदक-घटत्वपटत्वादिधर्मेषु प्रत्येकं स्वावच्छेदकत्वेत्याद्युभयसम्बन्धेनान्वयः' इत्यादिना अर्वाचीनानां उत्पत्तिशब्दार्थस्य परिष्करणं; तत्र च मूलं 'अखिलभुवनजन्मेति' श्लोकविवरणतत्वटीकायां—

प्रागसिद्धस्यात्मलाभ उत्पत्तिर्जन्म . . . . . ।

इति सूक्तिः; तत्राप्ययं दोषो बोध्यः । सिद्धान्ते पटोत्पत्तिक्षणे घटस्थितिकाले घटपटोभयमुत्पद्यते इति व्यवहारस्य नापत्तिः । उभयत्वावच्छिन्ने घटे आद्यक्षणावच्छिन्नावस्थाविरहात् । वायुसंयोग-सत्त्वेऽपि व्यासज्यवृत्तिधर्मस्य यत्रान्वयितावच्छेदकता तत्र तद्धर्म-धर्मितावच्छेदकयावद्धर्मेषु व्युत्पत्तिवैचित्र्येणोत्पत्तेरभेदेनान्वयाङ्गीकारेण प्रकृते घटत्वे तदभावात् । आद्यत्वं च स्वसमभिव्याहृतपदता-त्पर्यविषयतावच्छेदकाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वमि-त्यादिकं नव्यन्यायपरिशीलनवतां सुगमम् । घटत्वस्योत्पत्तिव्यवहारोऽ-नुपदमेवोपपादयिष्यते । [1]*अत एव—आद्यक्षणावच्छिन्नावस्थाया उत्पत्तिपदार्थत्वादेव । [2]*सहप्रयोगोपपत्तिरीति—पट उत्पद्यते इति

## सर्वार्थसिद्धिः

[1]* नचेदृश्या उत्पत्तेरीदृशमुत्पत्त्यन्तरमस्ति! तथाऽपि [2]* प्राग-सिद्धस्वरूपलाभादुत्पत्तिशब्दः

## आनन्ददायिनी

न स्यादित्यत आह—नचेदृश्या इति ।

## भावप्रकाशः

प्रयोगोपपत्तिरित्यर्थः । [1]* नचेत्यादि—आद्यक्षणावच्छिन्नघटत्वावस्थाया उत्पत्तिपदार्थत्वे घटत्वावस्थायामवस्थान्तरविरहेण घटत्वावस्थोत्पद्यते इति व्यवहारानुपपत्तिः । तत्राप्यवस्थान्तराङ्गीकारेऽनवस्थाप्रसङ्गः । सामग्र्यामनवस्थाया अदोषत्वेऽपि अत्रानवस्था दोष एवेति भावः । [2]*प्रागसिद्धस्वरूपेति—स्वपूर्वक्षणावृत्तित्वस्ववृत्तित्वैतदुभयसम्बन्धेन क्षण-विशिष्टत्वं तत्वम् । एतदुत्पत्तिशब्दलक्ष्यार्थः । लकारसमभिव्याहारे कालसम्बन्धस्य तेनैव लाभात्स्ववृत्तित्वं परित्याज्यं; एतत्तात्पर्येणैव स्वरूपेत्युक्तिः । ननु आद्यक्षणसम्बन्धे अवस्थायां च खण्डश उत्पत्ति-पदस्य शक्तिः स्वीक्रियतां; यत्रावस्थारूपार्थस्य बाधः तत्राद्यक्षण-सम्बन्धरूपस्य खण्डशक्त्युपस्थापितस्यापरार्थस्य प्रतीतिसम्भवेनोपचारा-ङ्गीकारोऽनुचित इति चेन; न; खण्डशश्शक्तिस्थले एकार्थमात्रबोधो लक्षणया निर्वाह्यः न तु शक्त्येति नव्यनैयायिकैस्सिद्धान्तितत्वात् । यद्यप्याद्यक्षणसम्बन्धप्रागसिद्धस्वरूपलाभयोरुत्पत्तिशब्दलक्ष्यार्थत्वाविशे-षेऽप्याद्यक्षणसम्बन्धस्य शक्यतया प्रथममुपस्थितिर्वर्तते; तथाऽपि समभिव्याहृतपदार्थतावच्छेदकघटिताद्यत्वविशिष्टक्षणसम्बन्धस्यैव शक्य-तयोपस्थितिः न तु समभिव्याहृतपदार्थघटिताद्यत्वस्येति बोध्यम् । 'आत्मकृतेः' परिणामात्' इत्यादिसूत्रैरवस्थारूपपरिणामनिबन्धनमेव

## सर्वार्थसिद्धिः

**उपचाराद्भवतु वा[1]*मा वा ; तदा कार्योत्पत्त्यर्थः कारकव्यापार**

## आनन्ददायिनी

भवतु वा मा वेति । उत्पत्तिशब्दस्योपचारोऽस्तु वा मा वा; प्रागसिद्धस्वरूपत्वादुत्पत्तिः तदर्थं कारकव्यापार इति न वैयर्थ्यमित्यर्थः ।

## भावप्रकाशः

ब्रह्मणः कार्यत्वं कारणत्वं च स्थापयता भगवता व्यासेन आरम्भणाधिकरणेऽसत्कार्यवादनिरसनपूर्वकं सत्कार्यवादप्रतिष्ठापनेन अवस्थारूपः परिणाम एवोत्पत्तिशब्दमुख्यार्थः । असत्कार्यवादिसम्मता असत उत्पत्तिः प्रागसिद्धस्वरूपलाभापरनामधेया या साऽमुख्य एवार्थ इति सूचितम् । प्रागसिद्धस्वरूपलभेत्याचार्यसूक्त्या असत्कार्यवादिनैयायिकमते प्रागसिद्धस्वरूपलाभस्य उत्पत्तिशब्दमुख्यार्थत्वं युक्तं न त्वाद्यक्षणसम्बन्धस्य असदुत्पत्तेः शब्दत एव प्रतीतिसम्भवात् लाघवाच्च - स्वप्रागभावाधिकरणकालावृत्तित्वस्ववृत्तित्वैतदुभयसम्बन्धेन क्षणाविशिष्टत्वापेक्षया निरुक्ताद्यक्षणसम्बन्धस्य गुरुत्वस्य स्फुटत्वादिति व्यञ्जितम् - ननु आरम्भणाधिकरणे 'तदुत्पत्तिविनाशादीनां कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव' इत्युपक्रम्य 'अस्माकं त्ववस्थानां पृथक्प्रातिपत्तिकार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यं' इति भाष्यं । 'पृथक्प्रतिपत्तिकार्यानर्हधर्माः पृथगुत्पत्तिनिरपेक्षाः । अत एव ह्युत्पत्तेरुत्पत्त्यादिनैरपेक्ष्यं । अवस्थैव वस्तुन उत्पत्तिः न त्ववस्थाया उत्पत्तिर्नामास्तीति स्वपक्षवैषम्यद्योतनार्थस्तुशब्दः' इति श्रुतप्रकाशिका । अतः प्रागसिद्धस्वरूपलाभतात्पर्येण घटत्वावस्थाया उत्पत्तिव्यवहारनिर्वहणमनुचितमित्यत आह---[1]*मा वेति । एतत्पक्षे च द्रव्यस्यो-

## सर्वार्थसिद्धिः

इति सिद्ध्यति। स एव यदोत्पत्तिर्विवक्षिता तदा कार्यार्थः कारकव्यापार इत्येव वक्तव्यं। अन्यथा तूपचारः।

क्रियैव कारकाणां स्यात् प्रतिसम्बन्धिनीत्यस[illegible]।
प्राक्सत्त्वासत्त्वसंक्षोभः तस्यामपि हि दुस्तरः॥

## आनन्ददायिनी

स एवेति—कारकव्यापार एवोत्पत्तिरित्यर्थः। ननु तर्हि कारकव्यापारस्यैवोत्पत्ति(शब्दार्थ)त्वे कार्यस्यैवोत्पत्त्यर्थं कारकव्यापार इति लोकव्यवहारोऽनुपपन्नः षष्ठ्यर्थाभावादित्यत आह—तदा कार्यार्थ इति। अन्यथेति—कार्यस्योत्पत्त्यर्थे व्यवहार इत्यर्थः। ननु तर्हि कार्यमुत्पन्नमित्यत्र पौनरुक्त्यप्रसङ्गः? कृतिविषयत्वप्रागसत्त्वरूपलाभाकारेण शब्दबोध्याकारभेदान्न प्रसङ्गः। नन्वभिव्यक्तिवादिनोऽपि क्रियार्थत्वेन कारकव्यापारसार्थक्यमित्याशङ्क्य तद्दूषयति—क्रियैवेति। प्रागिति। तस्यां—क्रियायां। ननु क्रियाया अपि प्राक्सत्त्वमस्तु क्रियावद्भिः कारकैः पटादेः कार्यस्य

## भावप्रकाशः

त्पत्तिरेव स्वपरनिर्वाहिका घटत्वावस्थारूपोत्पत्तेरुत्पन्नत्वव्यवहारं निर्वहति। तदुक्तं शतदूषण्यां—'ये चान्ये पश्यतोहराणां प्रलापाः—

न चेदुत्पत्तिरुत्पत्तेः नित्यत्वमनवस्थितिः।
उत्पत्तावपि; अतः कार्यं कारणं च निरूपितम्॥

इत्येवमादयः; तेऽप्यनयैव दिशा प्रशमनीयाः' इति।

सिद्धाऽनवस्थितिस्सामग्र्यात्मकोत्पत्तिसंग्रहे।
अन्यथा स्वपरत्राणान्न काचिदनवस्थितिः॥

इतीति।

## सर्वार्थसिद्धिः

क्रियावद्भिः पटादेश्च कारकैस्तादृशोऽन्वयः ।
प्रधाने भागनिष्पत्त्या भागैरैक्याच्च भागिनः ॥
प्राक्सत्त्वं सर्वभावानां मिथश्चैक्यमिति त्वसत् ।
भिन्नांशपूर्वसत्त्वे हि नाभिन्नाद्भेदसम्भवः ॥
भिन्नाभिन्नाद्यभिव्यक्तिर्भेदानां प्राक्तनी भवेत् ।
एकस्य प्रागसन् भेदो यदि स्यादस्मदिष्टवत् ॥
प्राक्सतोऽस्याप्यवस्था चेत्तथाऽप्यस्मदभीष्टवत् ।

इति सांख्योक्तसत्कार्यवादनिरासः

---

## आनन्ददायिनी

प्रधाने—उपादाने भोग्यांशस्य निष्पत्त्या तादृगन्वयस्साध्यसाधनभावान्वयोस्तु ; तथा च न कारकव्यापारवैयर्थ्यं भागिनोंऽशिन उपादानस्य भागैरंशैरैक्यात्सर्वभावानां प्राक्सत्त्वमन्योन्यमैक्यं चेति शङ्कते—क्रियावद्भिरिति । भेदः प्राक्सन्न वेति विकल्पमभिप्रेत्य आद्यं दूषयति—भिन्नांशेति । नाभिन्नादिति । भेदस्यापि पूर्वसिद्धत्वान्न कारकैः (कव्यापारसाध्यत्व) संभव इत्यर्थः । नन्वेकमेव वस्तु भिन्नं चाभिन्नं च । तत्र कारकैर्भेदस्याभिव्यक्तिः करिष्यत इति शङ्कते—भिन्नाभिन्नादीति । तस्मादभिव्यक्तेरेव प्राक्तन्या न साध्यत्वमिति साऽपि न साध्येति दूषयति—प्राक्तनीति । द्वितीयं दूषयति—एकस्येति । अस्मदिष्टवत् । अस्मदिष्टमस्मिन् वर्तत इत्यर्थः । इष्टयदिति पाठान्तरं । इष्टं करोतीत्यर्थः ॥ २४ ॥

इति सांख्योक्तसत्कार्यवादनिरासः

---

## सर्वार्थसिद्धिः

अर्धवैनाशिकनिरासाय सत्कार्यवादे साधिते तुल्यन्यायतया सर्वनित्यत्ववादेन समुत्थितस्सांख्यो निरस्तः । अथ [1]*पक्ष

## आनन्ददायिनी

सांख्यनिरसनानन्तरमेव वैनाशिकनिरसने संगतिमाह—अर्धवैनाशिकेति । अर्धवैनाशिको—वैशेषिकः ।

## भावप्रकाशः

*पक्षत्रयप्रतिपक्षमिति—यद्यपि तत्वसंग्रहे त्रैकाल्यपरीक्षायां शान्तरक्षितेन—

हेम्नोऽनुगमसाम्येन स्थिरत्वं मन्यते तदा ।
अवस्थाभेदवान् भावः कैश्चिद्बौद्धैरपीष्यते ॥

इत्युक्तं । तत्र पञ्चिकायां 'भावान्यथावादी भदन्तधर्मत्रातः लक्षणान्यथावादी भदन्तघोषकः अवस्थान्यथावादी भदन्तवसुमित्रः पूर्वापरमपेक्ष्य अन्यथाऽन्यथिको बुद्धदेवः' इति चत्वारोऽस्तिवादाः भावलक्षणावस्थाऽन्यथान्यथिकसंज्ञिता विशदीकृताः । तत्र योगभाष्ये लक्षणपरिणामविचारावसरे यदुदाहरणं तदेवात्राऽपि द्वितीयपक्षे उपन्यस्तं । अवस्थापरिणामविचारावसरे योगभाष्योक्तोदाहरणद्वये एकैकमुदाहरणमालम्ब्य तृतीयचतुर्थपक्षयोः पृथग्भावः । अतो नित्यात्मतत्ववादिनो वात्सीपुत्रा इव एतेऽपि स्थिरद्रव्यवादिनो वैभाषिकैकदेशिनः सांख्यच्छायानुसारिणः । तेच इत्थं द्रव्यस्य स्थिरत्वं साधयन्ति—

अतीताजातयोर्ज्ञानमन्यथाऽविषयं भवेत् ।
द्वयाश्रितं च विज्ञानं तायिना कथितं कथम् ॥ १७८८ ॥
कर्मातीतं च निस्तत्वं कथं फलदमिष्यते ।
अतीतानागते ज्ञानं विभक्तं योगिनां च किम् ॥

## भावप्रकाशः

न द्रव्यापोहविषया अतीतानागतास्ततः ।

इति (तत्वसंग्रहे) अत्र पञ्चिका—'उक्तं हि भगवता अतीतं चेद्भिक्षवो रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीतरूपेऽनपेक्षोऽभविष्यत् । यस्मात्तर्ह्यतीतं रूपं तस्माच्छ्रुतवानार्यश्रावकोऽतीतरूपेऽनपेक्षो भवतीति विस्तरः । तथा यत्किञ्चिद्रूपमतीतमनागतादि तत्सर्वमभिसंक्षिप्य रूपस्कन्ध इति सख्यां गच्छतीत्यादि । किञ्च द्वयं प्रतीत्य विज्ञानमुत्पद्यते इति भगवतोक्तं । कतमद्द्वयम्? चक्षूरूपाणि यावन्मनोधर्माः इति' इति । किञ्च आसीन्मान्धातो ब्रह्मदत्तो भविष्यति शङ्खश्चक्रवर्ती मैत्रेयस्तथागत इत्यादि' इति च । अत्रैव पूर्वं अस्माभिः उदाहृतं (२९) 'कामेऽष्टद्रव्यकोऽणुशब्दः, इति (न्या-वा-ता-टीकास्थं) बुद्धवाक्यमप्येतत्पक्षे द्रव्याङ्गीकारेण स्वरसं । क्षणिकत्वोक्तिस्तु धर्माणामागमापायितया तेषु क्षणिकता सम्भवेन तन्निबन्धना स्यात् । अत एव स्वलक्षणाभिधेयस्थिरद्रव्यविषयनिर्विकल्पकं प्रमा; क्षणिकधर्मावगाहिविकल्पोऽप्रमा इत्यपि सम्भाव्यते। एवं च निरन्वयविनाशवादितया वैनाशिकशब्दवाच्यबौद्धमतसामान्यस्य सांख्यादिप्रतिपक्षता न युक्ता । तथाऽपि तत्वसंग्रहे—

किञ्चातीतादयो भावाः क्षणिकाः स्युर्न वा यदि ।
आद्याः पुनस्तयोः प्राप्ता सैवापरिमिताध्वता ॥ १८३१ ॥
यःक्षणो जायते तत्र वर्तमानो भवत्यसौ ।
उत्पद्य यो विनष्टश्च सोऽतीतो भाव्यनागतः ॥
अथाऽप्यक्षणिकास्ते स्युः कृतान्तस्ते विरुध्यते ।

इत्यादिना दूषणमभिधाय—

रूपादित्वमतीतादेर्भूतानां भाविनीं तथा ।
अध्यारोप्य दशामस्य कथ्यते न तु भावतः ॥ १८४६ ॥

## सर्वार्थसिद्धिः

त्रयप्रतिपक्षं [1]* वैनाशिकमतं

## आनन्ददायिनी

वैनाशिको—बौद्धः । विनाशं व्यवहरतीति ठक् ।

## भावप्रकाशः

इत्यादिना स्वपक्षदूषणोद्धारः कृतः । आचार्यैश्च नित्यात्मतत्वाङ्गीकर्तृवैभाषिकैकदेशिमते परमतभङ्गे क्षणिकतत्वसाधकहेतोर्विरोध उद्भावित इति नैतत्पक्षस्साधीयानित्याचार्याणामाशयः । वैनाशिकत्वं च नैतेषां । परमाण्वादीनां निरन्वयविनाशानङ्गीकारात्खलु काणादानामाक्षपादानामर्धवैनाशिकता । वस्तुसामान्यस्य निरन्वयविनाशमङ्गीकुर्वतामेव वैनाशिकता न तु स्थिरद्रव्यमभ्युपगच्छतामिति । एतदेवाभिप्रेत्य अत्र बौद्धमतमित्यनुक्त्वा [1]* वैनाशिकमतमित्युक्तिः । वैनाशिकशब्देन—

तत्र ये कृतका भावाः ते सर्वे क्षणभाङ्गिनः ।
विनाशं प्रति सर्वेषामनपेक्षतया स्थितेः ॥ ३५३ ॥

इत्युपक्रम्य तत्वसंग्रहे क्षणिकत्वसाधनावसरे उक्ता युक्तिस्सूच्यते । तत्रैव—

अथवाऽस्थान एवायमायासः क्रियते यतः ।
क्षणभङ्गप्रसिद्ध्यैव प्रकृत्यादि निराकृतम् ॥
उक्तस्य वक्ष्यमाणस्य जात्यादेश्चाविशेषतः ।
निषेधाय ततः स्पष्टं क्षणभङ्गः प्रसाध्यते ॥ ३५१ ॥

इति वैनाशिकमतस्य पक्षत्रयप्रतिपक्षताऽपि स्फुटमभिहिता इति ।

न खलु प्रत्यभिज्ञानं प्रत्यक्षमुपपद्यते ।
वस्तुरूपमनिर्देश्यं साभिलाषं (पं)च तद्यतः ॥ ४४६ ॥
भ्रान्तं च प्रत्यभिज्ञानं प्रत्येकं तद्विलक्षणम् ।
अभेदाध्यवसायेन भिन्नरूपे प्रवृत्तितः ॥

## तत्वमुक्ताकलापः

**वस्तुस्थैर्यं**

### सर्वार्थसिद्धिः

**निरस्यति—[1]*वस्तुस्थैर्यमिति । [2]*वस्तुशब्देन सत्त्वानुमानसू-चनम् । यथाऽऽहुः—**

### आनन्ददायिनी

वस्तुशब्देनेति । तस्य सत्त्व(वस्तु)वाचित्वादिति भावः ।

### भावप्रकाशः

पूर्वं संविदिताकारगोचरं चेदिदं भवेत् ।
जायेत पूर्वमेवेदं तादर्थ्यात्पूर्वबुद्धिवत् ॥
नचैवं तेन नैवेदं तदर्थग्राहकं मतम् ।
अभेदाध्यवसायेन भिन्नरूपेऽपि वृत्तितः ।
मायागोलकविज्ञानमिव भ्रान्तमिदं स्थितम् ॥ ४५० ॥
निष्पादितक्रिये चार्थे प्रवृत्तेः स्मरणादिवत् ।
न प्रमाणमिदं युक्तं करणार्थविहानितः ॥ ४५१ ॥

इति तत्वसंग्रहे शान्तरक्षितेन प्रत्यभिज्ञायाः भ्रान्तत्वसाधनसरणिरयुक्ते-त्यभिप्रेत्याह—[1]* वस्तुस्थैर्यमितीत्यादि । [2]* वस्तुशब्देनेति—न्याय-बिन्दौ 'अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः' इत्युदाहृतधर्मकीर्ति-वचनादिति भावः । सिद्धान्ते अनुमानस्य वस्तुधर्मग्राहकत्वाङ्गीकारात् स्थिरत्वं वस्तुधर्मः अनुमानेन साधयितुं शक्यते । बौद्धमते उदाहृत-धर्मकीर्तिवचनेन अनुमानस्यापरमार्थसामान्यग्राहकत्वस्थापनेन—

कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् ।
विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः ॥

## भावप्रकाशः

इत्यत्रावस्तुनिर्भासस्यासंवादादिहेतुत्वाभिधानेन च अनुमानेन वस्तुधर्मस्य क्षणिकत्वस्य साधनोद्यमोऽनुचित इत्यपि वस्तुस्थैर्यमित्यनेन सूच्यते । यच्च रत्नकीर्तिना प्रथमक्षणभङ्गसिद्धौ–'विकल्पेन यदुपनीयते तत्सर्वमवस्तु । ततश्च वस्त्वात्मके क्षणिकत्वे साध्ये अवस्तूपस्थापयन्ननुमानविकल्पो विरुद्धः' इत्याक्षिप्य 'अवस्तुनो वस्तुनो वा स्वाकारस्य ग्राह्यत्वेऽपि अध्यवसेयवस्त्वपेक्षयैव सर्वत्र प्रामाण्यप्रतिपादनात् वस्तुस्वभावस्यैव क्षणिकत्वस्य सिद्धिरिति क्व विरोधः ? यच्च गृह्यते यच्चाध्यवसीयते ते द्वे अपि अन्यानिवृत्तौ न वस्तुनी स्वलक्षणावगाहित्वे अभिलापसंसर्गानुपपत्तेरिति चेत् ; न ; अध्यवसायस्वरूपापरिज्ञानात् । अगृहितेऽपि वस्तुनि मानस्यादिप्रवृत्तिकारकत्वं विकल्पस्याध्यवसायित्वं । अप्रतिभासेऽपि प्रवृत्तिविषयीकृतत्वमध्यवसेयत्वं । एतच्चाध्यवसेयत्वं स्वलक्षणस्यैव युज्यते नान्यस्य अर्थक्रियार्थित्वादार्थिप्रवृत्तेः । एवंचाध्यवसाये स्वलक्षणस्यास्फुरणमेव । न च तस्यास्फुरणेऽपि सर्वत्राविशेषेण प्रवृत्त्याक्षेपप्रसङ्गः । प्रतिनियतसामग्रीप्रसूतात् प्रतिनियतस्वाकारात् प्रतिनियतशक्तियोगात् प्रतिनियत एवातद्रूपपरावृत्ते अप्रतीतेऽपि प्रवृत्तिसामर्थ्यदर्शनात् । यथा सर्वस्यासत्त्वेऽपि बीजादङ्कुरस्यैवोत्पत्तिः दृष्टस्य नियतहेतुफलभावस्य प्रतिक्षेप्तुमशक्यत्वात् । परं बाह्येनार्थेन सति प्रतिबन्धे प्रामाण्यमन्यथा त्वप्रामाण्यमिति विशेषः 'इति समाधानमुक्तं ; तत्रेदं विचारणीयम्—प्रामाण्यं कीदृशं ? इति अभिमतार्थक्रियासमर्थार्थप्रापणशक्तिमत्त्वं प्रामाण्यं 'सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिः' इति न्यायबिन्दूपक्रमवाक्यव्याख्याने व्यक्तमेतत् । एवं तत्वसंग्रहादौ ; इति चेत् ; अस्य प्रत्यक्षपश्चाद्भाविविकल्पसाधारणस्य प्रत्यभिज्ञायामपि सत्त्वेन रत्नकीर्तिना तदप्रामाण्योक्तिरनुचिता । यथोक्तं तेनैव द्वितीयायां क्षणभङ्गसिद्धौ—'साक्षात्पारम्पर्येण वस्तुसामर्थ्यभाविनी हि वस्तु-

## भावप्रकाशः

प्रतीतिः! यथा प्रत्यक्षमनुमानं प्रत्यक्षपृष्ठभावी च विकल्पः। अवस्तुनस्तु सामर्थ्याभावाद्विकल्पमात्रमेव प्रतीतिः। वस्तुनो हि वस्तुबल भाविनी प्रतीतिः! यथा साक्षात्प्रत्यक्षं परम्परया तत्पृष्ठभावी विकल्पोऽनुमानं च' इति। तत्वसंग्रहव्याख्यायां पञ्जिकायामपि—(१३०६ श्लो) 'प्रत्यक्षं कल्पनापोढमपि सजातीयविजातीयव्यावृत्तवस्त्वाकारानुगमाच्च तत्रैव वस्तुनि विधिप्रतिषेधावाविर्भावयति अनलोऽयं नासौ कुसुमस्तवकादिरिति। तयोश्च विकल्पयोः पारम्पर्येण वस्तुनि प्रतिबन्धादविसंवादित्वेऽपि न प्रामाण्यमिष्टं। दृश्यविकल्प्ययोरेकत्वाध्यवसायेन प्रवृत्तेरनधिगतवस्तुरूपाधिगमाभावात्' इति। नन्वनधिगतार्थगन्तृत्वं तत्। तदुक्तं तत्वसंग्रहे—

विज्ञातार्थाधिगन्तृत्वात् स्मार्तज्ञनसमं परम्। (१२९८)

इति। तत्र पञ्जिका—'यत् गृहीतग्राहि ज्ञानं न तत्प्रमाणं यथा स्मृतिः गृहीतग्राही च प्रत्यक्षपृष्ठभावी विकल्प इति व्यापकविरुद्धोपलब्धिरिति, इति चेत्; न; बौद्धमते स्वलक्षणस्यैव प्रत्यक्षविषयत्वेन तस्य विकल्पेऽभानेन तथोक्त्यसंभवात्। अध्यवसेयं परिभाषामात्रसिद्धं कंचन विषयं प्रकल्प्य विकल्पस्य यथाकथञ्चिदधिगतार्थगन्तृत्वाङ्गीकारेऽपि 'प्रत्यक्षेणैव शब्दादौ धर्मिणि गृहीतत्वादानित्यतादेः तत्रानुमानविकल्पः प्रवर्तमानः प्रमाणं न प्राप्नोति' इति पञ्जिकोक्त एव दोषः। 'न हि शब्दे धर्मिणि गृहीतेऽपि तदव्यतिरेकि क्षणिकत्वमगृहीतमिति व्यवस्थाप्यते' (४५८) इति पञ्जिकायामुक्तेः। 'प्रत्यक्षमुत्पन्नमपि यत्रांशेऽवसायं जनयति स एवांऽशो व्यवहारयोग्यो गृहीत इत्याभिधीयते। यत्र तु भ्रान्तिनिमित्तवशात्समारोपप्रवृत्तेर्न व्यवसायं जनयितुमीशं स व्यवहारायोग्यत्वात् गृहीतोऽप्यगृहीतप्रख्य इति तत्रानुमानस्य प्रवृत्तसमारोपव्यवच्छेदाय प्रवर्तमानस्य प्रामाण्यं भवति न पुनः प्रत्यक्षानन्तरभाविविकल्पस्य।

## भावप्रकाशः

तस्य प्रवृत्तसमारोपव्यवच्छेदाभावात् । किं पुनः कारणं सर्वतो भिन्ने वस्तुरूपे अनुभवोत्पत्तावपि तथैव न स्मार्तो निश्चयो भवति? उच्यते; कारणान्तरापेक्षत्वात् । न ह्यनुभूत इत्येव निश्चयो भवति! तस्याभ्यासार्थित्वपाटवादिकारणान्तरापेक्षत्वात् । यथा जनकाध्यापकाविशेषेऽपि पितरमायान्तं दृष्ट्वा पिता म आगच्छति नोपाध्याय इति निश्चिनोति ।' इति पञ्चिकोक्तसमाधानादरे च अनुवृत्तेरिदन्तांशस्य च पूर्वमगृहीतस्य विकल्पे ग्रहणेन तदंशमादायानधिगतार्थगन्तृत्वस्य विकल्पेऽपि संभवात् बुद्धिसरे तत्त्वेदन्त्वे इति श्लोकविवरणे च प्रत्यभिज्ञाया अपि समारोपव्यच्छेदव्यवस्थापनपूर्वकं 'सन्दिग्धवस्तुनिर्णयनिबन्धनमेव प्रत्यभिज्ञाप्रामाण्यं' इति पञ्चिकाक्षिप्त (४५८) पक्षस्सिद्धान्तयिष्यते । अतः—

तत्वान्यत्वोभयात्मानस्सन्ति जात्यादयो न च ।
यद्विकल्पकविज्ञानं प्रत्यक्षत्वं प्रयास्यति ॥ (१३०४)
वस्तुतस्तु निरालम्बो विकल्पस्संप्रवर्तते ।
तस्यास्ति विषयो नैव यो विभिद्येत कश्चन ॥ (१३०९)

इति ।

अनुमानं सविषयं वर्ण्यते न त्वगोचरम् । (१३३९)

इति च परमताभिप्रायेण। तत्वसंग्रहे 'न हि बौद्धानामिव परेषां निर्विषयं परमार्थतोऽनुमानम्' इति पञ्चिकायां; भ्रान्तं ह्यनुमानं स्वप्रतिभासेऽनर्थेऽध्यवसायेन प्रवृत्तत्वात् । प्रत्यक्षं तु ग्राह्ये न विपर्यस्तं' इति न्याबिन्दुटीकायां च वस्त्वग्राहकत्वेन प्रत्यक्षविकल्पतुल्यतयोक्तस्यानुमानविकल्पस्यापि प्रामाण्यं । तेन वस्तुधर्मक्षणिकत्वसाधनं च न संभवति । ग्राह्याध्यवसेयभेदेन विषयद्वैविध्यं तु शशविषाणायते इति बुद्धिसरे विवेचयिष्यते इति भावः । न्यायबिन्दौ यत्सत् तत्सर्वमनित्यं यथा घटादिरित्यत्र धर्मकीर्तिवाक्ये अनित्यत्वं क्षणिकत्व-

## सर्वार्थसिद्धिः

[1]*यत्सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावाः'

## भावप्रकाशः

मिति न स्फुटमिति प्रकृतोपयोगि ज्ञानश्रीवाक्यमादत्ते [1]*यत्सत्तत् क्षणिकमित्यादि—

यत्सत्तत्क्षाणिकं यथा जलधरः सन्तश्च भावा अमी
सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा ।
नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत्
द्वेधाऽपि क्षणभङ्गसन्ततिरतः साध्ये च विश्राम्यति ॥

इति पूर्णश्लोकः ।

आक्षिप्तव्यतिरेका या व्याप्तिरन्वयरूपिणी ।
साधर्म्यवति दृष्टान्ते सत्त्वहेतोरिहोदिता ॥

घटापेक्षया जलधरे क्षणिकत्वं सुग्रहमित्यभिप्रेत्य दृष्टान्ततोक्तिः । यदि तत्राऽपि विप्रतिपत्तिः तदा प्रसङ्गतद्विपर्ययाभ्यां दृष्टान्ते क्षणिकत्वं साधनीयम्, तत्प्रकारः क्षणभङ्गसिद्धावुक्तः अत्र प्रयोगः—यत् यदा यज्जननव्यवहारयोग्यं तत् तदा तज्जनयत्येव; यथा अन्त्या कारणसामग्री स्वकार्यं । अतीतानागतक्षणभाविकार्यजननव्यवहारयोग्यश्चायं घटो वर्तमानक्षणभाविकार्यकरणकाले सकलक्रियातिक्रमकालेऽपीति स्वभावहेतुप्रसङ्गः । यत् यदा यन्न करोति तत्तदा तत्र समर्थव्यवहारयोग्यं; यथा शाल्यङ्कुरमकुर्वन् कोद्रवः शाल्यङ्कुरे । न करोति चैष घटो वर्तमानक्षणभाविकार्यकरणकाले सकलक्रियातिक्रमकाले चातीतानागतक्षणभाविकार्यमिति व्यापकानुपलब्धिर्भिनत्ति समर्थक्षणादसमर्थक्षणम् । व्यापकानुपलब्धिः प्रसङ्गविपर्ययः इति । एवं नानाकालस्यैकस्य वस्तुनो वस्तुतोऽसंभवेऽप्यतद्रूपपरावृत्तयोरेव साध्यसाधनयोः प्रत्यक्षेण व्याप्तिग्रहणात्। द्विविधो हि प्रत्यक्षस्य विषयो ग्राह्योऽध्यवसेयश्च । सकलातद्रूपपरावृत्तं

## तत्वमुक्ताकलापः

**विरुद्धानुपहितविषया साधयेत् प्रत्यभिज्ञा**

## सर्वार्थसिद्धिः

**इति [1]* यदक्षणिकं तदवस्तु यथा खसूनं। अक्षणिकत्वे चामीषां तद्वदसत्त्वप्रसङ्ग इति भावः। विरुद्धानुपहितविषयेति—विरुद्ध-धर्मासंसृष्टविषयेत्यर्थः। दीपस्रोतःप्रभृतिषु अनन्यथासिद्धभेदक-**

## आनन्ददायिनी

अवस्तु—असदित्यर्थः। विरुद्धेति—कथञ्चिदपि परस्परसामानाधि-करण्यानर्हधर्मा (संसृष्ट) नाश्रयविषयेत्यर्थः। भेदकं—सामग्रीभेदादि।

## भावप्रकाशः

वस्तुमात्रं साक्षादस्फुरणात् प्रत्यक्षस्य ग्राह्यो विषयो मा भूत्; तदेक-देशग्रहणे तु तन्मात्रयोर्व्याप्तिनिश्चायकविकल्पजननादध्यवसेयो विषयो भवत्येव क्षणग्रहणे सन्ताननिश्चयवत् रूपमात्रग्रहणे घटनिश्चयवच्च; अन्यथा सर्वानुमानोच्छेदप्रसङ्गात् इत्यपि॥ यस्य क्रमाक्रमिकार्यविषयत्वं नास्ति न तच्छक्तं यथा शशविषाणं। नास्ति च नित्याभिमतस्य भावस्य क्रमाक्रमिकार्यविषयत्वामिति व्यापकानुपलम्भेन विपर्यये बाधक-प्रमाणेन व्याप्तिसाधनं सूचयन्—

व्यतिरेकात्मिकां व्याप्तिमाक्षिप्तान्वयरूपिणीम्।<br>
वैधर्म्यवति दृष्टान्ते सत्त्वहेतोः प्रभाषते॥

[1]*यदक्षणिकमित्यादिना व्यापकानुपलम्भः अक्षणिकस्यासत्त्वं सत्त्वस्य ततो व्यतिरेकं क्षणिकत्वेन व्याप्तिं च साधयत्येकव्यापारात्मनेति स्थापितं

## सर्वार्थसिद्धिः

**बलाद्बाधः। विप्रतिपन्ना एकत्वधीः प्रमा[1] *विरुद्धधर्मासंसृष्टविषयत्वात् [2]* सम्मतैकत्वधीवत्। न हि स्वलक्षणानां प्रत्येकमेकत्वं नास्ति! तथा सति [3]*एकानेकसर्वविकल्पलोपेन माध्यमिकविजयप्रसङ्गात्।**

## आनन्ददायिनी

तथा सतीति—स्वलक्षणं किञ्चिदपि एकं वा भिन्नं वा? भिन्नमपि किञ्चिदेकं वा भिन्नं वा? इति विकल्पेन स्वलक्षणसर्ववस्तुविलोपप्रसङ्गेन माध्यमिकमतप्रसङ्ग इत्यर्थः। सर्वस्याप्येवं विकल्पे कुत्रापि विश्रमाभावात् स्वलक्षणं विद्यमानस्वरूपमेव यादवमुसलनीत्या न भवेदिति भावः।

## भावप्रकाशः

द्वितियक्षणभङ्गसिद्धौ रत्नकीर्तिनेति तत्रैव द्रष्टव्यम्। [1]*विरुद्धेत्यादि—न्यायासिद्धाञ्जने तु अबाधितबुद्धित्वादिति हेतुरुक्तः। [2]*सम्मतैकत्वधीव दिति—यद्यपि अभिज्ञाप्रत्यभिज्ञाविषययोरेकत्वयोर्भेदोऽद्रव्यसरे वक्ष्यते। तथाऽप्येकत्वशब्देनोभयोरभिधानेनैकत्वविषयकत्वं धीद्वयस्याप्यक्षतम्। बौद्धमते तु—

> अतद्रूपपरावृत्तगजादिव्यतिरेकिणी।
> न संख्या भासते ज्ञाने दृश्येष्टा नैव सास्ति तत्॥

इति तत्वसंग्रहे (६३८) शान्तरक्षितेन एकत्वसंख्यायाः धार्मिरूपाया भानाङ्गीकारेण बाह्यार्थवादिवैभाषिकमते तज्ज्ञानस्य अनुमानप्रामाण्योपपादनदिशा प्रमात्वं संभवतीति भावः। [3]* एकानेकसर्वविकल्पलोपेन माध्यमिकविजयप्रसङ्गादिति। तदुक्तं वसुबन्धुना विंशतिकारिकाविज्ञप्तिमात्रतासिद्धौ—

> रूपाद्यायतनास्तित्वं तद्विनेयजनान् प्रति।
> अभिप्रायवशादुक्तमुपपादुकसत्त्ववत्॥

## भावप्रकाशः

न तदेकं नचानेकं विषयः परमाणुशः ।

इति । इदं च तत्त्वसंग्रहे शान्तरक्षितेन—

यदि ज्ञानातिरेकेण नास्ति भूतचतुष्टयम् ।
तत्किमेतन्नु विच्छिन्नं विस्पष्टमवभासते ॥? (१९३५)
तस्यैवं प्रतिभासेऽपि नास्तितोपगमे सति ।
चित्तस्यापि किमस्तित्वे प्रमाणं भवतां भवेत् ।?
भासमानः किमात्माऽयं बाह्योऽर्थः प्रतिभासते ॥?

इत्यारभ्य—

असन्निश्चययोग्योऽतः परमाणुर्विपश्चिताम् ।
एकानेकस्वभावेन शून्यत्वाद्वियदब्जवत् ॥ (१९९७)

इत्यन्तसंदर्भेण वैभाषिकसौत्रान्तिकमतयोर्दूषणेन दृढीकृतं । एवं च—

विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते ।
इयमेवात्मसंवित्तिरस्य याऽजडरूपता । (२०००)

इत्यादिना तत्वसंग्रहे वैभाषिकसौत्रान्तिकाभिमतं अर्थसंवेदनं प्रतिषिध्य योगाचाराभिमतात्मसंवेदनसाधनं तु न सम्यक्; माध्यमिकैः सर्वत्र निस्स्वभावत्वलक्षणशून्यत्वस्य स्थापनेन जडस्वभावतद्व्यावृत्तस्वभावयोश्शशविषाणसोदरत्वात् । किञ्च—

विज्ञप्तिमात्रतासिद्धिर्धीमाद्भिर्विमलीकृता ।
अस्माभिस्तद्दिशा यात परमार्थविनिश्चये ॥ (२०८४)

इति तत्वसंग्रहे उक्तं । तत्र धीमन्तो विंशतिकारिकाविज्ञप्तिमात्रतासिद्धिकृतः । तैश्च त्रिंशतिकाविज्ञप्तिकारिकासु—

त्रिविधस्य स्वभावस्य त्रिविधां निस्स्वभावताम् ।
संधाय सर्वधर्माणां देशिता निस्स्वभावता ॥

## भावप्रकाशः

इति सर्वधर्माणां परिकल्पितपरतन्त्रपरिनिष्पन्नस्वभावत्रयशून्यत्वमुक्तम्। एवं आर्यलङ्कावतारसूत्रेऽपि—

बुद्ध्या विवेच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः ॥ (१७५)
पञ्चधर्मा भवेत्तत्वं स्वभावा हि त्रयस्तथा ।
एतद्विभावयेद्योगी तथतां नातिवर्तते ॥ (१९६)
बुद्ध्या विवेच्यमानं तु न तन्त्रं नापि कल्पितम् ।
निष्पन्नो नास्ति वै भावः ! कथं बुद्ध्या विकल्प्यते ? ॥(१९८)
न ह्यत्र काचिद्विज्ञप्तिः मरीचीनां यथा नभे ।
एवं धर्मान् विजानन्तो न किञ्चित्प्रतिजानते ॥ (१५५)
विज्ञप्तिर्नाममात्रेयं लक्षणेन न विद्यते ।
स्कन्धाः केशोण्डूकाकाराः यत्र चासौ विकल्प्यते ।
चित्तं केशोण्डूकं माया स्वप्नगन्धर्वमेव च ॥
अलातं मृगतृष्णा च असन्तः ख्यान्ति वै नृणाम् ।

इत्यादि । एवं च—

विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते ।

इत्यत्र विज्ञानस्य परिनिष्पन्नस्वभावाङ्गीकारोऽनुचितः ।

न सन्नुत्पद्यते भावो नाप्यसन् सदसन्न च ।
न स्वतो नापि परतो न द्वाभ्यां जायते कथम् ? ॥

इति माध्यमिकोक्तदूषणस्य बाह्यार्थविज्ञानयोस्समत्वात् । माध्यमिकवृत्तौ—

न स्वभावो न विज्ञप्तिः न वस्तु नच आलयः ।
बालैर्विकल्पिता ह्येते शवभूतैः कुतार्किकैः ॥

## भावप्रकाशः

इत्यार्यलङ्कावतारसूत्रमुदाहृत्य विज्ञानस्यापि निस्स्वभावत्वं व्यवस्थापितम्। एवं बोधिचर्यावतारे प्रज्ञापारमितायां—

ग्राह्यमुक्तं यदा चित्तं तदा सर्वे तथागताः ।
एवं च को गुणो लब्धः चित्तमात्रे प्रकल्पिते ? ॥

इत्यादौ । तद्विवरणपञ्जिकायां च—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥

इति प्राचीनकारिकाविवरणानन्तरं—

निस्स्वभावा अमी भावाः तत्वतस्स्वपरोदिताः ।
एकानेकस्वभावेन वियोगात् प्रतिबिम्बवत् ॥

इति । विज्ञानस्य क्षणिकत्वेऽपि एकानेकस्वभावो न संभवतीति 'तेन नैकं क्वचित्स्यात्' इत्येतद्विवरणे वक्ष्यते। एतेन—

ज्ञानाकारनिषेधस्तु स्ववेद्यत्वान्न शक्यते ।
विद्यते हि निरालम्बमारोपकमनेकधा ॥
ज्ञानस्यात्मगतः कश्चिन्नियतः प्रतिगोचरम् ।
अवश्याभ्युपगन्तव्यस्स्वभावश्च स एव च ॥

इति तत्वसंग्रहोक्तिर्वैभाषिकं प्रति दूषणं न तु माध्यमिकं प्रतीति सिद्धम् । आत्मसंवेदनेन परमार्थसतो विज्ञानस्याङ्गीकारे बाह्यार्थोऽपि परमार्थतोऽवश्यमङ्गीकरणीय इति बुद्धिसरे व्यवस्थापयिष्यते । क्षणिकत्वोपदेशश्च—

रूपाद्यायतनास्तित्वं तद्विनेयजनान् प्रति ।

इति वसुबन्धूक्तदिशाऽन्याभिप्रायेण । यथोक्तं बोधिचर्यावतारे शान्तदेवेन—

लोकावतरणार्थं तु भावा नाथेन देशिताः ।
तत्वतः क्षणिका नैते संवृत्या चेद्विरुध्यते ॥

## सर्वार्थसिद्धिः

[1] *रूपादिधीवदित्येव वोदाहर्तव्यम् । तदियं प्रमितिस्सती प्रत्यभिज्ञा पूर्वापरकालवर्तिविषयं साधयति । दीपनदीप्रवाहकृत्तपुनः प्ररूढकेशादिषु तु संप्रतिपन्नसामग्रीभेदादिबाधकबलात्

## आनन्ददायिनी

ननु तेषां धर्मधर्मिभावाभावात् कथमेकत्वबुद्धिर्दृष्टान्तः? इत्यत आह—रूपादिधीवदिति । तथा च एकत्वधीः—अभेदधीरित्यर्थः । प्रत्यभिज्ञाया ऐक्यसाधकत्वे अतिप्रसङ्गं परिहरति—नदीप्रवाहेति । सम्प्रतिपन्नेति । तथा च न तुल्यबलत्वमिति भावः । आद्यदीपज्वालोत्पत्तौ अग्निवर्त्यवयवसंयोगो हेतुत्वेन निश्चितः । तथाऽन्त्यवर्तिसंयोगनाशो ज्वालानाशहेतुत्वेनावगतः । ततः प्रतिक्षणं अग्निवर्त्यवयवसंयोगतन्नाशानां भिन्नभिन्नानामुत्पद्यमानानां प्रतिक्षणं ज्वालातन्नाशोत्पादकत्वात् तत्र प्रत्यभिज्ञा बाधिता न साधिकेत्यर्थः । एतेन विप्रतिपन्नैकत्वधीः न प्रमा प्रत्यभिज्ञात्वात् नद्यादिप्रत्यभिज्ञावदिति प्रतिरोधः । तथा पूर्वानुमाने

## भावप्रकाशः

इति । आर्यलङ्कावतारसूत्रे क्षणिकतापरिवर्ते तु अन्यार्थ इत्युक्तम् ।

> अनुत्पत्तिं च धर्माणां क्षणिकार्थं वदाम्यहम् ।
> उत्पत्त्यनन्तरं भङ्गं न वै देशेमि बालिशान् ॥

इतीति भावः । ननु वैभाषिकमते एकत्वस्य धर्म्यभेदेऽपि तत्प्रकारकज्ञानमेवैकत्वधीः न तु धर्मिमात्रावगाहि निर्विकल्पकं । तत्प्रकारकज्ञानं च अतद्रूपपरावृत्त्यवगाहि विकल्प एवेति न प्रमेति तत्सिद्धान्त इत्यतो धर्मिमात्रावगाहि निर्विकल्पकमेव दृष्टान्तयति—[1]* रूपादिधीवदिति ।

## सर्वार्थसिद्धिः

**तस्या न साधकत्वम्। ननु स इति धीः स्मृतिः अयमित्यनुभवः निरन्तरोत्पत्तेः ज्वालाक्षणेष्विव तयोः भेदाग्रहः इति; [1] * तन्न; समानाधिकरणबोधात्। यद्यपि सोऽयमिति व्यवहारे तादृशधीभेदेन वैयधिकरण्यशङ्का; तथाऽपि तमिमं पश्यामी-**

## आनन्ददायिनी

नदीप्रत्यभिज्ञायां व्यभिचारश्च परिहृतः। प्रतिपक्षे बाधितत्वमुपाधिरिति न तुल्यबलता। विरुद्धानुपहितविषयत्वाभावाद्व्यभिचाराभावश्चेति ध्येयम्। ननु प्रत्यभिज्ञाया ऐक्यसाधकत्वमनुपपन्नं ज्ञानद्वयात्मकत्वेन तस्याः पूर्वापरकालवर्तिवस्तुविषयकत्वस्य प्रत्येकमभावात्। न च तदुभयगोचरज्ञानद्वयादैक्यसिद्धिः; उभयत्रोभयगोचरत्वाभावे तदैक्यगोचरत्वासम्भवादिति शङ्कते—नन्विति। तर्हि बुद्धावैक्यगोचरबुद्धिः कथमित्यत्राह—निरन्तरोत्पत्तेरिति। ज्वालाक्षणेषु—ज्वालारूपवस्तुषु। परिहरति—तन्नेति। ऐक्यरूपसामानाधिकरण्यविषयव्यवहारहेतुबोधस्य

## भावप्रकाशः

'अनुस्मृतेश्च' इति सूत्रवेदान्तदीपोक्तादिशा समाधत्ते [1] * तन्नेति। ननु वैभाषिकैः प्रमात्वमर्थजत्वं तेनाविसंवादित्वं वा इति स्थापितं। इत्थं च प्रत्यभिज्ञायां तदंशेऽर्थजत्वविरहान्न प्रमात्वं; यथाऽऽह न्यायबिन्दुटीकायां धर्मोत्तराचार्यः—'कुतः पुनरेतद्विकल्पोऽर्थान्नोत्पद्यते अर्थसन्निधिनिरपेक्षत्वात्। बालोऽपि हि यावद्दृश्यमानं स्तनं स एवायमिति पूर्वदृष्टत्वेन न प्रत्यवमृशति तावन्नोपरतरुदितो मुखमर्पयति स्तने। पूर्वदृष्टापरदृष्टं चार्थमेकीकुर्वद्विज्ञानमसन्निहितविषयं

## सर्वार्थसिद्धिः

त्यादिषु उभयाकारविशिष्टस्यैकस्य दृशिकर्मत्वदृष्टेः बुद्ध्यैक्यं दुरपह्नवम् । अत एव ग्रहणस्मरणात्मकमिदं ज्ञानमिति वदन्तः प्रत्युक्ताः । [1]* ननु कथमिन्द्रियासंबद्धस्तदंश इदानीमिन्द्रियेण गृह्येत? [2]* मनोऽसंबद्धोऽनुभूतविषयः कथं मनसा? तदु-

## आनन्ददायिनी

बाधकाभावे सामानाधिकरण्यविषयत्वनियमादिति भावः । उभयाकारेति— पूर्वकालिकत्ववर्तमानकालिकत्वविशिष्टस्यैकस्यैवेत्यर्थः । उभयधर्मविशिष्ट-स्यैकस्य दृक्कर्मत्वं बुद्ध्यैक्यमापादय(माक्षिप)तीति भाव । अन्यथा दृशि-प्रयोगवत् अधीगर्थप्रयोगोऽपि स्यादित्यर्थः । केचित्तु दृशिकर्मत्वदृष्टेः— प्रत्यक्षमात्रकर्मत्वस्य द्वितीयाप्रयोगे दर्शनात् । अन्यथा तमित्यत्र अधीगर्थसम्बन्धेन षष्ठीप्रसङ्गादित्याहुः । ननु स्मृतिकर्मदृक्कर्मभेदा-ग्रहादुभयकर्मत्वविशिष्टे कर्मत्वव्यवहार इति चेत्; अत्र वदन्ति— बाधकाभावेन भेदाग्रहादैक्यव्यवहारस्य वक्तुमयुक्तत्वात् । न च सत्त्वा-नुमानं बाधकं; तस्यास्मात्प्रत्यक्षाद्दुर्बलतया बाधितत्वेन स्वरूपालाभा-दिति । अत एवेति—ज्ञानस्यैक्ये सिद्धे तस्य च प्रत्यक्षत्वे विरोधि-परोक्षत्वव्याप्यस्य स्मृतित्वस्य प्रत्यक्षे विरोधादिति भावः । वदन्तः— मीमांसकाः। ज्ञानद्वयवादी ग्रहणस्मरणात्मकज्ञानवादी च शङ्कते—नन्विति

## भावप्रकाशः

पूर्वदृष्टस्यासान्निहितत्वात् । असन्निहितविषयं चार्थनिरपेक्षमिति' इति भावेन शङ्कते—[1]* नन्वित्यादि । [2]* मनोऽसंबद्ध इत्यादि—मानस-ज्ञानस्यापि तन्मते प्रत्यक्षत्वेन प्रमात्वमवश्याभ्युपेयं । तदुक्तं न्यायबिन्दौ धर्मकीर्तिना—'कल्पनापोढमभ्रान्तं प्रत्यक्षं' इत्युपक्रम्य तच्चतुर्विधं— इन्द्रियज्ञा नं स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्य-

## भावप्रकाशः

येन जनितं तन्मनोविज्ञानम् । सर्वं चित्तचैत्तानामात्मसंवेदनम् । भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं च इति । अत्र धर्मोत्तराचार्य :—‘ तदनेनैकसंतानान्तर्भूतयोरेवेन्द्रियज्ञानमनोज्ञानयोर्जन्यजनकभावे मनोविज्ञानं प्रत्यक्षमित्युक्तं भवति । ततो योगिज्ञानं परसन्तानवर्ति निरस्तम् । यदा चेन्द्रियज्ञानविषयादन्यो मनोविज्ञानस्य तदा गृहीतग्रहणादासञ्जितोऽप्रामाण्यदोषो निरस्तः । यदा चेन्द्रियज्ञानविषयोपादेयभूतः क्षणो गृहीतः तदा इन्द्रियज्ञानेनागृहीतस्य विषयान्तरस्य ग्रहणादन्धबधिराद्यभावदोषप्रसङ्गो निरस्तः । एतच्च मनोविज्ञानमुपरतव्यापारे चक्षुषि प्रत्यक्षमिष्यते । व्यापारवति तु चक्षुषि यद्रूपज्ञानं तत्सर्वं चक्षुराश्रितमेव । इतरथा चक्षुराश्रितत्वानुपपत्तिः कस्यचिदपि विज्ञानस्य । एतच्च सिद्धान्तप्रसिद्धं मानसं प्रत्यक्षं न त्वस्य प्रसाधकमस्ति प्रमाणम् ’ इति । एवं ‘ भूतस्सद्भूतोऽर्थः । प्रमाणेन दृष्टश्च सद्भूतः । यथा चत्वार्यार्यसत्यानि । भूतार्थस्य भावना पुनःपुनश्चेतसि विनिवेशनम् । भावनायाः प्रकर्षो भाव्यमानर्थाभासस्य ज्ञानस्य स्फुटाभत्वारम्भः । प्रकर्षस्य पर्यन्तो यदा स्फुटाभत्वमीषदसंपूर्णं भवति । यावद्धि स्फुटाभत्वमपरिपूर्णं तावत्तस्य प्रकर्षगतिः । संपूर्णं तु यदा तदा नास्ति प्रकर्षगतिः । ततः संपूर्णावस्थायाः प्राक्तन्यवस्था स्फुटाभत्वप्रकर्षपर्यन्त उच्यते । तस्मात्पर्यन्ताद्यज्ञातं भाव्यमानस्य संनिहितस्येव स्फुटतराकारग्राहि ज्ञानं योगिनः प्रत्यक्षं । तदिह स्फुटाभत्वारम्भावस्था भावनाप्रकर्षः । अभ्रकव्यवहितमिव यदा भाव्यमानं वस्तु पश्यति सा प्रकर्षपर्यन्तावस्था । करतलामलकवद्भाव्यमानस्यार्थस्य यद्दर्शनं तद्योगिनः प्रत्यक्षम् । तद्धि स्फुटाभम् । स्फुटाभत्वादेव च निर्विकल्पकम् । विकल्पविज्ञानं हि संकेतकालदृष्टत्वेन वस्तु गृह्णत् शब्दसंसर्गयोग्यं गृह्णीयात् । संकेतकालदृष्टत्वं च संकेतकालोत्पन्नज्ञानविषयत्वम् । यथा च पूर्वोत्पन्नं विनष्टं ज्ञानं

## भावप्रकाशः

संप्रत्यसत् तद्वत् पूर्वविनष्टज्ञानविषयत्वमापि संप्रति नास्ति वस्तुनः। तदसद्रूपं वस्तुनो गृह्णदसन्निहितार्थग्राहित्वादस्फुटाभम्। अस्फुटाभत्वादेव च सविकल्पकम्। ततः स्फुटाभत्वान्निर्विकल्पकम्। प्रमाणशुद्धार्थग्राहित्वाच्च संवादकम्। अतः प्रत्यक्षं इतरप्रत्यक्षवत्' इति व्याचख्यौ। तत्वसंग्रहे च योगिज्ञानं मानसमित्युक्तं—

चक्षुराद्यतिरिक्तं हि मनोऽस्माभिरपीष्यते।
षण्णामनन्तरोद्भूतप्रत्ययो यो हि तन्मनः॥ ६३१॥

इति। सर्वज्ञबुद्धिसाधनावसरे—

समस्तवस्तुसम्बन्धतत्वाभ्यासबलोद्भवम्।
सार्वज्ञं मानसं ज्ञानं मानमेकं प्रकल्प्यते॥ ३३८१॥
सिद्धं च मानसं ज्ञानं रूपाद्यनुभवात्मकम्।
अविवादः परस्यापि वस्तुन्येतावति स्फुटः॥ ३३८३॥
वर्ण्यते हि स्मृतिस्तेन रूपशब्दादिगोचरा।
स्वप्ने च मानसं ज्ञानं सर्वार्थानुभवात्मकम्॥ ३३८४॥

इत्यादि। अत्र पञ्चिका—'यावता समस्तवस्तुगतानित्यत्वादिलक्षणाशेषतत्वाभ्यासप्रकर्षपर्यन्तजेन मनोविज्ञानेन सर्वार्थगोचरेण स्फुटप्रतिभासाविसंवादित्वाभ्यां प्रत्यक्षतामुपगतेन युगपदशेषवस्तुग्रहणात्सर्वविदिष्टः' इत्यादि। एवं—

भूतार्थभावनोद्भूतं कल्पनाभ्रान्तिवर्जितम्।
वक्ष्यामो योगिविज्ञानं साधनैर्विमलैरलम्॥ १३४३॥
योगाभ्यासविशेषाच्च योगिनां मानसं तथा।
ज्ञानं प्रकृष्टरूपं स्यादित्यत्रास्ति न बाधकम्॥ ३४०७॥
सर्वधर्माश्च भाव्यन्ते दीर्घकालमनेकधा।
शून्यानात्मादिरूपेण तात्त्विकेन महात्मभिः॥ ३४४२॥

## सर्वार्थसिद्धिः

भयजन्यसंस्कारसहकारादिति चेत्; समानमत्राऽपि। दृष्टत्वात्तथैव तत्रेति चेत्; अत्रापि तथैव। वेद्याकारैकदेशादुत्पन्नस्य प्रत्यक्षत्वे शुक्तिरजतधीरपि मानं स्यादिति चेन्न; आरोपानारोपाभ्यां विशेषात्। किञ्च संस्कारोपनीतरजताद्यारोपे च इदं रजतमिति चाक्षुषबुद्धिरेका। न हि तत्र रजताद्बुद्ध्युत्पत्तिः! तस्यासन्निहितत्वात्। अर्थजत्वेन त्वदुक्ताविसंवादित्वप्रसङ्गाच्च। इन्द्रियजन्यतया प्रत्यक्षत्ववत् संस्कारजन्यतया स्मृतित्वमपि दुर्निवारमिति चेन्न; तमेतमनुभवामि पश्यामीत्यादि

## आनन्ददायिनी

वेद्याकारो विषय इत्यर्थः। प्रत्यक्षत्वे—प्रत्यक्षप्रमात्वे। शुक्तिरजतेति—तस्या अपि वेद्याकारैकदेशेदमंशजन्यत्वादिति भावः। अर्थजन्यत्वाभावे किं प्रमात्वं न स्यादिति विवक्षितम्? उत तदैक्यं न स्यादिति? इति विकल्पमभिप्रेत्य आद्यं परिहरति—आरोपेति। अर्थजत्वाभावेऽपि बाधितेतरविषयत्वेन अनुमितिवत् प्रामाण्यसम्भवादिति भावः। द्वितीयं परिहरति—किञ्चेति। तथाच व्यभिचारादर्थजत्वं तदैक्यस्याप्रयोजकमित्यर्थः। तमेतमिति—संस्कारजन्यत्वं स्मृतित्वप्रयोजकं न भवतीत्यर्थ.। नन्विन्द्रियस्येव संस्कारस्य प्राधान्यात् केवलस्मृतित्वमस्तु विनिगमकाभावात् इति शङ्कां बाह्येन्द्रियसान्निकर्षनिरपेक्ष-

## भावप्रकाशः

शून्यानात्मादिरूपस्य भाविकत्वं च साधितम्।
भूतार्थभावनोद्भूतेः प्रमाणं तेन संमतम्॥ २४४२॥

## सर्वार्थसिद्धिः

[1]* प्रत्यक्षविरोधादेव ।

## भावप्रकाशः

प्रत्यक्षं व्यक्तभासित्वात् प्रमाणं वस्तुसंगतेः ।

चक्षुराद्याश्रयोद्भूतनीलादिप्रतिभासवत् ।। ३४४ ।।

इत्यादि च । अत्र योगिज्ञानस्यापि मानसत्वोक्त्या 'मनोऽसंबद्ध' इत्याचार्यसूक्तौ तदनुपपत्तिः विवक्षितेति बोध्यम् । एतच्च बुद्धिसरे 'स्मृतिवदनुभवोऽप्यस्ति नष्टादिकेषु (१२४)' इत्येतद्विवरणे 'अतीतानागतानुमानागमयोगिप्रत्यक्षेषु नष्टविषयकत्वेऽपि याथार्थ्यं भवानेवाङ्गीकरोतीत्यर्थः' इत्यत्र व्यक्तीभविष्यति । [1]* प्रत्यक्षाविरोधादेवेति— 'यस्मात् प्रत्यक्षबलोत्पन्नेनाध्यवसायेन दृष्टत्वेनार्थोऽध्यवसीयते' इति (३७) उदाहृतधर्मोत्तराचार्यवाक्योक्तदिशा अनन्तरोत्पन्नज्ञानेन प्रथमज्ञानस्य प्रत्यक्षतासिद्धिरिति भावः ।

पूर्वसंविदिताकारगोचरं चेदिदं भवेत् ।

जायेत पूर्वमेवेदम् . . . . . . . ।।

इत्युक्तिरपि योगिज्ञानस्यापि योगबलात्पूर्वमुत्पत्तिप्रसङ्गवदेव समाधेया । तत्र पूर्वं योगाभ्यासबलविरहवदत्रापि संस्कारसाचिवेन्द्रियरूपकारणविगमस्य सुवचत्वात् । योगाभ्यासबलाद्योगिज्ञानेऽतीतार्थानामिव अत्राऽपि संस्कारबलात् पूर्वसंविदिताकारस्य भानं; स्फुटाभत्वाद्योगिज्ञाने प्रत्यक्षत्वमिव तमेतं पश्यामीति प्रतीतिबलादत्राऽपि प्रत्यक्षत्वं चाप्रकम्प्यम् । बौद्धप्रत्यक्षलक्षणं शून्यानात्मादिरूपस्य भाविकत्वं च बुद्धिसरे दूषयिष्यते । अतः 'अभेदाध्यवसायेन भिन्नरूपेऽपि' इत्यादिकमपि हेयं । भिन्नरूपत्वस्यासिद्धेरिति । एतच्च 'तत्त्वेदन्त्वे हि' इति श्लोके साधयिष्यते । 'निष्पादितक्रिये चार्थे' इत्यादि दूषयितुं स्मृतित्वमभ्युपेत्याह—

## सर्वार्थसिद्धिः

अत एव संस्कारप्राधान्यमुत्प्रेक्ष्य केवलस्मृतित्वशङ्काऽपि निरस्ता । [1]* भवतु वा स्मृतित्वमपि; तथाऽपि स्मृत्यनुभवात्मकमेकं ज्ञानं स्वविषयस्य स्थिरत्वं साधयत्येव। कथमप्रमा स्मृतिरर्थं व्यवस्थापयेत्? इति चेत्; किमत्राप्रमात्वम्? ज्ञानव्यतिरिक्तत्वं वा? अनुभवव्यतिरिक्तत्वं वा? अयथार्थत्वं वा? नाद्यः। असिद्धेः। न द्वितीयः त्रितयप्रकाशवादिभिः स्मृतेरपि आत्मस्वात्मविषयेऽनुभवत्वस्वीकारात् । [2]* त्वया च स्वसंवेदनांशेऽपि। विषयांशे अनुभवव्यतिरिक्तत्वं स्मृतेरिति चेत्; तथाभूताऽपि स्वकारणानुभवात् स्वविषय-

## आनन्ददायिनी

संस्कारजन्यत्वं स्मृतित्वप्रयोजकमिति परिहरति—अतएवेति । उक्तरी(ग)त्या प्रत्यक्षत्वस्य सिद्धत्वादित्यर्थः । स्वसंवेदनांशे—स्वात्मांशे इत्यर्थः; बौद्धैरपि स्वप्रकाशत्वस्वीकारादिति भावः। शङ्कते—विषयांशे इति । तथाभूताऽपीति—अनुभवव्यतिरिक्ताऽपि कारणरूपानुभवमाक्षिप्य तद्द्वारा अबाधितं विषयं साधयतीत्यर्थः । स्वकारणानुभवादिति-

## भावप्रकाशः

[1]* भवतु वा स्मृतित्वमिति । [2]* त्वयेति । एतेन—

> यदि वा योगसामर्थ्यात् भूताजातनिभं स्फुटम् ।
> लिङ्गागमनिराशंसं मानसं योगिनां भवेत् ॥ ३४७४ ॥
> स्वात्मावभाससंवित्तेः तत्स्वलक्षणगोचरम् ।
> स्पष्टावभासं संवित्तेः तच्च प्रत्यक्षमिष्यते ॥ ३४७५ ॥

इति तत्वसंग्रहे सौत्रान्तिकमतेनापि योगिज्ञानस्य प्रत्यक्षप्रमात्वं साध-

## सर्वार्थसिद्धिः

मबाधितं व्यवस्थापयेत् । [1]*अस्वातन्त्र्यादिविचारस्त्वत्र [2]*प्रकृतानुपयुक्तः। न तृतीयः; यथार्थस्मृतौ विरोधाभावात्। सर्वापि स्मृतिरयथार्था अतीतस्य वर्तमानतयाऽवभासादिति चेन्न; अतीततयाऽपि प्रायशः स्मृतिभिरर्थोल्लेखात्। प्रच्युततदाकारस्य तद्वत्तया भासनाद्याथार्थ्यमिति चेन्न; स्मृतिप्रमोषे तदभावात्। अतीतादिविषयानुमानानामपि तत्प्रसङ्गाच्च। तर्हि पाकरक्तेऽपि श्यामत्वधीर्यथार्था स्यादिति च मन्दं; प्राचीनश्यामताबुद्धौ विरोधाभावात्। एतेन स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे

## आनन्ददायिनी

ल्यब्लोपे पञ्चमी। ननु स्मृतित्वेऽस्वातन्त्र्यं न स्यादिति शङ्कां परिहरति—अस्वातन्त्र्येति। स्वातन्त्र्यास्वातन्त्र्ययोरर्थव्यवस्थापनादावनुपयोगादित्यर्थः। ननु ज्ञानं स्वसमानकालिकत्वेन स्वविषयावभासनस्वभावं। तथाच स्मृतिरपि स्वविषयमतीतदेशकालादिकं वर्तमानतया गृह्णती बाधितविषयत्वादप्रमेति शङ्कते—सर्वापीति। तादृशस्वभावोऽसिद्ध इति परिहरति—नेति। प्रच्युततदाकारस्य—अवगतपूर्वकालादिसंबन्धस्य। स्मृतिप्रमोषः—तत्तानवगाहिस्मृतिः। यथा ज्ञानद्वयं भ्रम इति पक्षे इदं रजतमित्यत्र रजतस्मृतिः। यदि ज्ञानस्यातीतादिविषयकस्याप्रामाण्यनियमः तदा दोषमाह—अतीतेति। प्राचीनश्यामताबुद्धौ—प्राचीनतया श्यामताबुद्धौ श्यामतामात्रबुद्धौ चेत्यर्थः।

## भावप्रकाशः

यता शान्तरक्षितेन प्रत्यभिज्ञायाः भ्रान्तत्वसाधनमनुचितमिति सूचितम्।
[1]*अस्वातन्त्र्यादीति। आदिपदेन अधिगतार्थगन्तृत्वपरिग्रहः। [2]*प्रकृता-

## भावप्रकाशः

नुपयुक्तः—क्षणिकत्वसाधनानुपयुक्त इत्यर्थः । अनधिगतार्थगन्तृत्वस्य प्रमात्वे क्षणिकत्वानुमितेरपि गृहीतग्राहित्वस्योदाहृततत्वसंग्रहपञ्जिका-वाक्यसिद्धतया तस्या अप्यप्रमात्वं स्यात् । तत्वसंग्रहपञ्जिकोक्तदिशा प्रवृत्तसमारोपव्यवच्छेदकत्वेन अनुमानप्रामाण्यस्थापने—

अतत्तामनिदन्तां च तत्त्वेदन्त्वे निरस्यतः ।

इत्यत्र प्रत्यभिज्ञाया अपि प्रामाण्यं साधयिष्यत इति भावः । बौद्धानां स्थिरसिद्धिदूषणसमारम्भः पुद्गलनैरात्म्यसाधनार्थः । अतएव विज्ञप्ति-मात्रतासिद्धौ 'तद्विनेयजनान् प्रति' इत्यनेन 'अस्ति सत्त्व उपा-दुकः' इति बुद्धोपदिष्टात्मास्तित्वप्रतिपादकवाक्यस्य अन्याभिप्राय-कत्वं प्रकल्प्य द्वयाद्विज्ञानषट्कं प्रवर्तते न त्वेको द्रष्टास्ते न याव-न्मन्ता इत्येवं पुद्गलनैरात्म्यं साधितम् । एवं श्लोकवार्तिकेऽप्यात्मवादे कुमारिलेन व्यक्तमुक्तम्—

नैरात्म्येनात्र चाक्षिप्ताः सर्वा एव हि चोदनाः ।
न च विज्ञानमात्रत्वे भोक्तृकर्तृत्वसंभवः ॥

इति पूर्वपक्षे—

तस्माद्वेदप्रमाणार्थमात्मात्र प्रतिपाद्यते ।
शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तत्वमात्मनः ॥
नित्यत्वं चेष्यते शेषं शरीरादि विनश्यति ।
नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ॥
विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता ॥
स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ ।
न त्ववस्थान्तरप्राप्तौ लोके बाल्युवादिवत् ॥
नैरात्म्यवादपक्षे तु पूर्वमेवावबुध्यते ।
मद्विनाशात्फलं न स्यात् मत्तोऽन्यस्याथवा भवेत् ॥

## सर्वार्थसिद्धिः

**स्मृतिदर्शनात् इति वदन्तोऽपि निरस्ताः। एवं प्रत्यभिज्ञा स्थिरविषयेति सिद्धे सोऽहमिति धीश्चात्मनः स्थिरत्वमुल्लेढि। तदहं स्मरामीति स्मृतिमात्रेण चैतत्सिद्धम्। ननु विरुद्धानुपहित-**

## आनन्ददायिनी

बाह्यार्थे स्थैर्यं साधयित्वा आत्मनोऽपि स्थैर्यं साधयति—एवामिति।

## भावप्रकाशः

इति नैव प्रवृत्तिस्स्यात् न च वेदप्रमाणता।
जन्मान्तरेऽभ्युपेतेऽपि ज्ञानमात्रात्मवादिनाम्॥
ज्ञानशक्तिस्वभावोऽतो नित्यस्सर्वगतः पुमान्।
अहम्प्रत्ययविज्ञेयः स्वयमात्मोपपाद्यते॥
यदि स्याज्ज्ञानमात्रं च क्षणिकं ज्ञातृ तत्र वः।
न भवेत् प्रत्यभिज्ञानं पूर्वज्ञातरि संप्रति॥

इति सिद्धान्ते। अत्र आत्मनो ज्ञानमात्रस्वरूपत्वे क्षणिकत्वे च दोषकथनपूर्वकं अहम्प्रत्ययगम्यत्वं ज्ञातृत्वं नित्यत्वं च यद्यभ्युपगम्यते तदैव प्रवृत्त्युपपत्तिः वेदप्रामाण्यं च नान्यथा इति स्पष्टम्। व्यक्तीभविष्यति चायमर्थो जीवसरादौ। शान्तरक्षितेन बौद्धमतेऽपि यदि किञ्चिन्मानसं ज्ञानमतीतादिविषयकमङ्गीक्रियते तदा प्रत्यभिज्ञाप्रत्यक्षेण प्रमात्मकेन स्थिरं पृथिव्यादिकमिव आत्मापि स्थिरोऽकामेनाप्यङ्गीकरणीयः। अत एव बौद्धेष्वपि वात्सीपुत्रैस्तदनुयायिभिश्च बुद्धिशब्दान्तरार्चिःप्रभृतीनि क्षणिकानि क्षितिव्योमादीन्यक्षणिकानि स्थिराणि आत्माऽपि स्थिरः इत्यङ्गीक्रियते इति व्यञ्जयन्नाह—[1]* एवं प्रत्यभिज्ञा स्थिरविषयेति सिद्धे सोऽहमित्यादिना—

# तत्वमुक्ताकलापः

## नैकस्मिन् शक्त्यशक्ती

## सर्वार्थसिद्धिः

विषयेत्यसिद्धं ; कुर्वदकुर्वत्क्षणयोश्शक्त्यशक्तिभ्यां वैजात्यादित्यत्राह—नैकस्मिन्निति । कुर्वतोऽकुर्वतश्चैकत्वेऽङ्गीक्रियमाणेऽपि शक्त्यशक्तिरूपाविरुद्धधर्माध्यासो न स्यादित्यर्थः। [1]* शक्तश्चेत् कुर्यादेव ; न करोति चेदं कुसूलनिहितं बीजमिति [2]* प्रसङ्गतद्विप-

## आनन्ददायिनी

कुर्वदकुर्वदिति—कार्यजनने वर्तमानव्यापारवत्तदभाववद्दण्डादिक्षणयोर्वस्तुनोरित्यर्थः । शक्त्यशक्ती—शक्तितदभावौ । ननु स्थायित्वपक्षेऽङ्कुरोत्पादकमेव बीजं कुसूलस्थमिति प्रत्यभिज्ञया साधनीयं। तत्र अङ्कुरोत्पादनशक्तिश्चेत् कुर्यादेव ; न करोतीति (शक्त्यभावः कुसूलस्थस्य केदारस्थस्य शक्तत्वं करणादिति) विरुद्धधर्माध्यास इति शङ्कते–शक्तश्चेदिति।

## भावप्रकाशः

[1]* शक्तश्चेदिति—सहकारिसापेक्षत्वे त्वशक्त एवेति भावः ।
[2]*प्रसङ्गतद्विपर्ययाभ्यामिति—स्वभावहेतुः प्रसङ्गः । व्यापकानुपलब्धिस्तद्विपर्यय इति पूर्वमेवोक्तम् । एतौ चान्वयसाधकौ । विपर्यये बाधकप्रमाणं च व्यतिरेकसाधकं नात्रापेक्ष्यते अन्वयसिद्ध्यैव व्यतिरेकसंशयनिवृत्तेः । यथोक्तं क्षणभङ्गसिद्धौ रत्नकीर्तिना—‘ यथा विपर्यये बाधकप्रमाणबलात् नियमवति व्यतिरेके सिद्धे अन्वयविषयः संशयः पूर्वं स्थितोऽपि पश्चात्परिगलति । ततोऽन्वयप्रसाधनार्थं न पृथक् साधनमुच्यते। तथा प्रसङ्गतद्विपर्ययहेतुद्वयबलतो नियमवत्यन्वये सिद्धे व्यतिरेकविषये पूर्वं स्थितोऽपि संदेहः पश्चात्परिगलत्येव । न च

## तत्वमुक्ताकलापः

**कृतितदितरयोः साह्यभेदेन सिद्धेः ।**

## सर्वार्थसिद्धिः

**र्ययाभ्यां शक्तचशक्तिसिद्धिरिति चेन्न ; [1]*शक्तस्याऽपि करणाकरणयोः सहकारिसन्निध्यसान्निधिप्रयुक्तत्वात् । तदाह—कृतितदितरयोरिति । साह्यं–[2]*सहभावः कदाचित् पुष्कलैस्सहकारिभिस्साह्यं**

## आनन्ददायिनी

शक्तस्यापीति — करणाकरणयोः शक्तितदभावप्रयुक्तत्वाभावान्न शक्तचशक्तिरूपविरुद्धधर्माध्यासप्रसङ्ग इति भावः । सहशब्दस्य धर्म्यवाचकत्वात् तत्र भवप्रत्ययः कथमित्यत्राह — साह्यमिति । सहशब्दः सहितपरः ; तस्य भावस्साह्यं । यद्वा त्रैलोक्यादिवत् स्वार्थिकः । तदेवाह—कदाचिदिति । पुष्कलसहकारिसान्निध्य-

## भावप्रकाशः

व्यतिरेकसाधकमन्यत् प्रमाणं वक्तव्यम्!' इति [1]*शक्तस्यापीति—उक्तं च रत्नकीर्तिना—'शक्तोऽपि घटः क्रमिसहकार्यपेक्षया क्रमिकार्यं करिष्यति । न चैतद्वक्तव्यं समर्थोऽर्थः स्वरूपेण करोति स्वरूपं च सर्वदाऽस्तीत्यनुपकारिणि सहकारिण्यपेक्षा न युज्यते इति ; सत्यपि स्वरूपेण कारकत्वे सामर्थ्याभावात्कथं करोति? सहकारिसाकल्यं हि सामर्थ्यम्! तद्वैकल्यं चासामर्थ्यं । न च तयोराविर्भावतिरोभावाभ्यां तद्वतः काचित् क्षतिः ; तस्य ताभ्यामन्यत्वात्। तस्मात् अर्थस्समर्थोऽपि स्यात् ; न च करोतीति सन्दिग्धव्यातिरेकः प्रसङ्गहेतुः' इति। [2]* साह्यमिति । एतेन—

अथ नापेक्षते नित्यः प्रत्ययान् सहकारिणः ।

## भावप्रकाशः

तथाऽपि तद्वियुक्तोऽयं कारको नान्त्यहेतुवत् ॥
निजस्तस्य स्वभावोऽयं तेषामेव हि सन्निधौ ।
कारकत्वमतः कार्यं तद्भावेऽपि न सर्वदा ॥ ४१० ॥

इति तत्वसंग्रहोक्तपक्ष एव सिद्धान्तितः ॥

विरोधपदार्थं न्यायबिन्दौ (२ पृ) धर्मकीर्तिरित्थमाह—'द्विविधो हि पदार्थानां विरोधः! अविकलकारणस्य भवतोऽन्यभावः अभावाद्विरोधगतिः शीतोष्णस्पर्शवत । परस्परपरिहारस्थितलक्षणतया वा भाववत्' इति । अत्र धर्मोत्तराचार्यः—'यस्य कारणवैकल्यादभावो न तस्य केनचिदपि विरोधगतिः । तदर्थमविकलकारणग्रहणं अविकलकारणस्यापि यत्कृतात्कारणवैकल्यादभावः तेन विरोधगतिः । तथाच सति यो यस्य विरुद्ध. स तस्य किञ्चित्कर एव । तथाहि—शीतस्पर्शस्य जनको भूत्वा शीतस्पर्शान्तरजननशक्तिं प्रतिबध्नन् शीतस्पर्शस्य निवर्तको विरुद्धः । तस्मात् हेतुवैकल्यकारी विरुद्धो जनक एव' इति । एवं 'ततोऽसमर्थावस्थाजनकत्वमेव निवर्तकत्वं । अतश्च यस्मिन् क्षणे जनकस्ततस्तृतीये क्षणे निवृत्तो विरुद्धो यदि शीघ्रं निवर्तते । जन्यजनकभावाच्च सन्तानयोर्विरोधो न क्षणयोः । यद्यपि च न सन्तानो नाम वस्तु; तथाऽपि सन्तानिनो वस्तुभूताः । ततोऽयं परमार्थः—न क्षणयोर्विरोधः; अपि तु बहूनां क्षणानां; यतः सत्सु दहनक्षणेषु प्रवृत्ता अपि शीतक्षणा निवृत्तिधर्माणो भवन्तीति' इति । एवं 'ये त्वाहुः न विरोधो वास्तव इति त इदं वक्तव्याः—यथा न निष्पन्ने कार्ये कश्चिज्जन्यजनकभावो नाम दृष्टोऽस्ति! कारणपूर्विका तु कार्यप्रवृत्तिः । अतो वास्तव एव । तद्वन्न निवृत्ते वस्तुनि कश्चिदिष्टो नाम विरोधोऽस्ति । दहननिमित्तं तु शीतस्पर्शस्य क्षणान्तरासामर्थ्यं; अतो विरोधोऽपि वास्तव एव' इति च । 'भिन्नव्यापारौ

## सर्वार्थसिद्धिः

[1]*कदाचित् विकलैरीति प्रयोजकभेदेनेत्यर्थः। [2]*अकुर्वत्स्वभावस्य

## आनन्ददायिनी

मपुष्कलसहकारिसान्निध्यं चेत्यर्थः। भेदो—विशेषः ।

## भावप्रकाशः

विरोधौ; एकेन विरोधेन शीतोष्णस्पर्शयोरेकत्वं वार्यते अन्येन सहाव-स्थानम्' इति च आह । अतोऽत्राऽपि न विरोध इति व्यञ्जयति—[1]* कदाचिद्विकलैरित्यनेन । अत्र धर्मोत्तराचार्येण विरोधस्य वास्तवत्वोपपादनेन—

द्विविधाः क्षणिका भावाः केचिद्ध्रासस्य कारकाः ।
शीतादेरेव वह्न्याद्या अपरे न तथाविधाः ॥ ४४१ ॥
अदृष्टतत्वो लोकस्तु विरोधमभिमन्यते ।
कार्यकारणभावेऽपि प्रथमोक्तेष्वनेकधा ॥ ४४२ ॥
बाध्यबाधकभावोऽपि वस्तुनो नैव तात्विकः ।
विद्यते तत एवोक्तं विरोधगतिरित्यपि ॥ ४४३ ॥

इति तत्वसंग्रहोक्तिरनुचितेति बोधितम् ।

अस्त्वेवं किन्तु साकल्ये या तस्य प्रकृतिर्मता ।
वैकल्ये सैव चेदिष्टा नित्यास्स्युस्सहकारिणः ॥ ४११ ॥
तत्संबद्धस्वभावस्य भावे तेषामपि स्थितेः ।
अन्यच्चेद्विकलं रूपमेकत्वमवहीयते ॥ ४१२ ॥

इति शान्तरक्षितोक्तदूषणमभिप्रेत्य शङ्कते—[2]*अकुर्वत्स्वभावस्येत्यादि। तत्वसंग्रहे क्षणिकत्वपक्षे भदन्तयोगसेनोक्तसहकारित्वाद्यनुपपात्तीरित्थं परिहृता—

उच्यते प्रथमावस्था सैवान्योऽन्योपकारिणः ।
एकार्थक्रियया त्वेते भवन्ति सहकारिणः ॥ ४३५ ॥

## सर्वार्थसिद्धिः

**कथं सहकारिभिरपि कुर्वत्ता? कुर्वत्स्वभावस्य वा कथं तद्वि-रहात्तदभावः इति चेन्न; [1]*सहकारिसन्निधौ कुर्वत्तया तदभावे**

## आनन्ददायिनी

सहकारिसन्निधाविति—दर्शनादित्यर्थः ।

## भावप्रकाशः

अन्योन्यानुपकारेऽपि नाविशिष्टा इमे यतः ।

स्वोपादानबलोद्भूताः कलापोत्पादकाः पृथक् ॥ ४३६ ॥

इति । अत्र पञ्चिका—समर्थादेव हि कार्योत्पत्तिः! न च सहकारि-वैयर्थ्यं; तथाहि—द्विविधं सहकारित्वं एकार्थक्रियाकारितया परस्परोप-कारितया च । तत्र (अ?) व्यवहितकार्यापेक्षया एकार्थक्रियाकारित्वमेव न परस्परोपकारित्वं एकस्मिन् क्षणे निर्विभागतया विशेषस्याधातुमश-क्यत्वात् । व्यवहितकार्यापेक्षया तु परस्परत उत्तरविशिष्टक्षणोत्पत्तेः । सन्तानापेक्षया परस्परोपकारेण व्यवहितकार्यजनकत्वात् परस्परोपकारित्व-लक्षणं सहकारित्वं । तत्र प्रथमावस्थाभाविनां यद्यपि परस्परतो विशेषो नास्ति; तथाऽपि तेषां सहकारित्वमविरुद्धमेव एकार्थक्रियाकारित्वात् । नापि ते समनन्तरविशिष्टक्षणोत्पादनं प्रत्यविशिष्टाः; पूर्वकेभ्य एव स्वहेतुप्रत्ययेभ्यः तथाविधोत्तरकार्यकलापोत्पादनं प्रति प्रत्येकं समर्था-नामुत्पन्नत्वात् । तेषामपि हेतुप्रत्ययानामपरेभ्यस्स्वहेतुप्रत्ययेभ्यः तेषा-मप्यपरेभ्य इति अनादेर्हेतुपरम्पराया इष्टत्वादनवस्थाऽप्यदुष्टैव । प्रत्येकं च सामर्थ्येऽपि नापरेषां वैयर्थ्यं; स्वहेतुबलेन तेषां तथोत्पन्नत्वात् । नापि तेषां पृथग्भावस्संभवति; तथाविधकारणाभावात् । नापि पश्चात् क्षणिकत्वात् इति । एवं सति स्थिरत्वपक्षेऽपि नानुपपत्तिरिति भावेनाह—

[1]*सहकारिसन्निधावित्यादि । अयमाशयः—निर्व्यापारस्य कारणत्वं

## सर्वार्थसिद्धिः

**चाकुर्वत्तया स्वभावव्यवस्थासिद्धेः। परसापेक्षः कथं स्वभावः?**

## भावप्रकाशः

न संभवतीति कुर्वत्त्वं भाविकार्यानुगुणव्यापारवत्त्वमित्यनुपदमेव व्यवस्थापयिष्यते । क्षणिकत्वपक्षे येषां क्षणानामेककार्यकारितया उपादानबीजक्षणसहकारित्वमुच्यते स्थिरपक्षे तत्क्षणसमुदायरूपाणां वस्तूनामेककार्यकारितयोपादानबीजसहकारित्वमपि संमतं । परं तु यावन्वयव्यतिरेकावेककार्यकारित्वग्राहकौ तावेव निरुक्तकुर्वत्तामपि प्रयोजयत इति परस्परोपकारित्वमप्यवर्जनीयं । क्षणिकत्वसिद्धेः पूर्वं एकस्मिन् क्षणे निर्विभागतया विशेषाधानस्याशक्यत्वादित्युक्तेरसंभवात् । धर्मधर्मिणोर्भेदसाधनेन स्वभावस्यागन्तुकत्वेऽपि न धर्म्यैक्यक्षतिः । 'एतद्धर्मकादेतद्धर्मकमुपजातम्' इत्यादिना धर्मविशिष्टस्यैवान्वयव्यतिरेकाभ्यां कारणता वक्ष्यते । तेन स्वभावस्यैव कारणत्वं स्यान्न धर्मिण इत्यपि समाहितम् । एतेन; प्रथमक्षणे न परस्परोपकारित्वं किंतु द्वितीयक्षणमारभ्यैव इति;

> ततः प्रभृति ये जाताः विशेषास्ते तु तत्कृताः ।
> तद्रूपप्रकृतित्वेन तेषां तद्रूपयोगिनाम् ॥ ४३७ ॥

इत्युक्तिरप्यनादेया । 'कालानन्तर्यसाम्ये' इति श्लोकविवरणे क्षणिकत्वपक्षे भदन्तयोगसेनोक्तदूषणानि स्थरीकरिष्यन्ते । इति ॥

एतेन रत्नकीर्तिना—'पूर्वस्थितादेव सामग्रीमध्यप्रविष्टाद्भावात्कार्योत्पत्तिः । अन्यस्मादेव वा बिशिष्टाद्भावादुत्पन्नादिति विवादपदं । तत्र प्रागपि संभवे सर्वदैव कार्योत्पत्तिः न वा कदाचिदपीति विरोधमसमाधाय चक्षुषी निमील्य तत एव कार्योत्पत्तिदर्शनादिति साध्यानुवादमात्रप्रवृत्तः कृपामर्हतीति' यदुक्तं तत् विकल्पाप्रामाण्यकल्पनाभिनिवेशनिबन्धनमिति सूचितम् । अन्यस्माद्भावादुत्पत्त्यङ्गीकारे क्षणिका-

## सर्वार्थसिद्धिः

इति चेन्न ; स्वहेतुसापेक्षत्ववदुपपत्तेः। [1]*अधिपतिसहकार्यालम्बन-समनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ कारणमिति युष्मदुक्ति-

## आनन्ददायिनी

स्वहेत्विति—कुर्वत्स्वभाव(स्व)लक्षणस्यापि स्वहेतुपरसापेक्षतया स्वभावत्वाभावप्रसङ्गादिति भावः । ननु क्षणानां हेतुसापेक्षत्वमेव नास्तीत्यत आह—अधिपतीति—अधिपतिरिन्द्रियं चक्षुरादि । प्रतीयते अनेनेति प्रत्ययः—कारणं । उदितस्य ज्ञानस्य रसादि-

## भावप्रकाशः

नन्तपदार्थानां चक्षुषी निमील्य कल्पनं स्यादिति । एवमनङ्गीकारे—

> चतुर्भिश्चित्तचैत्ता हि समापत्तिद्वयं त्रिभिः ।
> द्वाभ्यामन्ये तु जायन्ते　. . . . .॥

इति भवदीयवचनविरोध इत्यभिप्रेत्य तत्र चतुर्भिरिति सामान्येनोक्त्या

> चत्वारः प्रत्यया हेतुरालम्बनमनन्तरम् ।
> तथैवाधिपतेयं च　. . . . .॥

इति तदर्थपरिज्ञानाय भाष्योक्तवाक्यमादत्ते–*[1] अधिपतीत्यादि । ननु अधिपत्यादीनां चतुर्णां तन्मते पूर्वं (५७ पृ) भिन्नधर्मप्रयोजकत्वाभिधानेन नानुपपत्तिरिति चेन्न ; तन्मते धर्मधर्मिणोरभेदेन विज्ञानक्षणगतधर्माणां विज्ञानाभिन्नतया दोषो दुर्वारः, तथाहि—एकस्य अधिपत्यादिचतुष्टयसन्निधानेन ज्ञानोत्पत्तिकाले तद्विकलस्यान्यस्यालम्बनादिमात्रेण ज्ञानं नोदेतीत्यविवादं । एवं च आलम्बनप्रत्ययश्शक्तश्चेत् विज्ञानं तस्यापि जनयेत् ; न च तस्य जनयति इति प्रसङ्गतद्विपर्ययाभ्यां विज्ञानक्षण एको न स्यात् इति मिलितानां कारणत्वाङ्गीकारेण परिहारोऽपि तुल्य एवेति भावः ॥

## सर्वार्थसिद्धिः

विरोधात्। अर्थजत्वं च प्रामाण्यं ब्रूषे। उपच्छन्दनार्थमुत्तानवाक्यमिति चेन्न; अतिप्रसक्त्या सिद्धान्तसिद्धेर्दुर्निरूपत्वप्रसङ्गात्। शक्तं चेत् अन्त्यतन्तुसंयोगादिवदवश्यसिद्धसहकारिचक्रं स्वकार्यं कुर्यादिति चेन्न; स्वकारणादापततां सहकारिणामेतदधीनत्वाभावात्। पराधीनत्वेऽप्यवर्जनीयं तत्सान्निधानमिति चेन्न; अन्यथाऽपि दृष्टेः। अस्तु सहकारिसम्बन्धादिकमेव विरु-

## आनन्ददायिनी

साधारण्याद्रू (ण्ये रू) पादिविशेषनियमनादिन्द्रियस्याधिपतित्वं। नियामकस्याधिपतित्वात्। सहकारी—आलोकादिः। ततो जातस्य ज्ञानस्य स्पष्टता भवति। समनन्तरप्रत्ययः—संस्कारः। तस्मात् प्राचीनज्ञानोद्बोधः। आलम्बनप्रत्ययः—नीलानीलाद्यर्थाकारः प्रत्ययः। ज्ञानपदवेदनीयस्य चित्तस्य समनन्तरप्रत्ययसहितादधिपत्यादिविषयनियामकस्पष्टताप्रयोज (जन) कसहितान्नीलाकारज्ञानाच्चित्ताख्यं ज्ञानं नीलोऽहमित्याद्याकारसन्ततिं भजत इति चत्वारः प्रत्ययाः' इति बोधिचित्तविवरणे दर्शनादित्यर्थः। प्रामाण्यमिति—प्रामाण्यप्रयोजकमित्यर्थः। उपच्छन्दनं—वञ्चनं। उत्तानं—अहृदयं। अतिप्रसक्त्येति—त्वदुक्तान्निदमुपच्छन्दनार्थमुत्तानं इदं नेति निर्णयनियामकाभावात्सन्देहादयं सिद्धान्त इति व्यवस्था न स्यादित्यर्थः। ननु शक्तस्य सहकारिसम्पत्तिनियमात् अन्त्यतन्तुसंयोगादिवत् स्वकार्यका(क)रणं न स्यादिति शङ्कामनूद्य सहकारिसंपत्तेश्शक्त्यधीनत्वाभावेन तथा नियम एव नास्तीति परिहरति—शक्तं चेदिति। अन्यथाऽपि—सहकारिसान्निध्याभाववत्तयापीत्यर्थः। दर्शनानुसारेण व्याप्तिर्वाच्येति भावः। कर-

## तत्वमुक्ताकलापः

**एकस्मिन् कालभेदाद्भवति च सहकार्यन्वयानन्वयादिः नो चेन्नो देशभेदादपि सुपरिहरः**

## सर्वार्थसिद्धिः

द्भुत्वाद्भेदकमित्यत्राह—एकस्मिन्निति । आदिशब्देन प्रस्तुतकरणाकरणादिसंग्रहः । कालभेदाद्विरुद्धस्वीकारे किं कुत्र नासीन्न स्याद्वा? इति सर्वत्राव्यवस्थितिरिति चेन्न; दर्शनादर्शननियमाभ्यामेव सम्भवासम्भवस्थितेः । एवमन्यदप्यसमनुवदन् प्रतिवन्दिमाह—नोचेदिति । अत्रास्ति करोति च अन्यत्र नास्ति न करोति चेत्यादिनिर्देशभेदेन सत्त्वासत्त्वादिसमुच्चयस्सुदुष्परिहरस्स्यात् । अपिर्विषयभेदाद्यनुक्तसमुच्चये । विषयादिभेदादपि हि

## आनन्ददायिनी

णाकरणादीत्यादिशब्देन शक्त्यशक्त्यादिकं गृह्यते । अव्यवस्थितिरिति—कालभेदेन सर्वं सर्वत्र स्यात् विरोधाभावादिति भावः । तथाच असाधारणधर्मव्यवस्था न सिध्येदिति ध्येयम् । सम्भवासम्भवौ—इदमत्रासीदिदमत्र भविष्यति इदमत्र नासीदिदमत्र न भविष्यतीति सद्भावासद्भावौ । यदि करणाकरणादीनां कालभेदेन समुच्चयेऽप्यव्यवस्थादोषः; तदा क्षणेऽपि देशभेदेन सत्त्वासत्त्वकरणाकरणादिसमुच्चयस्य दुष्परिहरत्वात् स दोषस्तवाऽपि स्यादित्याह—अत्रास्ति करोति चेति । विषयादिभेदादपीति—शक्त्यशक्त्यादीनां विषयादिभेदादपि विरोधाभावेन तत्प्रयुक्तो भेदः परिह्रियते इत्यर्थः । तदेव

## तत्त्वमुक्ताकलापः

**तेन नैकं क्वचित्स्यात्**

## सर्वार्थसिद्धिः

विरोधः परिह्रियते! क्वचिच्छक्तं क्वचिदशक्तं केनचिज्जन्यते व्यज्यते बाध्यते वा नान्येन। कस्यचित्प्रतियोगी व्याप्यः व्यापकः पूर्वः परो वा नान्यस्येत्यादि। एवं विषयभेदादपि विरोधस्ते दुष्परिहरः। ततःकिमित्यत्राह—तेनेति। विरुद्धानां देशकालाद्यसमाहितविरोधत्वेन स्वलक्षणस्यापि विरुद्धशतक्षुण्णतया नानात्वे तत्क्षोदानां च तथातथा क्षोदे किञ्चिदप्येकं न

## आनन्ददायिनी

दर्शयति—क्वचिच्छक्तमिति। दण्डो घटे शक्तः पटोत्पादने शक्त्यभाववान् घटः क्वचिदधिकरणे जायते क्वचिद्व्यज्यते क्वचिद्बाध्यते; एवं केनाचिज्जन्यते व्यज्यते बाध्यते च नान्येन; तथा कस्यचित्प्रतियोगी कस्यचिद्व्याप्यः कस्यचिद्व्यापकः इति शक्तत्वाशक्तत्वादीनामविरोध इत्यर्थः। आदिशब्देन कुत्रचित्संयोगतदभावादीनां ग्रहः। परः पूर्व इत्यादौ कस्यचिदित्यस्य तस्मादिति विभक्तिविपरिणामेन कस्माच्चिदित्यन्वयः। केचित्तु—'अन्यारादितरर्ते' इत्यादिना दिक्छब्दयोगे पञ्चम्याः 'तस्य परमाम्रेडितम्' इति निर्देशेन अनित्यत्वज्ञापनात् कस्यचिदित्यनुषङ्गः। भवत्पक्षे भिन्नविषयकत्वादिभिरपि विरोधपरिहारो न सम्भवति भिन्नविषयकत्वादेरपि विरुद्धत्वादित्याह—एवमिति। विषयभेदो भिन्नविषयत्वं। आदिशब्देन करणभेदादिसंग्रहः। तत्क्षोदानां—क्षणिकस्वलक्षणाद्भिन्नानां भागानां। तथातथा—

## तत्वमुक्ताकलापः

**तत्त्वेदन्त्वे हि कालान्तरघटनमये नैककाले घटेतां**

## सर्वार्थसिद्धिः

सिध्येत् । तदभावे च कुतोऽनेकमिति माध्यमिकमतापातः । सैव सुगतमतकाष्ठेति तत्र तिष्ठाम इति चेत्; तन्निष्ठन त्वया अस्मन्मतबाधकानुपन्यासे विवादाभावः । तदुपन्यासे तु तत्रतत्र तद्बाधाबाधविकल्पदौस्थ्यं दुष्परिहरमिति भावः ॥ २५ ॥

पुनरपि प्रकारान्तरेण प्रत्यभिज्ञाबाधकं विरुद्धधर्माध्यासं प्रतिबन्दिविशेषमप्याशङ्कते—तत्त्वेदन्त्वे हीति । उतीतकाल-

## आनंन्ददायिनी

जन्यत्वाजन्यत्वादिप्रकारेण । तदभावे इति—तथाच वस्तुनः पारमार्थिकत्वे तस्यैव किञ्चित्प्रति कुर्वत्त्वं किञ्चित्प्रत्यकुर्वत्त्वमित्यादिविरुद्धधर्माध्यासस्यावश्यकत्वात्; तादृशस्यासम्भवात् ॥

कुर्वतोऽकुर्वतो नैक्यं सतश्चाप्यसतस्तथा ।
अजन्यस्य च जन्यस्य तथाभातमतो मृषा ॥

इति माध्यमिकमतापात इत्यर्थः । सैवेति—माध्यमिकमतमेवेत्यर्थः। शैत्यं हीत्यादिवत् स्त्रीत्वं । तदुपन्यास इति—बाधकोपन्यासे उपन्यस्तं प्रमाणं बाधितं न वा? आद्ये अस्मन्मतबाधो न स्यात् । द्वितीये बाधस्याबाधितत्वान्माध्यमिकमतं न स्यादिति माध्यमिकम-स्य दुस्थत्वादित्यर्थः ॥ २५ ॥

ननु पूर्वमेव प्रत्यभिज्ञायां विरुद्धधर्माध्यासदोषमाशङ्क्य परिहृतत्वात् उत्तरपद्ये पुनस्तदेवोच्यत इति पौनरुक्त्यमित्यत आह—पुनरपीति ।

## तत्वमुक्ताकलापः

### कालद्वैतेऽनवस्थादि

## सर्वार्थसिद्धिः

संबन्धस्तत्त्वं। वर्तमानकालसंबन्ध इदन्त्वं। न ह्यतीतं वर्तत इति सम्भवति! सर्वेषां नित्यत्वप्रसङ्गात्। वर्तमानं च यद्यतीतं कथमस्मदादिप्रत्यक्षेण गृह्येत। किंच कालद्वयान्वयरूपयोः तत्त्वेदन्त्वयोरेकवस्तुसम्बन्धः एकस्मिन् काले भिन्ने वा? पूर्वत्र विरोधः। तस्मिन् एतस्मिन् तदुभयपूर्वापरे वा क्वचिदपि काले कालान्तरसम्भेदायोगात्। अन्यथा त्रैकाल्ययौगपद्यप्रसङ्गात्। एतेन विरुद्धानुपहितविषयेति विशेषणं चासिद्धं। उत्तरत्र कालद्वयनिर्वाहककालभेदाश्रयणे तयोरपि तथेत्यनवस्थापातः। न चैवं दृष्टमिष्टं वा! न च देशद्वयप्रतिबन्दिः! अस्माभिस्तदनभ्युपगमात्। तस्मात्कालद्वयविशिष्टे वस्तुनि प्रवृत्ता कृत्स्ना

## आनन्ददायिनी

पूर्वशेषत्वान्न पृथक्संगतिरिति भावः। वर्तमानं चेति — वर्तमानस्य तत्ताश्रय (यातीतादि) भिन्नत्वेन संप्रतिपन्नवदिन्द्रियसम्बन्धाभावादिति भावः। तस्मिन्—अतीतकाले। एतस्मिन्—वर्तमानकाले। तदुभयपूर्वापरे—अतीतवर्तमानकालात्पूर्वापरयोरित्यर्थः। पूर्वश्चापरश्च—पूर्वापरं; एकवद्भावः। क्वचिदपि काले तदन्यकालसम्बन्धस्यासम्भवादिति भावः। त्रैकाल्येति—भूतभविष्यद्वर्तमानकालानामित्यर्थः। समाहारद्विगोः स्वार्थे ष्यञ् त्रैलोक्यमितिवत्। उत्तरत्रेति—भिन्नकाले वेति द्वितीयपक्षे। तयोरपि—निर्वाहककालयोरपि कालभेदमादाय सम्बन्ध-

## तत्वमुक्ताकलापः

**अत इह न मितिः प्रत्यभिज्ञेति चेन्न ।**

## सर्वार्थसिद्धिः

**प्रत्यभिज्ञा न प्रमितिः । [1]* विरुद्धविषयत्वात् शुक्तिरूप्यधीवत् प्रत्यभिज्ञात्वादेव वा दीपादिप्रत्यभिज्ञावदिति चेत्? अत्र न कालद्वयमात्रं वस्तुनि विरुद्धं। विरुद्धकालान्वयस्तु नास्तीत्यभिप्रायेण प्रतिवक्ति—नेति ।**

**[2]*अतत्तामनिदन्तां च तत्त्वेदन्त्वे निरस्यतः ।**
**अन्योन्यप्रतिषेधस्तु न ततस्सेद्धुमर्हति ॥**

## आनन्ददायिनी

इत्यनवस्थेत्यर्थः । कालद्वयमात्रं—कालद्वयसम्बन्धमात्रं । ननु तत्त्वेदन्तयोरन्योन्यप्रतिक्षेपकत्वात् कथमेकत्रेत्यत्राह—अतत्तामिति । तत्ता स्वाभावं इदन्ता च स्वाभावं तत्तेदन्ते च प्रतिक्षिपत इत्यर्थः । ततः—तस्मात् । तत्तेदन्तयोः प्रतिक्षेपकत्वं सेद्धुं (सोढुं) भवितुं नार्हतीत्यर्थः ।

## भावप्रकाशः

[1]* विरुद्धविषयत्वादिति—

अभेदाध्यवसायेन भिन्नरूपेऽपि वृत्तितः ।

इति तत्वसंग्रहवाक्यमत्रानुसन्धेयम् । [2]* अतत्तामित्यादि—तदंशेन नैतत्कालसंबन्धव्यवच्छेदः किंतु तत्कालासंबन्धस्य। इदमंशेनापि न तत्कालसंबन्धव्यवच्छेदः अपि तु एतत्कालासंबन्धस्यैवेत्यर्थः । अयमाशयः—धर्मिणि तदंशस्य पूर्वं प्रत्यक्षतो निश्चयेऽपि एतत्कालासंबन्धभ्रमस्संशयो वा न ततो निवर्तते । इदमंशमात्रप्रत्यक्षे च धर्मिणि तत्कालासंबन्ध-

## सर्वार्थसिद्धिः

[1]*एकस्य भिन्नकालाभ्यां वैशिष्ट्यं विहतं यदि ।
तथा स्यात् भिन्नदेशाभ्यां पुञ्जबुद्धिस्ततो न ते ।

## आनन्ददायिनी

तथा स्यादिति—नन्वस्माभिर्देशद्वयसम्बन्धानङ्गीकारान्न प्रतिबन्दिरित्युक्तमिति चेत्; किं तदा देशानभ्युपगमात्? तत्सत्त्वेऽपि तत्सम्बन्धा-

## भावप्रकाशः

भ्रमसंशयौ नैव निवर्तेते । अतस्तन्निवृत्तये तदेतत्कालसंवन्धावगाहिनी प्रत्यभिज्ञा प्रमितिरित्यङ्गीकरणीयम् । क्षणिकत्वानुमितिः प्रत्यक्षगृहीतधर्म्यवगाहिन्यपि प्रवृत्तसमारोपव्यवच्छेदकतया यथा पञ्चिकायां प्रमेत्यङ्गीकृतं तद्वत् स्मृतेऽस्तु पूर्वप्रत्यक्षानिवर्त्यभ्रमसंशयानिवर्तकतया न प्रमात्वापादनसंभव इति ॥

हेतुरसिद्ध इत्याह [1]*एकस्येत्यादि । अत्र 'परस्परविरुद्धपूर्वापरकालसबन्ध एवैकस्य कथमिति चेन्न; स्वापेक्षया पूर्वापरत्वस्यासिद्धेः । न हि स्वप्रागभावप्रध्वंसावच्छिन्नकालसंबन्धित्वं वस्तुनो ब्रूमः! अन्यापेक्षया पूर्वापरयोरपि कालयोरेतदपेक्षया स्वकालत्वे विरोधाभावः क्षणेऽपि स्वीकार्यः । यथा परमाणुद्वयापेक्षया पूर्वापरीभूतस्यापि तन्मध्यदेशस्य परमाण्वन्तरं प्रति स्वदेशतया न तस्य तत्संबन्धविरोधः । अन्यथा क्षणोऽपि पूर्ववत् क्षुण्णः । तथाऽपि पूर्वपरकालयोः तदुपाध्योर्वा विरुद्धयोस्तेजस्तमसोरिव कथमेकत्र समावेशः? अविरोधे तु यौगपद्यप्रसङ्ग इति चेन्न; यौगपद्ये हि तयोर्विरोधः न त्वेकवस्तुसंबन्धे! अन्यथा एकज्ञानसंबन्धेऽपि विरोधप्रसङ्गेन प्रत्यभिज्ञास्वरूपस्यानुत्पत्तिप्रसङ्गात् । यदि पुनः कालयोस्स्वरूपभेदेन तादात्म्यविरोधो विवक्षितः तर्हि रूपरसयोरिव नैकवस्तुसंबन्धं प्रतिभन्त्स्यति' इति न्यायसिद्धाञ्जन-

## तत्वमुक्ताकलापः

**स्वस्य स्वाभावकाले विहतिनियमनात्**

## सर्वार्थसिद्धिः

**तर्हि कालद्वयविरोधः कुत्रेत्यत्राह—स्वस्येति। नियमनात्—[1]*यथाप्रमाणं व्यवस्थापनादित्यर्थः। अत एवातीतस्य वर्त-**

## भावप्रकाशः

सूक्तिरनुसन्धेया [1]* यथाप्रमाणमिति—एतेन रत्नकीर्तिना 'न हि वयं परि-भाषामात्रादेकत्र कार्ये देशभेदादविरुद्धे शक्त्यशक्ती ब्रूमः! किं तु विरो-धाभावात्। तद्देशकार्यकारित्वं हि तद्देशकार्याकारित्वेन विरुद्धं; न पुन-र्देशान्तरे तत्कार्याकारित्वेन अन्यकार्यकारित्वेन वा। यद्येवं तत्काल-कार्यकारित्वं तत्कालकार्याकारित्वेन विरुद्धं; न पुनः कालान्तरे तत्कार्याकारित्वेन अन्यकार्यकारित्वेन वा। तत्कथं कालभेदेऽपि विरोधः इति चेत्; उच्यते—द्वयोर्हि धर्मयोरेकत्र धर्मिण्यनव-स्थितिनियमः परस्परपरिहारास्थितिलक्षणो विरोधः। स च साक्षात्परस्पर-प्रत्यनीकतया भावाभाववद्वा भवेत्। एकस्य वा नियमेन प्रमाणा-न्तरेण बाधनान्नित्यत्वसत्त्ववद्वा भवेदिति न कश्चिदर्थभेदः। तद-त्रैकधर्मिणि तत्कालकार्यकारित्वाधारे कालान्तरे तत्कार्याकारित्वस्य अन्य-कार्यकारित्वस्य वा नियमेन प्रमाणान्तरेण बाधनाद्विरोधः; तथाहि—यत्रैव धर्मिणि तत्कालकार्यकारित्वमुपलब्धं न तत्रैव कालान्तरे तत्कार्याकारित्वं अन्यकार्यकारित्वं वा ब्रह्मणाऽप्युपसंहर्तुं शक्यते येनानयोरविरोधस्स्यात्। क्षणान्तरे कथितप्रसङ्गविपर्ययहेतुभ्यामवश्यं-भावेन धर्मिभेदप्रसाधनात्। नच प्रत्यभिज्ञानादेकत्वासिद्धिः; तत्पौ-रुषस्य निर्मूलितत्वात्। अत एव वज्रोऽपि पक्षकुक्षौ निक्षिप्तः।

## सर्वार्थसिद्धिः

**मानत्वं वर्तमानस्य वा अतीतत्वमिह न प्रवर्तनीयं । ननु तत्त्वे-दन्त्वे तावत् विरुद्धे; अन्यथा यौगपद्ये विरोधाभावप्रसङ्गात् ।**

## आनन्ददायिनी

नभ्युपगमाद्वा ? उभयथाऽपि पुञ्जबुद्धिर्न स्यात् । नानादेशस्थानामेकदेशसम्बन्धः पुञ्ज इति भावः । न प्रवर्तनीयं—न प्रसञ्जनीयं । अन्यथेति—विरुद्धयो रूपरसयोर्यौगपद्यदर्शनादिति भावः ।

## भावप्रकाशः

कथमसौ स्फटिको वराकः कालभेदेनाभेदसाधनाय दृष्टान्तीभवितुमर्हति ? नचैवं समानकालकार्याणां देशभेदेऽपि धर्मिभेदो युक्तः; भेदसाधकप्रमाणाभावादिन्द्रियप्रत्यक्षेण निरस्तविभ्रमाशङ्केनाभेदप्रसाधनाच्च इति न कालभेदेऽपि शक्त्यशक्त्योर्विरोधः स्वसमयमात्रादपहस्तयितं शक्यः' इति यदुक्तं तदलग्नकमिति बोधितम् । तत्कालकार्यकारित्वं कालान्तरे तत्कार्याकारित्वेन न विरुध्यते प्रसङ्गतद्विपर्ययोर्धर्मिभेदसाधकत्वाभावस्योपपादितत्वात् । यद्येवं नाङ्गीक्रियते एकस्यार्थक्षणस्य पुरुषभेदेन विज्ञानजननतद्विरहयोरविवादतया पूर्वोक्तप्रसङ्गतद्विपर्ययाभ्यां देशभेदेन क्षणभेदावश्यम्भावेन एकोऽपि क्षणो न स्यात् । अभेदस्य स्वलक्षणव्यतिरिक्तत्वे कथमिन्द्रियप्रत्यक्षं तत्साधयति? स्वलक्षणरूपत्वे तु प्रत्यभिज्ञाप्रत्यक्षेण पूर्वापरकालिकाभेदस्य कथमसिद्धिः अभिलापसंसर्गेणेति चेत्; तर्हि मूकतैव ज्यायसी । योगिज्ञाने योगाभ्यासबलसहकृतं मन इव प्रत्यभिज्ञायामपि संस्कारसहकृतमिन्द्रियमेव करणमिति 'निष्पादिताक्रिये चार्थे' इत्यादितत्वसंग्रहोक्तदूषणस्यापि नावकाश इति भावः । 'प्रमातृप्रमेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारणतत्स्मरणपूर्वकानुमानाभ्युपगमोऽपि दुश्शकः' इति भाष्य-

## तत्वमुक्ताकलापः

**स्वेन चात्रैककाल्यात्**

## सर्वार्थसिद्धिः

तत एव कालद्वयमप्येकस्य विरुद्धमिति तत्राह—स्वेनेति। पूर्वापरकालयोगो हि विरुद्धः। स्वेनोपाधिनाऽवच्छिन्नस्यैकस्य कालस्यावान्तरोपाधिभिर्नानात्वेऽपि तत्तदुपाधीनामेव तत्तदवान्तरकालद्वयान्वयविरोधः। अन्यापेक्षया पूर्वापरकालयोरन्यस्य विरुद्धत्वे क्षणकालस्याप्यन्यापेक्षया पौर्वापर्यात्तत्कालवर्तित्वमपि वस्तुनो विरुध्येत। क्षणकालसंबन्धो वस्तुनः काल्पनिक इति चेत्; ततोऽपि माध्यमिकोत्थानम्। ननु स्वरूपसत्यता क्षणसंबन्धित्वं च साध्यते न केवलं क्षणकालमात्रसंबन्धित्वं। अतस्तुर्यबौद्धात्त्रयाणां विशेष इति; तर्हि सिद्धसाधनं। अतः क्षणिकपक्षे स्थिरपक्षे वा स्वाभावकाले वृत्तिर्विरोधाद्वारणीया न तु स्वकालवृत्तिरिति भावः। अत्र च

## आनन्ददायिनी

तत एवेति—तत्तेदन्तयोर्विरोधात्तद्घटकीभूतकालद्वयमप्येकस्य विरुद्धमित्यर्थः। क्षणकालस्येति—अविशेषादिति भावः। ततोऽपीति—क्षणकालसम्बन्धाभावे कालासम्बन्धिनो वस्तुनः कदाऽप्यभावाच्च शशशृङ्गवदिति भावः। स्वरूपसत्यतेति—स्वरूपसत्यत्वसाधनात्तत्क्षणसम्बन्धस्य काल्पनिकत्वेऽपि तुर्याद्भेद इति भावः। स्वरूपसत्यत्वस्य सिद्धत्वात् क्षणमात्रसम्बन्धस्य (काल्पनिकत्वे वस्तुतः) मिथ्यात्वाच्च क्षणिकत्वाभा (वात्) वेन सिद्ध-

## तत्वमुक्ताकलापः

**काले कालानपेक्षे कथमपि सुवचौ नानवस्था-**

## सर्वार्थसिद्धिः

विरोधानवस्थयोरशङ्कापि नास्तीत्याह—काले इति। न ह्ययमपि काल एतस्मिन् काले किमुत कालान्तरं! तत्कालोऽपि न तस्मिन् काले; किमुतायं? अत एतत्कालतत्कालौ वा कालान्तरं वा अनपेक्ष्य एकस्मिन् वस्तुनि कालद्वयं संबध्यते इति स्थिते कथञ्चिदप्यनवस्थाविरोधयोर्नावकाशः। तथाऽपि कालद्वयं परस्पराभावनान्तरीयकं तदात्मकं वा कथमेकत्र स्यादिति चेन्न; कालद्वयस्यान्योन्यस्मिन्नभावेऽपि तदुभयसंबन्धिनि वस्तुन्यभावाभावात्। यस्तु तस्मिन् वस्तुन्यसंबद्धः कालः तस्य तत्र सद्भावं न ब्रूमः। न हि वयं नित्यानित्यविभागं निराकुर्मः! ॥ २६ ॥

## आनन्ददायिनी

साधनामित्यर्थः। एतास्मिन्निति। न वर्तत इति शेषः। किमुतेति—अयमेव काल एतस्मिन् न वर्तते चेत् भूतकालादौ तद्वृत्तिताशङ्का दूरे इत्यर्थः। परस्पराभावनान्तरीयकमिति—परस्पराभावव्याप्तमित्यर्थः। कालद्वयस्येति—परस्पराभावनान्तरीयकत्वे परस्पराभावरूपत्वेऽपि वा कालिकविरोधितया नैकस्मिन् काले तद्द्वयं सम्बध्नाति। एकस्मिन् वस्तुनि सम्बन्धे न विरोध इत्यर्थः। नन्वेवं सति सर्वकालानां वस्तुसम्बन्धे विरोधाभावात् सर्वं वस्तु सर्वकालसम्बन्धीति सर्वं नित्यं स्यात्। तथा च नित्यानित्यविभागो न स्यादित्यत्राह—यस्त्विति। न हि वयं तत्रासम्बद्धकालसम्बन्धमपि ब्रूमः! येन नित्यानित्यविभागं निराकुर्म इत्यर्थः ॥ २६ ॥

## तत्वमुक्ताकलापः

**विरोधौ ॥ २६ ॥**

**प्रत्यक्षं वर्तमानं प्रथयति यदिहावर्तमानाद्विभक्तं तस्मात्तेनैव सर्वं क्षणिकं;**

## सर्वार्थसिद्धिः

अथ प्रत्यक्षेणैव प्रत्यभिज्ञाप्रत्यक्ष(स्य)विरोधं भावानां क्षणिकत्वसिद्धिं च शङ्कते—प्रत्यक्षमिति। अस्मदादिप्रत्यक्षं तावद्वर्तमानमात्रविषयमिति सर्वसंमतं। अन्यथा दृश्यमानानां पदार्थानां तत्क्षणापेक्षया पूर्वापरविशेषाणामपि प्रत्यक्षत्वप्रसङ्गात्। तस्मात् अगृहीतपूर्वापरविशेषं वर्तमानग्राहि प्रत्यक्षमवर्तमानाद्व्यावृत्तमेव स्वविषयं गृह्णाति। एतदेव च क्षणिकत्वं वस्तूनां यदपूर्वोत्तरत्वं। अतस्संस्कारनिरपेक्षप्रत्यक्षबाधिता प्रत्यभिज्ञा देशान्तरस्थग्राहिशुक्तिरूप्यधीवत् संस्कारोपनीतका-

## आनन्ददायिनी

पूर्वसंगतिमभिप्रेत्याह— अथेति। प्रत्यभिज्ञाप्रत्यक्षविरोधं— प्रत्यभिज्ञा(या)बाधमित्यर्थः। पूर्वापरेति—तत्क्षणापेक्षया पूर्वापरकालिकरूपादि(कत्वादिरूप)विशेषाणामित्यर्थः। अवर्तमानाद्व्यावृत्तं—वर्तमानाभिन्नं। एतदेव चेति—एतत्क्षणकालवर्तिनः पूर्वापरक्षणवर्तिभिन्नत्वे तत्क्षणमात्रावृत्तित्वामि(त्तित्वंवे)त्यर्थः। अपूर्वोत्तरत्वं—पूर्वोत्तरकालावर्तित्वं तत्क्षणमात्रवृत्तित्वमिति यावत्। संस्कारनिरपेक्षेति—संस्कारसापेक्षप्रत्यभिज्ञातो बलवदिदन्त्वमात्रग्राहि प्रत्यक्षमित्यर्थः। ननु भिन्नत्वे पूर्वापरयोः कथं वर्तमानाद्भेदधीरित्यत्राह—देशान्तरस्थेति। यथ देशान्तरस्थस्मृत्युपनीतरूपतद्भे (रजतभे) दसंवृत्या शुक्तौ तदैक्यधीः

## तत्वमुक्ताकलापः

**इति न सत् तावदित्यप्रतीतेः । तत्कालासत्त्वमेव ह्यपनयति सतो वर्तमानत्वबोधः कालेऽन्यत्रापि सत्त्वं प्रमितमिति कथं तद्विरोधप्रसङ्गः ? ॥ २७ ॥**

## सर्वार्थसिद्धिः

लान्तरस्थभेदसंवृत्या तस्मिन्निदन्त्वं अस्मिन् वा तत्त्वमारोप्य कल्पितैक्यविषयेति । अत्र प्रत्यक्षवृत्तान्तानभिज्ञोक्तिरियमित्यभिप्रायेण वक्ति—न सदिति । प्रत्यक्षस्य कालान्तरसम्बन्धप्रतिक्षेपकत्वाभावमाह—तावदिति । वर्तमानत्वविधिरेवावर्तमानत्वनिषेधात्मा तावन्मात्रकालवर्तित्वं नियच्छेदित्यत्राह—तत्कालेति । तत्कालसत्त्वविधिर्हि तदानीमसत्तां निरुन्ध्यात् न तु कालान्तरसत्तामित्यर्थः । तथाऽपीदङ्कारवता प्रत्यक्षेण कालान्तरसत्त्वस्यानालम्बनात् तत्प्रतिक्षेप इति चेत्; तत्राह—कालेऽन्यत्रापीति ।

## आनन्ददायिनी

तथेदंवस्तुनि तस्मिन् वा स्मृत्युपनीते भेदज्ञानप्रतिबन्धकदोषेणाभेदधीरित्यर्थः । प्रत्यक्षवृत्तान्तानभिज्ञतां दर्शयतीत्याह—प्रत्यक्षेति । अवर्तमानत्वनिषेधात्मा—कालान्तरसत्त्वनिषेधात्मा । तत्कालेति—वर्तमानकालसंबन्धो न कालान्तरसंबन्धाभाव इति भावः । तथा च सोऽपि तत्काले असंबन्धं निरुन्ध्यात् न तु तस्य कालान्तरसंबन्धमन्यकाले निरुन्ध्यादित्यर्थः । तथाऽपीति–साधकाभावादिति भावः । ननु प्रत्यभिज्ञायाः प्रामाण्यसंदेहात् अन्यस्य च साधकस्याभावात् कथं प्रमितत्वमित्यत्राह–अयं भाव इति । इदमिति वर्तमानत्वात्प्रत्यक्षत्वबाधात् प्रत्यभिज्ञाया अप्रामाण्यं वाच्यं । तत्रेदमिति प्रत्यक्षस्य

## सर्वार्थसिद्धिः

अयं भावः—यथेदमिति तत्कालसत्ता गृह्यते तथा तदिदमिति कालद्वयसत्त्वमपि प्रत्यक्षेणैव गृहीतं। एवं सति न्यूनाधिकविषयतामात्रमिह प्रत्यक्षयोः न विरुद्धविषयत्वं अन्यथाऽतिप्रसङ्गादिति। अल्पविषयस्य प्राबल्यमालम्भविधौ दृष्टमिति चेन्न; विरोधे सत्येव बलाबलविमर्शात्। इह तु विरोध एव न समस्ति। अपिच प्रत्यक्षं किं वर्तमानत्वेन स्वविषयं गृह्णाति उत वस्तुवृत्त्या वर्तमानम्? नाद्यः; त्वन्मते प्रत्यक्षतयाऽभिमतस्य निर्विकल्प-

## आनन्ददायिनी

विरोधिविषयत्वाद्बाधकत्वं उत न्यूनविषयत्वाद्वा? इति विकल्पमभिप्रेत्य आद्ये आह—यथेदमिति। द्वितीय आह—अन्यथेति। विरोधिविषयत्वाभावेऽपि न्यूनाधिकविषयतामात्रेण बाध्यबाधकभावे घटप्रत्यक्षात् घटपटसमूहालम्बनबाधप्रसङ्गादित्यर्थः। विरोधे सत्येवेति—यद्यपि न हिंस्यादग्नीषोमीयवाक्ययोर्वैयर्थ्यपरिहारायान्यतरसंकोचे (कोचरूपबाधे) कर्तव्ये सामान्यस्य(अधिकविषयस्य)संकोचो युक्तः। उभयसाफल्यसिद्धेः; रजतभ्रमस्य न्यूनविषयस्याप्यधिकविषयशुक्तित्वनीलपृष्ठत्वरजतत्वाभावाद्यनेकविषयेणापि बाधदर्शनात् बाध्यबाधकभावे न न्यूनाधिकविषयत्वादि प्रयोजकं; तथाऽपि तदभ्युपगम्यैतदु (प्रौढवादेनो) क्तमिति द्रष्टव्यं। किञ्च वर्तमानविषयकतया क्षणिकत्वप्रत्यभिज्ञाबाधश्च त्वन्मतानुसारेण? उत अस्मन्मतानुसारेण इति विकल्पाभिप्रायेणाह—अपिचेति। यद्वा वर्तमानज्ञानस्य (भूतादिविषय) प्रत्यभिज्ञाबाधकत्वं वर्तमानत्वरूपविरुद्धधर्मविषयत्वेन उत स्वरूपविषयत्वेन? इति विकल्प्य दूषयति—अपिचेति। अद्येऽपि किं निर्विकल्पकं सविकल्पकं वा? इति विकल्पमभिप्रेत्य आद्यं दूषयति—त्वन्मते इति। प्रत्यक्षतयाऽभिमतस्य—प्रमाणतयाऽभिमतस्य।

## सर्वार्थसिद्धिः

कस्य विकल्पबोधनाशक्तेः। सविकल्पकस्य तु प्रत्यक्षत्वानभ्युपगमात्। न द्वितीयः; इन्द्रियसंयुक्तक्षणस्य तज्जन्यज्ञानकालेऽतीतत्वात् तदुत्तरक्षणस्य स्वपूर्वक्षणेन्द्रियसम्प्रयोगायोगेन तज्जन्यधीविषयत्वायोगात्। तदातनाक्षिसंप्रयोगस्य तु तात्कालिकबुद्धिहेतुत्वासिद्धेः। अतस्ते कथं प्रत्यक्षं वर्तमानग्राहि? अस्मन्मते त्विन्द्रियसंप्रयोगस्य तद्विशिष्टवस्तुनः तदुपहितकालांशस्य च स्थायित्वेन धीक्षणानुवृत्तौ तद्विषयतया प्रत्यक्षोदयात्। सम्प्रयोगानन्तरक्षणे धीरपि निवर्त्यते। अतो नासंप्रयुक्तं नास्थिरं नावर्तमानं वा प्रत्यक्षमिति।

[1]* पूर्वापरबहुव्यक्तिव्याप्तिग्रहणसंभवा।

## आनन्ददायिनी

द्वितीयं दूषयति—सविकल्पकस्येति। तथा च अप्रमाणत्वान्न तेन प्रत्यभिज्ञाबाध इत्यर्थः। यद्यपि प्रत्यभिज्ञा प्रमाणं तन्मते; तथाऽपि विनिगमकाभावात् प्रत्यक्षतः क्षणिकत्वसिद्धिवत् स्थायित्वमपि सिध्यतीति भावः। वर्तमानविषयत्वमिन्द्रियसंप्रयुक्तक्षणविषयतया उत तदुत्तरक्षणविषयतया? इति विकल्पमभिप्रेत्य आद्यं दूषयति—इन्द्रियसंप्रयुक्तेति। क्षणिकवादिनो ज्ञानोत्पत्तिकाले तस्याभावादिति भावः। द्वितीयं दूषयति—तदुत्तरक्षणस्येति। प्रत्यक्षस्य सन्निकृष्टार्थगोचरत्वादिति भावः। तदात (नीन्त) नेति—पौर्वापर्याभावादिति भावः। आद्यद्वितीये आह—अस्मन्मते त्विति। पूर्वापरेति—पौर्वकालिकीनामापरकालिकीनां व्यक्तीनां

## भावप्रकाशः

सूक्तिमाकलय्याह—

[1]* पूर्वापरबहुव्यक्तीत्यादि। यद्यपि न्यायबिन्दौ धर्मकीर्तिना—

## भावप्रकाशः

'अनुमानं द्विधा स्वार्थं परार्थं च। तत्र स्वार्थं त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमानम्। (७ परिच्छेदे)। त्रिरूपलिङ्गाख्यानं परार्थानुमानं। कारणे कार्योपचारात्। तद्विविधं प्रयोगभेदात्। साधर्म्यवत् वैधर्म्यवच्चेति नानयोरर्थतः कश्चिद्भेदः प्रयोगभेदात्। तथा स्वभावहेतोः प्रयोगः यत्सत् तत्सर्वमनित्यं यथा घटादिरिति। कार्यहेतोरपि प्रयोगः यत्र धूमस्तत्राग्निः यथा महानसादौ अस्ति चेह धूमः इति। वैधर्म्यवतः प्रयोगो यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एव यथा नीलादिविशेषः न चैवमिहोपलब्धिलक्षणप्राप्तस्य सत उपलब्धिर्घटस्येति। अनुपलब्धिप्रयोगः असत्यनित्यत्वे नास्ति सत्त्वमुत्पत्तिमत्त्वं वा असंश्च शब्द उत्पत्तिमान् कृतको वेति। स्वभावहेतुप्रयोगः असत्यग्नौ न भवत्येव धूमोऽत्र चास्तीति। कार्यहेतोः प्रयोगः साधर्म्येणापि हि प्रयोगोऽर्थाद्वैधर्म्यगतिरिति; असति तस्मिन् साध्येन हेतोरन्वयाभावात्। तथा वैधर्म्येणाप्यन्वयगतिः; असति तस्मिन् साध्याभावे हेत्वभावस्यासिद्धेः। न हि स्वभावप्रतिबन्धेऽसत्येकस्य निवृत्तावपरस्य नियमेन निवृत्तिः। स च द्विप्रकारः सर्वस्य तादात्म्यलक्षणः तदुत्पत्तिश्चेत्युक्तं। तेन हि निवृत्तिं कथयता प्रतिबन्धो दर्शनीयः। तस्मात् निवृत्तिवचनमाक्षिप्तप्रतिबन्धोपदर्शनमेव भवति। यच्च प्रतिबन्धोपदर्शनं तदेवान्वयवचनमित्येकेनापि वाक्येनान्वयमुखेन व्यतिरेकमुखेन वा प्रयुक्तेन सपक्षासपक्षयोः लिङ्गस्य सदसत्त्वख्यापनं कृतं भवतीति नावश्यवाक्यद्वयप्रयोगः' इत्यन्तग्रन्थे अन्वयप्रयोगे व्यतिरेकावगतिरिति प्रतिपादितं; तथाऽपि अक्षणिकस्याप्रामाणिकत्वे—

> तद्रूपस्यैव चार्थस्य क्षणिकत्वं प्रसाध्यते।
> व्याप्तिस्सर्वोपसंहारा तस्मिन्नेवाभिधीयते॥

इति तत्वसंग्रहोक्तदिशा यत्सत्तत् क्षणिकमिति पक्षसपक्षविभाग-

## भावप्रकाशः

मकृत्वा सर्वोपसंहारेण व्याप्तिग्रहणं न संभवति देशकालान्तराननुगमात्; यथोक्तं कुमारिलेन—

न चान्वयविनिर्मुक्ता प्रवृत्तिर्लिङ्गशब्दयोः ।

इति । न च क्षणग्रहणे संतानग्रहणवत् रूपमात्रग्रहणे घटनिश्चयवच्च अतद्रूपपरावृत्तयोस्साध्यसाधनयोः प्रत्यक्षाध्यवसेयतया व्याप्तिग्रहोपपत्तिरिति रत्नकीर्त्युक्तं युक्तं; क्षणसंतानयोरूपघटयोश्चैकज्ञानीयैकजातीयविषयत्वमेवेत्यध्यवसेयत्वाख्याविलक्षणविषयताङ्गीकारस्यायुक्तत्वात् माध्यमिकैरप्यनुभवविरोधेन दूषितत्वाच्चेति बुद्धिसरे विवेचयिष्यमाणत्वात् । नापि व्यापकानुपलम्भात्मना विपर्यये बाधकप्रमाणेन व्याप्तग्रहस्संभवति; यस्य क्रमाक्रमिकार्यविषयत्वं नास्ति न तच्छक्तं यथा शशविषाणं नास्ति नित्याभिमतस्य भावस्य क्रमाक्रमिकार्यविषयत्वामिति व्यापकानुपलम्भस्य अक्षणिकाज्ञानेऽसंभवात् । 'न ह्यस्माभिः स्वातन्त्र्येण प्रमाणतया व्यतिरेकसाधिन्या अस्या व्यापकानुपलब्धेः प्रयोगःक्रियते! किं तर्हि; प्रसङ्गापादनं परं प्रति क्रियते' इति तत्वसंग्रहपञ्जिकोक्तं तु न युक्तं; एतत्पक्षस्य क्षणभङ्गसिद्धौ 'न तावदयं प्रसङ्गो हेतुः साध्यधर्मिणि प्रमाणसिद्धत्वात् पराभ्युपगमसिद्धत्वाभावात् विपर्ययपर्यवसानाभावाच्च' इति रत्नकीर्तिनैव दूषितत्वात्। ननु क्षणभङ्गसिद्धौ रत्नकीर्तिना—'इह वस्तुन्यपि धर्मिधर्मव्यवहारो दृष्टो यथा गवि गोत्वं पटे शुक्लत्वं तुरगे गमनमित्यादि। अवस्तुन्यपि धर्मिधर्मव्यवहारो दृष्टो यथा शशविषाणे तीक्ष्णत्वाभावो वन्ध्यापुत्रे वक्रत्वाभावो गगनारविन्दे गन्धाभाव इत्यादि । तत्रावस्तुनि धर्मित्वं नास्तीति किं वस्तुधर्मेण धर्मित्वं नास्ति आहो स्विदवस्तुधर्मेणापि? प्रथमपक्षे सिद्धसाधनं । द्वितीयपक्षे तु स्ववचनविरोधः । यदाहुर्गुरवः—

धर्मस्य कस्यचिदव[२०]स्तुनि मानसिद्धा
बाधा विधिव्यवहृतिः किमिहास्ति नो वा ।

## भावप्रकाशः

क्वाप्यस्ति चेत् ; कथमियन्ति न दूषणानि ?
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ॥ '

इत्यारभ्य अक्षणिकस्याभावे सन्देहे वाऽवस्तुधर्मेण धर्मित्वमव्याहतमित्युक्तं। एवं 'वस्तुनस्तु प्रत्यक्षानुमानाभ्यामेव सिद्धिः । तयोरभावे नियमेनाश्रयासिद्धिरिति युक्तम् । असत्तासाधने त्ववस्तुधर्मो हेतुरवस्तुनि विकल्पमात्रासिद्धे धर्मिणि नाश्रयासिद्धिदोषेण दूषयितुं शक्यः। तथाऽक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधस्सिध्यत्येव । तथा विकल्पादेवाक्षणिको विरोधी सिद्धः । विकल्पोल्लिखितश्चास्य स्वभावो नापर इत्यपि व्यवहर्तव्यं । अन्यथा तदनुवादेन क्रमाक्रमादिरहितत्वादिनिषेधादिकमयुक्तं तत्स्वरूपस्यानुल्लेखादित्यक्षणिकशशविषाणादिशब्दानुच्चारणप्रसङ्गः। अस्ति च ; अतो यथा प्रमाणाभावेऽपि विकल्पसत्त्वस्य वन्ध्यासुतादेस्सौन्दर्यादिनिषेधोऽनुरूपः ; तथा विकल्पोपनीतस्यैवाक्षणिकस्वरूपस्य तत्प्रत्यनीकाकारेण सह विरोधव्यवस्थायां कीदृशो दोषस्स्यात्? यदि चाक्षणिकानुभवाभावाद्विरोधप्रतिषेधः तर्हि वन्ध्यापुत्राद्यननुभवादेव सौन्दर्यादिनिषेधोऽपि मा भूत् । नन्वेवं विरोधस्यापारमार्थिकत्वं; तद्द्वारेण क्षणभङ्गसिद्धिरप्यपारमार्थिकी स्यादिति चेत् ; न हि विरोधो नाम वस्त्वन्तरं किञ्चित् उभयकोटिदत्तपादं संबद्धाभिधानमिष्यतेऽस्माभिरुपपद्यते वा! येनैकसंबन्धिनो वस्तुत्वाभावेऽपारमार्थिकस्स्यात् । यथा त्विष्यते तथा पारमार्थिक एव । विरुद्धाभिमतयोरन्योन्यस्वरूपपरिहारमात्रं विरोधार्थः । तच्च भावाभावयोः पारमार्थिकमेव । न भावोऽभावरूपमाविशति । नाप्यभावो भावरूपं प्रविशतीति योऽयमनयोरसङ्करानियमः स एव पारमार्थिको विरोधः । कालान्तरैकरूपतया हि नित्यत्वम्! । क्रमाक्रमौ क्षणद्वयोऽपि भिन्नरूपतया । ततो नित्यत्वक्रमाक्रमिकार्यकारकत्वयोर्भावाभाववद्वि-

## भावप्रकाशः

रोधोऽस्यैव । ननु नित्यत्वं क्रमयौगपद्यवत्त्वं च विरुद्धौ विधूय नापरो विरोधो नाम ; कस्य वास्तवत्वम् ? इति चेत् ; न ; न हि धर्मान्तरस्य संभवेन विरोधस्य पारमार्थिकत्वं ब्रूमः ! किंतु विरुद्धयोर्धर्मयोस्सद्भावे । अन्यथा विरोधनामधर्मान्तरसंभवेऽपि यदि न विरुद्धौ धर्मौ क्व पारमार्थिकविरोधसद्भावः? विरुद्धौ च धर्मौ; तावतैव तात्विको विरोधव्यवहारः। किमपरेण प्रतिज्ञामात्रसिद्धेन विरोधनाम्ना वस्त्वन्तरेण?' इति च। इत्थं च न कोऽपि दोष इति चेत्; उच्यते—वन्ध्यापुत्रादौ सौन्दर्यनिषेधो माभूदिति त्विष्टमेव । शशविषाणादिशब्दोच्चारणोपपत्तिः बुद्धिसरे (२५) वक्ष्यते ॥ अवस्तुविषये प्रसङ्गे न व्यवहारः । अपि च—

वस्तुत्वं यत्र तत्रास्ति विधिबाधाव्यवस्थितिः ।
इति व्याप्तया नयाभिज्ञाः प्रत्यूचुस्त्वद्गुरोर्गिरम् ॥

किंच—

अङ्गीकरोषि यदवस्तु विकल्पसिद्धं
बाधाविधिव्यवहृतिं च विरुद्धधर्मौ ।
तद्वद्विरोधमपि तद्भवतो विरोधा-
सत्यत्वतः कुत इयं क्षणिकत्वसिद्धिः ? ॥

तथा हि विरुद्धधर्मव्यतिरेकेण विरोधधर्मोऽस्ति न वा? आद्ये तस्य पारमार्थ्याङ्गीकारे अवस्तुनो वस्तुधर्मेण धर्मित्वं नास्तीति त्वत्सिद्धान्तविरोधः। वस्त्ववस्तुनोस्संबन्धानुपपत्तिश्च बुद्धिसरे विवेचयिष्यते । अपारमार्थ्ये क्षणिकत्वस्य कथं परमार्थता? द्वितीये विरुद्धधर्मयोः परमार्थत्वे सिद्धान्तविरोधः । तयोरपारमार्थ्ये तद्व्यतिरेकेणाविद्यमानो विरोधः परमार्थ इति भाषणं चक्षुषी निमील्य गुरूक्तिश्रद्धामात्रेणैवेति । अपि च न्यायबिन्दौ धर्मकीर्तिना ' त्रीण्येव लिङ्गानि अनुपलब्धिः स्वभावकार्ये चेति । अत्र द्वे वस्तुसाधने एकः प्रतिषेधहेतुः ' इति अनुपलब्धि-

## भावप्रकाशः

सामान्यस्य प्रतिषेधहेतुत्वाभिधानपूर्वकं एकादशविधानुपलब्ध्यन्तर्गत-व्यापकानुपलब्धेः 'व्यापकानुपलब्धिर्यथा नात्र शिंशपा वृक्षाभावादिति' इति प्रतिषेधोदाहरणमुक्तं। एवं च 'व्यापकानुपलम्भात्मना विपर्यय-बाधकप्रमाणेन व्याप्तेस्साधनात्' इत्युपक्रम्य 'ननु व्यापकानुपलब्धिरिति यद्यनुपलब्धिमात्रं तदा न तस्य साध्यबुद्धिजनकत्वं अवस्तुत्वात्। नचान्योपलब्धिर्व्यापकानुपब्धिरभिधातुं शक्या! भूतलादिवत् अन्यस्य कस्यचिदनुपलब्धेरिति चेत्; तदसङ्गतं; धर्म्युपलब्धेरेवान्यत्राप्यनु-पलब्धितया व्यवस्थापनात्। यथा नेह शिंशपा वृक्षाभावादित्यत्र वृक्षा-पेक्षया केवलप्रदेशस्य धर्मिण उपलब्धिर्दृश्यानुपलब्धिः। शिंशपापेक्षया च केवलप्रदेशस्य धर्मिण उपलब्धिरेव शिंशपाभावोपलब्धिरिति स्वभाव-हेतुपर्यवसायिव्यापारो व्यापकानुपलम्भः। तथाहि नित्यस्य धर्मिणो विकल्पबुद्ध्यवसितस्य क्रमिकारित्वाक्रमिकारित्वापेक्षया केवलग्रहणमेव क्रमिकारित्वाक्रमिकारित्वानुपलम्भः अर्थक्रियापेक्षया च। केवलप्रतीति-रेवार्थक्रियावियोगप्रतीतिरिति व्यापकानुपलम्भान्तरादस्य न कश्चिद्विशेषः' इति रत्नकीर्तिना व्यापकानुपलब्धेः स्वभावहेतुपर्यवसायित्वाभिधान-क्लेशोऽनुचितः। स्वभावहेतुना यत्सत् तत् क्षणिकमिति व्याप्तिसिद्धौ व्यापकानुपलम्भप्रमाणसामञ्जस्यार्थं विफलबहुतरपरिक्लेशस्यानुचितत्वात्। व्यतिरेकस्य प्रमाणसिद्धता यत्र तत्रैव व्यतिरेकेणान्वयगतेस्संभवदुक्ति-कत्वात्। एतत्तात्पर्येणैव तत्वसंग्रहकृताऽस्य प्रसङ्गहेतुत्वाभिधानं। न च तदपि संभवति! भवदुक्तदोषादेव। उक्तदिशा असपक्षेऽसत्त्वानिश्चया-संभवेन हेतोस्त्रिरूपत्वासंभवाच्च। अत एव केवलान्वयिनीदं रूपं त्यज्यते नैयायिकैः। स्वभावहेतोरसंभवश्च न्यायपरिशुद्धावुक्तः। 'कथं च तादात्म्ये लिङ्गलिङ्गिभावः? तथात्वेन वा भेदे कथं तत्। यदि च शिंशपात्ववृक्षत्वयोरैक्यं; सर्वोऽपि वृक्षश्शिंशपैव स्यात् न वा

## सर्वार्थसिद्धिः

[1]*न काचिदपि युक्तिस्स्यात् सर्वक्षणिकवादिनः ॥ २७ ॥

ननु [2]* 'जातस्य हि ध्रुवो मृत्युः' इति प्रसिद्धं। अतस्सतां

## आनन्ददायिनी

क्षणिकवादिमते ग्राहकः कर्ता नैकोऽस्ति । तस्मात्तदूहापेक्षो व्याप्तिग्रहः तन्मूलश्च तर्कोऽनुमानं च न सम्भवतीत्यर्थः ॥ २७ ॥

पूर्वशेषतया न पृथक्संगतिरित्यभिप्रायेणाह—नन्विति । केचिदाक्षेपसंगतिमाह नन्वितीत्याहुः । मृत्युः—विनाशः । जननं—सत्ता ।

## भावप्रकाशः

कश्चित्' इति । अयं चार्थोऽग्रे स्थापयिष्यते । अतो व्याप्तिग्रहणोपपादनप्रयासः गुरूक्तिश्रद्धामात्रनिबन्धन एवेति । एतत्तात्पर्येण [1]* न काचिदपि युक्तिस्स्यादित्युक्तम् ॥

[2]* जातस्य हि ध्रुवो मृत्युरितीति—एतेन परोक्तध्रुवभावित्वहेतोः पक्षसत्त्वस्य सिद्धान्तिसंमतत्वप्रदर्शनव्याजेन गीताभाष्योक्तदिशा तत्वसंग्रहकृतो विनाशद्वैविध्यकल्पनमनुचितामिति सूचितं; तथाहि— 'उत्पत्तिविनाशादयस्सतो द्रव्यस्यावस्थाविशेषाः' इत्यादिभाष्येण उत्पाद इव विनाशोऽपि सहेतुकः असत्त्वाभाववांश्च प्रमाणप्रतिपन्न इत्यादिकं स्थापितं । धर्मधर्मिणोर्भेदः एकस्यैव कालभेदेन नानास्वभावयोगश्च संभवतीत्यत्रैव पूर्वं व्यवस्थापितं । संबन्धानुपपत्तिश्च परिहरिष्यते । अतः उत्पत्तिप्रतीतिरिव नाशसामान्यप्रतीतिः प्रमेति युक्तम्। तत्वसंग्रहे तु—

अहेतुकत्वात्किञ्चायं असन् वन्ध्यासुतादिवत् ।
अथवाऽऽकाशवन्नित्यो न प्रकारान्तरं यतः ॥ ३७० ॥
असत्त्वे सर्वभावानां नित्यत्वं स्यादनाशतः ।

## तत्वमुक्ताकलापः

### उत्पन्नानां विनाशे ध्रुवभवितृतया हेत्वपेक्षाविहीने

## सर्वार्थसिद्धिः

सत्तानुबन्धी विनाशः स्वरूपवत् न हेतुसापेक्षः झडित्येवापतेत् । तस्मात् क्षणिकं सर्वमित्यनूद्य परिहरति—उत्पन्नानामिति ।

## आनन्ददायिनी

तथा च विनाशः भावानामुत्पत्तिक्षणानन्तरभावी अहेतुकत्वे सति भावानामवश्यम्भावित्वात् । य(द्य)दहेतुकत्वे सति यस्यावश्यम्भावि तत्तदनन्तरक्षणभावि यथा घटस्यान्यापोह इति प्रयोगे हेत्वासिद्धिशङ्कापरिहाराय ध्वंसो (भावस्य) हेतुनिरपेक्षः तस्य ध्रुवभावित्वात् अपोहवदिति प्रयोगो द्रष्टव्यः । झडित्येव—उत्पत्त्यनन्तरमेव ।

## भावप्रकाशः

सर्वसंस्कारनाशित्वप्रत्ययश्चानिमित्तकः ॥ ३७१

नित्यत्वेऽपि सहस्थानं विनाशेनाविरोधतः ।
अजातस्य हि नाशोक्तिः नैव युक्त्यनुपातिनी ॥ ३७२

इत्युद्योतकराक्षेपस्य—

तदत्र कतमं नाशं परे पर्यनुयुञ्जते ?
किं क्षणस्थायधर्माणं भावमेव तथोदितम् ॥ ३७३

अथ भावस्वरूपस्य निवृत्तिं ध्वंससंज्ञितम् ?
पूर्वपर्यनुयोगे हि नैव किञ्चिद्विरुध्यते ॥ ३७४

यो हि भावः क्षणस्थायी विनाश इति गीयते ।
तं हेतुमन्तमिच्छामः पराभावात्त्वहेतुकम् ॥ ३७५

## भावप्रकाशः

वस्त्वनन्तरभावित्वं न तत्र त्वस्ति तादृशि ।
चलभावस्वरूपस्य भावेनैव सहोदयात् ॥ ३७६
अतो विनाशसद्भावान्न नित्यास्सर्वसंस्कृताः ।
न विनाशीति बुद्धिश्च निर्निमित्ता प्रसज्यते ॥ ३७७
भावध्वंसात्मनश्चैवं नाशस्यासत्त्वमिष्यते ।
वस्तुरूपवियोगेन न भावाभावरूपतः ॥ ३८२
निवृत्तिरूपताऽप्यस्मिन् विधिना नाभिधीयते ।
वस्तुरूपानुवृत्तिश्च क्षणादूर्ध्वं निषिध्यते ॥ ३८२
अतो व्यवस्थितं रूपं विहितं नास्य किञ्चन ।
इति नित्यविकल्पोऽस्मिन् क्रियमाणो निरास्पदः ॥ ३८४

इति परिहार उक्तः । अत्र पञ्चिका—द्विविधो हि विनाशो विधेः प्रतिषेधलक्षणः; तथा हि—क्षणस्थितिधर्मा भाव एव चलो विनश्यतीति कृत्वा विनाश इत्याख्यायते । यद्वा—भावस्वभावप्रच्युतिलक्षणप्रध्वंसापरनामा विनशनं विनाश इति । अत्र विचार्यते—पूर्वदेशसंबन्धवियोगपूर्वकदेशान्तरप्राप्तिदशायामेव चलनं सर्वसंप्रतिपन्नं । तदात्वे विनाशप्रतीतिर्न संप्रतिपन्ना; किंतु चलनप्रतीतिरेव । चलनं च न वस्तुनो विनाशः । वस्तुस्वभावप्रच्युतिदशायामेव विनाशप्रतीतिः । सा च चलनमादाय न विश्राम्यति । अत एव—

प्रथमे कारणं जातमविनष्टं तदा च तत् ।
क्षणिकत्वात्तु तत्कार्यं क्षणकाले न वर्तते ॥ ५०९
तस्मादनष्टात्तद्धेतोः प्रथमक्षणभाविनः ।
कार्यमुत्पद्यते शक्तौ द्वितीयक्षण एव तु ॥ ५१२

इति भवदुक्तिसंगतिः । अस्तु धर्मधर्मिणोरभेदवादिनां भवतां चलनकाल

## भावप्रकाशः

एव विनाशः; अथापि 'भाव एव चलो विनश्यतीति कृत्वा विनाश इत्याख्यायते' इति भवदुक्त्या यो विनश्यति तद्भावरूप एव विनाश इति प्रतीयते । एवं 'जन्मतो नान्यथा स्थितिः' इत्युक्त्या जन्मकाल एव विनाशसत्ताकाल इति च । इत्थं च उत्पत्तिक्षण एव विनाशप्रतीतिरिति महदिदं चित्रं । एवं धर्मधर्मिणोर्भेदमभ्युपगच्छतः परस्योपरि—

तथा हि नाशको हेतुर्न भावाव्यतिरेकिणः ।
नाशस्य कारको युक्तः स्वहेतोर्भावजन्मतः ॥  ३५८

इति भवदारोपितदोषः परावृत्य भवन्तमेवाश्रयति । पूर्वपूर्वक्षणनाशस्य उत्तरोत्तरक्षणरूपत्वाङ्गीकारे च सान्वयविनाशाङ्गीकारप्रसङ्गः । स्वभावप्रच्युतिदशायामपि श्रीभाष्यादिसिद्धान्तितस्य निरन्वयविनाशासंभवस्य अनुपदमेव व्यवस्थापयिष्यमाणतया विनाशप्रतीत्योर्वैलक्षण्ये विनिगमकविरहेण एकजातीयेनैव विनाशेन निर्वाहे एको वस्तुरूपः अन्यश्शशविषाणवदसन्निति विनाशद्वैविध्यकल्पनं स्वेच्छामात्रनिबन्धनमेव । चलनदशायामपि पूर्वोत्तरक्षणयोस्तादात्म्यानभ्युपगमेन पूर्वक्षणस्य निरन्वयविनाशसंभवेन भवत्पक्षेणोभयोरसत्त्वसंभवात् स्वभावप्रच्युतिदशायां सिद्धान्तानुसारेण वस्तुनस्संभवेन उभयोर्वस्तुत्वसंभवाच्च । अतः एकस्य वस्तुभूतस्य विनाशस्य अपरस्यावस्तुभूतस्य ध्वंसस्याङ्गीकरणमनुचितमिति । एतेन—

संतानोच्छेदरूपस्तु विनाशो यो न हेतुमान् ।
तस्यान्तेऽपि न भावोऽस्ति तथा जन्म तु वार्यते ॥  ४३९

विलक्षणकपालादेरुत्पादस्तु सहेतुकः ।
सोऽप्यादौ जायते नैव तदा हेतोरसम्भवात् ॥  ४४०

इत्युक्तिरप्यनुचितेति ।

## तत्वमुक्ताकलापः

**जन्मन्येवोपरोधात क्षणिकमिह जगत्सर्वमित्यप्य-सारम्। लिङ्गं ह्येष्यत्त्वमात्रं जननविधुरता तत्क्षणा-नुक्षणत्वे तत्त्वं तज्जन्यता वा तदिदमनियमासिद्धि-बाधादिदूष्यम् ॥ २८ ॥**

## सर्वार्थसिद्धिः

असारं—न्याय्यादन्यदित्यर्थः। तत्र हेतुं विकल्पयति—लिङ्गमिति। एवं विकल्पिते यथासम्भवं दोषानाह—तदिदमिति। तथाहि—तत्राद्ये तावत् यत् यस्य ध्रुवं भविष्यति न तत्तस्य हेतुसापेक्षं नाशश्च जातानां ध्रुवभावीत्युक्तं स्यात्। तदा कस्यचिदङ्कुरस्य

## आनन्ददायिनी

मूलस्यायमर्थः—उत्पन्नानां भावानां विनाशस्य ध्रुवभवितृतया हेत्वपेक्षारहितत्वात् जन्मन्येवोपरोधात्सम्बन्धात् सर्वं जगत् क्षणिकमिति। तत्र किं ध्रुवभवितृत्वम्? इति विकल्पयती(विकल्पपरत्वमभिप्रे)त्याह—तत्रेति। एष्यत्त्वमवश्यम्भावित्वमात्रं। जननविधुरता—उत्पत्त्यभावः। तत्क्षणत्वं—भावकालत्वं। अनन्तरक्षणवर्तित्वमनुक्षणत्वं। तत्त्वं—प्रतियोगिस्वरूपत्वं। तज्जन्यत्वं—प्रतियोगिजन्यत्वं। ध्रुवभवितृ(ध्रुवभावित्व)शब्देन एतेषां लाभो यथा संभवति तथोत्तरत्र स्वयमेव दर्शयिष्यति। तेषां समुच्चित्य प्रत्येकम(प्रत्येकं प्राप्त्य)भावादाह—यथासंभवमिति। तत्र क्रमेण दूषणानि वक्तुं प्रतिजानीते—तथाहीति। अनियमो—व्याप्त्यभावः। असिद्धिः हेत्वसिद्धिः। बाधः—साध्याभावनिश्चयः। कस्याचिदिति—व्यभिचारेण व्याप्त्यभावादित्यर्थः।

## सर्वार्थसिद्धिः

सामग्रीप्रवाहवशात् ध्रुवं भविष्यद्भिः पत्रपुष्पादिभिः घटादीनां कपालादिभिरप्यनैकान्त्यं; सर्वत्र चैकसन्तानोत्तरक्षणैः । न हि ते तन्निरपेक्षाः! तथा सति प्रागेवोपनिपाते कथं तत्र सन्तानत्वमपि? पूर्वक्षणानामर्थक्रियाविरहादसत्त्वं च स्यात्; चार्वाकवा(दः)दश्च । [1]* द्वितीये तु यद्यस्यानुत्पन्नमनुबन्धि न तद्धेत्वपेक्षं यथा गोरश्वापोह इति स्यात्; तथा च हेत्वसिद्धिः प्रतियोगिवत् स्वोचितहेतुजन्यत्वात् । मुद्गरादयोऽपि सभागसन्तानमात्रार-

## आनन्ददायिनी

सर्वत्रचेति— तत्तदुत्तरक्षणानां ध्रुवभावित्वात् पूर्वपूर्वक्षणहेतुकत्वाच्चेति भावः । क्षणः—स्वलक्षणं वस्तु । तथासतीति—तथाच सर्वेषामेकक्षणोत्पत्तिसमय एव विनिगम(का)नाभावेनोत्पत्तौ पूर्वापरभावापन्नसंतानसिद्धिर्न स्यादित्यर्थः । असत्त्वं च स्यादिति—उत्तरोत्तरेषां क्षणानां पूर्वपूर्वजन्यत्वाभावेन अर्थक्रियाकारित्वाभावादिति भावः । चार्वाकवादः—निर्हे(अहे)तुक(त्वं।)त्ववादः । द्वितीयेत्विति—जननविधुरतेत्यस्मिन् पक्षे इत्यर्थः । हेत्वसिद्धिमेवोपपादयति—प्रतियोगिवदिति । स्वोचितहेतवो मुद्गरादयः । असि(द्धिं परिहरति)द्धिपरिहारं शङ्कते—मुद्गरादय इति । सभागः—

## भावप्रकाशः

[1]* द्वितीये तु इति—धर्मधर्मिणोस्संबन्धो व्यवस्थापयिष्यते । अतः—

सर्वत्रैवानपेक्षाश्च विनाशे जन्मिनोऽखिलाः ।
सर्वथा नाशहेतूनां तत्राकिञ्चित्करत्वतः ॥　　३५७

## सर्वार्थसिद्धिः

म्भकाः न तु नाशजनकाः इति चेन्न ; दीपादिसन्ताना(नाम)न्तिमध्वंसकेषु तदसिद्धेः । न हि तत्र विभक्तसूक्ष्मावस्थान्तरापत्तिमिच्छसि ! अन्वयव्यतिरेकाविशेषे व्यवस्थापकाभावात् । निस्स्वभावतया तुच्छस्य हेत्वपेक्षाविरहो व्यवस्थापक इति चेन्न ; प्रतियोगिवदेव नियतकालतया प्रमितस्यात्यन्ततुच्छत्वायोगात् । खपुष्पवच्चानादित्वप्रसङ्गेन [1] * सर्वभावासिद्धिप्रसङ्गात् ।

## आनन्ददायिनी

विभक्तावयवः । तथाच मुद्गरा(दण्डा)द्यन्वयव्यतिरेकयोरन्यार्थत्वात् ध्वंसस्य न तज्जन्यत्वमिति भावः । दीपेति—तत्रा(न्यथासिद्धेः)न्यार्थत्वस्य वक्तुमशक्यतया ध्वसस्य तज्जन्यत्वासंभवादित्यर्थः । तत्राप्यन्यथासिद्धिमाशङ्क्य परिहरति—नहीति । तत्र प्रमाणाभावादिति भावः । अन्वयव्यतिरेकाविशेषेऽपि व्यवस्थापकं शङ्कते—निस्स्वभावतयेति । तत्र किं स्व(य)मेव भावः स्वभाव इति स्वरूपं विवक्षितं ? आहोस्वित् स्वस्य भावः स्वभाव इति धर्मो वा? इति विकल्पमभिप्रेत्य आद्यं दूषयति—प्रतियोगिवदिति । अत्यन्ततुच्छत्वायोगादिति—शशशृङ्ग(ङ्गादि)वत् निस्स्वरूप (निस्स्वरस) त्वासंभवादित्यर्थः । खपुष्पवदिति— ध्वंसप्रतियोगिनोर्विरोधादुत्तरकालमिव पूर्वमपि

## भावप्रकाशः

पदार्थव्यातिरिक्ते तु नाशनाम्नि कृते सति ।
भावे हेत्वन्तरैस्तस्य न किञ्चिदुपजायते ॥ ३६०

इत्येतत्पक्षपरिष्करणेन सिद्धान्तदूषणं न संभवतीति बोध्यम् ॥

[1] * सर्वभावासिद्धीति—ध्वंसस्याहेतुकत्वासत्त्वनिस्स्वभावत्वाङ्गीकारे माध्यमिकावृत्तिबोधिचर्यावतारपञ्जिकोक्तादिशा सर्वेषामपि निस्स्वभावत्वप्रसङ्गेन—

## सर्वार्थसिद्धिः

[1]* ध्वंसस्य च तुच्छत्वे तत्कालेऽपि स्वकाल इव भावानां सत्त्वप्रसङ्गाच्च। तथाच क्षणभङ्गं प्रतिज्ञाय स्थिरवादं साधयसि।

## आनन्ददायिनी

भावानां सत्त्वं न स्यादिति ; तथाच माध्यमिकमतापात इति भावः ॥

## भावप्रकाशः

विज्ञप्तिमात्रतासिद्धिर्धीमद्भिर्विमलीकृता।

इत्याद्युक्तिरसङ्गतेति भावः। [1]* ध्वंसस्य च तुच्छत्वे इति—

प्रध्वंसो भवतीत्येव न भावो भवतीत्ययम्।
अर्थः प्रत्याय्यते त्वत्र न विधिः कस्यचिन्मतः ॥ ३८९

ध्वंसनाम्नः पदार्थस्य विधाने पुनरस्य न।
वस्तुनो जायते किञ्चिदित्येतत्किं निवर्तते? ॥ ३८१

इत्युक्तिरप्यनुचिता। भवताऽपि वस्तुरूपनाशाङ्गीकारेण तत्र विधिरूपताया अत्र तद्वैलक्षण्यस्य च नियामकाभावात्। ध्वंसनाम्नः पदार्थस्य विधाने वस्तुनो ध्वंसस्य च परमार्थत्वेन उभयोस्संबन्धस्संभवति। एकस्य वस्तुता अन्यस्य चावस्तुत्वं यदि तदा वस्त्ववस्तुनोस्संबन्धो न संभवति। एतेन—

भावध्वंसात्मनोश्चैवं नाशस्यासत्त्वमिष्यते।
वस्तुरूपनियोगेन न भावाभावरूपतः ॥ ३८२

इत्येतद्विवरणपञ्चिकायां 'यदि हि स्वभावनिषेधलक्षणो विनाशः तेषामसन् स्यात् तदा नित्यत्वमेषां स्यात् यावता स्वभावनिषेधलक्षणो नाशस्स्वयमसद्रूपोऽस्त्येवेति कथं नित्या भवेयुः?' इत्युक्तिरप्यपास्ता ; सदसतोस्संबन्धानुपपत्तिर्बुद्धिसरे विवेचयिष्यते इति भावः ॥

## सर्वार्थसिद्धिः

कीदृशं च ध्वंसस्य निस्स्वभावत्वं? यदि यत्किञ्चित्स्वभाव-विरहः; तत्स्वलक्षणेऽपि समानं। सर्वस्वभावविरहस्तु ध्वंसेऽप्य-सिद्धः। अन्यथा कथमस्य पक्षीकारः? ध्वंसरूपतया सिद्ध-स्येति चेत्; तर्हि तत्स्वभावस्य कथं सर्वस्वभावविरहः? अपि च अस्य प्रागसत्त्वे हेत्वपेक्षा दुर्वारा। प्राक्सत्वे तु भावापह्नवः। तत एवाभावस्याप्यभाव इति सर्वाभावस्स्यात्। तृतीये च स एव क्षणो यस्य स तत्क्षणः तस्य भावस्तत्क्षणत्वं। तदा ध्रुव-भावि—सहभावीत्यर्थः। अयमपि हेतुरसिद्ध एव। न (हि) च प्रध्वंसप्रतियोगिनोर्यौगपद्यसम्भवः; सम्भवे (च) वा भावः पश्चा-दपि किं न स्यात्? अनुक्षणशब्दोपचरितस्तु हेतुरनन्तरक्षण-वर्तित्वं। तत्रापि भावोत्पत्त्यपेक्षयाऽनन्तर्यविवक्षायामसिद्धिः।

## आनन्ददायिनी

ननु तुच्छत्वान्न प्रतियोगिविरोध इत्यत आह—ध्वंसस्य चेति। द्वितीये दूषणमाह—कीदृशं चेति। तर्हीति—तद्ध्वंसत्वस्यैव स्वभा-वत्वादित्यर्थः। अस्येति—ध्वंसस्येत्यर्थः। भावापह्नव इति—ध्वंसकाले प्रतियोगिनोऽसंभवादिति भावः। तत एवेति—यत एव प्रतियोगिनोऽ-भावः ततः प्रतियोग्यप्रसिद्ध्या भावोऽपि न स्यादिति माध्यमिक-मतप्रसङ्ग इति भावः। न (ही) चेति—विरोधादिति भावः। संभवे(वे) चेति—विरोधाभावादिति भावः। उपचरितास्त्विति—अनुशब्दस्य 'प्रादयो गताद्यर्थे' इति अनुयातः क्षण इति समासे कालवा-चि(त्वात्)त्वेन बहुव्रीहिसमासे चान्यपदार्थलक्ष(णकतया) कत्वात् तत्स्थ-वाचि (त्वमुपचारेणेत्यर्थः) त्वाभावात् तेनोपचरितो लक्षित इति भावः।

## सर्वार्थसिद्धिः

भावस्वरूपापेक्षया त्वानन्तर्यनियमे भाव एव हेतुस्स्यादिति कथं हेतुनैरपेक्ष्यं? तदतिरिक्तनैरपेक्ष्यं विवक्षितमिति चेन्न; तद्व-देव सहकारिणामप्यवर्जनीयत्वादिति। पञ्चमे त्वसिद्धिर्व्याघातश्च। ननु कथं ध्रुवभाविशब्देन तत्त्वविवक्षा शङ्क्यते? इत्थम्; यद्यतो भिद्यते न तत्तस्य ध्वंसः यथा रूपस्य रसः। ध्वंसस्तु कस्यचिदेव भवतीति तदात्मकः। अतः स्वोत्पत्तावेव स्वात्मनि ध्वंसे सन्निहिते कथं क्षणान्तरं प्राप्नुयादिति? तत्रेदं ब्रूमः; ततो भिन्नस्यापि तद्ध्वंसत्वं यथा दर्शनं स्यात्। अन्यथा भिन्नस्य भिन्नकालस्य च कारणत्वादिकमपि हीयेत अविशेषात्। स्वात्मन एव स्वनाशात्मकत्वे पश्चादिव स्वकालेऽपि स्वाभावसिद्धेः स एव सर्वापह्नवस्स्यादिति। तज्जन्यत्वे हेतौ प्रतिज्ञाविरोधः।

## आनन्ददायिनी

भाव एवेति—अनन्यथासिद्धनियतपूर्ववृत्तित्वादिति भावः। कथमिति—तथाच बाध इति भावः। तद्वदेवेति—प्रतियोगिन इव मुद्गरादे-रप्यन्वयव्यतिरेकसत्त्वादिति भावः। पञ्चम इति—ध्वंसप्रतियोगिनोरैक्या-नभ्युपगमात् भावाभावयोः परस्परविरोधिनोरैक्यस्य विरुद्धत्वादित्यर्थः; अन्यथा भावस्सर्वदा स्यान्न स्याद्वेति न क्षणिकत्वसिद्धिरिति भावः। नन्वस्याः कोटेरुत्थितिरेव न सम्भवति; शब्दस्य तद्बोधनासामर्थ्यात्। तथाच असम्भवाद्विकल्पदोषः। तथा भावानां सहेतुकत्वात् तद-(भेदे अ) हेतुकत्वं वा कथं? ततः क्षणिकत्वं वा कथं सिध्येत्? इति शङ्कामाशङ्क्य परिहरति—नन्वित्यादिना। अन्यथेति-- पूर्व-क्षणानामप्युत्तरक्षणहेतुत्वं न स्यादित्यर्थः। प्रतिज्ञाविरोध इति—

## तत्वमुक्ताकलापः

**कालानन्तर्यसाम्ये क्षणिकवपुषि ते देशकालाद्युपाधौ सर्वे पूर्वे भवेयुस्तदुपरिभवतां कारणानि**

## सर्वार्थसिद्धिः

तज्जन्यत्वं हि तद्धेतुकत्वं। तेन कथं हेतुनैरपेक्ष्यसाधनम्? हेत्वन्तरनैरपेक्ष्यमपि दुर्वचमित्युक्तं। अतः क्रमभाविसहकारिविशेषात् कार्यान्तरमिव स्वनाशमपि स्वयमुत्पादयतु नाम! न ततः क्षणिकत्वं सिद्ध्येदिति। बाधश्चामीषां प्रागुक्तप्रत्यभिज्ञया स्पष्टः। आदिशब्दः प्रदर्शितयोरपसिद्धान्तप्रतिज्ञाविरोधयोस्सङ्ग्रहार्थः। प्रतिकूलतर्कप्रतिहतिमप्याह—कालानन्तर्येति।

## आनन्ददायिनी

हेतुसाध्ययो (साध्येनहेतो) र्विरुद्धत्वादित्यर्थः। यद्वा प्रतिज्ञावाक्यस्य हेतुवाक्येन विरुद्धत्वादित्यर्थः। विरोधपरिहारमाशङ्क्य परिहरति—हेत्वन्तरेति। तद्वदेव सहकारिणामित्यर्थः। ननु सहकारिसापेक्षत्वेऽप्युत्पत्त्यनन्तरमेव ध्वंससम्भवात् क्षणिकत्वं स्यादित्यत्राह—क्रमभावीति। ध्वंसजनने सहकारिणामाद्यक्षण एव भावित्वमित्यत्र नियामकाभावात्; यदा कदाचित्सहकारिलाभे प्रतियोगिनो ध्वंसजनकत्वेऽपि न क्षणिकत्वसिद्धिरित्यर्थः॥ २८॥

पूर्वशेषत्वान्न पृथक्संगतिरित्यभिप्रायेणाह—प्रतिकूलेति। ननु

## भावप्रकाशः

क्षणभङ्गपक्षे कुमारिलोक्तदूषणान्युद्धर्तुकामेन शान्तरक्षितेन तत्वसंग्रहे इत्थमुक्तम्—

## सर्वार्थसिद्धिः

आदिशब्देन दिक्संग्रहः । [1]*अयमर्थः—सर्वं क्षणिकमिति वदतस्ते कस्यचित् किञ्चित्प्रति कार्यत्वं किमनन्तरकालभावित्वमात्रात् उत तद्विशेषात्? आद्ये त्रैलोक्योदरवर्तिनः पूर्वक्षणास्सर्वे तदनन्तरभाविनां सर्वेषां क्षणानां कारणानि स्युः । द्वितीयेऽप्यसौ विशेषः किं देशाद्युपाधिनिरपेक्षः तत्सापेक्षो वा? नाद्यः;

## आनन्ददायिनी

क्षणिकत्वपक्षेऽपि वीचीतरङ्गन्यायेन शब्दसंतानानामिव व्यवस्थापककार्यकारणभावस्स्यात् इत्यत आह—अयमर्थ इति । देशाद्युपाधिनिरपेक्षः—तदघटितः कारणकार्यधर्म इत्यर्थः । तत्सापेक्षः —एकदेश

## भावप्रकाशः

यथा हि नियता शक्तिः बीजादेरङ्कुरादिषु ।
अन्वय्यात्मवियोगेऽपि तथैवाध्यात्मिके स्थितिः ॥　　५०२

पारम्पर्येण साक्षाद्वा क्वचित्किञ्चिद्धि शक्तिमत् ।
ततः कर्मफलादीनां संबन्ध उपपद्यते ॥　　५०३

नियमादात्महेतूत्थात् प्रथमक्षणभाविनः ।
यद्यतोऽनन्तरं जात द्वितीयक्षणसन्निधिः ॥　　५१८

तत्तज्जनयतीत्याहुरव्यापारेऽपि वस्तुनि ।
विवक्षामात्रसंभूतसंकेतानुविधायिनः ॥　　५१९

अन्यानन्तरभावेऽपि किञ्चिदेव च कारणम् ।
तथैव नियमादिष्टं तुल्यं चैतत् स्थिरेष्वपि ॥　　५२१

इति । तद्दूषयन् मूलाथमाह—[1]* अयमर्थ इत्यादिना ।

## तत्वमुक्ताकलापः

**क्षणानाम् । सन्तानैक्यव्यवस्था**

## सर्वार्थसिद्धिः

[1]*अतीन्द्रियस्य (तु) तस्यादर्शनात् । दृश्यस्य तु वह्निधूमत्वादेरतिप्रसङ्गित्वात् । न द्वितीयः; यस्मिन् देशादौ यद्वर्तते तस्मिन् जायमानस्य तत्कारणमिति नियमो न सम्भवति; कार्यक्षणस्य कारणदेशादिवर्तित्वे कारणदेशादेः क्षणद्वयापत्तेः । तथाचानन्तरक्षणयोगेऽपि को बाधः? अतः स्थिरदेशादिकमनभ्युपगच्छतः तत्प्रयुक्तनियमायोगात् अतिप्रसङ्गस्तदवस्थ एव । ननु यद्देशादिक्षणवर्ती कारणक्षणः तत्कार्यदेशादिक्षणे स्वकार्यमारभत इति नियम इति चेन्न; देशादिक्षणद्वयेऽपि कार्यकारणव्यवस्थाया दुःस्थत्वात् । त(दे त)दभिप्रेत्याह—सन्तानैक्यव्यवस्था न

## आनन्ददायिनी

एव पूर्वापरकालवर्तित्व(त्वादि)रूपः । तस्येति—विशेषस्य कार्यकारणयोरदर्शनादित्यर्थः । अतिप्रसङ्गित्वादिति—तेन रूपेण पूर्वक्षणापेक्षया पूर्वापरभावित्वादित्यर्थः । तदिति—तद्देशे तत्पूर्ववर्तीत्यर्थः । क्षणद्वयापत्तेः—कार्यकारणद्वयाधिकरणक्षणद्वयकालवर्तित्वापत्तेरित्यर्थः । तथाचेति—

एतावन्तं स्थितं कालं कः पश्चान्नाशयिष्यति ।

इति न्यायादिति भावः । ननु कार्यकारणयोरेकदेशवर्तित्वं मास्तु; अपि तु एकदेशसन्तानवर्तित्वं; तथा च नातिप्रसङ्ग इति शङ्कते—नन्विति । देशादीति—तथाच पूर्वदेशलक्षणस्य (स्व) पश्चाद्भावि-

## भावप्रकाशः

[1]*अतीन्द्रियस्य त्विति—एतेन शक्त्यभिधानमप्याकिञ्चित्करमिति व्यञ्जि-

## तत्वमुक्ताकलापः

**निजफलनियतिर्वासनानां च न स्यात् कार्पासे रक्तताादि क्रमविपरिणमत्संस्कृतद्रव्यतस्स्यात्॥२९**

## सर्वार्थसिद्धिः

स्यादिति। यदप्याहुः—

यस्मिन्नेव हि सन्ताने आहिता कर्मवासना।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥

इति; कर्मवासनेत्यनुभववासनाया उपलक्षणं। तदपि दूषयति—निजफलनियतिर्वासनानां च न स्यादिति। सन्तानैक्ये सिद्धे हि यस्मिन् तस्मिन्निति निर्देशस्स्यादिति भावः। दृष्टान्तस्तर्हि कथमित्यत्राह—कार्पास इति। रञ्जकद्रव्यविशेषसंस्कृतबीजावयवानुवृत्त्या कार्यस्रोतोविशेषनियमे यथादर्शनं तत्र

## आनन्ददायिनी

सर्वदेशक्षणसन्तानजनकत्वात् सर्वे सर्व(स्यापि)स्य सन्ताना इति पूर्वव(वैत)देतद्देशसन्तानैक्यनियमो नास्तीति भावः। ननु क्षणिकत्वपक्षे पाकेषुविक्षेपादौ वासनाश्रयस्य नाशादुत्तरो(नाशात्तदु)त्तरक्षणेषु विक्लित्तिदेशान्तरगमनहेतुक्रिया न स्यादित्याशङ्क्य सन्तानैक्यान्न दोष इति सिद्धान्तदीपिकोक्तमनुवदति—यदप्याहुरिति। कर्मवासना—वेगादिसंस्कारः। यदा पाकादिक्रियाशक्तिः तत्रैव तण्डुलादिसन्ताने विक्लित्त्यादिक्रियां जनयतीत्यर्थः। रञ्जकद्रव्येति—स्थिरवादे कार्पाससन्तानव्यवस्थासम्भवाद्युज्यते; क्षणिकवादे तन्नियमो न स्यादिति दृष्टान्तासिद्धिश्चेति भावः॥ २९॥

## तत्वमुक्ताकलापः

मेयत्वाद्यैर्विगीतं क्षणिकमिह

## सर्वार्थसिद्धिः

तादृशफलसिद्धिर्युक्ता ; त्वन्मते तु त(दे्त) [1]* त्सन्ततिव्यवस्थापकाभावात् तत्रैव फलं बध्नातीति दुश्शको नियम इति भावः ॥२९

[2]*क्षणभङ्गसाधनान्तरं दूषयितुमनुवक्ति—मेयत्वाद्यैरिति। इह पक्षदृष्टान्तविकल्पार्हे वस्तुजाते। विगीतं क्षणिकं [3]* मेयत्वात्

## आनन्ददायिनी

ननु क्षणिकत्वानुमानं पूर्वं दूषित(मिति)मेव पुनस्तद्दूषणे पौनरुक्त्य-मित्याशङ्क्यावतारयति—क्षणभङ्गेति। इहेत्यस्य जगत्परत्वेऽनन्वयमाशङ्क्य तस्या (इहशब्दा)र्थमाह—पक्षदृष्टान्तेति—विगीतं—क्षणिकत्वेन विप्रति-

## भावप्रकाशः

तम्। [1]* सन्ततिव्यवस्थापकाभावादिति । क्षणिकत्वपक्षे कार्यक्षणपूर्वक्ष-णानां सर्वेषामन्वयव्यतिरेकयोरविशेषेण सिद्धान्तिवदुपादानोपादेययोर-भेदानङ्गीकारेण स्वोपादानबलव्यवस्थानिर्णयासंभवेन—

स्वोपादानबलोद्भूताः कलापोत्पादकाः पृथक् ।

इति शान्तरक्षितोक्तिरनुचिता । एतेन—

सहकारिकृतश्चैवं यदा नातिशयः क्वचित् ।
सर्वदा निर्विशेषैव तदा सन्ततिरिष्यते ॥ ४३२

इति भदन्तयोगसेनोक्तदूषणमपरिहार्यम् । सन्ततिदूषणविस्तरस्तु श्लोक-वार्तिकादौ बोध्य इति भावः । क्षणिकत्वसाधने सत्त्वहेतोरेकस्य ज्ञान-श्रियाऽभिधानेऽपि तदविशेषेणान्यस्यापि हेतोस्तन्मते क्षणिकत्वसाधकत्वं संभवतीति स्वस्य बौद्धमतप्रावीण्यं दर्शयन्नवतारयति [2]*क्षणभङ्गसाध-नान्तरमित्यादिना [3]* मेयत्वादिति—मेयत्वमविसंवादिज्ञानाविषयत्वं ।

## तत्वमुक्ताकलापः

## जगत्स्यात् क्षणोपाधिवच्चेत बाधो

## सर्वार्थसिद्धिः

सत्त्वात् [1]* भासमानत्वाद्वा । अत्र स्यादित्यनेन अक्षणिकताया-मसत्त्वप्रसङ्गस्सूच्यते । अर्थक्रियाकारित्वं हि सत्त्वम्! तच्च कुर्वत्क्षणस्यैवास्ति । अकुर्वत्क्षणस्य तु तदभावादसत्त्वं प्राप्तमिति । घटजलधरादौ दृष्टान्तिते साध्यवैकल्यं क्रमेण कथञ्चित्परि-हर्तव्यं; इह तु न तथेत्यभिप्रायेण क्षणोपाधिवचनम् । इति-रौचित्यादाकृष्टव्यः । अत्र बाधोक्तिस्साध्यविकल्पेन बहुधा भाव्या

## आनन्ददायिनी

पन्नं । प्रयोगप्रदर्शनमिदं तन्मते उदाहरणोपनययोरेव प्रयोक्तव्यत्वात् । आदिशब्दार्थमाह—भासमानत्वाद्वेति । स्यादित्यनेनेति—स्यादित्यस्य सत्त्ववाचित्वात् क्षणिकं स्यादिति समभिव्याहारेण सत्त्वव्यापकं क्षणिकत्वमिति गम्य(मानत्वादिति)त इति भावः । क्षणिकत्वस्य सत्त्वव्यापकत्वे अनुकूलतर्कमाह—अर्थक्रियाकारित्वमिति । क्षणिकत्वाभावे कुसूलस्थानां बीजानामङ्कुरादिरूपकार्यजनकत्वरूपकुर्वत्त्वाभावात् सत्त्वं न स्यात्; क्षणिकत्वे तु पूर्वपूर्वेषां क्षणानां उत्तरोत्तरक्षणजनकत्वात् कुर्वत्त्वं सिध्यतीति भावः। इतिरिति—तथाच क्षणोपाधिवदितीति मूले सम्बन्धः । बाधोक्तिरिति—विशेषानुपादानादिति भावः । यद्यपि क्वचित्क्वचिद्विकल्पे

## भावप्रकाशः

लाघवादाह [1]* भासमानत्वादिति—विषयत्वादित्यर्थः । ज्ञानविषयत्वं ज्ञानजनकत्वमिति वैभाषिकसिद्धान्तेन अक्षणिकत्वे जनकताऽनुप-पत्त्या सत्त्वहेतुवदस्यापि क्षणिकत्वसाधकता संभवतीति भावः ।

## सर्वार्थसिद्धिः

**तथाहि—क्षणिकत्वं नाम क्षणसंभवत्वं वा? क्षणकालसम्बन्धित्वं वा; क्षणमात्रवर्तित्वं वा? क्षणद्वयसम्बन्धशून्यत्वं वा? क्षणकालत्वं वा? तदुपाधित्वं वा? नाद्यः; सिद्धसाधनात्। स्थिरमपि(हि) नस्सामग्र्या क्षणे सम्भव(ती)ति। न द्वितीयः; तत एव। कालमेवानिच्छतस्ते कोऽसौ क्षणकालः? कश्च तत्सम्बन्धः? तदभ्युपगमे सिद्धान्तबाधः। अत एव न तृतीयोऽपि। प्रत्यभि-**

## आनन्ददायिनी

बाधो न प्रदर्श्यत इति बाधबहुत्वोपपादनार्थं साध्यविकल्प इति न संगच्छत इति मन्दधियां प्रतिभाति; तथाऽपि सर्वविकल्पकोटिष्वपि बाधप्रदर्शनं न प्रतिज्ञार्थः। किंतु विकल्पितकोटिषु यथासम्भवं तत्प्रदर्शनं प्रतिज्ञार्थ इति द्रष्टव्यम्। क्षणिकत्वं नामेति—क्षणे भवः क्षणे जातः क्षणोऽस्यास्तीत्यर्थविवक्षायां कुमुदादित्वात् ठच्। अत इनिठनाविति वा ठनि क्षणिकशब्दस्य निष्पत्तेः। विनयादित्वाद्वा स्वार्थिकठकि संज्ञापूर्वकपरिभाषया वृद्ध्यभावाद्वा व्युत्पत्तिसम्भवात् अवधारणविवक्षातदभावाद्यार्थिकार्थविवक्षानुसारेण विकल्पसम्भवात् नासम्भावितविकल्पदोष इति द्रष्टव्यं। तत एवेति—स्थिरस्यापि सामग्रीक्षणे सम्बन्धसम्भवेन सिद्धसाधनादित्यर्थः। व्याप्तिग्राहकाभावाद्व्याप्यत्वासिद्धिरिति चाह—कालमेवेति। सिद्धान्तबाधः—अपसिद्धान्तः।

'निराधारा निर्धर्मकाश्च रूपादयश्चत्वारः पदार्थाः'।

> वात्सीपुत्रास्तु शब्दादीन् पञ्च वैभाषिका विदुः।
> शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन्॥

इति परिगणनेन कालानङ्गीकारादिति भावः। अतएव—अपसिद्धान्तादिप्रसङ्गादेव। अक्षणिकत्वे सत्त्वं न स्यादिति तदीयतर्कस्य

## सर्वार्थसिद्धिः

ज्ञया च बाधः प्रागुक्तः । न चतुर्थः ; उक्तबाधादेव । क्षणेतरस्य तथात्वे खपुष्पवदसत्त्वप्रसङ्गस्य दुर्वारत्वात् । त्वन्मते च खपुष्प-निदर्शनेन प्रसञ्जनं युक्तं । एवमपि हि ब्रूथ !—

तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावे च तन्नेति वचनादेव तद्गतेः ॥

इति । अन्येऽपि केचिदाहुः—

यस्मिन्ननित्यता नास्ति कार्यताऽपि न विद्यते ।
तस्मिन् यथा खपुष्पादौ इति शक्यं हि भाषितुम् ॥

इति । न पञ्चमः ; तद्देशतद्वर्तिनोरिव कालतद्वर्तिनोरैक्यस्य प्रत्यक्षेण बाधात् । तत एव न षष्ठः । यदा हि घटादयः

## आनन्ददायिनी

प्रतिहतिमाह—क्षणेतरस्येति । विवादाध्यासितमसत् क्षणेतरत्वे सति क्षणद्वयसम्बन्धशून्यत्वात् इत्यर्थः । ननु सर्वत्र प्रामाणिकस्यैव दृष्टान्तत्वात् खपुष्पनिदर्शनेन प्रतिरोधो न युक्त इत्यत्राह—त्वन्मते चेति । क्षणिकत्वसाधने असतो विपर्ययदृष्टान्तकरणादिति भावः । तदीयसंमतिमाह—एवमपीति । ननु व्यतिरेकव्याप्तिः कथं गृह्यते ? यदक्षणिकं तदसत् यथा खपुष्पमिति व्याप्तिग्रहाधिकरणस्याप्रामाणिकत्वात् प्रामाणिकस्यैव सर्वत्र दृष्टान्तत्वादिति शङ्कायां 'तदभावे च तन्न' इति वचनादपि व्यतिरेकव्याप्तेरवगमो यस्मात्तस्माद्वैधर्म्यदृष्टान्ते व्यतिरेकव्याप्तिग्रहे आश्रयापेक्षानियमो नास्तीत्यपि ब्रूथेत्यर्थः । तथाच प्रतिरोधो न,(सम्भवति) युक्त इति भावः । अन्येऽपि—सौगतैकदेशिनोऽपि । अनित्यता—क्षणिकत्वं । अन्ये नैयायिकैकदेशिन इत्य(परेऽ)-प्याहुः । बाधादिति—अस्मिन् क्षणे अयं वर्तत इति भेदग्राहित्वात्प्रत्यक्षस्येति भावः । तत एवेति—क्षणोपाधेश्च भेदग्राहिप्रमाण-बाधादेवेत्यर्थः । भेदग्रहमेवोपपादयति—य(दि)दा हीति । सर्वपदार्थानां

## सर्वार्थसिद्धिः

[1]* स्वरूपेण क्षणोपाधयः स्युः ; कालतारतम्यधीः [2]* कुत्रापि न भवेत् । त(दा)थाच स्थिरशङ्काया एवानुदयात् निर्विषयमनुमानं

## आनन्ददायिनी

स्वरूपेणोपाधित्वे स्वस्वावच्छिन्नकालस्यैव क्षणत्वात् सर्वेषां च स्वावच्छिन्नकाल एव वृत्तेः कालतारतम्यं न स्यात्। स्वकालातिरिक्तकालवृत्तित्व-(रूप)स्य वैषम्यस्यासम्भवात्। नन्विष्टापत्तिः ; क्षणिकवादिनः सर्वस्यापि क्षणकालवृत्तित्वादित्यत्राह––तथाचेति । स्वावच्छिन्नकालमात्रस्य क्षणकालत्वात् तदतिरिक्तवृत्तित्वं हि स्थिरत्वं भवन्मते निरस्यं ! नचेदं कस्यचिदपि सम्भाव्यते! स्वकालवृत्तित्वस्य स्थैर्यवादिभिरप्यङ्गीकारात्; अतिरिक्तवृत्तित्वे सन्देहाभावात् एतादृशक्षणिकत्वसाधने सिद्धसाधनता स्यात्। तथाच सान्दिग्धे न्यायः प्रवर्तत इति अनुमानमपि निर्विषयं स्यादित्यर्थः । क्षणि-

## भावप्रकाशः

[1]* स्वरूपेणेति–उदयानन्तरस्थायिस्वरूपेणेत्यर्थः। [2]* कुत्रापि न भवेदिति––अयं च दोषः ;

> उदयानन्तरस्थायि स्वरूपं यच्च वस्तुनः ।
> तदुच्यते क्षणस्सोऽस्ति यस्य तत् क्षणिकं मतम् ॥ ३८८ ॥

इति शान्तरक्षितपरिष्करणेऽपि बोध्यः । क्षणिकत्वानुमितेः शुद्धस्वरूपावगाहित्वे साध्यस्य पक्षादविशिष्टतया साधनप्रयासवैफल्यं। उदयानन्तरस्थायित्वविशेषिततदवगाहित्वे अतद्रूपपरावृत्तस्वरूपावगाहिविकल्पस्येव असदर्थावगाहित्वेन भ्रान्तत्वमिति स्फुटम् । तत्र पञ्जिकायां उत्पादानन्तरविनाशिस्वभावो वस्तुनः क्षण उच्यते ; स यत्रास्ति स क्षणिक इति कमलशीलोक्तिरापातरमणीया । तथाहि––उत्पादकाले विनाशस्य विनाशकाले उत्पादस्याननुभवेन करणाकरणे इव परस्परविरुद्धावुत्पादवि-

## सर्वार्थसिद्धिः

स्यात् ।[1]*सर्वस्य च त्रिलोकस्य स्वप्रयोजनेच्छया हि प्रवृत्तिः! सा फलार्थिनः फलिनश्च भेदे बाध्यते ।

## आनन्ददायिनी

कत्वसाधकानुमानस्य तर्कबाधमप्याह —सर्वस्य चेति । त्रिलोकस्येति— पात्रादित्वात्साधुः । बहुलग्रहणात् स्त्रीत्वाभावः । यद्वा लोकशब्दो

## भावप्रकाशः

नाशौ कथमेकत्र समाविशतः? कालभेदेन विरोधपरिहारस्य क्षणिकवाद्यसंमतत्वात् । किंच विनाशस्वभावः धर्मिणमभिसंबध्नाति न वा? आद्ये धर्मिण उदयानन्तरस्थायित्वं कथं? द्वितीये तमनभिसंबध्नन् तत्स्वभावः कथं भवेत्? अपि च—

ननु नैव विनाशोऽयं सत्ताकालेऽस्ति वस्तुनः ।
न पूर्वं न चिरात् पश्चात् वस्तुनोऽनन्तरं त्वसौ ॥ ३६७ ॥
एवं च हेतुमानेव युक्तो नियतकालतः ।

इत्यविद्धकर्णोक्तदूषणपरिहाराय शान्तरक्षितेन द्विविधस्यापि विनाशस्य वस्त्वनन्तरभावित्वनिरासेन तत्र त्वयाऽपि तथैवाङ्गीकारेण अत्र तद्विरोधेन विनाशस्वभावस्य वस्तुभूतोत्पादानन्तरभावित्वाभिधाने अविद्धकर्णोक्तं दूषणं भवतैव स्थापितं स्यात् इति । मूढानां संतानावगाहिनी कालतारतम्यधीरुपपद्यते इति शङ्कायामाह—[1]* सर्वस्येत्यादि ॥

कर्तृत्वादिव्यवस्था तु सन्तानैक्यव्यवस्थया ।
कल्पनारोपितैवेष्टा नाङ्ग सा तत्वसंस्थितेः ॥ ५०४ ॥

इति शान्तरक्षितः । 'प्रचुरतराज्ञानतिमिरसङ्घातोपहतज्ञानालोको लोकः आत्मनि तत्त्वान्यत्वासत्त्वादिविचारमवधूय विशिष्टहेतु-

## सर्वार्थसिद्धिः

[1]*न च त्वमपि कुत्येषु निरन्वयविनाशवित्।
मत्सन्तानसमृद्ध्यर्थमिति मत्वा प्रवर्तसे! ॥

## आनन्ददायिनी

भुवनपरः । त्रयो लोका यस्येति बहुव्रीहिः । तथाच कस्यापि प्रवृत्तस्य फलप्राप्त्यभावात् प्रवृत्तिर्न स्यादिति भावः । ननु सन्तानैक्यात्प्रवृत्ति-स्सम्भवतीत्यत्राह—नचेति । तथाच स्वानुभवबाध इति भावः । आदिशब्देन इच्छादिर्गृह्यते । विमतं स्थिरं वस्तुत्वात् आत्मवत्

## भावप्रकाशः

फलभावनियतरूपाणां संस्काराणां प्रबन्धमेकत्वेनाध्यवसाय स एवाहं करोमीति व्यवहरति मुक्तये च प्रवर्तते। तदभिमानानुरोधेन च भगवन्तस्तथागताः समुच्छेददृष्टिप्रपाततो विनेयजनारिरक्षिषया सन्तानैकतां दर्शयन्तः कर्तृत्वादि व्यवस्थापयन्ति । तथाविधाया एव व्यवस्थातो वस्तु-सिद्धिरिति चेदाह—नाङ्गं सेत्यादि । न हि तत्वपरीक्षापराङ्मुख-मतीनां संवृतिपतितानां बालजनानामभिनिवेशवशेन शक्यं तत्वं व्यव-स्थापयितुम्! तदभिनिवेशस्य नैरात्म्यक्षणभङ्गविहितप्रमाणबाधितत्वात्, इति कमलशीलः । तत्र विनेयजनाशयानुसारेण अतत्वोपदेशः वञ्चना-मात्रमिति भावेन तद्दूषयति *न च त्वमपीति । अपिर्विरोधे । भव-न्मतरीत्या अज्ञत्वे निरन्वयविनाशस्य ज्ञानित्वे सन्तानसमृद्ध्यर्थत्वस्य च बोधो न सम्भवति—

'अहीनसत्वदृष्टीनां क्षणभेदविकल्पना ।
सन्तानैक्याभिमानेन न कथञ्चित्प्रवर्तते ॥ ५४१ ॥

## सर्वार्थसिद्धिः

**तदिह स्वाभिप्रायादिबाधश्च। आत्मदृष्टान्ते· च प्रत्यनुमानबाधः।**

## आनन्ददायिनी

इति प्रतिरोधश्चेत्याह—आत्मदृष्टान्तेनेति । बाधः—प्रतिबन्धः । उक्ततर्कानुगृहीतत्वादस्याधिकबलतया बाध एवेत्यर्थः । व्याप्यत्वासिद्धि

## भावप्रकाशः

अभिसंबुद्धतत्वास्तु प्रतिक्षणविनाशिनाम् ।
हेतूनां नियमं बुद्ध्वा प्रारभन्ते शुभाः क्रियाः ॥ ५४२

ये तावत् अप्रहीणसहजेतरसत्कायदर्शनादयस्तेषामयं क्षणभेदविकल्पो नास्त्येव । तथाहि—ते सन्ततिमेकत्वेनाध्यवसाय सुखिता वयं भविष्याम इत्याहितपरितोषाः कर्मसु प्रवर्तन्ते। येऽपि पृथग्जनकल्याणा एवं युक्त्यागमाभ्यां यथावत् क्षणिकात्मतयोरवबोधादभिसम्बुद्धतत्वास्तेऽप्येवं प्रतीत्यसमुत्पादधर्मतां प्रतिपद्यन्ते । करुणादिपूर्वकेभ्यो दानादिभ्यः स्वपरहितोदयशालिनः संस्काराः क्षणिका एवापरापरे परम्परया समुत्पद्यन्ते । न तु हिंसादिभ्य इत्यतस्ते हेतुफलप्रतिनियममवधार्य शुभादिक्रियासु प्रवर्तन्ते । यथोक्तं—

यावच्चात्मनि न प्रेम्णो हानिस्स (सपदि नश्यति )परि तस्यति ।
तावद्दुःखितमारोप्य न च स्वस्थोऽवतिष्ठते।
मिथ्याध्यारोपहानार्थं यत्नोऽसत्यपि भोक्तरि ॥

इति' इति तत्वसंग्रहपञ्जिकोक्तिरपि अत्रैव पूर्वं 'सर्वे पूर्वे भवेयुस्तदुपरिभवतां कारणानि क्षणानां' इत्यादिविवरणे दूषितप्रायेति भावः ॥

## सर्वार्थसिद्धिः

तत्र साध्यवैकल्यं च घटादीन्निदर्शयद्भिः युष्माभिरिव क्रमात्प्रशमनीयम् । अस्ति च सोऽहमिति प्रत्यभिज्ञयास्माकं तत्सिद्धिः। आलयविज्ञानसन्ततिविषयेयमिति चेत्; इदमपि परिभाषामात्रं; प्रमाणाभावात् । 'नान्यदृष्टं स्मरत्यन्यः' इति परिभाषाया निर्बाधत्वाच्च । [1]* निरर्थकं चेदमालयविज्ञान-

## आनन्ददायिनी

परिहरति—घटादीनिति । प्रशमनप्रकारमाह—अस्ति चेति । दीपादिविषयप्रत्यभिज्ञावदन्यथासिद्धिमाशङ्कते—आलयेति । आलयः—प्रवृत्तिविज्ञानाश्रयः । प्रवृत्तिविज्ञानं–प्रवर्तकं घटादिविज्ञानं । विज्ञानं–ज्ञानस्वरूपमात्मेति सौगतपरिभाषा । तथाच आलयविज्ञानसन्ततिविषयतया न स्थिरत्वसाधिकेति न दृष्टान्तासिद्धिरित्यर्थः । प्रमाणाभावादिति–क्षणिकत्वसाधकानुमानात्प्रागालयविज्ञानसन्ततिकल्पने प्रमाणाभावान्निष्प्रतिपक्षा प्रत्यभिज्ञा स्थिरत्वं साधयेदिति भावः । प्रत्यभिज्ञायाः स्थिरविषयत्वेऽनुकूलतर्कमप्याह—नान्यदृष्टमिति । परिभाषा–व्याप्तिः । तथाच नातिप्रसङ्ग इति भावः । आलयविज्ञानस्यास्थिरत्वे बाधकतर्कान्तरमप्याह—निरर्थकं चेदमिति । आलयविज्ञानानङ्गीकारे प्रवृत्तिविज्ञानस्य किञ्चित्सम्बन्धित्वाभावात्प्रवृत्तिः कस्यापि न स्यात् सर्वस्य वा स्यात् अविशेषात् । तदङ्गीकारे तु यदालयविज्ञानसम्बन्धि प्रवृत्तिविज्ञानं तस्यैव प्रवृत्तिं जनयतीति नियमस्सिध्यतीति तदङ्गी-

## भावप्रकाशः

[1]* निरर्थकमिति—एतच्च जीवसरे विवेचयिष्यते ।

## तत्वमुक्ताकलापः

**दृष्टान्तहानिः स्थिर इति विदितो यत् क्षणस्याप्युपाधिः। सामग्री कार्यशून्या क्षणः इयमपि**

## सर्वार्थसिद्धिः

सन्ततिकल्पनम्; तस्य प्रवृत्तिविज्ञानेन सह सर्वप्रकारसम्बन्धायोगादिति। अथ क्षणोपाधिवदित्युक्तं प्रतिवक्ति—दृष्टान्तहानिरिति। अक्षणिकत्वे कथं क्षणोपाधिरित्यत्र गूढाभिप्राय आह—सामग्रीति। कार्यशून्या—कार्यप्रागभावसमन्वितेत्यर्थः। क्षणः—क्षणोपाधिरीति यावत्। तथाऽपि तस्य क्षणिकत्वं न प्रतिक्षिप्तमित्यत्राह—इयमपीति। ननु हेतूनां सङ्घोऽपि हेत्वनतिरिक्तश्चेत् तेषां भवत्पक्षे स्थिरत्वात् न क्षणोपाधित्वं। अति-

## आनन्ददायिनी

क्रियते तस्य चेत् क्षणिकत्वमभ्युपैषि तदा प्रवृत्तिविज्ञानेन सम्बन्धाभावान्नियमासिद्धेस्सर्वस्य प्रवृत्त्यप्रवृत्तिप्रसङ्गतादवस्थ्याच्चदङ्गीकारो व्यर्थ इत्यर्थः। ननु जन्यजनकभावसम्बन्धान्नियमोऽस्तु इत्यत्राह —सर्वप्रकारेति। इन्द्रियसम्प्रयोगजन्ये ज्ञाने आलयविज्ञानस्याश्रयतया जनकत्वं वाच्यम्; तच्च क्षणिकत्वे न सम्भवति; ततोऽतिरिक्तश्च सम्बन्धोऽनतिप्रसक्तो दुर्वच इति सर्वप्रकारेणापीत्युक्तमिति भावः। ननु कार्यशून्या सामग्री क्षणोपाधिश्चेत् सामग्र्याः क्षणिकत्वमावश्यकं; अन्यथा क्षणोपाधित्वायोगादिति शङ्कायास्तादवस्थ्यादिति कथं दृष्टान्तहान्युपपादनमित्यत्राह—गूढाभिप्राय इति। गूढाभिप्रायमेवावतारिकामुखेन व्यनक्ति—तथाऽपीत्यादिना। अभिसन्धिं प्रकाशयति—

## तत्वमुक्ताकलापः

**तद्धेतुसंघः नचासौ हेतुर्नान्यः स्थिरास्ते**

## सर्वार्थसिद्धिः

रिक्तोऽप्यक्षणिकः क्षणोपाधिर्न स्यादित्यत्राह—नचेति । अयं भावः—सङ्घशब्दो न सम्बन्धमात्रवाचकः सम्बन्धशब्दपर्यायत्वाप्रसिद्धेः । न च तत्तत्सम्बन्धिस्वरूपवाचकः प्रत्येकमप्रयोगात् । अतः केनचिदुपाधिना सङ्गृहीतास्त एव सङ्घशब्दार्थः । तत्र यदि त एव क्षणोपाधितया दृष्टा—सीक्रियन्ते तथासति—स्थिरास्त इति । ननु तत्संहतिहेतुरुपाधिदृष्टान्तस्स्यात्? मैवम्;—न हि नः केवलनित्यात् केवलानित्याद्वा कस्यचित्कार्यस्योत्पत्तिः! किं तु तत्समुदायात् । तत्र नित्यांशे तावत् क्षणिकशङ्काऽपि नास्ति । अनित्येऽपि यताश्चिरोत्पन्ना-

## आनन्ददायिनी

अयं भाव इति । संबन्धशब्देति—संयोगादौ (गादिमात्रे) संघशब्दाव्यवहारादिति भावः । अत इति । केन चित् देशाद्युपाधिना प्रयोजकेन संगृहीताः अवच्छिन्नाः । त एव—संघातिन एव संघशब्दवाच्या इति नियमतस्तत्रैव व्यवहारादिति भावः—स्थिरा इति । तथाच दृष्टान्तासिद्धिरिति भावः । नन्वीति—संहतिहेतूपाधेः क्षणिकत्वाभावे तदवच्छिन्नस्याक्षणिकतया क्षणोपाधित्वं न स्यादिति संहतिहेतूपाधिः क्षणिको वाच्यः । तथाच स दृष्टान्तस्स्यादिति भावः । मैवमिति—सङ्घातप्रयोजकं कारणेषु किमिति विचारे तत्र प्राप्ताप्राप्तविवेचने चरमकारणमेव । तच्च उत्तरकालस्थायित्वात् स्थिरमेव । न च क्षणोपाधित्वानुपपत्तिः स्वकार्यप्रागभावसहितस्य क्षणावच्छेदकत्वात् । तयोः स्थिरत्वान्न कस्यापि

## सर्वार्थसिद्धिः

द्धेतोः सङ्घभावः सोऽपि स्थिरतरः। यस्तु चरमस्सहकारी स च स्थिर एव सन् स्वकार्यप्रागभावोपहितरूपः कालमवच्छिन्दन् क्षणोपाधिरित्युच्यते। तदुपधानं च तस्य प्रत्यक्षादिसिद्धं। न चात्र क्षणिकं किञ्चित् सिध्यति! अनवच्छिन्नस्य कालतत्वस्य कालपारिच्छेदलक्षणानित्यताभावात्—

क्रियादिश्च स्थिरोऽप्येवं क्षणोपाधिविशेषकैः।
तत्प्रकर्षनिकर्षैस्तु तत्तत्कालप्रकल्पना॥

इयं तावत् सर्वलोकसाक्षिकी; क्षणकालावच्छेदकयोः प्रागूर्ध्व-

## आनन्ददायिनी

दृष्टान्ततेत्यर्थः। तथाच यत्किञ्चित्कार्यचरमकारणतत्प्रागभावावच्छिन्नकालत्वं क्षणत्वमिति पर्यवसितोऽर्थः। तदुपधानं—तत्प्रागभावोपधानं। तस्य—चरमकारणस्य। ननु क्षणकाल एव दृष्टान्त इत्यत्राह—अनवच्छिन्नस्येति। तत्र किमवच्छिन्नः क्षणो विवक्षितः उत कालस्वरूपमात्रं? नाद्यः; क्षणश्च कालः उपाधिस्तत्संबन्धश्चेति त्रयमेव। तत्र प्रागभावचरमकारणयोः स्थिरत्वात् तत्संबन्धोऽपि स्थिर एव। तत्र कालस्वरूपं च स्थिरमेव। न द्वितीयः; अवच्छिन्नस्य कालस्वरूपमात्रतया तस्य नित्यत्वादिति भावः। ननु काले कालसम्बन्धाभावात् कथं तस्य नित्यत्वं? इत्यत्राह—कालपरिच्छेदेति। वस्तुनो ह्यनित्यत्वाभावे नित्यत्वभावः। एवं सामग्रीवत् क्रियाऽपि किञ्चिदवच्छिन्ना क्षणोपाधिरित्याह—क्रियादिश्चेति। अदिशब्देन अवस्थाऽपि विवक्षिता। तत्प्रकर्षनिकर्षैः—क्रियारूपक्षणोपाधिप्रकर्षनिकर्षैः—अधिकन्यूनभावैः। यद्वा—क्षणप्रकर्षनिकर्षैः दिवसमासवत्सरादिकल्पनेत्यर्थः। क्षणकालावच्छेदकयोः—कार्यप्रागभावचरमकारणयोः। प्रागूर्ध्वेति—प्राक्का-

## सर्वार्थसिद्धिः

**व्यापिनोरक्षणिकत्वात् तदवच्छिन्नस्य कालस्य तु क्षणत्वादेव न क्षणिकत्वमिति वस्तुस्थितिः। त्वत्पक्षे तु कालावच्छेदः क्षणोपाधिरसिद्धः कालस्यैवाभावात्। नचासिद्धोऽपि साध्यः स्वमतविरोधात्। यथाऽऽहुः—**

## आनन्ददायिनी

लव्यापी प्रागभावः ऊर्ध्वव्यापि चरमकारणमित्यर्थः। तथाच तदवच्छिन्नकालस्य क्षणत्वेऽपि तयोर्न क्षणिकत्वमित्यत्राह—तदवच्छिन्नस्येति। तथाच सिद्धान्तिमतानुसारेण दृष्टान्तासिद्धिरिति भावः। ननु सिद्धान्तिमते कालः क्षणलवादिपरिणामवानित्युक्तत्वात् स्वरूपेण क्षणरूपपरिणामोऽङ्गीकृतः। न च तस्योपाध्यवच्छिन्नकालत्वं; येनोक्तरीत्या स्थिराणामवच्छेदकत्वमुच्येत। अत एव सिद्धान्त्यभिमतदशावत्त्वेन द्रव्यलक्षणवत्त्वात्कालस्य द्रव्यत्वं। तथाच तादृशक्षणावस्था दृष्टान्तस्स्यादिति कथं दृष्टान्तासिद्धिरिति चेत्; अत्र केचित्—कालस्वरूपस्य न परिणामः। न च क्षणलवादिपरिणामवानित्युक्तिविरोधः उपाध्यवच्छेदस्यैव परिणामशब्दार्थत्वात्। न च द्रव्यलक्षणानुपपत्तिः; संयोगादिसम्बन्धस्यैवावस्थाशब्दार्थत्वात्। तथाच दृष्टान्तासिद्धिरित्याहुः। अन्ये तु—कालस्यास्तु परिणामः तथाऽपि क्षणिकत्वसाधकानुमाने कालोपाधित्वस्योपाधित्वात् सोपाधिकतया न सत्त्वहेतोः साध्यसाधकत्वमित्याहुः। पूर्वपक्ष्यनुसारेणापि दृष्टान्तहानि (दृष्टान्तासिद्धि) माह—त्वत्पक्षे त्विति। स्वमतविरोधः—अपसिद्धान्त इत्यर्थः। यद्वा स्वोक्तिविरोध इत्यर्थः। तत्र तदुक्तिमाह—यथाऽऽहुरिति। वादिप्रतिवादिनोर्मध्ये प्रतिवाद्यसिद्धं स्वयंसिद्धं स्वमतसिद्धं पक्षदृष्टान्तादिरूपेणाभिधातुं शक्यं। तत्र प्रतिवाद्यसिद्धिशङ्कायां तत्सा (द्धिशङ्काभावात्सा)

## सर्वार्थसिद्धिः

योऽपि तावत्परासिद्धः स्वयं सिद्धोऽभिधीयते ।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया?

अनन्यावच्छेदे(दार्थे)न स्वरूपेणैव कश्चित् क्षणशब्दवाच्य इति चेत् ; तर्हि क्षणभङ्गसाधनात्पूर्वमसिद्धः कथं दृष्टान्तस्स्यात्?

उत्तरप्रागभावाप्तपूर्वध्वंसैककालतः ।
मध्यमक्षणतादृक्त्वं व्यवस्थाप्यं त्वयाऽप्यतः ॥

## आनन्ददायिनी

धनमुखेन प्रतिक्रिया परिहारश्च संभवति। स्वतोऽसि(द्धौ)द्धे स्वमत एवासि(द्धौ)द्धे। का प्रतिक्रिया—कः प्रतीकारः?। स्वमतासिद्धस्याप्यभ्युपगमे अपसिद्धान्ता(पाता)दित्यर्थः—स्वत इति। सार्वविभक्तिकष्षष्ठ्यर्थे तासिः। अनन्यावच्छेदेनेत्यस्य विवरणं—स्वरूपेणैवेति। कालरूपवस्त्वपि मास्तु; तस्य कश्चिदुपाधिरपि माभूत्; किन्तु स्वरूपेणैव सिद्धेषु कश्चित् क्षणो भवतु—स एव क्षणिको दृष्टान्तोऽस्त्वित्यर्थः। तर्हीति—तादृशक्षणिकः क्षणशब्दवाच्योऽनुमानात्साधनीय इति भावः। क्षणिकत्वसिद्ध्यनन्तरमेव तादृशक्षणसिद्धिमुपपादयति—उत्तरेति। क्षणसन्ततीनां मध्ये मध्यमः क्षणः पूर्वक्षणध्वंसोत्तरक्षणप्रागभावाभ्यामेककालो भवति। तदेककालत्वमेव क्षणत्वं अतिप्रसङ्गाभावादिति त्वयाऽपि वाच्यं। तच्च क्षणिकसन्तानसिद्ध्यपेक्षं क्षणिकत्वसाधकानुमानादेव सिद्ध्यतीति न ततः पूर्वं सिद्ध्यतीत्यर्थः। मध्यमक्षणस्य तादृ(क्त्वं)शत्वं क्षण(णिक)त्वं। 'तदशिष्यं संज्ञाप्रमाणत्वादिति' ज्ञापकात्

## सर्वार्थसिद्धिः

ननु क्षणक्षरणस्वभावा प्रकृतिरिति हि [1] * भवत्सिद्धान्तः! अत्र प्रतिक्षणमुदयविलयिनो विकाराः क्षणिका एवेति तद्दृष्टान्तेन अन्येषां युष्माभिः किं नानुमीयते? इति चेत्; अशक्यत्वादयं सुहृदुपदेशस्त्यज्यते। सर्वक्षणिकत्वं साधयितुमुपक्रम्य स्थिर-द्रव्यवृत्तिक्षणिकविकारवदिति कथं दृष्टान्तयेम? तेषु च न त्वदभिमतं क्षणिकत्वं; प्रदीपादिवत् [2] * आशुतरविनाशित्वमात्रेण

## आनन्ददायिनी

षष्ठीसमासः। नन्विति—'नित्या सततविक्रिया' इत्यङ्गीकारात् पूर्व-पूर्वविकाराणामुत्तरोत्तरविकारसमये नाशादिति भावः। सर्वेति—तथाचैकदेशबाधो व्यभिचारश्चेति भावः। दृष्टान्तयेमेति—दृष्टान्तं कुर्यां इत्यर्थः। तषु—प्रकृतिगतविकारेषु। न त्वदभिमतामिति—उत्पत्त्यनन्तर-क्षणविनाशित्वरूपं क्षणिकत्वमित्यर्थः। तथाच दृष्टान्तस्य साध्यवैक-ल्यमिति भावः! प्रदीपादिवदिति—ननु तादृशं क्षणिकत्वं साध्यमस्तु; प्रदी-

## भावप्रकाशः

[1] * भवत्सिद्धान्त इति—जिज्ञासाधिकरणभाष्ये 'यच्चान्यथा-त्वमिति'—यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीत्याद्युक्तेरिति भावः। न हि वस्तुस्वभावानुविधा-यिन्यो वाचः। किं तर्हि? वक्तुरिच्छामनुविदधाति। अत उत्पादा-नन्तरस्थायिस्वरूपं क्षणशब्दार्थ इत्यादिः बौद्धानां परिभाषा अप्रा-माणिकी। अनुभवविरोधेन सर्वजनासंमतत्वात्। अत एव 'तास्तु त्रिंशत् क्षणः' इत्यादिकोशेषु क्षणशब्दस्य कालविशेषवाचित्वाभि-धानं संगच्छते। अतः क्षणिकशब्दो न बौद्धमतैकतान इत्यभिप्रे-त्याह—[2] * आशुतरविनाशित्वमात्रेणेति। एतेन विरोधवरूथिन्यां उमा-

## तत्वमुक्ताकलापः

**क्रमवदुपधिवत् स्यात् क्षणत्वं स्थिरेऽपि ॥ २० ॥**

## सर्वार्थसिद्धिः

**क्षणिकतोक्तेः। तदेतदभिप्रेत्याह—क्रमवदिति। क्षणत्वं—क्षणोपाधित्वमित्यर्थः।**

## आनन्ददायिनी

पादीनामेव दृष्टान्तानां सत्त्वादिति चेन्न; प्रदीपादीनां वर्त्यवयवाग्निसंयोगादुत्पत्तिः ततो वर्त्यवयवस्य रूपपरावृत्तिलक्षणो दाहः ततो भस्मीभावलक्षणो नाशः ततो दीपनाश इति सहेतुको नाशो नाशकारणसान्निधानापेक्ष इति नाशकारणानां प्रदीपवत् सर्वत्र नियतकालसान्निधिनियमस्य प्रत्यक्षबाधितत्वान्न तादृशं क्षणिकत्वमपि साधयितुं शक्यमिति भावः। तथाच तत्साधने नियतकालविनाशसामग्रीकत्वमुपाधिरिति द्रष्टव्यं। तदेतादिति—स्थिरतराणामेव पूर्वोत्तरकालव्यापिनां क्रमो-

## भावप्रकाशः.

महेश्वरेण उदाहृतभाष्यस्य क्षणिकत्वनिरसनपरभाष्यस्य च परस्परविरोधो दुष्परिहर इति कथनमज्ञानविलसितमिति सूचितं। साङ्ख्यमते प्रसवधर्मि इति (११) कारिकाविवरणसाङ्ख्यतत्वविभाकरे वंशीधरेण 'न चैवं धर्मिणः क्षणिकत्वापत्तिः; अभिव्यक्तितिरोभावावस्थाविशेषस्यैव क्षणिकत्वाङ्गीकारात्' इत्युक्तं समाधानं तु पूर्वं (५) 'प्रतिक्षणं परिणामिनो हि सर्व एव भावाः ऋते चितिशक्तेः' इति तत्वकौमुदीविवरणे 'प्रतिक्षणमिति—धर्मधर्म्यभेदे धर्माणां कालभेदेन व्यावृत्तिदर्शनाद्धर्मिणोऽपि प्रतिक्षणं भेद आवश्यक इति भावः' इति स्ववचनेनैव निरस्तमिति बोध्यम् ॥

## सर्वार्थसिद्धिः

द्वयोरयुगपद्दृष्टिः युगपच्च यथायथम् ।
अशक्यापह्नवा तस्मात् अस्मदुक्तैव पद्धतिः ॥

इह च प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधयोः निरन्वयविनाशत्वे परोक्तं

## आनन्ददायिनी

त्पन्नानां प्रागभावचरमकारणादीनां क्षणोपाधित्वं न कस्यापि क्षणिकत्व-मित्येतदभिप्रेत्येत्यर्थः । ननु क्रमवन्तौ पदार्थौ न समानकालिकौ भिन्नकालिकत्वात् संप्रतिपन्नवत् । तथाच नैककालिकतया क्षणोपाधित्व-मित्यत आह—द्वयोरिति । अयुगपत्–भिन्नकाले । युगपत्–समान-काले । यथायथमिति—येषां येन प्रकारेण न्यूनाधिकभावरूपेण संभवति तेन प्रकारेण दर्शनादनुमानस्य बाध इति भावः । यथाशब्दः प्रथमः पदार्थानतिवृत्तिवचनः । द्वितीयः प्रकारवचनः 'यथाऽसादृश्ये' इत्य-व्ययीभावः । क्षणिकत्वानुमानात्पूर्वं त्वदुक्तस्यासंभवान्मदुक्त एव क्षणो-पाधिः स्वीकार्य इत्या (त्यत आ)ह—तस्मादिति । नन्वनुमानान्तरं मदुक्तमस्त्विति चेत्; न; व्याप्तिग्राहकप्रमाणाभावेन अनुमानप्रवृत्तेरेवा-संभवादिति भावः ॥ ३० ॥

प्रसङ्गसङ्गतिमाह—इह चेति । क्षणिकत्वसाधने बाधकपरिहारं परोक्तं दूषयति–इहेति इति केचिदाहुः । प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधयो-रिति —निरन्वयविनाशः प्रतिसंख्यानिरोधः अप्रतिसंख्यानिरोधः सान्वयनाश इत्यर्थः । मुद्गरादिजन्यः प्रत्यक्षसिद्धो घटादेर्नाशः प्रतिसंख्या-निरोधः अस्फुटरूपदीपादिनाशोऽप्रतिसंख्यानिरोध इत्याहुः । अक्षणवि-नाश इति केचित् । इह—जगति। विप्रतिपत्ताविति शेषः । ननु क्षणिकत्वसा-

## तत्वमुक्ताकलापः

दीपादीनां कदाचित् सदृशविसदृशाशेषसंतत्यपेते ध्वंसे दृष्टेऽप्यशक्या तदितरविषयेऽनन्वयध्वंसक्लृप्तिः ॥

## सर्वार्थसिद्धिः

निदर्शनं दूषयति—दीपादीनामिति । आदिशब्देन क्षणरुचिबुद्बुदादिसंग्रहः ।

स निरन्वयनाशस्स्यात् धर्मो धर्म्यपि वा पुनः ।
पूर्वसंघातभागो वा यद्भावेनानुवर्तते ॥
उत्पत्तिश्च तथाभूता निरन्वयसमुद्भवा ।
तावुभौ सर्वभावानां नियताविति सौगताः ॥

## आनन्ददायिनी

घनमयुक्तं विनाशस्य सान्वयत्वात् अनुवृत्तांशस्य स्थिरत्वेन बाधादित्याशङ्क्य सर्वत्र निरन्वयविनाश एव न तु कस्याचिदंशस्यान्वयो येन बाधो दृश्येतेति सौगतोक्तं संवादयति—स निरन्वयनाशस्स्यादिति । धर्मो—गन्धादिः । धर्मी—पाकरक्तस्थले घटादिः । पूर्वसंघातभागः—घटादिसंघातस्यावयवः तन्त्वादिर्वा यद्भावेन ·यत्स्वरूपेणानुवर्तते इत्युच्यते ; तन्न ; कुतः ? स निरन्वयनाशस्स्यात्—निरवशेषं नश्यति ; तथाच नानुवर्तत इति न क्षणिकत्वसाधने बाध इत्यर्थः । उत्पत्तिश्च तथाभूता—द्रव्यादेरुत्पत्तिरपि विनाशवदेव । तथाशब्दार्थमेवाह—निरन्वयेति । पूर्वमवयवाद्यभावेऽपि द्रव्यसमुत्पाद इत्यर्थः । सर्वभावानां—सर्वपदार्थानां । सौगताः न्यायचन्द्रिकायां प्रतिपादित-

## तत्वमुक्ताकलापः

**बाधादेर्दर्शितत्वात् अपिच दृढमिते सान्वयेऽस्मिन् घटादौ**

## सर्वार्थसिद्धिः

यो विनाशस्स निरन्वयः यथाऽन्त्यदीपस्य ; अस्ति च विनाशो जातानां ; अतस्सोऽपि निरन्वय इति निरन्वयध्वंसक्लृप्तिर्न शक्या । तदुपपादयति—बाधादेरिति । प्रत्यभिज्ञाबाधस्य प्रवृत्त्याद्यनुपपत्तीनां च दर्शितत्वाद्विपरिवर्तश्च युक्त इत्याह—अपिचेति । अन्त्यदीपविनाशस्सान्वयः विनाशत्वात् पटादिविनाशवत् । साध्यविकलो दृष्टान्त इति चेन्न ; संघातांशानां वा गन्धादिधर्माणां वा श्यामरक्तादिधर्मिणां वा यथासंभवमनुवृत्ते-

## आनन्ददायिनी

वन्त इति शेषः । तदुक्तप्रयोगं दर्शयति—यो विनाश इति । प्रत्यभिज्ञाबाधस्येत्यादि—यद्यपि न निरन्वयविनाशसाधने प्रत्यभिज्ञाबाधादिर्दर्शितः तथाऽपि निरन्वयविनाशसाधनस्य क्षणिकत्वसाधनार्थत्वात् तत्र बाधादिर्दर्शित इति भावः । ननु माभूत् क्षणिकत्वसाधनार्थता ; निरन्वयविनाशमात्रं साध्यतामिति चेन्नः ; घटादिनाशस्थले कपालमालाद्यनुवृत्तिदर्शनात्तथाऽपि बाध एव । अत एव बाधादेरिति सामान्योक्तिरिति ध्येयम् । प्रवृत्त्याद्यनुपपत्तिश्च आत्मनो विनाशित्वादिति भावः । विपरिवर्तश्चेति । प्रत्युत अन्त्यदीपविनाशस्थल एव सान्वयनाशसाधनं स्यादित्यर्थः । गन्धादीति—आदिशब्देन रसादिर्गृह्यते ।

## तत्वमुक्ताकलापः

**दुर्दर्शावस्थया स्युः पयसि लवणवत् लीनदीपादिभागाः ॥ ३१ ॥**

## सर्वार्थसिद्धिः

दृष्टोपलब्धत्वात् प्रत्यक्षबाधपरिहाराय दुर्दर्शावस्थत्वो(स्थो)क्तिः। स्युरित्यनेन दृश्यावस्थानिवृत्तावपि स्वरूपसत्त्वं सूच्यते। ननु पयसि लवणवदित्ययुक्तं तत्रापि निरन्वयविनाशात्; तन्न; रसे(रसने)न सूक्ष्मावयवानुमानात्। दीपावयवेषु लिङ्गमपि नास्तीति चेन्न; दीपोर्ध्वदेशि(शवर्ति)नां किञ्चिदौष्ण्योपलब्ध्या दीपावयवसंक्रान्तेस्सुगमत्वात्। प्रभूतदीपपार्श्ववर्तिनां च तापस्वेदादिस्तत एव। एवमन्त्यदीपनाशेऽप्यदृश्यावयवविसर्पस्सिद्धः। अतो विनष्टदीपभागानुपलब्धेरदृश्यावस्थानिबन्धनत्वात् अनन्यथासिद्धप्रत्यक्षसिद्धः सान्वयविनाशदृष्टान्त एव साधीयान्। अन्त्यदीपादेश्च यदि न किञ्चिदुपादेयं ततोऽर्थक्रियाविरहादसत्त्वं

## आनन्ददायिनी

प्रत्यक्षबाधेति। योग्यानुपलब्ध्यभावान्नानुपलम्भमात्रं बाधकमिति भावः। विसर्पः—प्रसरः व्यापनमिति यावत्। ननु विनिगमकाभावात् को निर्णय इत्यत्राह—अतो विनष्टेति विनष्टदीप(दीपादि)स्थले निरन्वयविनाशस्सन्दिग्धः सूक्ष्मत(क्ष्मावस्थ)याऽप्यनुपलब्धिसंभवात्। तथाच निरन्वयव्याप्तिग्रहो न शक्यः। सान्वयस्य तु घटादिनाशस्थले सन्देहाभावाद्व्याप्तिस्सुग्रहेति भावः। विपक्षबाधकबलादपि निश्चय इत्याह—अन्त्यदीपादेश्चेति। निरन्वयविनाशाङ्गीकारात् तज्जन्यस्य कस्यचिद-

## तत्त्वमुक्ताकलापः

सत्त्वेऽसत्त्वेऽपि पूर्वं किमपि गगनतत्पुष्पवन्नैव साध्यं

## सर्वार्थसिद्धिः

स्यात् । बुद्ध्यादिरर्थक्रियाऽस्त्विति चेन्न; तस्यानियतत्वात् । विनाशस्तर्हि अर्थक्रियास्त्विति चेन्न; तस्य ते तुच्छत्वात् ध्रुवभावित्वेनाहेतुकत्वाभ्युपगमाच्च । एवमन्त्यदीपासत्त्वे च तत्कारणपरम्पराया अपि तथात्वं स्यादिति ॥ ३१ ॥

इति क्षणभङ्गभङ्गः

---

ननु साध्यसाधन(हेतुसाध्य)भावे सिद्धे हि प्रस्तुतं पक्षचतुष्टयं सिध्येत्; स एव नास्तीति चार्वाक उत्तिष्ठते—सत्त्वेऽसत्त्वइति ।

## आनन्ददायिनी

भावादिति भावः । बुद्ध्यादिरिति—विषयप्रकाशकतया विषयतया वा बुद्ध्यादिजनकत्वाभावादिति भावः । आदिशब्देन तमोनिरसनादिर्गृह्यते । नन्वन्त्यदीपस्य सत्त्वं माभूदित्यत्राह—एवमन्त्यदीपादिसत्त्वे इति । (तथाच) उपान्त्यस्यान्त्यदीपजनकत्वेन सत्त्वं वाच्यं; अन्त्यस्यासत्त्वे तुच्छतयोपान्त्यजन्यत्वमेव न स्यात्; तथाचोपान्त्यस्याप्यर्थक्रियाविरहात्तुच्छता; तथा पूर्वपूर्वेषामपीति दीपपरम्परावत्सर्वक्षणपरम्पराणामपीति चरमबौद्धपक्ष(पात)स्स्यादित्यर्थः ॥ ३१ ॥

इति क्षणभङ्गभङ्गः.

---

कार्यकारणभावसमर्थनार्थमाक्षेपसंगतिमाह—नन्विति । पक्षचतुष्टयमिति—वैनाशिकार्धवैनाशिकसाङ्ख्यसिद्धान्तिपक्षचतुष्टयमित्यर्थः ।

## तत्वमुक्ताकलापः

### हेतुप्राप्तिर्न पश्चाद्भवितुः अघटितोत्पादनेऽतिप्रसङ्गः।

## सर्वार्थसिद्धिः

यदि कार्यं कारकव्यापारात् पूर्वमस्ति तदा पूर्वसिद्धगगनादिवत् किमपि न कार्यं स्यात्। अथ तदा नास्ति तदाऽपि खपुष्पवन्न कार्यम्। नचासतस्सत्त्वापादनसंभवः! नहि नीलं शिल्पिसहस्रेणाऽपि सितीकर्तुं शक्यमिति। कार्यं च कारणेन सह पूर्वं पश्चाद्वा जायते? आद्ये किं कस्य कारणं कार्यं वा स्यात्? द्वितीये(ऽपि) ततः पूर्वस्य कथं तज्जन्यत्वं? वैपरीत्यापातश्च लोकव्यवहारविरोधात्। तृतीये हेतुः स्वेन प्राप्तं वा साधयेत् अप्राप्तं वा? आद्ये प्राप्तत्वादेव पूर्वसिद्धेर्न साध्यत्वं। नचोत्तरकालीनस्य पूर्वकालीनेन प्राप्तिः! उभयस्वरूपसिद्ध्यपेक्षत्वात्तस्याः। तदिदमाह—हेतुप्राप्तिरिति। द्वितीयमपि दूषयति—अघटितेति। अप्राप्तोत्पा-

## आनन्ददायिनी

अथ तदेति—कारकव्यापारात्पूर्वस्मिन् काले इत्यर्थः। किं कारणेन सह जायते पूर्वं वा पश्चाद्वा जायते? इति विकल्पक्रमः। आद्ये इति—सव्येतरविषाणवद्विनिगमकाभावा(वात्कार्यकारणव्यवस्था न स्या)दिति भावः। लोकेति—पूर्ववर्तिन एव लोके कारणत्वव्यवहारादित्यर्थः। पूर्वसिद्धत्वमेवोपपादयति—नचोत्तरेति। तत्र हेतुमाह—उभयेति। तस्याः—प्राप्तेः सम्बन्धतया सम्बन्धिद्वयपूर्वकत्वादिति भावः। अप्राप्तोत्पादने इति—अविशेषादिति भावः।

## तत्वमुक्ताकलापः

**जन्यं जन्म यथा वा? द्वयमसदनवस्थानकार्यक्षतिभ्यां इत्याद्यैः हेतुसाध्यं न किमपि यदि**

## सर्वार्थसिद्धिः

दने सर्वस्मात्सर्वमुत्पद्येत। प्रकाश्यमप्राप्य वा दीपः प्रकाशयेत् दाह्यमप्राप्य वा दहनो दहेत्। पुनर्विकल्पान्तरेण विहतिमाह–जन्यमिति। घटो जायत इत्येतौ तावन्न पर्यायौ सह प्रयोगात्। यावद्विनाशं जायत इति प्रयोगप्रसङ्गाच्च। पटो जायत इति प्रयोगश्च न स्यात् घटपटशब्दयोरपर्यायत्वात्। अतः कार्यस्वरूपातिरिक्तं जन्म। तच्च जन्यमजन्यं वेति विकल्प्य द्वयमप्ययुक्तमित्याह—द्वयमसदिति। क्रमाद्बाधकमाह–अनवस्थानकार्यक्षतिभ्यामिति। जन्मनो जन्यत्वं हि जननकर्मतया! अतस्तस्यापि जन्म स्वीकर्तव्यं एवं तस्यापीत्यनवस्था। अजन्यत्वे (तु) तज्जन्मनोऽनादित्वात् तद्वतो घटादेरपि तथात्वं स्यात्। तथाच कार्यक्षतिस्स्यादिति। आदिशब्देन भिन्नाभिन्नत्वादिविकल्पक्षो-

## आनन्ददायिनी

यावद्विनाशमिति—घटस्यैव जनिधात्वर्थ(र्थत्वे)त्वात् तस्य वर्तमानत्वात् धात्वर्थवर्तमानकाले वर्तमानप्रयोगस्योचितत्वादिति भावः। पटो जायत इति—घट(स्वरूप)स्यैव जन्म(नि)त्वे तस्य पटस्वरूपत्वाभावादित्यर्थः। तस्याऽपि जन्मत्वेऽननुगम इति भावः। किञ्च घटस्वरूपस्यैव जन्मत्वे पटो जायते इति प्रयोगात् पटस्यैव घटात्मकत्वं वाच्यं; तथाच घटपटशब्दयोः पर्यायत्वं च स्यादित्याह—घटपटशब्दयोरिति। भिन्नाभिन्नत्वादीति—कार्यं कारणाद्भिन्नमभिन्नं वेति

## तत्वमुक्ताकलापः

**न स्वक्रियादेर्विरोधात् ॥ ३२ ॥**

## सर्वार्थसिद्धिः

भसंग्रहः । हेतुश्च साध्यं च हेतुसाध्यं; हेतुना साध्यं वा । ईदृशानां तर्काणां युक्ताङ्गहान्यादिकमभिप्रेत्याह—नेति । साधारणदुष्टत्वमाह—स्वक्रियादेरिति । इह तावदनिष्टकोटिभङ्गो न प्रत्याख्येयः । अन्यत्रैवमुत्तरगतिः—यदत्र पूर्वमसत्त्वे कार्यत्वं न स्यादिति ; तद्विरूद्धभाषितम् । प्रागसत्त्वविशेषितं सत्त्वमेव हि कार्यत्वं । तत्र च प्रागसत्त्वे प्रागसत्त्वमेव न स्यादिति वा तद्विशिष्टं न स्यादिति वा सत्त्वमात्रं न स्यादिति वा प्रसङ्गा-

## आनन्ददायिनी

(विकल्पे) इति(त्यर्थः) भावः । कारणं किञ्चित्कारेण कार्यं जनयति उत तद्विनेत्यादिविकल्प आदिशब्दार्थः । समाहारद्वन्द्व इत्याह—हेतुश्चेति । 'तृतीया तत्कृतार्थेन' 'कर्तृकरणे कृता' इति वा समास इत्याह—हेतुनेति । युक्ताङ्गं—प्रागसत्त्वं । अयुक्ताङ्गस्वीकार आदिशब्दार्थः । अयुक्ताङ्गं च प्राक्सत्वकारणसंयोगादिः । दुष्टत्वं दोषः । अनिष्टकोटीति—प्राक्सत्त्वकारणप्राप्त्यादिरित्यर्थः । अन्यत्र प्रागसतोऽप्राप्तस्योत्पादने । वक्ष्यमाणा उत्तरगतिः । उत्तरगतिमेवोपपादयति—यदत्रेत्यादिना । चार्वाकोऽपि घटपटादि नित्यतया तुच्छतया वा नाङ्गीकरोति । किं तु निर्हेतुकं । तत्र(तथाच)प्रागसत्त्वमनुमतमेवेति स्वमतविरुद्धभाषणमित्यर्थः । प्रकारान्तरेणापि विरुद्धतामाह—प्रागसत्त्वविशेषितमित्यादिना । प्रागसत्त्वे कार्यत्वं न स्यादित्यत्र प्रसङ्गे

## सर्वार्थसिद्धिः

र्थस्स्यात् । तत्र न प्रथमः ; कस्यापि स्वाभावेन व्याप्त्यभावात् । अन्यथा शून्यवाद एव स्यात् अनेकान्तवादो वा । न द्वितीयः ; तदसत्त्व एव तद्विशिष्टसिद्धेः । न हि विशेषणसत्त्वं विशिष्टविरोधि ! न तृतीयः ; असत्त्वस्य स्वकालसत्त्वेन विरोधग्रहणात् । अन्यथा देशान्तरसत्त्वेऽपि विरोधप्रसङ्गे(न) स एवान्त्यबौद्धपक्षस्स्यात् । यत्तु पश्चाद्भाविनः कारणप्राप्तिर्नास्तीति ; तत्र पौर्वापर्यनियम‍लक्षणा प्राप्तिर्दृष्टत्वादनिवार्या । संयोगादिलक्षणा तु माभूत्

## आनन्ददायिनी

कार्यत्वस्य प्रागसत्त्वविशिष्टसत्त्वस्वरूपस्य विशेषणं न स्यादिति वा विशेषणविशेष्योभयं न स्यादिति वा विशेष्यस्वरूपं न स्यादति वेति विकल्पार्थः । कस्यापीति—विशेषणस्य प्रागसत्त्वस्याभावः सत्त्वमेव । तथाच स्वाभावकाले स्वसत्त्वं स्यादिति प्रसङ्गार्थः । तथाच विरोधेन व्याप्त्यभाव इत्यर्थः । अन्यथा—प्रतियोगिनः स्वाभावकालिकत्वे । एकावच्छेदेन स्वाधारसंबन्धारोप्यकतदधि(स्वाधिकरणत्वाभिमताधि) करणकव्यासज्यवृत्तिधर्मेतरधर्मावच्छिन्नस्वसमानकालिकाद्यभावप्रतियोगित्वादेः शून्यताप्रयोजकत्वादिति भावः । अनेकान्तेति—शून्यत्वानङ्गीकारे सत्त्वासत्त्वरूपेणानेकान्तवाद इत्यर्थः । तदसत्त्व एवेति—प्रागसत्त्वरूपविशेषणसत्त्व एव प्रागसत्त्वे सति सत्त्वरूपाविशिष्टसिद्धेरित्यर्थः । न हीति—विशेषणसत्त्वस्य विशिष्टसिद्ध्यनुकूलत्वात् प्रागसत्त्वरूपविशेषणं तद्विशिष्टसत्त्वस्य न विरोधीत्यर्थः । अन्यथेति—असत्त्वस्य सत्त्वमात्रविरोधित्वे इत्यर्थः । कार्यस्य कारणप्राप्तिर्वक्तव्येत्यत्र यथाकथञ्चित्प्राप्तिर्वक्तव्येति उत संयोगादिलक्षणेति विकल्पमभिप्रेत्य आद्य आह—पौर्वापर्येति । द्वितीये आह—संयोगेति । प्रकाश्यदाह्या-

## सर्वार्थसिद्धिः

अनङ्गत्वात्; ततश्च नातिप्रसङ्गः नियामकस्य सिद्धत्वात्। प्रकाश्यदाह्यादिषु च यथादर्शनं कारणानां मिथः प्राप्तिरेवाङ्गं न तु कार्येण ज्ञानेन सह भस्मादिना वा। यत्तु जन्मनो जन्यत्वाजन्यत्वविकल्पेनातिप्रसङ्ग उक्तः; नासावस्मत्पक्षे दोषः। न हि वयमभिव्यक्तिं वा कारणसमवायादिकं वा जन्मेति ब्रूमः! किन्तूपादानावस्थाविशेषं। तस्य कार्यावस्थासामानाधिकरण्यव्यपदेशः तादात्म्येन तदाश्रयवृत्तेः। एवं ध्वंसादिसामानाधिकरण्यमपि

## आनन्ददायिनी

दावपि कार्यप्राप्तिर्नास्ति किंतु कारणानामेव यथादर्शनं मिथः प्राप्तिरिति नातिप्रसङ्ग इत्याह---प्रकाश्येति। नासाविति---चार्वाकोऽपि घटपटादिवस्तुनो न नित्यतामभ्युपैति। किंतु तस्य सादितां निर्हेतुकं जन्म च। तत्रोक्तो दोषः स्वस्यैव दोषो नास्मत्पक्ष इति(त्यर्थः) भावः। ननु त्वत्पक्षेऽप्यभिव्यक्त्यादिकमुत्पत्तिश्चेद्दोषस्समान इत्याह---न हि वयमिति। अभिव्यक्तिपक्षे अभिव्यक्तिरभिव्यज्यते न वेत्यादिविकल्पदोषस्स्यात्। कारणसमवायपक्षेऽपि स सिद्धो न वेत्यादिविकल्पदोषस्स्यादित्यर्थः। उपादानावस्थाविशेषमिति---उपादाननिष्ठो यो घटाद्यवस्थाव्यवहितप्राक्कालावस्थाविशेषः तमित्यर्थः। यद्वा आद्यक्षणावच्छिन्ना घटाद्यवस्थैवेत्यर्थः। ननूपादानावस्थाया मृदादिनिष्ठतया घटादिकार्यनिष्ठत्वाभावात् कथं घटो जायत इति सामानाधिकरण्यव्यपदेश इत्यत्राह---कार्यावस्थेति। उत्पत्त्यवस्थाश्रयवृत्तित्वाद्व्यपदेश इत्यर्थः। तदेव तु कुत इत्यत आह---तादात्म्येनेति। उत्पत्त्यवस्थाश्रयस्य कार्यावस्थाश्रयस्य च तादात्म्यादित्यर्थः। एवमिति---यदवस्थाश्रयवृत्तित्वं यस्य तस्य तत्सामानाधिकरण्यव्यवहारप्रयोजकत्वमित्यङ्गीकारात् ध्वंसा-

## सर्वार्थसिद्धिः

यथायथ(यथार्ह)मूह्यम् । ईदृशस्य जन्मन उपादानावस्थान्तर-साध्यत्वे कारणानवस्थामात्रमापतति । सा च न दोष इति सर्वाविगीतम् । यच्च भिन्नत्वे गवाश्वयोरिव कार्यकारणता न स्यात्; अभिन्नत्वे च कथं सिद्धस्य साध्यत्वमिति; तन्न; कारणात्कार्यस्य भिन्नस्योत्पत्ति(दृष्टेः)दर्शनात् ॥

अन्यथा बुद्धिबोध्यादौ भिन्नत्वादिविकल्पतः ।
बोध्यत्वादिक्षतेर्न स्यात् स्वमतस्थापनाऽपि वः ॥

अथ किञ्चित्कारेणाकिञ्चित्कारेण वा कारणत्वं ? पूर्वत्र हेतूनां किञ्चित्कारजननेऽपि किञ्चित्कारान्तरापेक्षयाऽनवस्था । किञ्चित्कारस्यापि किञ्चित्कारजननापेक्षया; उत्तरत्रातिप्रसङ्ग इति ।

## आनन्ददायिनी

वस्थासामानाधिकरण्येन ध्वस्तो घट इति व्यपदेश इत्यर्थः । ननूपादानावस्थाया जन्मत्वेऽपि प्रागसत्त्वेन साध्यत्वादनवस्था स्यादित्यत आह—ईदृशस्येति । सर्वाविगीतमिति—बीजाङ्कुरादौ तथा दर्शनादिति भावः । अन्यथेति—दर्शनस्यानियामकत्वे इत्यर्थः । घटबुद्धिर्घटाद्भिन्ना न वा ? आद्ये पटवत् तद्विषया न स्यात् । द्वितीयेऽपि स्वयं तद्विषया न स्यात् । बोध्यं बुद्धिसंबद्धं प्रकाशते असंबद्धं वा ? आद्येऽपि स संबन्धस्संबद्धोऽसंबद्धो वा ? प्रथमेऽनवस्था; द्वितीये संबन्धस्यासंबद्धत्वे तन्मूलकबोध्यसंबन्धस्याप्यभावेन प्रकाशाभावादिति प्रसङ्गयोः प्रसङ्गः; अत एवाद्यद्वितीयोऽपि नेत्यादि (त्याद्य)विकल्पसंभवादिति भावः । किञ्चित्कारः—व्यापारविशेषः । प्रकारान्तरेणाप्यनवस्थामाह—किञ्चित्कारस्यापीति । किञ्चित्कारस्यापि कार्यजननार्थं किञ्चित्कारापेक्षयां द्वितीयाऽनवस्थेत्यर्थः । उत्तरत्रेति—

## सर्वार्थसिद्धिः

अत्राऽपि ब्रूमः—यत्र किञ्चित्कारेणा हेतुत्वं दृष्टं यथा काष्ठादेर्ज्वालादिना ; तत्र तथा। नचानवस्था ; हेतुसंपत्तिपरम्परायां अदोषत्वात् ; अतिरिक्तस्यात्रानिरूपणात्। यत्र तु द्वारनिरपेक्षं हेतुत्वं तत्रापि दर्शनबलात् किञ्चित्कारान्तरं न जनयितव्यं यतोऽनवस्था स्यात्। न चातिप्रसङ्गः ; नियतपूर्वत्वग्राहिणा प्रत्यक्षेणैव तन्निवारणात्। अन्यथा तदपि ते प्रमाणं न स्यादिति विश्वापह्नवः। यच्च कार्यं कुर्वतोऽकुर्वतो वा कारणत्वम्? आद्ये कार्यस्यापि पूर्वसिद्धिप्रसक्त्या कार्यत्वाभावः ; द्वितीये विरोधातिप्रसङ्गाविति ; तदप्यपष्ठु ; भाविकार्यानुगुणव्यापारवत्त्वमेव कारणस्य कुर्वत्त्वं। तत्र कथं कार्यस्य स्वस्मात्पूर्वसिद्धिः? कुर्वत्त्वनिरूपणं तु भाविनाऽपि कार्येण बुद्ध्यारोहिणा सिध्येत्। एतेन निर्व्यापारस्सव्यापारो वा हेतुरित्याद्यपि दत्तोत्तरं। कार्य(त्व)कारणत्वयोस्स्वभा-

## आनन्ददायिनी

अकिञ्चित्कुर्वतोऽपि जनकत्वे विशेषाभावात्तन्तुभिरपि घट उत्पद्येतेत्यर्थः। अतिरिक्तस्येति—हेतुसम्पत्तिपरम्परातिरिक्तस्येत्यर्थः। अन्यथेति—प्रत्यक्षस्य नियामकत्वाभावे प्रत्यक्षमात्रप्रमाणवादिनस्तवार्थसिद्धिरेव न स्यादित्यर्थः। आद्ये कार्यस्यापीति—कृतिनिरूपकस्य कर्मणोपि प्राक्सत्त्वनियमादिति भावः। द्वितीये इति—अकुर्वतो जनकत्वरूपकुर्वत्त्वं विरुद्धं कृतिमत्त्वाभावेऽपि जनकत्वे सर्वं सर्वस्य कारणमित्यतिप्रसङ्गश्चेत्यर्थः। अपष्ठु—असारं। एतेनेति—पूर्वत्र कृतिरूपव्यापारविशेषः अत्र क्रिया(कृति)रूप साधारणव्यापारमात्रमिति भेदो ज्ञेयः। स्वभावत्वे इति—न हि घटस्वभावः कस्यचित् कस्यचिन्नेति

## सर्वार्थसिद्धिः

वत्वे घटत्वनीलत्वादिवत् सर्वं प्रत्यपि स्यातां; अस्वभावत्वे कस्यचिदपि न स्यातामित्यपि नियतप्रतिसंबन्धिकस्वभावत एव तदुभयसिद्धेर्निरस्तं । दण्डादिकार्यत्वं घटादिकारणत्वं वा नीलादिवदेव पुरुषभेदेऽप्यविपर्यस्तमेव। अथ स्यात्; कार्यकारण-भावस्य द्विष्ठत्वे द्वयोरपि द्वैरूप्यादविशेषविरोधभेदापत्तयस्स्युः। एकस्थत्वेऽपि यत्रैकस्मिंस्तत्रैवमिति; तत्र ब्रूमः; कार्ये कार्यत्वं कारणे कारणत्वं च वर्तते; तथाऽप्यन्योन्यनिरूप्यतया संबन्ध-व्यवहारादिसिद्धिरिति। स्यादेतत्; न तावद्दण्डादयो मृदाद्यव-यवाश्च प्रत्येकं घटाद्युत्पादनशक्ताः; अदर्शनात् । अत एव न

## आनन्ददायिनी

संभवति । स्वभावत्वव्याघातादिति भावः । अस्वभावत्वे इति— तद्धर्मत्वाभाव इत्यर्थः । नियतप्रतिसम्बन्धिकेति— कार्यकारणत्वे स्वभा-वावेव । नचातिप्रसङ्गः; संयोगादिवत्प्रतिसंबन्धिनियमादित्यर्थः। स्वभावत्वमेवोपपादयति—दण्डादीति । यथा नीलादिकं धर्मिविशेष-नियतमपि तस्य स्वभावः पुरुषविशेषनियतं च न भवति तद्वदित्यर्थः । विपर्यस्त—विपरीतं तदन्यदिति यावत् । अविशेषेति—कार्यस्यापि कारणत्वं कारणस्य कार्यत्वं कार्यकारणयोस्स्वस्वापेक्षया पूर्वभावित्वपश्चा-द्भावित्वरूपविरोध एकस्यैव कार्यकारणरूपेण भेदश्च स्युरि(स्यादि)त्यर्थः। एकस्थत्वेऽपि—कार्यकारणयोरन्यतरमात्रवृत्तित्वेऽपि । यत्रेति—यत्र कार्यकारणभाववै(भावाद्वै)रूप्यं तत्र उक्तदोषाः स्युरित्यर्थः । ननु मृदादय-श्शक्ताः कार्यं जनयन्त्यशक्ता वेति विकल्पमभिप्रेत्य द्वितीयं दूषयति— न तावदिति । अशक्तानां जनकत्वं व्याहतमिति भावः । आद्यं

## सर्वार्थसिद्धिः

समुदिता अपि । न हि नद्यस्समेत्यापि दहेयुः! नच सिकतास्संभूय तैलं जनयेयुः! शक्तानामेव संभूयकरणे सर्वे कृतकराः स्युः । शक्तस्य कुर्वतोप्यन्याकाङ्क्षायां सर्वैरपि स्यात् । तथाच देशादिव्यवहितानामसन्निधेः कथ कार्यारम्भः। नहि कार्ये कारणानां साध्यांशभेदः! विभक्तदशायां समुदाये वा तस्यादृष्टेः । निरंशे गुणादौ च दुर्वचमेतदिति, अत्रोच्यते—समुदितानां कार्यकरत्वमेव हि प्रत्येकमपि हि शक्तिः! कथमत्र वियुक्तैः कार्यकरणं? कथं च समेतेषु कृतकरता? अतश्शक्तस्यापि सहकार्याकाङ्क्षायामतिप्रसङ्गश्च निरस्तः। यावत्कार्यसिद्धि नियतविषयत्वात्तस्या इति । ननु पूर्वं कारणमित्युक्ते नष्टं

## आनन्ददायिनी

दूषयति—शक्तानामिति । एकस्यापि शक्तत्वेन कार्यस्य करणादितरैरपि तस्य करणे कुतः करणत्वमितीतर(कृतकरत्वमिति सहकारि) वैयर्थ्यमिति भावः । सर्वैरपि स्यादिति—अविशेषादिति भावः । अस्तु को दोष इत्यत्राह—तथाचेति । एकघटव्यक्त्युत्पत्तौ दण्डादिकारणताव(त्पत्तिस्थदण्डत्वादिकारणत्वाव)च्छेदकावच्छिन्नयावद्भिर्भवितव्यमिति देशादिव्यवहितानां सान्निध्यसंभवादुत्पत्तिरेव न स्यादित्यर्थः। ननु सन्निहितं कारणं कार्ये कञ्चिदंशं जनयति; असन्निहितं च यदा सन्निधास्यति तदेतरांशं जनयतु कथं कार्यानारम्भ इत्यत्राह—नहि कार्ये इति । एतदिति- जन्यजनकत्वमित्यर्थः । यावत्कार्यसिद्धीति—एककार्यनिरूपितानि यावन्ति कारणतावच्छेदकानि प्रत्येकं तावदवच्छिन्नयत्किञ्चित्सत्त्व एव कार्यदर्शनादिति भावः । नन्विति—

## सर्वार्थसिद्धिः

**कारणमित्युक्तं स्यत्। दृष्टा च मृदिते मृत्पिण्डे घटोत्पत्तिः। तथाच स्वात्मानमलभमानस्य कथं परसाधकत्वम्? अन्यथा चिरातिक्रान्तस्य च स्यादेव कारणत्वं। तुच्छस्य च कारणत्वे कार्यत्वमपि तुच्छं स्यात् नित्यं वेति; तदपि न; पूर्वक्षण-सत्त्वमेव हि कारणस्य कार्योपयोगि! न च तत्तदा नास्ति! कार्यक्षणे तु कस्यचिदसत्त्वं न कारणत्वविरोधि। पूर्वं नष्टमित्य-प्यसाधु; स्थिरवादे तदयोगात्। पिण्डस्य तु न साक्षात्कार-णत्वं। न च पिण्डस्तत्प्रध्वंसो वाऽत्यन्ततुच्छः! स्वकाले सद्भा-**

## आनन्ददायिनी

पूर्वकाल इत्यादौ पूर्वपदस्यातीतार्थकत्वादर्शनादित्यर्थः। अन्यथेति— स्वरूपाभावस्योभयत्र तुल्यत्वादिति भावः। तुच्छस्येति— उपादानसमानस्वभावत्वादिति भावः। तुच्छस्य सार्वकालिकत्वात् कार्योत्पादे विलम्बात् तुच्छकारणानन्तरक्षणवर्तिप्रागभावप्रतियोगित्वं न स्यादित्यर्थः। अन्ये तु—तुच्छस्य सार्वकालिकतया सार्वकालिककार्य-परम्परा स्यादित्यर्थ इत्याहुः। किं कारणमात्रस्य स्वकार्यकालसत्त्वं वक्तव्यं कारणविशेषस्य वा? इति विकल्प्य आद्यं प्रतिवक्ति— पूर्वक्षणसत्त्वमिति। द्वितीयं प्रतिवक्ति—कार्यक्षण इति। निमित्त-स्यासत्त्वं न विरोधि उपादानस्यासत्त्वं विरोध्यप्यत्र नास्तीति भावः। तदेवोपपादयति-—पूर्व(मिति)मेवेति। पिण्डत्वावस्थानाशेऽपि मृद उपादानस्य सत्त्वादित्यर्थः। पिण्डस्येति-पिण्डावस्थाया इत्यर्थः। न साक्षादिति—पारिचायकत्व(मात्र)मित्यर्थः। स्वकाले इति—सार्व-कालिकासत्त्वमेव हि तुच्छत्वमिति भावः। असत्त्वमात्रमेव तुच्छत्व-

## सर्वार्थसिद्धिः

वात् । कालान्तरासत्त्वेन तुच्छत्वे प्रत्यक्षविषयोऽपि तथा स्यात्; तथाचेयं (तथा च ते) माध्यमिकगतिः । अथ ब्रूषे; पूर्वत्वमेव कारणस्य दुर्निरूपं पूर्वकालवृत्तित्वं हि तत्! काले च पूर्वत्वमुपाधिकृतम् । स चोपाधिर्यद्ययमेव तदा तदधीनं कालस्य पूर्वत्वं कालाधीनं चोपाधेरित्यन्योन्याश्रयः । अन्यापेक्षायां चक्रकं अनवस्थापि । कालस्य क्रमवदुपाधिसंबन्धभेदाद्भेदश्च कृत्स्नैकदेशविकल्पदुःस्थ इति । एवं ब्रुवता किं पौर्वापर्यमेव न दृष्टं? दृष्टमपि वा बाधित? नाद्यः; स्वाभ्युपगमव्यवहारविरोधात् । न द्वितीयः; सर्वेषां नित्यत्वतुच्छत्वयोरन्यतरप्रसङ्गात् । अतः काले सत्यसति वा क्रमस्तावद्दुरपह्नवः—

## आनन्ददायिनी

प्रयोजकं लाघवादित्यत्राह—कालान्तरेति । प्रत्यक्षविषयस्यापि कालान्तरासत्त्वादिति भावः । कृत्स्नैकदेशेति—कालः क्रमादुपाधिभिः कार्त्स्न्येन संबध्यते अथैक(थवैक)देशेन? न प्रथमः; सर्वोऽपि कालः पूर्वो वा परो(रोऽपि)वेति पूर्वापरविभागो न स्यात् । न द्वितीयः; एकदेशाभावादिति विकल्पदुःस्थत्वादित्यर्थः । स्वाभ्युपेतेति—स्वाभ्युपेतव्यवहारविरोधो लोकव्यवहारविरोधश्चेत्यर्थः । पूर्वः पर इति व्यवहारस्य सर्वसिद्धत्वादहेतुकस्य नोत्पत्तिः । 'पूर्वं नैव स्वभावतः' इति चार्वाकव्यवहाराच्चेति भावः । सर्वेषामिति । इदं पूर्वमिदं परमिति पौर्वापर्यविशिष्टप्रतीतिर्दृश्यते; तत्र विशेषणीभूतपूर्वत्वमात्रबाधे नित्यत्वं; विशेष्यबाधे विशिष्टबाधे च तुच्छत्वं स्यादित्यर्थः । ननु कालानभ्युपगन्तुः कथमित्यत्राह—अतः काल इति । कालशब्दवाच्यस्य कस्य चित् तैरप्य-

## सर्वार्थसिद्धिः

क्रमेणोपाधिभिर्योगस्साकल्येनांशतोऽपि वा ।
कालस्य न घटेतेति स्थिरवादी कथं वदेत् ॥
प्रत्यक्षेण वि(प्रत्यक्षप्रति)रुद्धश्च क्षणभङ्गपरिग्रहः ।
अपसिद्धान्तमादध्यात् मानमन्यदनिच्छतः ।
अथ लोकायतान्तस्स्थमनुमानं च मन्यसे ॥
आगमोप्यविसंवादी तदन्तस्स्थातुमर्हति ।
य(त्र)तः प्रवृत्तिसामर्थ्यं न लोकादुपलभ्यते ।

## आनन्ददायिनी

भ्युपगन्तव्यत्वादिति भावः । कृत्स्नैकदेशविकल्पं परिहरति–क्रमेणेति । तस्यैकस्य कालस्य क्रमेणोपाधियोगो वक्तुं शक्यः । क्षणिकत्वपक्ष एव परं वक्तुं न शक्यते । एकेनानेकेषामानन्तर्येण योगः क्रमवदुपाधिसंबन्धः । न च कृत्स्नैकदेशविकल्पदोषः उभयथाऽपि दोषाभावात् । न च सर्वस्यापि पूर्वपरत्वयोः प्रसङ्गेन विभागाभावः; तत्तत्पूर्वोपाधिकाले सर्वस्य पूर्वत्वात् तत्तत्परो(तत्तदप)पाधिकाले सर्वस्य परत्वाच्च । नचैकदेशासंभवः; सततपरिणामवादिभिरस्माभिस्तद(स्या)ङ्गीकारे विरोधाभावाच्चेत्यर्थः। ननु क्षणभङ्गाङ्गीकारात् क्रमवदुपाधियोगो न घटते इत्याशङ्क्य किं प्रत्यक्षेण क्षणभङ्गस्वीकार उतानुमानेन? इति विकल्पमभिप्रेत्य आद्यं दूषयति—प्रत्यक्षेणेति । प्रत्यभिज्ञारूपप्रत्यक्षेण स्थैर्यगोचरेणेत्यर्थः। द्वितीयं दूषयति–अपसिद्धान्तमिति । तव प्रत्यक्षादन्यस्याप्रमाणत्वादिति भावः । लोकायतान्तस्स्थमिति—लोकायतं—चार्वाकशास्त्रं तत्रानुमानमप्यन्तर्गतं तथाच नापसिद्धान्त इति भावः । केचित्तु(अन्येतु)लोकायतान्तस्स्थं–(लोकायतं तटस्थं) प्रत्यक्षान्तर्गतमित्यर्थ इत्याहुः । आगमोऽपीति··तुल्यत्वादिति भावः । किञ्च

## सर्वार्थसिद्धिः

अनुमीयेत तत्राऽपि प्रामाण्यमविशेषतः ॥

अस्त्वेवम् ; तस्य नियमो न शक्यः ; अस्मादेवेदमनन्तरमिति । तदेतन्नियतपूर्वत्वं हि न जातेर्जातिमपेक्ष्य ! द्वयोरपि त्रैकालिकत्वात् । नच जातेर्व्यक्तिमपेक्ष्य ; सर्वासां जातीनां पूर्वत्वेन कारणनियमासिद्धेः । जात्यन्तरापेक्षया कार्यत्वं न दृष्टमिति चेत् ; किमतः पूर्वमेतज्जातिकार्यत्वमपि दृष्टं? एकव्यक्तेश्च नियमो दुर्ग्रहः अननुवृत्तेः । कृत्तिकारोहिण्योरपि ह्युदयभेदेष्वेव व्याप्तिर्गृह्यते । एतेन व्यक्तेर्जात्यपेक्षया व्यक्त्यपेक्षया वा पूर्वत्वनियमोऽपि प्रत्युक्त इति ; अयमप्यनुक्तोपालम्भः ; एतद्धर्मकादेतद्धर्मक-

## आनन्ददायिनी

अनुमानप्रामाण्यमावश्यकमित्याह—यत इति । यतो लोकात् प्रत्यक्षात् । प्रवृत्तिसामर्थ्यं—प्रवृत्तिजनकता । प्रामाण्यसंदेहादिना नोपलभ्यते तत्राप्याविसंवादिप्रत्यक्षाविशेषात्प्रामाण्यमनुमीयेत ततः प्रवृत्तिः अन्यथा प्रवृत्तिर्न स्यादिति भावः । अस्त्वेवमिति—अस्मादेवेदमनन्तरमिति तस्य कारणस्य नियमो ग्रहीतुं न शक्य इत्यर्थः । तदेवोपपादयति—तदेतादिति । कारणनियमासिद्धेरिति—तन्तुजातिः पटकारणमिति नियमो न सिद्ध्येदित्यर्थः । एतज्जातीति—तन्तुजातीत्यर्थः । एकव्यक्तेरिति रासभादितुल्यत्वादिति भावः । ननु कृत्तिकारोहिण्यादावेकव्यक्तिकत्वेऽपि व्याप्तिग्रहो दृष्ट इत्यत्राह—कृत्तिकेति । तत्राप्यनयोरुदयानां भिन्नभिन्नानामनेकेषामेव व्याप्तिर्गृह्यत इत्यर्थः । एतेनेति— एकव्यक्तौ (क्तेः)नियमस्य(मेन) दुर्ग्रहत्वादि(त्वेने)त्यर्थः । अनुक्तोपालम्भ इति—जात्याद्यपेक्षया जन्यजनकभावस्यानुक्तेरिति भावः । तर्हि किमुक्तमित्यत्राह—एतद्धर्मकादिति । दण्डत्वादिधर्मकात् घटत्वादिधर्मकं

## सर्वार्थसिद्धिः

मुपजातमिति जात्युपाधिक्रोडीकृतरूपेण व्यक्तिषु नियमासिद्धेः। यथादर्शनं चेयत्तानियमरहितनिरुपाधिनिर्व्यभिचारभूयोदर्शनबलेन व्याप्तिसिद्धिश्चानुमाने वक्ष्यते। नच सर्वस्मात्तादृशात्तादृशं सर्वमनियतं वा स्यादिति शङ्कनीयं। तथा व्याप्तेरग्रहणात्। तद्विरुद्धा च ते प्रार्थना मोघैव। तृणारणिमण्यादिषु च वह्न्य-

## आनन्ददायिनी

जातमित्यर्थः। जात्युपाधीति—तथाच यद्धर्मावच्छिन्नं प्रति यद्धर्मावच्छिन्नमनन्यथासिद्धनियतपूर्वं तद्धर्मावच्छिन्नं तद्धर्मावच्छिन्नाज्जातमिति जात्युपाधिक्रोडीकारेण व्याप्तिग्रहसंभवादित्यर्थः। ननु सहचारदर्शनोपाध्यभावनिश्चयव्यभिचारज्ञानविरहाणां व्याप्तिग्राहकत्वं वाच्यं; सहचारदर्शनमात्रस्य व्यभिचारिसाधारण्यात् भूयोदर्शनानां त्रिचतुरादिभावेनाननुगतत्वात् उपाधेर्योग्यायोग्यरूपत्वेन तदभावस्य दुरवधारणत्वात् भूतभाव्यसन्निकृष्टव्यक्ति(वस्तु)षु व्यभिचारसंदेहेन व्यभिचारज्ञानविरहस्याप्ययोगा न्न (तैः) व्याप्तिग्रह इत्यत्राह—यथादर्शनं चेति। निरुपाधिः—उपाध्यभावनिश्चयः। निर्व्यभिचारः—व्यभिचारज्ञानविरहः। भूयोदर्शनं—भूयस्सहचारदर्शनमित्यर्थः अनुमान इति—अनुमाननिरूपणावसरे इत्यर्थः। सर्वस्मात्—दण्डचक्रादितः। सर्वं—घटपटादिकमुत्पद्येत। यद्येका सामग्रीति न्यायादेकमेवोत्पद्यते तथासति आनियतो घटः पटो वा जायेतेत्यतिप्रसङ्गश्च नास्तीत्याह—नचेति। तद्विरुद्धा चेति। एतज्जातीयादेतज्जातीयमुत्पद्यत इति व्याप्तिग्रहविरुद्धा सर्वानियतोत्पत्तिप्रार्थनेत्यर्थः। नन्वेतज्जतीयादेतज्जातीयमुत्पद्यत इति व्याप्तिग्रहो नोपपद्यते; तृणजातीयाद्वह्निजातीयमिति व्याप्तेरभावात् तदभावेऽपि वह्नि(मण्यादेरपि वह्निजातीय)दर्शनात्। एवं मण्यादिजातीयादपीति चोद्यं परिहरति—तृणारणीति। एक (जातीय) शक्तिमत्त्वेन त्रयाणां वह्निजातीये कारणत्वं।

## सर्वार्थसिद्धिः

द्युत्पत्तौ सामान्यतो विशेषतश्च हेतुकार्यभावो मन्तव्यः। तत्र कार्यवैजात्यं न दृश्यत इति चेन्न; अनुपलब्धवैषम्याणामप्यायुर्वेदादिषु शक्तिभेदसिद्धेरवान्तरवैजात्यस्य स्वीकार्यत्वादिति ॥

* [1] साङ्ख्यसौगतचार्वाकैरन्येऽप्येवमुपप्लवाः ।

## आनन्ददायिनी

यद्वा–वह्निफूत्कारादिसमवधानस्थले यज्जातीये (तीयसमवधाने) सति वह्निजाती (यकार्यं) यो (यस्यो) त्पत्तिः यज्जातीयाभावे वह्निजाती (याभावः) योत्पत्त्यभावः इति सामान्यकार्यकारणभावः, वह्नित्वावान्तरजातिविशेषावच्छेदेन विशेषकार्यकारणभावश्चेत्यर्थः। अनुपलब्धेति । तृणादिजन्येषु वैषम्यमुपलभ्यत एव; तथाऽप्यनुपलम्भमात्रान्नाभाव इति भावः । साङ्ख्येति—कार्यकारणभावस्यानतिप्रसक्तस्य दुर्वचत्वात् ग्राहकस्यापि

## भावप्रकाशः

[1]* साङ्ख्येति —'कूटस्थं निर्धर्मकं चिद्वस्तु न कारणम्; कारणत्वे आगन्तुकधर्माङ्गीकारस्यावश्यकतया––

उपयन्नपयन् धर्मो विकरोति हि धर्मिणम् ।

इत्युक्तदिशा परिणामित्वेन कौटस्थ्यहानिप्रसङ्गात्' इति साङ्ख्या वदन्ति ।

न सन्नुत्पद्यते भावो नाप्यसन् सदसन्न च ।

न स्वतो नापि परतो न द्वाभ्यां जायते कथम् ।

इति सौगताः । परमतभङ्गादावेतदुपप्लवशमनं बोध्यम् । अथ साङ्ख्यवत् चिद्वस्तु न परिणामकारणमिति मते माध्यमिकनयेन प्रत्यवतिष्ठमानैः खण्डनकारैः खण्डनचतुर्थपरिच्छेदोक्तानां दूषणानां परिहारः पूर्वमुक्त इति तत्प्रथमपरिच्छेदोक्तदूषणमुद्धर्तुमनुवदति––

## सर्वार्थसिद्धिः

प्रयुक्ताः प्रतिवक्तव्याः प्रतिष्ठितनयस्थितैः ॥

[1] * यदत्र माध्यमिकमतस्थैरुच्यते—

## आनन्ददायिनी

दुर्निरूपत्वात् पूर्ववृत्तं च कारणं वाच्यम्; पूर्वत्वं च कार्यप्रागभावावच्छिन्नकालत्वम्। प्रागभावत्वं च प्रतियोगिजनकाभावत्वम्; तथाचात्माश्रय इत्याद्यन्येऽप्युपप्लवाः प्रतिष्ठितनयस्थितैः—सम्यगभ्यस्तन्यायैः पुरुषैः प्रतिवक्तव्याः—परिहरणीया इत्यर्थः। तत्प्र(त्परिहारप्र)कारस्तु—न च लक्षणस्यानिर्वचनमात्रेण वस्तुनोऽभावः; इक्षुक्षीरादिमाधुर्यवैजात्यविलोप(त्याभाव) प्रसङ्गात्। प्रतियोगित्वादिवत् स्वरूपसंबन्धविशेषत्वेनाप्यन्तत उपपत्तेः। अनन्यथासिद्धनियतपूर्ववृत्तित्वा (सत्त्वा) दिना निर्वच (चनसंभवाच्च) नोपपत्तेश्च। नापि ग्राहकाभावः; अनन्यथासिद्धान्वयव्यतिरेकादेर्ग्राहकत्वात्। नापि पूर्वत्वनिर्वचनप्रयुक्तदोषः; विनाश्यभावावच्छिन्न (श्यभाव) त्वादिना निर्वचनसंभवादिति। ननु सतः कार्यकारणभावो नोपपद्यते कार्यकारणभावस्य सत्त्वाधीनत्वाभावेन असत्त्वनियतत्वादिति खण्डनोक्तिमनुवदति—यदत्रेति। अन्येतु ननु सर्वशून्यवादे कार्यकारणभाव एव न संभवति; शून्यस्य किञ्चिदपेक्षया पूर्वसत्त्वाभावात्। तथाच भ्रान्तिसिद्धस्यापि कालविशेषे उत्पत्तिः कालविशेषे प्रतीतिरित्याद्यनुपपन्नमित्याशङ्क्य पूर्वकालसत्त्वमात्रमतिप्रसक्तं; नियतसत्त्वविवक्षायां पूर्वकालनियतत्वमेव लाघवादस्तु; तच्च वादिप्रतिवादिनोऽसमानमेव। सत्त्वं तु गौरवादनन्तर्भूतम्। तथाच कारणत्वानन्त-

## भावप्रकाशः

[1] * यदत्रेत्यादि। तत्र खण्डनकारैः—

सर्वथा सदुपायानां वादमार्गः प्रवर्तते।

## सर्वार्थसिद्धिः

[1] * पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ ।

## भावप्रकाशः.

अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ॥

इति निरालम्बनवादे भट्टकुमारिलसिद्धान्तमेव पूर्वपक्षीकृत्य; 'तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्विस्तराणां प्रतीयमानत्वात् तस्यैव वा अनिष्पत्तौ भवतस्तन्निरासानुपपत्तेः; सोऽयमपूर्वः प्रमाणादिसत्त्वानभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवताऽभ्यूहितः; नूनं यस्य प्रभावाद्भगवता सुरगुरुणा लोकायतसूत्राणि न प्रणीतानि; तथागतेन वा मध्यमागमा नोपदिष्टाः; भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि' इत्यारभ्य माध्यमिकमतं परिष्कृत्य, 'एवं च सति सौगतब्रह्मवादिनोरयं विशेषः—यदादिमः सर्वमेवानिर्वचनीयं वर्णयति । तदुक्तं भगवता लङ्कावतारे—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः ॥

इति । विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनस्सङ्गिरन्ते' इति 'तदेवं भेदप्रपञ्चोऽनिर्वचनीयः, ब्रह्मैव तु परमार्थसदद्वयमिति स्थितम्' इति चोक्तम्, तत्प्रघट्टकस्थमिदं कारिकाद्वयम्। अतो माध्यमिकमतस्थाः खण्डनकाराः । पूर्वोक्तविशेषसूचनाय खण्डनकारैरित्यनुक्त्वा माध्यमिकमतस्थैरित्युक्तम् । अत एवाद्वैतसिद्धौ 'तदुक्तं खण्डनकृद्भिः' इति कारिकाद्वयमुदाहृतम् । [1] * पूर्वसम्बन्धनियमे इत्यादि—खण्डने अन्तर्भावितसत्त्वं चेदित्यादिकारिकातद्विवरणानन्तरं 'तस्मात् पूर्वसम्बन्धनियमे' इत्यादिरुपसंहारग्रन्थः । तत्र प्रतिबन्दिदूषणापेक्षया प्रथमं तन्मतदूषणमेव प्राधान्यात्कर्तुमुचितमिति भावेन प्रथममुपसंहारदूषणम् ॥

## सर्वार्थसिद्धिः

हेतुतत्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥

इति ; तत्रोच्यते—

## आनन्ददायिनी

गतसत्त्वासत्त्वविचारो व्यर्थ इति माध्यमिकमतस्थो(मतैकदेश्यु)क्तं दुरुक्तमिति प्रसङ्गाद्दूषयितुमनुभाषते—यदत्र माध्यमिकमतस्थैरिति इत्याहुः। अस्मिन् पक्षे माध्यमिकग्रन्थ एव किञ्चिद्विषमं खण्डनेनानूदित इति ध्येयं।

## भावप्रकाशः

खण्डने एव 'कथंपुनरसतः कारणत्वमवसेयं प्राक्सत्त्वानियमस्य विशेषणस्यानभ्युपगमात्; असत्त्वस्याविशेषात्? इति चेन्न; इदमस्मान्नियतं प्राक्सदिति बुद्धया विशेषात्, इत्यादिना इयं कारिका विस्तरेण विवृता। तत्र कालान्तरसंबन्धिन्यास्सत्ताया विशिष्टव्यवहारप्रवृत्तिसमयेऽसत्त्वेऽपि व्यवहारोपपत्तिरतीतादेर्ज्ञानविषयत्वोपपादनावसरे वक्ष्यमाणदिशा सुलभा। भवद्भिरपि 'तथाऽपि कालान्तरस्थित्या घटादिकं स्वरूपतो विशेषणतश्च व्यवच्छिन्नं तद्विज्ञानेन स्वभावबलात् स विशेषणत्वेनोपादीयते न त्वेवमत्यन्तासद्भावितुमर्हति; तस्य स्वरूपतो विशेषणतश्च व्यवच्छिन्नतयाऽनङ्गीकारात् कुत्र स्वभावतो विज्ञानं संबन्धि निरूप्येत' इत्यादिना साधिता ॥

सत्या चेत्संवृतिः केयं? मृषा चेत्सत्यता कुतः।
सत्यत्वं न तु सामान्यं मृषार्थपरमार्थयो ॥

इत्यादिना संवृतिनिराकर्ता भट्टकुमारिलो भवदीयप्रतिवचनक्लेशं निरर्थकमाधत्ते। संवृतिसत्यव्यावहारिकसत्यशब्दौ न विवक्षितसाधकौ। असतः स्वरूपं न संभवतीत्यादिकं बुद्धिसरे (२४२) स्थापयिष्यते;

# सर्वार्थसिद्धिः

[1] * प्राक्कालनियतत्वेन कारणं प्रमितं न वा? ।

# आनन्ददायिनी

माध्यमिकमतस्थत्वं माध्यमिकमतानुसरणात् । यद्यपि खण्डने—

अन्तर्भूतबहिर्भूतसत्त्वासत्त्वकथा वृथा ।

इति किञ्चिद्विकृतं पठ्यते; तथाऽपि उत्तरत्र अन्तर्भावितेति तद्ग्रन्थोपादानात् लेखकाधीनं तद्वैषम्यमिति केचिदाहुः । अन्येतु—माध्यमिकमतस्थः खण्डनकार उच्यते । उत्तरत्रान्यदपीति खण्डनग्र-

# भावप्रकाशः

एवं परमतभङ्गेऽपीति भावेन प्रकृते दूषणं संगृह्णाति—

[1] * प्राक्कालनियतत्वेनेति श्लोकेन । तदेव—प्रमितत्वमेव । तस्य—कारणस्य सत्त्वम् । ननु अबाधितविषयकज्ञानं प्रमा । तत्र कारणस्य त्रिचतुरकक्ष्यास्वबाध्यत्वमस्माकमपीष्टम् । कालत्रयाबाध्यत्वं तु न ज्ञातुमर्हमिति चेत्; अत्र तत्वटीकावाक्यमुत्तरं—'सर्वदा सर्वेषामबाधितत्वं दुर्ज्ञानमिति चेत्, ब्रह्मणि कस्समाश्वासः' इत्यादि । ननु 'स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मणः सत्त्वं, इत्यद्वैतसिद्धावुक्तं; अतो न ब्रह्मसत्त्वानुपपत्तिरिति चेत्; अत्रोक्तं शतदूषण्यामाचार्यैः सन् घट इति प्रत्यक्षस्य घटविषयकत्वस्थापनावसरे—'अतस्सच्छब्दार्थः स्वरूपं चेत् घटशब्दार्थोऽपि स्वरूपमेव' इत्यादि । सिद्धान्ते जात्यनङ्गीकारेण सत्त्वं जडस्वरूपमपि भवितुमर्हत्येवेति को दोष इति भावः । आचार्यपादानामाचार्यैः तन्मातुलैर्वादिहंसाम्बुवाहार्यैर्न्यायकुलिशेऽप्युक्तं चतुर्थे परिच्छेदे—'स्वरूपमेव हि भावानां सत्पदार्थस्संस्थानमात्रमिति स्थितमन्यत्र' इति । श्रीभाष्यकृतां परमगुरुभिः भगवद्यामुनमुनिभिरपि संवित्सिद्धौ ब्रह्मप्रतिबन्दिमुक्त्वा अनन्तरमेवमुक्तं—

## सर्वार्थसिद्धिः

**आद्ये तदेव तत्सत्त्वं अन्यथा [1]*नियमोऽपि न ॥**

## आनन्ददायिनी

न्थानुवादादित्याहुः । तदेव—प्रमितत्वमेव । प्रमितत्वं—अबाधितमान-विषयत्वम् । नियतत्वम् च नियमेन सत्त्वं । तथाच सत्त्वघटितं कारण-त्वमिति सत्त्वशून्यमते कारणत्वं दुर्वचमित्यर्थः । तदुक्तमन्यदपि

## भावप्रकाशः

तस्मादस्तीति संवित्तिर्जायमाना घटादिषु ।
तत्तत्पदार्थसंस्थानपारमार्थ्यावबोधिनी ॥
सजातीयविजातीयव्यवच्छेदनिबन्धनैः ।
स्वैस्स्वैर्व्यवस्थितै रूपैः पदार्थानां तु या स्थितिः ॥
सा सत्ता न स्वतन्त्रान्या तत्राद्वैतकथा कथम्? ॥

इति । व्यावहारिकसत्यत्वान्मृषात्वेऽप्यविरुद्धता ।
प्रत्यक्षादेरिति मतं प्रागेव समदूदुषम् ।
सर्वज्ञत्वादिवचनप्रामाण्यं व्यावहारिकम् ॥
तात्त्विकं तु प्रमाणत्वमद्वैतवचसामिति ।
नियामकं न पश्यामो निर्बन्धात्तावकादृते ॥

इति च । न्यायकुलिशे तृतीयपरिच्छेदेऽपि—
'पारमार्थ्यं विनाऽर्थस्य न स्वरूपान्तरं भवेत् ।
ज्ञानस्य च स्वभावोऽयं यदर्थप्रवणात्मता ॥

एतत्किलोक्तं विश्वमपि दृश्यं जडरूपमेवेति; किमतः? न हि जडमिति अपरमार्थपर्यायं लौकिका मन्यन्ते' इत्युपक्रम्य जडप्रतीतेर-बाधितविषयत्वं स्थापितम् । अत्राप्युत्तरत्र प्रपञ्चस्य श्रौतो यौक्तिकश्च बाधो न संभवतीति स्थापयिष्यते । अतोऽत्राविस्तर इति बोध्यम् ।

[1] *नियमोऽपि नेति—अपिना कारणमपि नेति बोधितम् ॥

## भावप्रकाशः

अयमाशयः—अस्ति हि भगवतो व्यासस्य ब्रह्ममीमांसाद्वितीयसूत्रम् 'जन्माद्यस्य यतः' इति । तत्र च सत्ताया विशेषणतयोपलक्षणतया कारणकोटिविकल्पवत् जन्मादीनामुपलक्षणतया विशेषणतया वा लक्षण तेति विकल्पेनाक्षेपे समाधानमुच्यते । तत्र च 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिर्मूलम् । इयं च श्रुतिः—

उत्पन्नश्च स्थितो नष्ट उक्तो लोकोऽर्थतस्त्वया ।
कल्पनामात्रमित्यस्मात् सर्वधर्माः प्रकाशिताः ॥
कल्पनाऽप्यसती प्रोक्ता यथा शून्यं विकल्प्यते ।
निरुद्धादनिरुद्धाद्वा बीजादङ्कुरसंभवः ॥
मायोत्पादवदुत्पादः सर्व एव त्वयोच्यते ।
अतस्त्वया जगदिदं परिकल्पसमुद्भवम् ॥
परिज्ञातमनुत्पन्नमसद्भूतं न नश्यति ।
नित्यस्य संसृतिर्नास्ति नानित्यस्य च संसृतिः ॥
स्वप्नवत्संसृतिः प्रोक्ता त्वया तत्त्वविदां वर ॥ (नागार्जुनस्तवे)
यथा माया यथा स्वप्नो गन्धर्वनगरं यथा ।
तथोत्पादस्तथा नाशः स्थितिस्तद्वद्भविष्यति ॥ (माध्यमिकवृत्तौ-कारिका)

इति माध्यमिकमतं कटाक्षयति । तत्र भूतशब्दस्सत्ताश्रयार्थकः । अत एव कार्यसर्ववस्तुसंग्रहः । जगत्सत्तायां मानं प्रत्यक्षविषयार्थकेदं-शब्देन दर्शितम् । 'अपितु देवपुत्र परमार्थसत्यं सर्वव्यवहारसमति-क्रान्तं निर्विशेषमसमुत्पन्नमनिरुद्धमभिधेयाभिधानज्ञेयज्ञानविगतं' इत्या-र्यसत्यद्वयावतारोक्तं सत्यं यदि साधकादसेत्स्यत् तदा 'इन्द्रियैः' इत्यादि (बोधि+पं २७५) कारिका समगंस्यत । न च तत्र साधकं किञ्चित् । अतः प्रत्यक्षतो जगतस्सत्ता सिध्यति । एवं 'कथम-

## सर्वार्थसिद्धिः

अन्यदपि यदुक्तं—

[1]*अन्तर्भावितस(त्वं)त्तं चेत्कारणं तदसत्ततः ।
नान्तर्भावितस(त्वं)त्तं चेत्कारणं तदसत्ततः ॥

## आनन्ददायिनी

दूषयितुमनुभाषते—अन्यदपीति । (अद्वैतमतं दूषयितुमनुभाषते)— अन्तर्भावितस(त्त्वं)त्तं चेत्कारणमिति । सत्त्वविशिष्टं कारणं चेत्—सत्त्वस्यापि कारणकोटिप्रवेशश्चेदिति यावत् । पूर्वसत्त्वं सत्त्वविशेष्ये विशेषणीभूतसत्त्वे वा नास्तीत्यसतः कारणत्वमायातमित्याह—तदसदिति । न हि स्वविशिष्टे स्वस्मिन् वा स्वस्य वृत्तिर्युज्यते ; न च सत्त्वान्तरं ; तस्यासत्त्वे तद्विशिष्टस्याप्यसत्त्वं स्यात् । नान्तर्भावितेति—अन्तर्भावितसत्तं

## भावप्रकाशः

सतस्सज्जायेत' इति श्रुतिसहकृतैतच्छ्रुतिस्वारस्यात् कार्यकारणयोरेकरूपमेव सत्त्वमिति प्रतीयते । अत एव 'बहु स्याम्' इत्यादिश्रुतौ नामरूपविभागविभक्तकार्यसत्तायाः कारणनिष्ठत्वाभिधानसङ्गतिः । एतेन—

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥

इति वार्तिकमपि भवत्परिष्कृतपक्षकक्षीकृतमिव । कारणवाक्येष्वज्ञानवाचिपदाभावाच्च । एतच्च नायकसरे (४३) स्थापयिष्यत इति ।

[1]* अन्तर्भावितसत्तं चेदित्यादि—एतद्विवरणं खण्डनतद्व्याख्ययोर्लघुचन्द्रिकादौ चावधेयम् । 'अत्रासत्त्वं सत्त्वेनापाततो व्यवस्थापयितुमशक्यत्वं' इति आनन्दवर्धनटीकायाम् ।

## सर्वार्थसिद्धिः

इति। अत्र 'तदसत्ततः' इत्यत्र स्थान [1]*सदिदं ततः इति पाठ्यम्। विशेषणतया उपलक्षणतया वा सत्तासंबन्धिनि नासत्त्वारोपश्श-क्यत इति।

सत्त्वं च सदसद्वेति विकल्प्यानिष्टकल्पने।
असत्त्वं सदसद्वेति विकल्प्योत्तरमूह्यताम्॥
स्वक्रियादिविरोधश्च सूत्रप्रभृति दुस्तरः।

## आनन्ददायिनी

न भवतीति नसमासः। तथा सत्त्वस्याप्रवेशादसतः कारणत्वं तत एवायातमित्यर्थः। त्वदुक्तमेव 'तदसत्ततः' इत्यत्र तदसदिति स्थाने सदिदमिति पदप्रक्षेपेण तव दूषणं भवतीत्याह—अत्रेति। इदं (कारणं) तत् सदेवेत्यर्थः। तदेवोपपादयति— विशेषणतयेति। उभयथाऽपि सत्ताश्र-यत्वात्कारणस्येति भावः। ननु सत्तायास्सत्ताश्रयत्वेऽनवस्था। तदना-श्रयत्वे तस्या असत्त्वे(न)कारणस्याप्यसत्त्वमित्यत्राह—सत्त्वं चेति सदसद्वेति—कारणस्यासत्त्वं सन्न वा? आद्येऽनवस्था, सत्त्वान्तराप-त्तिश्च। असत्त्वस्यासत्त्वे सत्त्वाश्रयत्वेनाभिमतस्यासत्त्वशून्यतया सर्व-सत्त्वं स्यात्। द्वितीये तु असत्त्वस्यैवासत्त्वाभावरूपसत्त्वाश्रयतया (त्वात्) सत्त्वं; अवर्जनीयतया तद्वदेव सर्वस्यासत्त्वमिति भावः। पूर्वोक्तं स्वक्रियाव्याघातं विशदमाह—स्वक्रियादीति। सूत्रप्रभृति—त्वदीयशा-

## भावप्रकाशः

[1]* सदिदमिति—सत्ताया विशेषणत्वेऽनवस्थायाः स्वपरनि-र्वाहेन परिहारात् उपलक्षणत्वे सत्त्वेनापाततो व्यवस्थापयितुं शक्यत्वस्य कदाचित्सत्त्वे अन्यदाऽपि तदभावो न संभवतीति भावः।

## सर्वार्थसिद्धिः

गुरुशिष्यादिवाक्यानां परबोधार्थता यतः ॥
तेभ्यश्चैतन्यमित्यादि वदता गुरुणा स्वयम् ।
किण्वादिभ्यः प्रसिध्यन्ती मदशक्तिर्निदर्शिता ॥
प्रत्यक्षाल्लोकशब्दोक्तादधिकं च तदायतम् ।
अभाष्यत भवत्पूर्वैः प्रत्यक्षं चार्थसाधकम् ॥
अर्थकामौ पुमर्थौ च दृष्टोपायैरु(पायावु) (पाधी उ) दीरितौ।
प्रीयसे द्रूयसे च त्वं बिभेषि च ततस्ततः ॥
इष्टं प्राप्तुमनिष्टं च निवर्तयितुमुद्यतः ।
तत्सिद्धौ चरितार्थस्त्वं लोकवत्किं न मन्यसे ॥
बुभुक्षुरन्नमादत्से श्वभक्ष्यादि जहासि च ।
परोक्त्या प्रतिपद्यार्थं प्रतिब्रूषे जिगीषया ॥

## आनन्ददायिनी

स्वभूतसूत्रमारभ्येत्यर्थः । तत्र हेतुमाह—गुरुशिष्येति । परबोधनार्थत्वं परप्रातिपत्तिप्रयोजनकत्वं; तच्च साध्यसाधनभावनिबन्धनमिति भावः । त्वयैव लोकसिद्धकार्यकारणभावस्य दृष्टान्तीकरणादपि विरोध इत्याह—किण्वादिभ्य इति । तदीयभाष्यविरोधमप्याह—प्रत्यक्षादिति । अधिकं—अधिरुपरिभावार्थः । प्रत्यक्षस्यो(क्षादु)परिभूतं—फलभूतमित्यर्थः । दृष्टोपाधी—अन्वयव्यतिरेकासिद्धकारणकौ । ततस्तत इति—प्रीतिदुःखभयहेतुभ्य इत्यर्थः । उद्यतः—यत्नवान् । तत्सिद्धौ—इष्टप्राप्त्यनिष्टपरिहारसिद्धौ । चरितार्थः—प्राप्तप्रयोजनकः । ततः किमित्यत आह—लोकवदिति । पूर्वोक्तानां सर्वेषां साध्यसाधनभावप्रतिपत्तिनिबन्धनत्वात् लोकवत् किमर्थं तन्नाभ्युपगच्छसीत्यर्थः । बुभुक्षुरिति—

## तत्वमुक्ताकलापः

### कादाचित्कस्य कालावधिनियतिकरं पूर्वसत् कारणं

## सर्वार्थसिद्धिः

तत्वावधारणार्थं वा वादे किं न प्रवर्तसे ।
स्वयं वा मानतर्काभ्यां किं न किञ्चित्परीक्षसे ॥ ३२ ॥

ननु परिवेषा(दिषु)दौ नियत(पूर्वं)पूर्वसत् किञ्चिन्न दृश्यते। न च घटादिदृष्टान्तेन तदनुमेयं; विपरिवर्तस्य दुर्वारत्वात्। अतो दृश्यमाना अप्यवधयः केषुचिद्रसोत्पत्तौ रूपादिवद्यदृच्छासिद्धा इत्यत्राह—कादाचित्कस्येति। अयं भावः—यदि परिवेषादीनामपि कादाचित्कत्वं दृष्टं तत्र निपुणं निरूपयतां देशकालादृष्टविशेषादातपादिकारणविशेषस्सिद्धः। तदनुपलम्भेऽपि संदिग्ध-

## आनन्ददायिनी

क्षुन्निवर्तनसाधनत्वाभावे ह्यविशेषात् सर्वमुपादीयेत परित्यज्येत वा। तथा न क्रियते (इति)। ततश्च स्वक्रियाविरोध इति भावः ॥ ३२ ॥

आक्षेपिकीं संगतिमाह—नन्विति। आदिशब्देन क्षणरुच्यादिसंग्रहः। नियतपूर्वमिति—यद्यपि सूर्याम्बुदादयस्सन्त्येव, तथाऽपि न तेषामवधित्वं, तत्सत्त्वेऽपि तदभावादिति भावः। विपरिवर्तस्येत्यादि—तद्दृष्टान्तेन घटादावेवावधिनैरपेक्ष्यानुमानस्य संभवादिति भावः। यदृच्छासिद्धा इति--अकारणमिति भावः। प्रतिज्ञामात्रं नार्थसाधकमित्यत्राह—अयं भाव इति। आतपादीत्यादिशब्देन पृथिवीपीतभागादिपरिग्रहः। तदनुपलम्भेऽपीति—नच योग्यानुपलम्भादभावनिर्णयः भर्जनकपालस्थवह्निक(कार)णानामिव तेजःक(कार)णानामप्यनुपलम्भसंभवादिति भावः।

## सर्वार्थसिद्धिः

परिवेषादिदृष्टान्तेन नान्यत्र हेत्वभावश्शक्योऽनुमातुम्। अनिश्चितसाध्यस्य दृष्टान्तत्वायोगात्। निश्चितसाध्यविपर्ययस्य पक्षत्वाद्यति(क्षत्वाती)पातात्। निश्चितनिदर्शनादनिश्चितानुमानं युक्तमेव। न च त्वद्विवादमात्रेण घटादिषु सर्वलोक(संमतः)सिद्धः कार्यकारणभावस्संदिह्यते। एतेन 'अहेतुतो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्' इत्यादि च प्रत्युक्तम्। अस्तु हेतुनिरपेक्षो नियतकालः प्रागभाव एव कार्यस्य पूर्वावधिः; स हि स्वभावविरुद्धतया कार्यकालमनश्नुवानस्तत्पूर्व एवेति सिद्धं, अतः किमन्यैरित्यत्राह—

## आनन्ददायिनी

विपारिवर्तप्रसङ्गं परिहरति—अनिश्चितेति। निश्चितसाध्यविपर्ययस्येति—ननु घटादावपि मृदादेर्यदृच्छासिद्धत्वमुक्तमिति चेत्; मैवम्; परिवेषादौ कारणाभावनिश्चये हि तद्व्याप्तया घटादावपि मृदादेर्यदृच्छासिद्धता। परिवेषादौ संदेहेन तद्बलाद्यदृच्छासिद्धत्वकल्पनायोगात्। तथाच घटादौ सकारणकत्वव्याप्तिग्रहस्संभवत्येव। परिवेषादौ तत्संदेहश्च व्यभिचारसंदेहतया न प्रतिबन्धक इति साध्यविपर्ययनिश्चयात् न पक्षत्वमिति भावः। विपारिवर्तप्रसङ्गं परिहरति—एतेनेति। निश्चितसाध्यदृष्टान्तेन (तत्रापि) कारणविशेषानुमानसंभवादिति भावः। नन्वस्तु पूर्वावध्यनुमानम्। तथाऽपि प्रागभाव एव पूर्वावधिः कारणमस्तु। न च प्रागभावस्यपि यत्कारणं तदेव कारणम(तदेवावधिर)स्तु, न तु प्रागभावः, तद्धेतोरेवेति न्यायादिति वाच्यं; तस्य हेतुनिरपेक्षत्वात्। तथाच भावरूपकारणनिरपेक्षत्वमेव निर्हेतुकत्वमित्या(मस्त्वित्या)शङ्कते—अस्तु हेतुनिरपेक्ष इति। स्वभावविरुद्धतया—भावाभावयोः स्वरूपेण विरुद्धतया। तत्पूर्व एव—अतः किमन्यैरिति सिद्धमित्यत्रा(मित्याहेत्य)न्वयः।

## तत्त्वमुक्ताकलापः

**स्यात् भावोपष्टम्भशून्यो न खलु तदवधिं प्रागभा-**

## सर्वार्थसिद्धिः

भावोपष्टम्भेति। भावान्तरमभाव इति स्थापयिष्यते। इह त्वपिना पक्षान्तरान्वारोहस्सूच्यते। अयं भावः—यदि कार्येण प्रागभाव एव केवलोऽपेक्षणीयः तद्वदेते(देव ते)नाप्यनादिना भाव्यं; अतः प्रागवधिस्सन्नप्यभावस्तत्तद्भावशेखरित एव स्वात्मानमवधित्वेन नियच्छेदिति। नित्यस्वभाववत् कादाचित्कस्वभावस्यापि हेतु-

## आनन्ददायिनी

अन्यैः—भावरूपैः। भावान्तरमिति—तथाच प्रागभावमात्रहेतुकत्वेऽपि भावरूपकारणजन्यत्वं सहेतुकत्वं सिद्धमिति भावः। अन्वारोहोऽङ्गीकारः। ननु भावोपष्टम्भ एव मास्तु मानाभावादित्यत्राह—अयं भाव इति। तद्वदेवेति—ननु जन्यत्वस्यानादित्वविरुद्धतया तद्व्याप्यप्रागभावजन्यत्वस्यापि विरोधितया कथं ततोऽनादित्वसादित्वसाधनमिति चेन्न; कार्यं प्रागभावमात्रजन्यं चेत् प्रागभावाधिकरणक्षणोत्तरत्वाधिकरणक्षणवर्तिप्रागभावप्रतियोगि न स्यात्; यत्त(यद्य)दधिकरणक्षणोत्तरत्वाधिकरणक्षणवर्तिप्रागभावप्रतियोगि तन्न तन्मात्रजन्यं यथा घटो दण्डमात्रजन्यः इत्यापादनेनानादित्वासिद्धेरिति भावः। अन्ये तु प्रागभावमात्रजन्यत्वे प्रागपि प्रागभावसत्त्वेन कार्योत्पत्तेर्विलम्बायोगत् अतीतका(लेऽपि)ले (कार्यस्यावश्यकतया) कार्याभावस्यासंभवात् अनादित्व(मर्थात्प्राप्त)मित्याहुः। कार्यस्याद्यजातस्य पूर्वकालसत्त्वमेवानादित्वमित्यप्याहुः। तत्तद्भावशेखरित इति—मूर्त(मूर्त)त्वादिविशिष्टः। नित्यस्वभाववदिति—अन्यथा

## तत्त्वमुक्ताकलापः

**वोऽपि कुर्यात् । कार्यं निर्हेतुकं चेत् कथमिव न**

## सर्वार्थसिद्धिः

नैरपेक्ष्यं स्यादित्यत्राह–कार्यं निर्हेतुकं चेदिति। विषमं निदर्शन-मित्याकूतम्। तदेवानिष्टप्रसङ्गेन व्यनक्ति–कथमिति । निरवधित्वे गत्यन्तरं न भवतीति भावः । कार्यस्य नित्यत्वं सतोऽसतो वेति विकल्पे पूर्वत्र नित्यता अन्यत्र तुच्छता स्यादिति विभा-ज्यम् । पूर्वावधिवदुत्तरावधेरप्यसत्कल्पत्वान्नित्यत्वम् । न हि इतः परं न भवितव्यमनेनेत्यपि नियमोऽस्ति! ननु कादाचित्कत्वं स्वभावो न वा? आद्ये नित्यस्वभाववन्निरपेक्ष एव स्यात् ।

## आनन्ददायिनी

नित्यस्वभावस्यापि तत्सापेक्षता स्यादिति भावः । तदेवेति—निदर्शन-वैषम्यमेवेत्यार्थः । कार्यस्य नित्यत्वं विभाज्यमित्यन्वयः । विभाज्यं—विवेचनीयम् । नन्वेतावता पूर्वावधिराहित्यमस्तु; उत्तरावधिवैधुर्यरूप नित्यत्वं कुत इत्यत्राह—पूर्वावधिवादिति । असत्कल्पत्वमविरोधित्व-मित्यर्थः । असत्कल्पत्वमेवोपपादयति—न हीति । उत्तरावधित्वाभावे सर्वस्याप्युत्तरावधिवैधुर्ये(ण)तदनन्तरमित्यभावादित्यर्थः । यद्वा ननु ध्वंस उत्तरावधिरस्त्वित्यत्राह—न हीति। ध्वंसस्याप्युक्तरीत्या उत्तरावधि-वैधुर्येणानादित्वात्सर्वस्याप्युत्तरावधित्वानुपपत्तेरित्यर्थः । नित्यस्वभावव-दिति—पूर्वत्र स्वभावत्वाविशेषादहेतुकत्वशङ्का; संप्रति स्वभावत्वव्या-घाताधीनेति वैषम्यम्। स्व(स्व)भावस्य चेति—सर्वस्यापि सहेतुकत्व-

## तत्वमुक्ताकलापः

**भवेन्नित्यता तुच्छता वा? कादाचित्कस्वभावाद्यदि न नियमनात्**

## सर्वार्थसिद्धिः

द्वितीये कथमतत्स्वभावः कारणसहस्रेणापि तत्स्वभावतां नेतुं शक्यः? स्वभावस्य च हेतुमत्त्वे निर्हेतुकमिति किञ्चिन्न स्यात्। अतो नित्यस्वभाववन्नियतकालस्वभावता स्यादिति शङ्कते—कादाचित्केति। कादाचित्कस्वभावत्वेऽपि हेत्वधीनतां तत एव नित्यस्वभाववैषम्यं चाभिप्रेत्याह—न नियमनादिति। न हि यतः कुतश्चिदनन्तरमनेन भवितव्यमिति कादाचित्कत्वं! अनियमादृष्टेः; अस्मादनन्तरमेवेदमिति व्यवस्थादृष्टेरित्यर्थः। उक्तनियमानभ्युपगमे सर्वत्र सर्वदा सर्वतः कार्यं स्यादिति तर्कबाधं

## आनन्ददायिनी

प्रसङ्गात्; नचेष्टापत्तिः भवाद्भिर्नित्यानित्यव्यवस्थाकरणादिति भावः। स्वभावत्वेऽपि कार्यस्य हेत्वधीनता दर्शनबलादभ्युपेयते न तु नित्यस्य; तदभावात्; अन्यथा कार्यस्य धूमादेर्यतः कुतश्चिद्गर्दभादिजातीयादनन्तरमप्युपलब्धिरुत्पत्तिस्स्यात्। वह्न्यादिघटितसामग्र्यनन्तरमपि कदाचिदनुपलब्धिस्स्यात्; नचेष्टापत्तिः; धूमादेर्वह्न्याद्यनन्तरमेव नियतोपलम्भविरोधात्। तदर्थिनो नियमेन तत्रैव प्रवृत्तेः। स्वक्रियाव्याघातादेरपि प्रसङ्गान्नियतावधिकत्वमङ्गीकरणीयमित्याह—स्वभावत्वेऽपि इत्यादिना।

## तत्वमुक्ताकलापः

अन्यथाऽतिप्रसङ्गात् ॥ ३३ ॥

नेत्रादेर्दीपिकादेरिव नियमयुतं तैजसत्वादि-

## सर्वार्थसिद्धिः

व्यनक्ति—अन्यथेति । न हि धूमादिना यदाकदाचिद्भवि-तव्यमित्यस्य कादाचित्कत्वं नियम्यते! तथा सति गर्दभादेर-नन्तरं तदुपलब्धिर्वा सामग्र्यनन्तरमनुपलब्धिर्वा स्यादिति ॥

इति त्रिगुणपरीक्षायां कार्यकारणभावभङ्गनिरासः.

---

प्रकृतस्य प्रकृत्यादिकारणवादस्य प्रतिपक्षा निरस्ताः । तत्र देहादिवदिन्द्रियाणामपि भौतिकत्वं वदतः प्रतिवक्ति—नेत्रादेरिति । नियमयुतं—सावधारणं ; रूपादिषु मध्ये रसाद्य-

## आनन्ददायिनी

नहीति—(धूमादिना) यदाकदाचिद्भवितव्यमित्येतावता नियतकारणान-ङ्गीकारे तस्मादनन्तरमनेन भाव्यमिति कादाचित्कत्वमुत्पत्ति(त्तिर्न)न नियन्तुं शक्यमित्यर्थः ॥

इति त्रिगुणपरीक्षायां कार्यकारणभावभङ्गनिरासः

---

अवसरसंगतिमाह—प्रकृत्येति । रसाद्यग्राहकत्व इति—आत्मनि

## तत्वमुक्ताकलापः

साध्ये रूपादिग्राहकत्वं

## सर्वार्थसिद्धिः

ग्राहकत्वेन विशेषितामित्यर्थः। चक्षुस्तैजसं रसाद्यग्राहकत्वे सति रूपग्राहकद्रव्यत्वात् दीपवत् इति। एवं त्वगिन्द्रियं वायवीयं स्पर्शादिषु मध्ये स्पर्शस्यैव ग्राहकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकवायुवत्। रसनस्याप्यत्वे रसस्यैवेति दन्तान्तस्तोयदृष्टान्तः। घ्राणस्य पार्थिवत्वे गन्धस्यैवेति कुङ्कुमगन्धाभिव्यञ्जकानिम्बत्वगादि निदर्शनम्। श्रोत्रस्य तु नभस्त्वे श्रोत्रं गुणावान्तरजात्या स्वगुणसजातीयगुणग्राहकं बाह्येन्द्रियत्वात् चक्षुरादिवत् इति। शब्दो गुणावान्तरजात्या स्वसजातीयगुणवतेन्द्रियेण गृह्यते बहिरिन्द्रियव्यवस्थापकगुणत्वाद्रूपादिवत्। शब्दो भूतेन्द्रियग्राह्य इति

## आनन्ददायिनी

व्यभिचारवारणाय रसाद्यग्राहकत्व इति। परमाणौ व्यभिचारवारणाय रूपग्राहकत्वादिति। सन्निकर्षादौ व्यभिचारवारणाय द्रव्यत्वादिति। घटादिग्राहकतयाऽसिद्धिप्रसङ्गादत्रापि रूपादिष्विति बोध्यम्। तदर्थश्च—रूपादिषु पञ्चसु मध्ये इति। अत्र ग्राहकत्वं लौकिकप्रत्यक्षजनकत्वं; तेनोपनयादिवशाद्र(दिना र)सादिग्राहकतया नासिद्धिः। एवमुत्तरानुमानेष्वपि द्रष्टव्यम्। रसस्यैवेति—रसस्यैव ग्राहकत्वं हेतुरित्यर्थः। एवं गन्धस्यैवेत्यादावपि बोध्यम्। निदर्शनं—दृष्टान्तः। बहिरिन्द्रियेति—इन्द्रियपञ्चके स्वग्राहकेन्द्रियेतरेन्द्रियानिरूपितस्वग्राहकेन्द्रियानिष्ठभेदानुमितिहेतुसाक्षात्कारविषयगुणत्वादित्यर्थः। तेन 'इन्द्रियव्यवस्थापकत्वं इन्द्रियसाधकत्वं; न च शब्दजन्यत्वामिन्द्रियस्य! इन्द्रि-

## तत्वमुक्ताकलापः

**यदि करणतया स्यादसाधारणत्वम् ।**

## सर्वार्थसिद्धिः

वा; बहिरिन्द्रियव्यवस्थापकत्वादित्येव हेतुः । तथा श्रोत्रं भौतिकं बाह्येन्द्रियत्वात् चक्षुरादिवत् । आकाश इन्द्रियारम्भको भूतत्वात् भूतान्तरवत् इति । शब्दोपलब्धिर्वा भूतेन्द्रियकरणिका बाह्येन्द्रियव्यवस्थापकोपलब्धित्वात् रूपोपलब्धिवत् । तत्राद्येषु चतुर्ष्वनुमानेषु हेतुविकल्पम(नूद्य)भिप्रेत्य दूषयति—यदि करणतयेत्यादिभिः। यस्मिन् सति कार्यं भवत्येव तत्करणम्। तच्च सन्निकर्षविशेषविशिष्टतयेन्द्रियाणाम् । ननु—

## आनन्ददायिनी

यानुमापकत्वं चेत् द्रव्यत्वादौ व्यभिचारः' इत्यपास्तम् । गुणत्वादिति शब्दत्वादौ व्यभिचारवारणाय । असिद्धिवारणाय साक्षात्कारविषयेति । सुखादौ व्यभिचारवारणाय बहिरिन्द्रियेति । द्रव्यत्वादौ व्यभिचारवारणाय इन्द्रियपञ्चकेति विशेषणमिति ध्येयम् । बहिरिन्द्रियव्यवस्थापकत्वादिति—पूर्ववदेवार्थः । शब्दत्वादौ साध्यसत्त्वात् न व्यभिचार इति गुणत्वस्यानुपादानम् । शब्दोपलब्धिरिति—उपलब्धित्वं शाब्दोपलब्धौ व्यभिचारीतीन्द्रियेति विशेषणम् । सुखाद्युपलब्धौ व्यभिचारवारणाय बाह्येति विशेषणम् । हेतुविकल्पमभिप्रेत्येति—अभिव्यञ्जकादित्यत्र हेतावभिव्यञ्जकत्वं किं क(का)रणत्वं? यद्वा क(का)रणसहकारित्वं? अथवा बोधकत्वमात्रमिति विकल्पमभिप्रेत्येत्यर्थः । तच्चेति- इन्द्रियाणामेव तथात्वात् पक्षमात्रवृत्तित्वेन असाधारण्यमिति(त्यर्थः) भावः ।

## तत्वमुक्ताकलापः

**तत्साहाय्यं त्वसिद्धं ;**

## सर्वार्थसिद्धिः

उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ।
किं चक्षुषा ममैतेन? दृष्टं दीपेन यन्मया! ॥

इति दीपादिषु साधकतमत्वं कश्चिद्ब्रूयात् । अतस्सपक्षवृत्तेर्हेतोः कथमसाधारणत्वम्! इत्थं ; आलोकेन विनाऽपि जन्तुभेदेषु चक्षुषो रूपादिग्राहकत्वं सिद्धम् । अन्धकारे च मनुष्यादीनां तत्वतोऽन्यथा वा । अतः ईदृशं प्राधान्यमपेक्ष्य इन्द्रियेषु करणत्वं दीपादिषु सहकारित्वं च प्रख्यातमनुरुध्य विकल्पप्रवृत्तेरविरोधः । कोट्यन्तरं दूषयति—तत्साहाय्यं त्वसिद्धमिति ।

## आनन्ददायिनी

अन्धकारेणोद्विग्नः—भीतः । साधकतमत्वं—करणत्वम् । कश्चित् इत्यनेन लौकिकव्यवहा(र विरहस्सूच्यते)रापरिज्ञानादिरुच्यते । सपक्षवृत्तेरिति—दीपादीनां सपक्षत्वमिति भावः । किं दीपादीनां रूपादिसाक्षात्कारमात्रे करणत्वम्? उत मनुष्यकर्तृकरूपादिसाक्षात्कारे इति विकल्पमभिप्रेत्य आद्ये दूषणमाह—आलोकेन विनापीति । द्वितीये दूषणमाह—अन्धकारे चेति । ननु तर्हि व्यभिचाराद्दीपादेस्सहकारितापि न स्यात् । यदि तद्विशेषे विशदज्ञानादौ सहकारिता ; तत्र करणताऽप्यास्त्वित्यत्राह—ईदृशेति । रूपोपलब्धिमात्रे चक्षुषो यस्मिन् सति भवत्येवेति रूपं प्राधान्यमभिप्रेत्येत्यर्थः । न च विशदज्ञानं प्रत्यपि करणत्वम् ; अन्यत्र क्लृप्तचक्षुष एव करणस्य सत्त्वेन सहकारितामात्रत्वात्? अन्यथा गौरवात् । कोट्यन्तरमिति—सहकारित्व-

## तत्वमुक्ताकलापः

**भवति गमकतामात्रमप्यञ्जनादौ**

## सर्वार्थसिद्धिः

करणभूतेन्द्रियापेक्षया तेषामेव दीपादिवत् सहकारित्वमनुपपन्नमित्यर्थः । दीपादीन् प्रति सहकारित्वान्नासिद्धिरिति चेत्; तर्हि प्रमातृप्रमेययोरपि तथात्वात्तत्सिद्धिस्स्यात् । तयोस्सतोरपि कदाचित्कार्यं नास्तीति चेत्; तावता करणत्वं माभूत्; तत्सहकारित्वं तु सिद्धमेव । दीपे च सति भाव एवेति नियमो नास्ति । संप्रयोगविशेषसाहित्यात्स्यादिति चेत्; तर्हि तयोरपि ततस्स्यादेवेत्यनैकान्त्यम् । एतेन करणत्वादिविकल्पानादरेण रूपादिबोधकद्रव्यत्वमात्रं हेतुरित्यपि निरस्तम् । तद्व्यनक्ति—भवतीत्यादिना । आदिशब्देन प्रमात्रादिसंग्रहः ।

## आनन्ददायिनी

मित्यर्थः । सहकारित्वं किं करणं प्रति? उत कारणमात्रं प्रति? इति विकल्प्य आद्ये आह—करणेति । तेषामेव—इन्द्रियाणामेव । अनुपपन्नमिति—सहकारिसहकारिमतोर्भेदाधीनत्वादिति भावः । द्वितीयमाशङ्क्य दूषयति—दीपादीनित्यादिना । तथात्वात्—सहकारित्वात् । तत्सिद्धिस्स्यात्—तैजसत्वासिद्धिस्स्यात् । तदभावात्तत्र व्यभिचार(इति भावः)स्स्यादित्यर्थः । ननु करणत्वमेव सहकारित्वेन विवक्षितमिति चेत्; तत्राह—दीपे चेति । तथाच असाधारण्यं तदवस्थमिति भावः । तयोरपीति—प्रमातृप्रमेययोरप्युक्तविधया नियमरूपकरणत्वसंभवेनानैकान्त्यमित्यर्थः । तृतीय आह—एतेनेति । आदिशब्देनेति—ननु प्रमा

## सर्वार्थसिद्धिः

अञ्जनस्य शक्ये प्रतिबन्धनिवर्तकत्वमात्रमिति चेन्न; अशक्ये गूढनिधिदर्शनादौ शक्त्याधानेन सहकारित्वदृष्टेः। शक्त्याधायकं हि सहकारीति चेन्न; दीपादावपि तथा क्लृप्तिप्रसङ्गात्। सत्तयैव हेतुत्वं तत्र दृष्टमिति चेत्; अत्रापि तथास्तु अविशेषात्। येच तत्तदिन्द्रियदोषैरपि रूपादिधीरस्तीति मत्वा—

शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम्।

इति लक्षयन्ति; तन्मते तत्तद्दोषैरप्यनैकान्त्यम्। तेषां

## आनन्ददायिनी

तृप्रमेययोर्न स्वरूपमात्रग्रहसहकारित्वं; रसादिग्रहं प्रत्यपि सहकारित्वात्। रसादिग्रहासहकारित्वे सति रूपग्रहसहकारित्वस्य विवक्षितत्वात्; तथाच न व्यभिचार इति चेन्न; दृष्टान्तासिद्ध्या तथा विवक्षाया असंभवात्। तेषामपि सन्निकर्षतया स्वनिष्ठस्पर्शादिव्यञ्जकत्वादिति भावः। इदञ्च अवधारणाविवक्षायां। तद्विवक्षायां त्वञ्जनादिद्रव्यसंस्कारकद्रव्ये दोषविशेषे च व्यभिचारो बोध्यः। अञ्जनस्येति—तथाच उपलब्धिसाधकत्वाभावान्न व्यभिचार इति भावः। दीपादावपीति—तस्य शक्त्याधायकत्वेन सहकारित्वाभावप्रसङ्गादित्यर्थः। सत्तयैवेति—दीपादीनां चक्षुरादौ शक्त्याधायकता नास्ति (स्तीत्यर्थः।) स्वरूपेण हेतुत्वादिति भावः। अत्रापीति—अञ्जनादावपि स्वरूपेण हेतुताक्लृप्तिरस्तीत्यर्थः। येचेति—नयनगतपित्तद्रव्येण शङ्खे पित्तरूपस्योपलम्भात् रसनगतदोषेण क्षीरादौ तिक्तताया उपलम्भात् तद्व्यावर्तनाय इन्द्रियलक्षणे प्रमितिविशेषणं तार्किकर (क्षणकृदादयः प्रतिक्षिपन्ति) क्षादावुक्तमित्यर्थः। अनैकान्त्यमेवोपपादयति—तेषामिति।

## सर्वार्थसिद्धिः

तैजसत्वानभ्युपगमात् । दन्तान्तस्तोयदृष्टान्तश्चायुक्तः विषयसंस्कारकस्य व्यञ्जकत्वायोगात् । न हि ग्रस्यमानं किञ्चिदसंस्कृत्य दन्तान्तस्तोयस्योपकारकत्वम् । तावता च रसव्यञ्जकत्वे रसगन्धाद्युद्भवहेतोरग्नयादेरपि किं तन्न स्यात्? वायुश्च वेगेनाभिघ्नन् सूक्ष्मान् सलिलकणानन्तश्शरीरं प्रवेशयति । शैत्यं तु तेषां त्वगिन्द्रियप्रवेशवैषम्याद्विशदमनुभूयते । तावता स्पर्शव्यञ्जकत्वे गन्धोपहारकस्य तस्य तद्व्यञ्जकत्वमपि किं नेष्यते? तथाच घ्राणपार्थिवत्वानुमानं दुस्स्थमिति । एवं चतुर्णां भौतिकत्वासिद्धौ तद्दृष्टान्तेन श्रोत्रभौतिकत्वानुमानान्यपि छिन्नमूलानि । आकाश इन्द्रियारम्भक इति च अयुक्तं; श्रोत्रस्य त्वन्मते तदारब्धत्वाभावात् । भूतत्वादिति च घटादिभिरनै-

## आनन्ददायिनी

विषयसंस्कारकः—विषये (द्रव्ये) ग्रस्यमाने रसाद्युत्पादकः । विषयसंस्कारकत्वमुपपादयति—नहीति । ननु रसाभिव्यञ्जकत्वं रसाभिव्यक्तिप्रयोजकत्वम्; तच्च रसोत्पादोपलम्भजनकसाधारणमिति नासिद्धिरित्यत आह—तावता चेति । तथाच पार्थिवत्वसाधकहेतोस्तत्र व्यभिचार इति भावः । त्वचो वायवीयत्वसाधकहेतावपि दृष्टान्तवैषम्यमाह—वायुश्चेति । उपलब्धि (मात्र) प्रयोजकत्व(मात्र)विवक्षायां दोषमाह—तावता स्पर्शव्यञ्जकत्वे इति । त(त्र)स्य वायोस्तत्र पार्थिवत्वसाधकहेतोर्व्यभिचार इति भावः । श्रोत्रस्य भौतिकत्वसाधकानुमानानां व्याप्यत्वासिद्धिरूपं साधारणं दोषमाह—एवं चतुर्णामिति । आकाश इन्द्रियारम्भकः इत्यनुमाने श्रोत्रस्य तन्मते नित्यतया बाधो व्यभिचारोऽपि दोष इत्याह—आकाश इति । किञ्च चक्षुराद्यनुमानेषु प्रत्य-

## सर्वार्थसिद्धिः

कान्तिकम्। किंचात्र लोकसिद्धनयनबुद्बुदादिपक्षीकारे रूपादिविशेषैस्तेषां पार्थिवत्वसिद्धेः कालात्ययापदेशः। अनुमानतस्त्विन्द्रियसिद्धिरशक्येति वक्ष्यते। सामान्यतो दृष्टादधिष्ठानातिरिक्तेन्द्रियसिद्धावपि तदाहङ्कारिकत्वं श्रौतमबाध्यम्। 'इन्द्रियाण्यहङ्कारविशेषाः' इति हैरण्यगर्भोक्तिरपि तदाहङ्कारिकत्वानुगुणा। अतः श्रुतिसिद्धपक्षीकारेऽपि बाध एव। प्रतिप्रयोगाश्च–बाह्येन्द्रियाण्यभौतिकानि इन्द्रियत्वात् मनोवत्। प्रत्येकपक्षीकारेण वा चक्षुरतैजसमित्यादि। तावेव हेतुदृष्टान्तौ। परस्परं वा घ्राणादयो दृष्टान्ताः। विपक्षे बाधकसदसद्भावश्च समः; यत्किञ्चिद्दृष्टान्तमात्रानुसारेण प्रसङ्गस्य सुलभत्वादिति। परोक्ता-

## आनन्ददायिनी

क्षसिद्धस्य पक्षत्वमुतानुमानसिद्धस्य आहोस्वित् श्रुतिसिद्धस्य इति विकल्पमभिप्रेत्य आद्ये दोषमाह—लोकसिद्धेति। द्वितीय आह—अनुमानत इति। वक्ष्यते—इन्द्रियाणामेकादशत्वसाधनावसर इत्यर्थः। सामान्यत इति—रूपादिज्ञानं पक्षीकृत्य क्रिया क(का)रणजन्या इति सामान्यतो दृष्टादित्यर्थः। अपिशब्देनाधिष्ठानातिरिक्ततया सिद्धिर्न शक्येति सूच्यते। तदिति—तथाच आहङ्कारिकत्व(विरोधी न भवतीत्यर्थः) श्रुत्या तैजसत्वाद्यनुमानबाध इति भावः। योगशास्त्रे अहङ्कारत्वमिन्द्रियाणामुक्तमिति तदाहङ्कारिकत्वकथनं तेन विरुद्धमित्यत आह—इन्द्रियाणीति। कार्यकारणयोस्तन्तवः पट इत्यभेदव्यपदेशदर्शनादाहङ्कारिकत्वविरोधी तद्व्यपदेशो न भवतीत्यर्थः। तृतीयं दूषयति—अत इति। धर्मिग्राहकमानबाध इत्यर्थः। परस्परमिति—चक्षुःपक्षकानुमाने घ्राणं घ्राणपक्षके चक्षुरादिक्रमेण परस्परपक्षकानुमाने परस्परं दृष्टान्ता

## तत्वमुक्ताकलापः

**अक्षाहङ्कारिकत्वं श्रुतिपथनिपुणैर्घोषितं नैव बाध्यम् ॥ ३४ ॥**

**तन्मात्रेष्विन्द्रियाणां श्रुतिरिह न लयं वक्ति**

## सर्वार्थसिद्धिः

नुमानानामागमबाधमभिप्रेत्याह—अक्षाहङ्कारिकत्वमिति । श्रुतिपथनिपुणैः—मनुपराशरपाराशर्यादिभिः । घोषितं—बहुषु प्रदेशेषु स्पष्टोक्तम् । नैव बाध्यं—अशक्तैरनुमानैः अन्यपरैश्च वाक्यैरिति शेषः ॥ ३४ ॥

ननु इन्द्रियाणि तन्मात्रेष्विति श्रुत्या भौतिकत्वममीषां भातीत्यत्राह—तन्मात्रेष्विति । पूर्वापरपर्यायेष्विव आकाशेन्द्रियपर्याययोः लयो न पठ्यते । नचात्रानुषङ्गः; सति गत्यन्तरेऽध्याहारवत्तस्याप्ययोगात् । अन्यथा द्वितीयादिषु च सर्वेषु

## आनन्ददायिनी

इत्यर्थः । अन्यपरैरिति—भूताप्यायितत्वमात्रपरैरित्यर्थः ॥ ३४ ॥

आक्षेपिकीं संगतिमाह—नन्विति । तन्मात्रेष्विति श्रुत्येति । कार्यस्योपादान एव लयनियमादिति भावः—पूर्वापरेति । 'पृथिव्यप्सु लीयते' इत्यारभ्य 'वायुराकाशे प्रलीयते' इति पठित्वा अनन्तरं आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते इति पठ्यते; सर्वत्र लयपदं पठित्वा मध्ययोराकाशेन्द्रियपर्याययोर्लयपदं न पठ्यत इत्यर्थः । अन्यथेति—अत्र प्रकरणे अनुषङ्गस्याभिप्रेतत्वे इत्यर्थः । ननु श्रूयमाणस्थले अनुषङ्गासंभावात् यत्र न श्रूयते तत्रानुषङ्गोऽस्तु

## तत्त्वमुक्ताकलापः

### किंतु प्रवेशं

## सर्वार्थसिद्धिः

पर्यायेष्वप्यनुषङ्गेण भाव्यं वैरूप्यायोगात् । इन्द्रियाणामाकाशप्रकृतित्वं च सर्वोपबृंहणविरुद्धम् । अस्यां चोपनिषदि भूतादेराकाशः आकाशाद्वायुः इत्यादिसृष्टिक्रम उक्तः; 'षोडशविकारा' इति श्रुतेश्चासामञ्जस्यं स्यात् । अतो वरमधिकरणत्वोक्तिमात्रानुसारादाकाशस्येन्द्रियेषु तेषां च आकाशारम्भकतन्मात्रेषु प्रवेशविशेषाभिधानं इत्यभिप्रायेणाह—किंतु प्रवेशमिति । अयं भावः—यद्यप्याकाशस्येन्द्रियैः प्रागपि संबन्धः; तथाऽपि तत्तदिन्द्रियाप्यायकभूतांशानां स्वकारणलयक्रमात् आकाशदशापन्नत्वात् तदानीमिन्द्रियेष्वाकाशस्यैव संसर्गः अनन्तरमाकाशे च शब्दतन्मात्रावस्थे तानीन्द्रियाणि शब्दतन्मात्रसंसर्गीणि भवन्ति ।

## आनन्ददायिनी

वैरूप्यं च सोढव्यमिति चेत्; अनुषङ्गं विनाप्यर्थबोधकत्वेन वाक्यपरिसमाप्तौ वैरूप्यमभ्युपगम्य तत्कल्पनायोगात् । सोपबृंहणैतदुपनिषद्विरोधाच्चानुषङ्गो न युक्त इत्याह—इन्द्रियाणामिति । भूतादिः—तामसाहङ्कारः । षोडशेति—विकाराणां न्यूनत्वप्रसङ्गादिति भावः । नन्वनुषङ्गाभावे कथं वाक्यपरिसमाप्तिरित्यत्राह— अतो वरमिति । नन्वेवमपि प्रवेशनक्रियाया अश्रवणात् तदध्याहारादनुषङ्ग एव वरमित्यत्राह—अयं भाव इति । संसर्ग एव प्रवेशः; स च सप्तम्यर्थ इति नाध्याहार इति भावः । ननु सर्वेषामाप्यायकभूतानां तत्तन्मात्राणां च लयक्रमेण आकाशदशापत्तिः तस्यापि लयक्रमाच्छब्दतन्मात्रतापत्तिरिति तन्मात्रसंसर्गे इन्द्रियाणि तन्मात्रेष्विति सप्तमीबहुवचनमनुपपन्नं;

## तत्वमुक्ताकलापः

नो चेत् पृथ्व्यादिवाक्येष्विव हि लयपदं व्योम्नि

## सर्वार्थसिद्धिः

अतस्तन्मात्रान्तराणामपि तदवस्थापत्त्या तत्तदंशभेदविवक्षया बहुवचनोपपत्तिः। अतः 'तन्मात्राणि भूतादौ लीयन्ते' इत्यपि बहुवचनं गतार्थम्। अत्रैवं व्याख्यातं–इन्द्रियाप्यायकभूतांशानां सर्वेषामाकाशतापन्नत्वादाकाशस्यैवेन्द्रियसंसर्ग आसीत्। पश्चानामपि भूतानां शब्दतन्मात्रापन्नत्वादिन्द्रियाणि शब्दतन्मात्रांशभेदेषु संसृष्टान्यासन्। एवमनभ्युपगमे वाक्यवैरूप्यदोषं व्यनक्ति—नोचेदिति। ननु 'श्रोत्रं नभो घ्राणमुक्तं पृथिव्याः'

## आनन्ददायिनी

शब्दतन्मात्रस्यैकत्वात् इत्यत आह—अत इति। लयक्रमतः तन्मात्रान्तराणामपि शब्दतन्मात्रतापत्तौ तत्तदंशभेदस्य तत्र सत्त्वादित्यर्थः। एवं प्रथमाबहुवचनमप्यनुपपन्नमित्याह—अतस्तन्मात्राणीति। अंशभेदविवक्षात इत्यर्थः। ननु आकाशस्य प्राक्तनसंबन्धापेक्षया इन्द्रियैस्संबन्धान्तरं वाच्यं; नचाप्यायकभूतानामाकाशतापत्तिमात्रेण तत्संभवतीत्याह— अत्रैवमिति। भाष्ये इति शेषः। 'आप्यायकानां भूतानामिन्द्रियैस्संबन्धविशेषोऽस्ति। इन्द्रियसंबन्धविशेषवतां भूतानामाकाशतापन्नत्वे तत्र तत्संबन्धोऽप्याकाशे पर्यवसितः। तथा तत्संबन्धापन्नस्यैवाकाशस्य तन्मात्रतापन्नत्वे तत्संबन्धाश्रयतन्मात्रसं(तत्सं)बन्ध इन्द्रियाणामासीदित्यर्थः' इति व्याख्यातमित्यर्थः। यद्वा उक्तार्थे अभियुक्तसंमतिमाह—अत्रैवमिति। आहङ्कारिकत्वेऽप्युपबृंहणविरोधमाशङ्क्य परिहरति — ननु श्रोत्रं नभ इति। परिहारप्रकारमाह —

## तत्त्वमुक्ताकलापः

चाक्षेषु च स्यात् । भूतैराप्यायितत्वात् क्वचिदुपचरिता भौतिकत्वोक्तिरेषां अन्नाप्तेजोमयत्वं श्रुतिरपि हि मनःप्राणवाचामुवाच ॥ ३५ ॥

## सर्वार्थसिद्धिः

इत्यारभ्य 'वाय्वात्मकं स्पर्शनमामनन्ति' इत्युच्यते 'नभः श्रोत्रं च तन्मयम्' इत्यादि च । अतः आहङ्कारिकत्ववाक्यं परम्परया नेयमित्यत्राह—भूतैरिति । तदिदं व्यवस्थापितं वेदार्थसंग्रहे 'भूतैस्त्वाप्यायनं महाभारत उच्यते' इति । इममेव न्यायं 'अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वाक्' इत्यादिष्वपि योजयितुमाह—अन्नाप्तेजोमयत्वमिति । न खलु हैतुकैरपि मनसः पार्थिवत्वं कल्प्यते वायुरूपस्य प्राणस्याप्यत्वम् !

## आनन्ददायिनी

तदिदमिति । ननु महाभारतवचनादाप्यायनमस्तु ; उपबृंहणान्तराद्भौतिकत्वं चास्त्विति चेत् ; न; भौतिकत्वोपबृंहणस्य आहङ्कारिकत्वश्रुतेश्चान्यतरस्यान्यथासिद्धौ वाच्यायां श्रुतेः प्राबल्यात् तदनुरोधादुपबृंहणं व्यवस्थाप्यम् । किंच 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' इत्यादिन्यायेनापि महाभारतवचनानुसारित्वमिति भावः । तत्र युक्तिमाह—न खल्विति । अन्यपरत्वस्य परेणावश्यं वाच्यत्वादित्यर्थः । ननु 'अग्निर्वाग्भूत्वा' इत्यादिना उत्पत्तिः ; 'अग्निं वागप्येति

## सर्वार्थसिद्धिः

तस्मादाप्यायनपरत्वमेव तत्र वाच्यम्; एवमन्यत्रापि । 'अग्नि-र्वाग्भूत्वा मुखं प्राविशत् आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यादिषु तत्तद्देवताधिष्ठाने तात्पर्यम् । 'अग्निं वागप्येति' इत्यप्ययश्रुतिश्च अधिष्ठातृदेवतांशापक्रमणपरेत्यभाष्यत । 'ओषधीर्लोमानि' इत्यादिना अनपियद्भिरपि लोमादिभिस्सह पाठात् ॥ ३५ ॥

इन्द्रियाणां भौतिकत्वभङ्गः तदाहङ्कारिकत्वं श्रुत्याद्यर्थनिर्वाहश्च

---

अथ 'मनष्षष्ठान्येवेद्रियाणिम्; वागादिष्विन्द्रियशब्दो भाक्तः' इति वदतः प्रतिबन्दिपूर्वकेण प्रमाणेन प्रतिक्षिपति—

## आनन्ददायिनी

इति लयश्च श्रूयते इत्यत्राह—अन्यत्रापीति । देवताप्रवेशाक्रमणपरत्वात् नोत्पत्तिलयपरत्वमित्यर्थः ॥ ३५ ॥

इन्द्रियाणां भौतिकत्वभङ्गः तदाहङ्कारिकत्वं श्रुत्याद्यर्थनिर्वाहश्च

---

प्रसङ्गसंगतिमाह—अथेति । अवसरसङ्गतिरित्यन्ये । नन्वनुमानासिद्धिश्चान्यथासिद्धिश्च समे इत्युक्तं; तावता न सङ्ख्याविशेषसमर्थनं उभयथाऽपि व्याप्त्यभावात् इत्यत्राह—अयं भाव इति । इन्द्रियाणामतीन्द्रियत्वेन तत्रानुमानागमयोरेव प्रमाणतया पर्यवसानात् प्रथम-

## तत्वमुक्ताकलापः

**रूपादिज्ञानसिद्धौ यदि करणतया कल्पनं**

## सर्वार्थसिद्धिः

**रूपादीति । अयं भावः—यद्यागमः प्रधानीक्रियेत तदा 'इन्द्रियाणि दशैकं च' *इति व्यवतिष्ठेत । यदा तु क्रिया करणपू-**

## आनन्ददायिनी

मागमपक्षे स्वपक्षासिद्धि(र्नस्य) स्स्यादित्याह—यद्यागम इति । अनुमानपक्षेऽपि प्रतिबन्दिमुखेन स्वमतसिद्धिमाह—यदा तु इत्यादिना । सुखा-

## भावप्रकाशः

* इन्द्रियाणीत्यादि—अत्र 'पञ्चेन्द्रियगोचराः' इति द्वितीयपादे चशब्दाव्यवहितपूर्ववर्तिपञ्चपदार्थे इन्द्रियगोचरपदार्थान्वयवत् प्रथमपादे एकपदार्थेऽपि इन्द्रियपदार्थान्वयः प्रतिपिपादयिषित इति प्रतीयते । यदि मनस इन्द्रियत्वं नाभिप्रैष्यद्भगवान् तदा 'इन्द्रियाणि दश मनः, इत्येवावक्ष्यत्; न च तथोवाच! अतो मनस इन्द्रियत्वमनेन सिध्यति । श्रुतिषु मनस इन्द्रियेभ्यः पृथङ्निर्देशेनानिन्द्रियत्वव्यामोहं शमयितुं 'एकादशेन्द्रियाणि' इत्याद्युक्तौ श्रुतिविरुद्धया स्मृत्या नाभीष्टसिद्धिरिति शङ्का स्यात्, तदपनोदनाय 'इन्द्रियाणि दशैकं च' इत्युक्तिः । अत्र मनसः प्राधान्यबोधनाय भिन्नराशीकरणं; तेन च मनसः प्राधान्यविवक्षया श्रुतिषु पृथङ्निर्देशः उपपद्यते इति न ततोऽनिन्द्रियत्वसिद्धिः । एतदेवाभिप्रेत्य शङ्कराचार्यैः गीताभाष्ये 'इन्द्रियाणि दश; श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद्बुद्धीन्द्रियाणि; वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात् कर्मेन्द्रियाणि; तानि दश एकं च; किं तत्?

## सर्वार्थसिद्धिः

**विकेति व्याप्त्या रूपादेस्सुखादेश्चोपलब्धिः स्मृतिश्च क्रियात्वात् करणपूर्वकेति कल्प्येत तदा वचनादानादिक्रियापि तत्पूर्विका कल्प्या स्यात् । अथ तावता अधिष्ठानातिरिक्तं न सिध्यतीति मन्यसे! ज्ञानेन्द्रियेष्वपि तथैव; आलोकादिभिरधिष्ठानैश्च**

## आनन्ददायिनी

द्युपलब्धिः स्मृतिश्च मनोऽनुमाने पक्षः । ननु अधिष्ठानेन वागाद्यवयवेनान्यथासिद्धिरिति शङ्कते—अथ तावतेति । आलोकादिभिः—विषय-

## भावप्रकाशः

मनः ; एकादशं संकल्पाद्यात्मकम्' इत्यत्र संकल्पाद्यात्मकमित्यनेन मनसः प्राधान्यं बोधितं एकादशमित्यनेन मनस इन्द्रियत्वं च, अन्यथा तस्य वैयर्थ्यं स्यात् । एकादशमित्यनेन 'एकादशं मनश्चात्र' (१–२) इति विष्णुपुराणवचनं स्मारितम् । तत्र च संदर्भे 'श्रोत्रमत्र च पञ्चमम्' 'वाक्च मैत्रेय पञ्चमी, इत्यत्र इन्द्रियेणैव संख्यापूरणस्य विवक्षितत्वेन 'एकादशं मनश्चात्रेत्यत्रापि मनसा इन्द्रियेणैव सख्यापूरणं विवक्षितमिति प्रतीयते। एवं 'तानि चैतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते' इति तत्रत्यगीताभाष्यवाक्येन सांख्यवत्स्वमतेऽपि मनस इन्द्रियत्वमेवेति सूचितम् । अत एव 'इन्द्रियाणां मनश्चास्मि' इति गीताभाष्ये 'इन्द्रियाणामेकादशानां मनश्चास्मि इत्युक्तिः. 'त इन्द्रियाणि' इत्यादिसूत्रभाष्ये स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत्संगृह्यते' इत्युक्तिः ; तत्रैव तद्विवरणब्रह्मविद्याभरणे स्मृतौ त्वेकादशेति—"इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इत्यादौ इत्याद्युक्तिः एवं भामत्याद्युक्तिश्च संगच्छते। अतो मनस इन्द्रियत्वं शङ्कराचार्याणामप्यभिमतमिति ॥

## सर्वार्थसिद्धिः

सिद्धसाध्यता । गोळकादिसद्भावेऽपि कदाचित् कार्यं न जायते इत्यतिरिक्तसिद्धिरिति चेत्; समं वागादावपि । सामग्रीवैकल्यात् प्रतिबन्धकाच्च तत्र तथेति चेत्; चक्षुरादावपि तथैव । सत्यप्यालोकादौ दोषादर्शनेऽपि गोळकादितः कदाचित् कार्यं न जायत इति चेत्; तदपि समम् । दोषस्सूक्ष्मस्तत्रेति चेत्; अत्राप्येवमस्तु; ज्वालाघ्रातबीजन्यायेन विशेषादर्शनेऽपि दोषस्य कल्प्यत्वात् । कल्पितेऽपि ह्यतीन्द्रिये तदानीं तद्भ्रंशहेतुस्सूक्ष्मो दोषस्त्वयाप्यङ्गीकार्यः; अन्यथा कर्मेन्द्रियक्लृप्तेरन्यथासिद्धिः । ननु च यदि चक्षुर्गोळक एवेन्द्रियं

## आनन्ददायिनी

प्रकाशकसौरालोकादिभिः । ज्ञानेन्द्रियादिष्वन्यथासिद्ध्यभावं शङ्कते—गोळकादीति । सममिति—मूकादीनां वागाद्यवयवसत्त्वेपि वचनादिक्रियाया अदर्शनात् परिहरणं सममित्यर्थः । न समतेति शङ्कते—सामग्रीति । पुनर्ज्ञानेन्द्रियेषु वैषम्यमाशङ्कते—सत्यपीति । तदपीति—दोषदर्शनमित्यर्थः । सूक्ष्मेति—वागादौ दोषाभावोऽनुपलम्भमात्रान्न वक्तुं शक्य इत्यर्थः । तदपि सममित्याह—अत्रापीति । ज्वालाघ्रातं—ज्वालास्पृष्टम् । ननु अप्रत्यक्ष (अनुपलब्ध) प्रतिबन्धकल्प(नापक्षे)ने कल्प्यत्वाविशेषात् इन्द्रियक्लृप्तिरेवास्तु इत्यत्राह—कल्पितेपीति । इन्द्रियकल्पना गुर्वीति भावः । अन्यथा—सूक्ष्मदोषस्याकल्पने । ननु ज्ञानेन्द्रियानभ्युपगमे बाधकमस्ति न तु वागादीनामिति वैषम्यं शङ्कते—नन्विति । गोळकमात्रस्य प्रकाशकत्वे तस्य दूरस्थविषयसम्बन्धाभावादप्राप्तप्रकाशकत्वस्य वाच्यत्वेन अविशेषात् सर्वं सर्वदा प्रकाशयेदिति

## सर्वार्थसिद्धिः

कथं तर्हि दूरस्थं व्यवहितं वा न प्रकाशयति? इत्थम्;— यथा अयस्कान्तादेरव्यवहितानतिविप्रकृष्टाकर्षकत्वं तथेह प्रकाशकत्वम्। आभिमुख्यविशेष एव च बाह्यैरुक्तस्संबन्धोऽस्तु। नन्वयस्कान्तादिवदाभिमुख्याभावेऽपि दर्पणादिभिः स्वमुखादेः पश्चाद्भागवर्तिनां च दर्शनं कथं स्यात्? भवतो वा कथम्? चाक्षुषस्य तेजसः प्रातिलोमवृत्त्येति चेत्; सा कुड्यपाषाणादौ कथं न जायते? मणिसलिलदर्पणादिषु च कथं भवति? अपर्यनुयोज्यतत्तद्वस्तुस्वभावविशेषादिति चेत्; अस्तु तर्हि स एव सन्निधिविशेषसामर्थ्यादनभिमुखवस्तुनि दर्शनस्य हेतुः; द्रव्यान्तरकल्पनाद्वरं

## आनन्ददायिनी

भावः। दूरस्थादिप्रकाशनरूपातिप्रसङ्गं प्रतिबन्द्या परिहरति—इत्थमिति। अयस्कान्तादेस्संबन्धाभावेऽप्याकर्षे यथा नातिप्रसङ्गस्तथेहापीत्यर्थः। सम्बन्धेनैवातिप्रसङ्गः परिहरणीय इति यदि तदा सोऽप्यस्तीत्याह—आभिमुख्यविशेष इति। (ननु) आभिमुख्यस्य (स्याव्याप्तत्वत्) न संबन्धत्वमिति शङ्कते—नन्वयस्कान्तादिवदिति। अतिरिक्तेन्द्रियाभ्युपगमवादिनोऽपि पाश्चात्येन चक्षुषस्संबन्धाभावात् कथं प्रकाश इति चोद्यं समानमित्याह—भवतो वेति। दर्पणाद्यभिघाताच्चाक्षुषतेजसः प्रतिलोमगतिर्भवतीति भावः। सेति—तैरपि प्रतिघातात् सा प्रतिलोमवृत्तिर्जायेताविशेषादिति भावः। परिहारमाशङ्कते—अपर्यनुयोज्येति। स एव—वस्तुस्वभाव एव। सन्निधिविशेषः—दर्पणापेक्षयाभिमुख्यरूपः। ननु सामर्थ्यविशेषस्यापि कल्प्यत्वादिन्द्रियकल्पने कः प्रद्वेष इत्यत्राह—द्रव्यान्तरकल्पनादिति। प्रतिफलनं दर्पण एव न कुड्यादाविति प्रति-

## तत्वमुक्ताकलापः

**धीन्द्रियाणां तद्वदुत्यादिकर्मस्वपि करणतया सन्तु कर्मेन्द्रियाणि । कर्मज्ञानाक्षहेत्वोस्समपरिहरणा ह्यन्यथासिद्धिशङ्का तस्मादेकादशाक्षाण्यपि निगमविदो**

## सर्वार्थसिद्धिः

सिद्धद्रव्यसामर्थ्यविशेषस्य प्रतिफलनादौ संमन्तव्यस्य कार्यान्तरयोजनामात्रम्; अतो धीन्द्रियाणां कल्प्यत्वे कर्मेन्द्रियाणामपि कॢप्तिरनिवार्या; अन्यथासिद्धिशङ्कापरिहारौ च समाविति। तदेतत्सर्वमभिप्रेत्याह—कर्मेति। त्यज्यतां तर्हि वर्गद्वयमिति चार्वाकोत्थानं प्रतिरुणद्धि—तस्मादिति। अतीन्द्रियेन्द्रियकल्प्यत्वासंभवात्; अप्राप्ते च शास्त्रस्यार्थवत्त्वादिति भावः। निगमविद इत्यनेन श्रुतिस्मृत्यनुविधानसू-

## आनन्ददायिनी

फलनासामर्थ्यं संमतं तस्यैव दर्पणादेस्सिद्धस्य स्वाभिमुखवस्तुग्रहणसामर्थ्यमपि कल्प्यतां न धर्म्यन्तरं गौरवादिति भावः। कार्यान्तरयोजनं—प्रकाशरूपकार्यान्तरेण सामर्थ्यविशेषस्य संबन्धः। वर्गद्वयमिति—कर्मज्ञानेन्द्रियवर्गद्वयमित्यर्थः। चार्वाकस्यातीन्द्रियार्थाभावेन इन्द्रियाभावादिति भावः। अतीन्द्रियेति—पूर्वोक्तरीत्या अनुमानाद्यप्रवृत्तावपि श्रुतिबलात् सिद्धिः; तत्प्रामाण्यं च समर्थितमिति भावः।

## सर्वार्थसिद्धिः

चनम्। 'एका कन्या दशेन्द्रियाणि' इत्यादेर्न हि कश्चिद्बाधो दृश्यते! नच कणभक्षाक्षपादाद्यनुसारेण षट्कावच्छिन्नेन्द्रियलक्षणक्लृप्तिर्युक्ता! यथाऽऽहुः—

सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥

इति। वक्ष्यते चानुवृत्तं तल्लक्षणं सात्त्विकाहङ्कारोपात्तत्वम्। नच कर्मेन्द्रियाणां तन्त्रान्तरसिद्धं राजसत्वमनुमन्तव्यम्; शब्दप्रमा-

## आनन्ददायिनी

एका कन्येति—चञ्चलत्वान्मनः कन्येत्युक्तम्। 'इन्द्रियाणि दशैकं च' इति स्मृ(तिरनुसन्धेया)तिः। ननु शरीरसंयुक्तमतीन्द्रियं ज्ञानकारणमिन्द्रियमित्यादिलक्षणाभावाद्वागादीनां नेन्द्रियत्वमित्यत्राह—न च कणभक्षाक्षपादेति। तेषामव्याप्तत्वान्न लक्षणत्वमिति भावः। अव्याप्तिमेव दर्शयति—यथाऽऽहुरिति। सर्वलोकव्यवहारसिद्धवागादावव्याप्तेरिति भावः। अन्यथा गवां क्षीरवत्त्वे सति सास्नावत्त्वं लक्षणमुक्त्वा पुङ्गवानां गोत्वं नेति ब्रुवतः किमुत्तरमिति भावः। तर्हि अव्याप्त्यादिरहितं तल्लक्षणं किमित्यत्राह—वक्ष्यते चेति। ननु भवदभिमत (भवदुक्त)स्यापि लक्षणस्य राजसाहङ्कारोपात्त(तेषु)कर्मेन्द्रियेष्वव्याप्तिरित्याह—नच कर्मेन्द्रियाणामिति। तन्त्रान्तरं—शैव(मतशास्त्रं) मतम्। नन्वेवं तर्हि राजसाहङ्कारस्या (स्येन्द्रिया) नारम्भकत्वे प्रकृतित्वमेव न स्यात्। नचेष्टापत्तिः; षोडश विकारा इति परिगणनविरोधात्। नच प्रकृतित्वमवस्थाश्रयत्वमात्रं विवक्षितम्; आत्मादेरपि संयोगादिरूपविकारवत्त्वेन 'अष्टौ प्रकृतयः' इति विभागविरोधात्। नापि द्रव्यान्तरप्रकृतित्वम्;

## सर्वार्थसिद्धिः

**णके यथाशब्दं व्यवस्थापनात्। सांख्यैरप्यत्र शास्त्रमेवानुसृतम्—**

**सात्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।**

**इति । साधितं च सप्तगत्यधिकरणसिद्धान्ते हस्तादीनामपि**

## आनन्ददायिनी

तथा भूतानामपि प्रकृतिकोटिप्रवेशे 'अष्टौ प्रकृतय' इति विरोधात्। तथाच तत्वान्तरप्रकृतित्वं वाच्यमिति राजसाहङ्कारस्य प्रकृतित्वाभावेन विकारकोटिप्रवेशप्रसङ्गः । नचाहङ्कारजातीयस्य प्रकृतित्वात् तस्यापि प्रकृत्यन्तर्भावः; वैपरीत्यप्रसङ्गात् इति चेत्; अत्राहुः—सात्विकतामसयोरिन्द्रियभूतारम्भकयो राजसस्य प्रकृतित्वं (नाम) न निमित्त(त्वमात्रं;) तया; किंतु द्विधा विभक्त उभयत्र संबद्धस्सन् उपादानीभू(यैव)ततयैव (सहकारि) यथा शरीरोत्पत्तौ (पञ्चीकृतानां तदंशानां) पृथिव्या इतरभूतानि; तथा पृथ्व्या अण्डाद्युत्पत्तौ । नच सहकारित्वव्यपदेशो न स्यात् स्याच्चोपादानत्वव्यपदेश इति वाच्यम्; यथा पञ्चीकरणस्थले इतरभूतानां स्वल्पतया नियतैकभूतत्व(भूतत्वादि)व्यपदेशः तथा सहकारित्वेनैवात्रापि व्यपदेशः; अन्यथा कार्ये दण्डादेरिवानुवृत्त्ययोगाद्रजोगुणः तत्कार्यचलनादिक्रिया च न स्यादिति । अन्ये तु निमित्तत्वमेव राजसाहङ्कारस्य; नच विकारकोटिपरिगणनापत्तिः; तत्वान्तरोपादाननिष्ठतत्वविभाजकधर्मावच्छिन्नत्वमुपादानत्वम् ; तद्भिन्नतत्वविभाजकधर्मावच्छिन्नत्वं विकारत्वमिति विवक्षितत्वात्! उपष्टम्भकगतेनापि रजसा चलनाद्युपपत्तिः यथा स्वर्णतैजसत्वमते गुरुत्वादीत्याहुः। सात्विकः—सत्वगुणेन व्यवह्रियमाणः—सत्वगुणाश्रय इति यावत् । वैकृताहङ्कारः—सात्विकाहङ्कारः । सात्विकान्येकादशेन्द्रियाणि सात्विकाहङ्कारादुत्पद्यन्त इत्यर्थः । एकादशकः—एकादशसंख्यया परिमितः; 'संख्याया

## तत्वमुक्ताकलापः

**मन्वते न्यायपूर्वम् ॥ ३६ ॥**

## सर्वार्थसिद्धिः

तादृशमिन्द्रियत्वम्। न्यायपूर्वं—क्रिया करणपूर्विकेति व्याप्त्यनुसारेण तत्तत्करणमात्रानुमानेऽपि अलौकिकविशेषप्रतिपत्तिश्शास्त्रत एवेति भावः। एवं च शास्त्रयोन्यधिकरणे भाष्यम्—'अतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम्' इति। चन्द्रबिम्बपरभागादिषु व्यवधानविप्रकर्षादिभिरस्मदादीन्द्रियग्रहणानर्हेषु नानुमानम्; तस्य पक्षाश्रयहेतुधर्मव्यापकान्वयमात्रातिरिक्तेषु प्रवृत्त्ययोगात्। साध्यसामान्यस्य तु विवक्षितविशेषविरुद्धव्याप्तत्वेन तदाकर्षकत्वायोगात्। अतोऽतीन्द्रियधर्मकल्पनाद्वरं दृष्टेषु केषुचित् वैषम्यमात्रस्वी-

## आनन्ददायिनी

अतिशदन्तायाः' इति कन्। 'ननु सप्तगतेर्विशेषितत्वात्' इति सूत्रे सप्तसंख्या प्रतीयत इत्याशङ्क्य सिद्धान्तसूत्रे 'हस्तादयः' इत्यनेन सिद्धान्तितत्वान्नात्र विरोध इत्याह—साधितामिति। ननु न्यायपूर्वकत्वे पूर्वोक्तं श्रुतत्वं विरुध्यते प्रमाणान्तराप्राप्ततात्पर्यकत्वाच्छास्त्रस्येत्यत्राह—अलौकिकेति। सर्वो विशेष आनुमानिक एव; यथा चन्द्रबिम्बपरभागः तद्विशेषश्च; तथेन्द्रिये वा तद्विशेषे वा शास्त्रं प्रमाणमित्याह—चन्द्रबिम्बेति। तत्रापि विशेषशास्त्रमेव प्रमाणमित्यर्थः। आदिशब्देन सौरादिपरभागग्रहणम्। द्वितीयेन तेन सौरादिग्रहणम्। तत्र हेतुमाह—तस्येति। पक्षश्चासावाश्रयश्च पक्षाश्रयः। हेतुरूपो धर्मः हेतुधर्मः। अन्वयः—तेषां संबन्धः। ननु सामान्यतस्साध्यसिद्धौ तद्विशेषः साध्येनैवानुमीयतामित्यात्राह—साध्यसामान्यस्येति। सामान्यतस्सिद्धस्य

## तत्वमुक्ताकलापः

सांख्यैस्त्रेधोक्तमन्तःकरणमिह मनोबुद्धयह-

## सर्वार्थसिद्धिः

कार इति तात्पर्यम् ॥ ३६ ॥

### एकादशेन्द्रियसिद्धिः

उक्तेष्विन्द्रियेषु एकमेवान्तःकरणमिति तत्वम् । सांख्या-स्त्वाहुः—

'करणं त्रयोदशविधम्' . . . . . . . ।

अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ॥

इति । अन्ये तु चित्ताख्यमप्यन्तःकरणमन्यदाहुः ; तदनुभाषते—सांख्यैरिति । तादिदं मतद्वयं निष्प्रमाणकमित्याह—

## आनन्ददायिनी

साध्यस्य पक्षादन्यत्र सिद्धविशेषापेक्षया विरुद्धधर्मदर्शनात् विशेष-विरुद्धत्वमित्यर्थः । तथा च अनुमानमात्रेण न गोळकातिरिक्तेन्द्रिय-सिद्धिरित्युपसंहरति—अत इति ॥ ३६

### एकादशेन्द्रियसिद्धिः

प्रासङ्गिकीं संगतिं दर्शयति—उक्तेष्विति । विप्रतिपत्तिं दर्शयति—सांख्यास्त्विति । 'करणं त्रयोदशविधम्' इति सांख्यसप्ततिश्लोके बाह्याभ्यन्तरविभागाभावेऽपि बाह्यानां दशत्वे शेषाणामान्तरत्वं सिध्यतीति भावः । विशेषतोऽपि तत्रैवोक्तमिति दर्शयति—अन्तः करणमिति । वाचास्पतिनेत्थं व्याख्यातं—'अन्तःकरणं महदहङ्कारमनोभेदेन त्रिविधम् । दशविधमपि बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं—बुद्धीन्द्रियं आलोचनेन कर्मेन्द्रियं स्वव्यापारेण संकल्पाभिमानाध्यवसायेषु विषयमा-ख्याति द्वारीभवतीत्यर्थः । अन्ये त्विति—मायिमतानुसारिण इत्यर्थः ।

## तत्वमुक्ताकलापः

**ङ्कारभेदात् चित्तं चान्ये चतुर्थं विदुरुभयमसत् तादृशश्रुत्यभावात् । तत्तत्त्वोक्तिमात्रं न हि कर-णभिदामाह क्लृप्तिस्तु गुर्वी**

## सर्वार्थसिद्धिः

उभयमसदिति । कथमित्यत्र श्रुत्या कल्पनया वा तत्सिद्धिरिति विकल्पे प्रथमस्यासिद्धिमाह—तादृशेति । ननु तान्यपि त्रीणि सुबालोपनिषदि पृथिव्यादितत्वपङ्क्तौ मनसोऽनन्तरं पठ्यन्त इत्याह—तत्तदिति । अयं भावः—न हि तत्वपाङ्क्तिपाठमात्रा-न्मनस्सहपाठमात्राद्वा करणत्वं सिध्येत्; तथा सति अव्यक्तादी-नामपि तत्प्रसङ्गादिति । द्वितीयं दूषयति—क्लृप्तिरिति । एकस्यैव हि मनसः स्मृत्यनुभवभेदेन वा संकल्पविकल्पभेदेन वा वृत्ति-

## आनन्ददायिनी

असिद्ध्यभावमाशङ्कते—नन्विति । प्रतिज्ञामात्रं न साधकमित्यत्राह—अयं भाव इति । तथा सतीति—व्यभिचारान्न साधकमिति भावः । द्वितीयमिति—वृत्तिभेदमादायान्यथासिद्धो व्यपदेशभेदो न साधक इति भावः । ननु मन (सो)सि वृत्तिभेदोऽप्यासिद्धः कल्प्य इति कल्प्यत्वा-विशेषात् कारणभेद एव कल्प्यतामित्यत्राह—एकस्यैव हीति । सांख्या अपि एकस्यैव मनसो वृत्तिभेदेन चित्तं मन इति व्यपदेशभेदं निर्वह-न्तीत्यर्थः । संकल्पः—कर्तव्यताध्यवसायः । विकल्पः—अयमिति

## सर्वार्थसिद्धिः

**भेदमन्येऽप्याहुः! श्रूयते च 'कामस्संकल्प' इत्यादौ 'एतत्सर्वं मन एव' इति। अत्र आयुर्घृतमित्यादिवत्सामानाधिकरण्यम्। पुरुषधर्मा एव हि कामादयोऽध्यवसायादयश्च! तदिह पुरुषबुद्धिभेदनियतसामाग्रीभेदव्यवस्थितं वृत्तिभेदमात्रं न करणभेदकल्पकमिति भावः। ननु 'चक्षुश्च द्रष्टव्यं च नारायणः' इत्यादिना पञ्च ज्ञानेन्द्रियाण्युक्त्वा 'मनश्च मन्तव्यं च नारायणः। अहङ्कारोऽहङ्कर्तव्यं च नारायणः। चित्तं च चेतव्यं च नारायणः' इत्याम्नातम्। अनन्तरं चैवं कर्मेन्द्रियाण्यधीतानि।**

## आनन्ददायिनी

निश्चयः। न च विनिगमकाभाव इत्यत्राह—श्रूयते चेति। एकस्यैव मनसो बाह्यवृत्तय इति सिद्धा इत्यर्थः। चकारेण 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इति प्राणविषयसूत्रसिद्धत्वं चाभिप्रेतम्। ननु भवन्मते कामादीनामात्मधर्मत्वात् म(नसि श्रूयन्त इत्ययुक्तं?)नोवृत्तित्वं कथम्? तथा सति करणस्यैवात्मत्वप्रसङ्गः। कथं वा तेषां भेदव्यपदेशनिमित्तत्वं चेत्यत्राह—अत्रेति। तथाच तद्गतत्वाभावेऽपि तत्सामानाधिकरण्यनिर्देशः तद्भेदव्यपदेशनिमित्तत्वं च संभवतीत्यर्थः। ननु पूर्वतन्त्रे स्थानप्रकरणयोर्बलाबलविचारेऽपि इष्टिसोमात्मकराजसूयान्तर्गताभिषेचनीयनामकसोमयागसन्निधौ विदेवनादयस्समाम्नाताः। ते किं सर्वस्य राजसूयस्याङ्ग उताभिषेचनीयस्येति संशय्य सन्निधि (वशा) बलादभिषेचनीयस्याङ्गमिति पूर्वपक्षयित्वा श्रुत्यादिविहिताङ्गसंदंशाद्राजसूयाङ्गत्वम्? पवित्रादारभ्य क्षत्रस्य धृतिं यावत् अङ्गविधिषु प्रायेण 'राजसूयाय ह्येना उत्पुनाति' इति राजसूयप्रकरणानुवृत्तिसत्त्वादिति राद्धान्तितम्; तन्नयायेन संदंशात् करणत्वबुद्ध्यनुवृत्तेः करणत्वमिति शङ्कते—नन्विति।

## तत्वमुक्ताकलापः

**बुद्ध्याद्याख्या निरूढा क्वचिदिह मनसो वृत्ति-वैचित्र्यमात्रात् ॥ ३७ ॥**

## सर्वार्थसिद्धिः

**अतः करणगणमध्यपाठात् अग्र्यप्रायनयेन बुद्ध्यादीन्यपि करणानि स्युः? इत्यत्राह—बुद्ध्याद्याख्येति । तथाच भाष्यं—'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारभेदैर्व्यपदिश्यते' इति । अतः तत्ववर्गमध्ये मनोऽनन्तरं बुद्ध्यादि-चित्तान्तपाठोऽपि मनस एव हि वृत्तिभेदविशिष्टस्येति नेतुं शक्यम् ।**

## आनन्ददायिनी

अग्र्यप्रायेति—अग्र्या (ग्र्यप्राया) णां बहुत्वे तन्मध्यगतस्याप्यग्र्यत्व-बुद्धिविषयत्वम् । तथा करणमध्यपाठात् करणत्वनिश्चय इत्यर्थः । अपसिद्धान्तं वारयति—तथाच भाष्यमिति । त(अ)त्र युक्तमाकाङ्क्षा-नुवृत्तिस्तद्बलाद्राजसूयाङ्गत्वं च राजसूयशब्दस्य तदङ्गत्वाकाङ्क्षो द्बोधकस्य सत्त्वात्; नचात्र करणत्वोद्बोधकमस्ति! नच करणमध्य संदंशात्करणत्वम्! इन्द्रियमध्यसंदंशात् बाह्यमध्यसंदंशाच्च बाह्ये-न्द्रियत्वस्यापि प्रसङ्गात् । नचेन्द्रियत्वादौ बाधकमस्तीति चेत्; करण-त्वेऽपि समानम् । नचेन्द्रियत्वमप्यस्त्विति वाच्यम्; अपसिद्धान्तात् । 'इन्द्रियाणि दशैकं च' इत्यादिविरोधात् । किंच स्थानप्रकरणाभ्यां लिङ्गं बलीय इति सिद्धान्तितम् । तथाच प्रकृतित्वरूपलिङ्गात् अग्र्य-प्रायरूपस्थानसंदंशन्यायरूपप्रकरणयोर्बाधात् न करणत्वनिश्चय इत्यर्थः । अभिमानः— अहं कर्तेति बुद्धिः । अत इति—ननु 'संज्ञाचोत्पत्ति-संयोगात्' इत्यधिकरणविरोधः; तथा हि—ज्योतिष्टोमप्रकरणे श्रूयते

## आनन्ददायिनी

अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः एतेन सहस्रदक्षिणेन यजेत' इति। तत्रैतच्छब्दपरामृष्टानां ज्योतिरादिशब्दानां योजना सामानाधिकरण्याद्यागनामत्वं तावत्सिद्धम्। तत्र प्रकृतमेव ज्योति(ष्टोमज्योति)रादिशब्दैरनूद्य सहस्रदक्षिणारूपगुणो विधीयत इति पूर्वपक्षयित्वा नामान्तरश्रुतौ तावदर्थभेदः प्रतीयते संज्ञाभेदस्यार्थभेदकत्वात् प्रकृतात् ज्योतिष्टोमाद्भेद उक्तः। तथा शब्दान्तराधिकरणे(ऽपि)च यजति ददाति जुहोतीति शब्दभेदात् भेद उक्त इति तन्न्यायेनात्रापि भेदस्स्यादिति चेत्; अत्राहुः—न तावत् संज्ञाभेदस्योक्ताधिकरणन्यायेन भेदकत्वं बलवता बाधकेन बाधितत्वात्। तदुक्तं तदधिकरणराद्धान्ते—

बलवद्बाधकाच्चासावन्यथात्वं प्रपद्यते।

इति। प्रकृते च एकादशत्ववचनानि बाधकानि। नापि शब्दाधिकरणन्यायः! वेदनध्यानोपासनानां भेदप्रसङ्गात्। आहवनीयादिशब्दानां पशुच्छागादिशब्दानां हविःपुरोडाशादिशब्दानामपि भेदकत्वापत्त्या बहुदोषप्रसङ्गात्। तस्मादत्रापि बाधकाभावे भेदकत्वं वाच्यम्। बाधककरं चात्रोक्तमेवेति। केचित्तु—तेषां भेदोऽस्तु नाम! नच करणत्वमपि! तत्साधकाभावात्। अत एव न शब्दान्तराधिकरणविरोधोऽपि। नच भाष्यमूलयोर्विरोधः! इन्द्रियत्वं करणत्वं चाभ्युपेत्य प्रवृत्तेः। नच करणमध्ये पाठात् करणत्वप्रसक्तिः! अनुवादसन्निधेरकिञ्चित्करत्वात्। पुरोवादे महतोऽहङ्कारस्य च तत्वान्तरोपादानतया करणत्वेन्द्रियत्वाभावात्। अत एवाङ्गत्वाभावनिश्चयाद्दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र कालार्थस्संयोगो नाङ्गाङ्गिभावार्थ इयुक्तम्। महदाद्यतिरिक्तपरत्वे तु तत्वाधिक्यप्रसङ्गः। ज्ञानादिपरत्वेनान्यथासिद्धिश्च। अहङ्कार शब्दोऽपि ज्ञानपर एव बुद्धिशब्दसन्निधानात्। युक्तं च तथा ज्ञान-

## सर्वार्थसिद्धिः

**नच चित्तं नाम तत्वान्तरं सृष्टिप्रलयप्रकरणेषु पठ्यते! 'अय-मेव त्वहङ्कारः उत्कृष्टजनावमानहेतुः' इत्यादि प्रथमसूत्रभाष्यं**

## आनन्ददायिनी

करणानां तादधीन्यकथनानन्तरं ज्ञानस्य तथात्वकथनमिति । नच द्रव्यप्रकरणविरोधः ! ज्ञानस्यापीन्द्रियादिवत् अवस्थाविशेषाश्रयद्रव्य-त्वादित्याहुः । ननु वृत्तिभेदमादाय कथञ्चिन्नयने को हेतुरित्यत्राह— चित्तं नामेति । अन्यथा सृष्टिप्रलयप्रकरणेषु पृथिव्यादिवत् पाठप्रसङ्ग इति भावः । नच 'इन्द्रियाणि तन्मात्रेष्विति मनसो यथा पाठः तथा स एव बुद्ध्यादेः पाठोऽस्तु । किञ्च महदहङ्कारयोरेव बुद्ध्यहङ्कारत्वात् 'प्रकृतेर्महान् महतोऽहङ्कारः' इति तयोः पाठो दृश्यत इति शङ्क्यम्! तैर्बुद्ध्यादेरिन्द्रियत्वानभ्युपगमात् ; तदतिरिक्तत्वे पाठाभावात् ; 'इन्द्रियाणि दशैकं च' 'चक्षुश्श्रोत्रम्' इति विशेषकीर्तनात् । कीर्ति-तयोर्महदहङ्कारयोश्च सद्वारकाद्वारकतयेन्द्रियजनकयोः करणत्वाभावाच्चेति भावः। ननु बुद्ध्यादीनामिन्द्रियमध्ये पाठो व्यर्थः मनः पाठमात्रेणाऽपि चारितार्थत्वात् इति चेत् ; अत्राहुः—सर्वेन्द्रियप्रधानस्यापि मनसस्सर्वा-वस्थायामपि तादधीन्यसिद्ध्यर्थं बुद्ध्यहङ्कारवृत्तिविशिष्टस्य वा सर्वत्र प्रवृत्तिप्रयोजकतया प्राधान्यद्योतनार्थं त्रेधा कथनमिति । अन्ये तु प्रकरणस्य तादधीन्यमुखेन स्वातन्त्र्यभ्रमनिवृत्तिपरत्वात् न भेदेन कथनवैयर्थ्यं द्रष्टव्यम् । बोद्धव्याहङ्कर्तव्यानां भेदाभावेऽपि पृथगुक्तेरिव किञ्चिद्विशेषमादायापि स्वातन्त्र्यबुद्धिनिरासः फलमित्याहुः । ननु अयमेव त्वहङ्कार इति भाष्ये अहङ्कारस्य उत्कृष्टजनावमानरूपप्रवृत्ति-करणत्वोक्तेः मनोऽतिरिक्तमप्यन्तःकरणमभिमतमित्यत्राह—अयमेव त्विति।

## सर्वार्थसिद्धिः

अहमर्थहेयत्वनिरासपरतयान्यार्थमन्वारुह्याप्युपपत्तेः । अनुग्राहकत्वमात्रेण परम्परया वा गर्वहेतुत्वोक्तेरविरोधादिति ॥ ३७ ॥

अन्तःकरणवैविध्यभङ्गः

---

नन्वेवं बाह्यकरणभेदोऽप्यपोहितुं शक्यः । मनोवदेकस्य वृत्तिभेदात् पृथक्कार्यव्यपदेशोपपत्तेः । आहुश्च बाह्यैकदेशिनः—'एकैकदेहेष्वेकमेवेन्द्रियं; प्रदेशभेदैस्तु रूपादिप्रकाशनशक्तिनियमः । षडायतनागमोऽपि तथैव व्यवस्थाप्यः स्वरूपभेदप्रयोजनाभावात् ।

## आनन्ददायिनी

अन्यार्थ—बुद्धिविशेषहेयत्वपरमित्यर्थः । तत्र हेतुः—अन्वारुह्येति । उपपत्तेरिति । अहमर्थात्म(त्व) समर्थनस्योपपत्तेरित्यर्थः । ननु अहङ्कारस्यानर्थहेतुबुद्धिविशेषहेतुत्वाभावे कथं तत्त्याज्यतापरत्वं वचनस्येत्यत्राह—अनुग्राहकत्वेति । तथाच तावन्मात्रेण अञ्जनादिवत् न करणत्वं सिध्यतीति भावः ॥ ३७ ॥

अन्तःकरणवैविध्यभङ्गः

---

अक्षेपसंगतिमाह—नन्वेवमिति ।

ज्ञानेन्द्रियाणि पञ्चापि तथा कर्मेन्द्रियाणि च ।
मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः ॥

इति । बौद्धैः (बाह्यकरणानां) द्वादशानामङ्गीकारादेकदेशिन इत्युक्तिः । आगम इति—

चक्षुः श्रोत्रं तथा घ्राणं रसनं स्पर्शनं मनः ।

## तत्वमुक्ताकलापः

**एकं तत्तत्प्रदेशप्रतिनियततया शक्तिभेदं प्रपन्नं देहव्यापीन्द्रियं चेत् प्रथममिह**

## सर्वार्थसिद्धिः

कल्प्यते शक्तिभेदश्चेत् शक्तिरेवेन्द्रियं भवेत् ।

इति च अयुक्तम्; धर्मिकल्पनातो वरं हि धर्मकल्पनम्! प्रदेशानामेव तत्तत्करणत्वोपपत्तौ प्रदेशक्लृप्तिरनर्थिकेति चेन्न; देहव्यापिनः स्पर्शस्योभयसंमतेः। तस्य च करतलप्रकोष्ठास्यनेत्रादिषु स्पर्शग्रहणशक्तिवैषम्यदृष्टेः। अतश्चैकस्यैव सर्वत्र देहे स्पर्शनत्वं तत्र तत्र चक्षुरादित्वं चेति। तदेतदाह—एकमिति। किमेकेन्द्रियस्य श्रुतस्य कल्पितस्य वा शक्तिभेदव्यवस्थापनम्? इति विकल्पमभिप्रेत्य आद्यं दूषयति—प्रथममिति। बाधस्य दूषणा-

## आनन्ददायिनी

रूपादिबोधहेतुत्वादेतान्यायतनानि षट् ॥

इति बौद्धविलासवचनमपि शक्तिभेदपरतया व्यवस्थाप्यमित्यर्थः। ननु शक्तिभेदो यद्यङ्गीक्रियते तर्हीन्द्रियभेद एवाङ्गीक्रियतां अविशेषादिति शङ्कते—कल्प्यते शक्तिभेदश्चेदिति। इन्द्रियकल्पनापक्षेऽपि शक्तिभेदकल्पनाया आवश्यकत्वादिति भाव। ननु यद्येकस्मिन् शक्तिभेदकल्पना तदा चक्षुरादिदेशव्यापीन्द्रियावयवि कल्प्यं; अन्यथा शक्तिभेदव्यवस्थायोगात्; तथाच तदारम्भकतत्तद्देशवर्त्यवयवानामेव करणत्वमस्तु किं तदवयविना तत्र शक्तिभेदकल्पनया च? इति शङ्कते—प्रदेशानामेवेति। नेति—तादृशस्य त्वगिन्द्रियस्य त्वयाऽभ्युपगमादिति भावः। नन्वेकस्मिन् विचित्रशक्तिकल्पनं क्वचिदपि न दृष्टमित्यत्राह—तस्य चेति। दूषणान्त-

## तत्त्वमुक्ताकलापः

**भवेदागमेनैव बाधः। नो चेत्स्याद्देहभेदप्रतिनियत-**

## सर्वार्थसिद्धिः

**न्तरादौद्धत्यसूचनाय प्राथम्योक्तिः। आगमेनैव—धर्मिग्राहकेणैवे-त्यर्थः। गौरवदोषश्च क्लृप्तिपक्षे वक्तव्यः नास्मत्पक्ष इति चाभिप्रेतम्। इन्द्रियक्लृप्तिः प्रागेव निरस्ता। अत्र तदेकत्वक्लृप्तावतिप्रसङ्ग-माह—नो चेदिति। यथैकमेवाकाशं तत्तत्पुरुषादृष्टोपार्जितकर्ण-शष्कुल्यवच्छेदभेदैः प्रतिपुरुषं व्यवस्थितोपकारकमिति वैशेषिका-दिभिः कल्प्यते तथा त्वयाऽपि एकमेवेन्द्रियं तत्तद्भोगायतनभेद-नियतशक्तिकं सर्वोपकारकं कल्प्यमिति भावः। नचैवमस्त्विति वाच्यम्; अपसिद्धान्तात्। ननु नानादेहमध्येषु वसतः कथमेकत्वमिति चेत्; चक्षुर्गोळकाद्यवच्छिन्नानां इन्द्रियप्रदेश-**

## आनन्ददायिनी

रादिति—नो चेदित्यादिदूषणान्तरादित्यर्थः। भिन्नेन्द्रियक्लृप्तिपक्षे तदुक्तं परिहरति—गौरवदोषश्चेति। इन्द्रियक्लृप्तिरिति—कल्प्यत्वे गोळका-तिरिक्तं न सिध्येदित्यादिना निरस्तेत्यर्थः। अतिप्रसङ्गमेवोपपादयति—यथैकमेवाकाशमिति। तत्तद्भोगायतनं—तत्तच्छरीरं तत्तदिन्द्रियाधिष्ठानं वा। अपसिद्धान्तादिति—'प्रतिपुरुषभिन्नं तदायतनसंज्ञितम्' इत्युक्ते-रिति भावः। नानादेहमध्येष्विति—नानादेशस्थदेहान्तराळदेशे-ष्वित्यर्थः। ननु नानादेहमध्येषु सत्त्वमसिद्धं। नचानुपलम्भस्साधकः योग्यानुपलम्भाभावात्; न च मध्यदेशेऽपि तत्सत्त्वे कार्यप्रसङ्गः भोगा-यतनावच्छेदेनैव तदनुकूलशक्तिनैयत्यादिति परिहारे सत्येव प्रतिबन्द्या समाधत्ते—चक्षुर्गोळकेति। चक्षुश्श्रोत्रगोळकमध्ये तदवयवानामभावात्

## सर्वार्थसिद्धिः

भेदानां कथम्? न कथञ्चिदिति चेत्; तर्हि अनेकेन्द्रियवादः। पुञ्जैकत्वमस्त्विति चेत्; किमतः? ग्राहकांशानां मिथो भिन्नत्वात्।

नच तत्ता तदन्यस्य नच तस्य ततोऽन्यता।
सत्ताद्यैर्जैनवद्वाच्या सर्वमानविरोधतः॥

स्पर्शनस्य पुञ्जस्य भागाश्चक्षुरादय इत्यप्यसत्; नियामकाभावात्। अत्र अवयविसामान्यसादृश्यापोहादिभिरैक्यकल्पने अपसिद्धान्तातिप्रसङ्गौ। देहातिरिक्तेन्द्रियकल्पनं चास्मिन् पक्षे अपार्थम्। न ह्यत्र दृष्टहानिरदृष्टकल्पना वा! कुतस्तद्गौरवम्?

## आनन्ददायिनी

तत्प्रदेशावयवानां कथमैक्यमित्यर्थः। तर्हीति—तत्प्रदेशानां भिन्नानामिन्द्रियत्वादिति भावः। किमत इति—ग्राहकांशैक्यानुपपादनादिति भावः। ननु प्रदेशानां मिथो भिन्नत्वेऽपि पुञ्जैक्यादैक्यमस्तु इति चेत् तत्राह—नचेति। तदन्यस्य—तद्भिन्नस्य तत्ता—तत्तादात्म्यं, तदात्मनो वा तद्भिन्नत्वं न संभवतीत्यर्थः। ननु भिन्नस्याप्याभिन्नताऽस्तु 'स्यादस्ति' इति न्यायेनेत्यत्राह—सत्त्वाद्यैरिति। तथा सति सर्वमानविरोधात् जैनमतवद्दूषणवचनार्हमित्यर्थः। पुञ्जैक्यमपि नास्तीत्याह—स्पर्शनेति। ननु तव स्पर्शनेन्द्रिय (वि) भा(गभेदेऽपि)गादेरपि स्पर्शनेन्द्रियावयविवत् ज्वालानां भेदेऽपि सामान्यसादृश्यापोहादिनैक्यवदैक्यमस्त्विति चेत्; अत्राह—अवयवीति। अवयाविसामान्यपक्षेऽपसिद्धान्तो बौद्धस्य; तदभावात्सामान्यादिषु त्रिष्वतिप्रसङ्गः। एतादृशैक्यकल्पनं च (कल्पनस्य च न किंचित्प्रयोजनं भेदाविरोधित्वात्) नेन्द्रियभेदविरोधीत्यपि

## तत्वमुक्ताकलापः

**तया सर्वजन्तोस्तदेकं भेदाम्नानादक्लृप्तेरपि नच भजते देह एवेन्द्रियत्वम् ॥ ३८ ॥**

## सर्वार्थसिद्धिः

अतिरिक्तेन्द्रियकल्पनेऽपि देहावयवानां नियतोपकारकत्वमिष्यते। अस्तु तर्हि अयमेव पक्ष इत्यत्राह—भेदाम्नानादिति । अयं भावः—[1]* भौतिकाद्देहादिन्द्रियाणां सात्विकाहङ्कारोपादानकत्वेन भेदाम्नानात् क्लृप्तिप्रसङ्गाभावात् बाधाच्च मुधाऽत्र लघुपक्षोक्तिरिति ॥ ३८ ॥

एकेन्द्रियवादभङ्गः

---

## आनन्ददायिनी

ध्येयम् । कल्पनपक्षेऽपि देहस्यैवावश्यकतया इन्द्रियत्वमस्त्वित्यत्राह—अतिरिक्तेति । नन्विन्द्रियाणि देहभिन्नानीति न क्वचिदप्याम्नातमित्यत्राह—अयं भाव इति । साक्षाद्भेदाम्नानाभावेऽपि उभयोर्भिन्नोपादानकत्वदेहाश्रितत्वादिबोधनात् तत्सिद्धमिति भावः । क्लृप्तिपक्षे लाघवन्यायेन देहस्येन्द्रियत्वप्रसङ्गो नात्र क्लृप्तिरित्यत्राह—क्लृप्तिप्रसङ्गाभावादिति ॥

एकेन्द्रियवादभङ्गः

---

## भावप्रकाशः

[1]* भौतिकादित्यादि—'पञ्चतन्मात्रा भूतशब्देनोच्यन्ते । अथ पञ्च महाभूतानि भूतशब्देनोच्यन्ते । अथ तेषां यत्समुदयं तच्छरीरमित्युक्तम्, इति मैत्रायणीयश्रुतिर्देहं भौतिकमावेदयति । विष्णुपुराणे—

त्रिविधोऽयमहङ्कारा महत्तत्त्वादजायत ।

## सर्वार्थसिद्धिः

**यदेतेष्विन्द्रियेषु मनसः कैश्चिन्नित्यत्वमुक्तं तत् *इन्द्रियोत्पत्ति**

## आनन्ददायिनी

प्रसङ्गसंगतिं दर्शयति—यदेतेष्विति । इन्द्रियोत्पत्तीति—मनसोऽ-

## भावप्रकाशः

भूतेन्द्रियाणां हेतुस्स त्रिगुणत्वान्महामुने ॥ १।२।३८ ॥

इत्युपक्रम्य—

भूततन्मात्रसर्गोऽयमहङ्कारात्तु तामसात् ।
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥ १।२।४८ ॥

इत्यन्तग्रन्थे भूतानां तामसाहङ्कारकार्यत्वस्य एकादशानामिन्द्रियाणां सात्विकाहङ्कारकार्यत्वस्याभिधानाद्देहादिन्द्रियाणां भेदस्सिद्ध इति भावः । अत्र 'देवा वैकारिका दश । एकादशं मनश्चात्र' इति पृथङ्मनसो वैकारिकत्वमभिधाय 'देवा वैकारिकास्स्मृताः' इति दशानामिन्द्रियाणां वैकारिकत्वोक्तिः 'दशेमे पुरुषे प्राणा आत्मैकादशः' २५–९–४ इति बृहदारण्यकश्रुत्यनुसारेण तदर्थनिर्धारणाय । तेन तत्र आत्मशब्दो मनःपरः । यथोक्तं—'हस्तादयस्तु' इत्यादिसूत्रे शंकरभाष्येऽपि "उत्तरसंख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः; तथाचोदाहृता श्रुतिः—'दशेमे पुरुषे प्राणाः आत्मैकादशः' इति। आत्मशब्देन चात्रान्तःकरणं परिगृह्यते करणाधिकारात्" इत्यारभ्य "सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकम्" इत्यन्तम् । अत्रानन्दगिरिटीका—'बाह्येन्द्रियाणामित्थमनुमानेऽपि कथं मनसोऽनुमानं तत्राह—सर्वेति। इन्द्रियाणां वर्तमानतत्तदेकार्थनियतत्वादतीतादिसर्वार्थज्ञानाच्च तदर्थमिन्द्रियान्तरं कल्प्यमित्यर्थः' इति । एतेन अद्वैतपरिभाषाभूमिकायां गोविन्दसिंहोक्तिश्शंकरभाष्याद्यपरामर्शमूलेति सिद्धम् । * इन्द्रियोत्पत्तीति—'अत्र राजा सर्वे पुरुषाश्च वर्तन्ते'

## सर्वार्थसिद्धिः

श्रुत्यैव निरस्तम् । प्रकृत्येकदेशपरिणतिर्मन इति सिद्धे विभुत्वानुमानानि च बाधितानि । यत्तु—मनो विभु सर्वदा स्पर्शरहितद्रव्यत्वात् ज्ञानासमवायिसंयोगाधारत्वात् नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वात् आत्मादिवत् इत्यादि ;

## आनन्ददायिनी

पीन्द्रियत्वादिति भावः । इदमुपलक्षणं—'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति विशेषवचनात् । प्रकृत्येकदेशेति—अहङ्कारस्य प्रकृत्येकदेशतया तत्परिणामस्या(णामनसो)प्येकदेशत्वनियमादिति भावः । विशिष्य दूषणानि वक्तुम(क्तुंतदुक्ता)नुमानान्यनुभाषते—यत्त्वित्यादिना । स्पर्शरहितद्रव्यत्वादित्युक्तौ आद्यक्षणवर्तिघटादौ व्यभिचारः ; तद्वारणाय सर्वदेति । यत्किञ्चिद्राहित्यवति परमाणौ व्यभिचारवारणाय स्पर्शेति । गुणे व्यभिचारवारणाय द्रव्यत्वादिति । ज्ञानासमवायीति—परमाण्वादौ व्यभिचारवारणाय ज्ञानेति । असिद्धिशङ्कावारणाय संयोगेति । विषयव्यभिचारवारणाय असमवायीति । नित्यत्वं च परमाणौ-द्रव्यानारम्भकद्रव्यत्वं च घटादौ ; नित्यत्वे सति द्रव्यानारम्भकत्वं च जात्यादौ व्यभिचारीति विशेषणानि । आदिशब्देन सर्वदा विशेषगुणशून्यद्रव्यत्वादिकं(विवक्षितम्) द्रष्टव्यम् । सर्वेषामनुमानानामात्मनि व्यभि;

## भावप्रकाशः

इत्यादितो राज्ञोऽपुरुषत्वं यथा न सिध्यति तथा 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यादिश्रुतिभ्योऽपि मनसोऽनिन्द्रियत्वं न सिध्यतीति भावेन मनउत्पत्तीत्यनभिधाय इन्द्रियोत्पत्तीत्युक्तम् ।

## सर्वार्थसिद्धिः

तदेतत्सर्वमात्माणुत्ववादिनं प्रति न शोभते । ज्ञानासमवायिसंयोगाधारत्वं च आत्ममनसोरसिद्धं ; ज्ञाननित्यत्वस्य साधयिष्यमाणत्वात् । नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वादित्येतच्चोत्पत्तिश्रुत्या अपहृतविशेषणम् । द्रव्यानारम्भकत्वं च भवतामवयव्यनारम्भकत्वम् । तच्चास्माकमणुष्वपि विद्यते । यदपि—सर्वदा विशेषगुणशून्यद्रव्यत्वात् कालवदिति ; असिद्धमिदमौपनिषदानाम् ; त्रिगुणद्रव्ये मनसि सत्वादिविशेषगुणसंमतेः । दूरस्थस्मृत्या मनोविभुत्वं कल्प्यमिति चेन्न ; अनुभवसंस्कारप्रत्यासत्त्यैव तदुपपत्तेः । एवमन्यदपि । तदिहैकादशानां 'अणवश्च' इति

## आनन्ददायिनी

चार इत्याह–तदेतत्सर्वमिति । द्वितीयस्य स्वरूपासिद्धिरपीत्याह–ज्ञानेति । तत्र हेतुमाह–ज्ञाननित्यत्वस्येति । तृतीयस्यापि विशेषणासिद्ध्या स्वरूपासिद्धिमाह—नित्यत्वे सतीति । तच्चास्माकमिति—तथा च तत्र व्यभिचार इति भावः । आदिशब्दोपात्तमनुमानमनुवदति—यदपीति । सर्वदेति—आद्यक्षणे व्यभिचारवारणाय सर्वदेति । असिद्धत्ववारणाय–विशेषेति । गुणादौ व्यभिचारवारणाय द्रव्यत्वादितीति विशेषणप्रयोजनं द्रष्टव्यम् । दूरस्थेति—अविभुत्वे संबन्धाभावत् स्मरणं न स्यादिति तर्कबाध इति भावः । यद्यपि शाब्दानुमित्यादिवत् संबन्धो नापेक्ष्यः ; तथाऽप्यभ्युपगम्याप्याह—(नेति) अनुभवेति । तदेवाह–अन्यदपीति । अणुत्वपक्षेऽपि आत्मनोऽप्यणुत्वात् तद्गतानुभवसंस्कारयोरपि देशान्तरस्थेन संबन्धाभावात्तत्संबन्धानुपपत्तेः पूर्वदोषतादवस्थ्यमित्यादिदूषणं परिहर्तव्यमित्यर्थः । परिहारस्तु विभुत्वपक्षेऽप्यतीतादिस्मरणवदिदमुपपन्नमिति ।

## तत्वमुक्ताकलापः

**सूक्ष्माण्येकादशाक्षाण्यपि न यदि कथं देहतो**

## सर्वार्थसिद्धिः

**सूत्राभिप्रेतं अविभुत्वमातिष्ठते—सूक्ष्माणीति। विपक्षे बाधं(धकं)वदन्नेवात्र प्रमाणमाह—न यदीति। परोक्तानुमानानां च विपक्षे दण्डश्च नास्ति; सर्वत्र कार्योपलब्धेरिन्द्रियान्तराणामिव संचाराद्प्युपपत्तेः। 'तमुत्क्रामन्तं' 'शरीरं यदवाप्नोति' इति श्रुतिस्मृतिसं-**

## आनन्ददायिनी

मनसो विभुत्वे सूत्रविरोधमप्याह—तदिहेति । प्रमाणमाहेति । अविभूनीन्द्रियाणि क्रियावत्त्वात् संमतवदित्यनुमानं प्रमाणमित्यर्थः । नचासिद्धिः निष्क्रमणादिमत्त्वश्रवणादिति भावः । सर्वत्र कार्योपलब्ध्यनुपपत्तिश्च न विपक्षदण्ड इत्याह—सर्वत्र कार्योपलब्धेरिति । देवतिर्यङ्मनुष्यस्थावरे(वरशरीरे)षु एकस्यात्मनो मनसो विभुत्वाभावेऽप्युप्यु(पि चक्षुरादिवदु)पपत्ते(त्ति)रित्यर्थः । ननु सौभर्यादिशरीरेषु युगपत्कार्यं दृश्यते; द्वित्रिच्छि(भि)न्नगोधाशरीरेषु चलनं दृश्यते; तत् मनोणुत्वेनुपपन्नमिति चेत्; मैवम्; मनसो विभुत्वाभावेऽपि चक्षुरादिवदु(रादेरिव सौभरिशरीरेषू)पपत्तिः । द्वित्रिच्छि(भि)न्नगोधाशरीरेषु च मनोवैभवेऽपि क्षणान्तरे चलनाभावात् चलने प्राणसम्बन्धोऽप्यपेक्ष्यः । तथाच अणुत्वपक्षेऽपि स एवास्तु! सर्वाङ्गीणसुखे च तत्तन्निमित्तविशेषः(षसंयोगः) प्रयोजक इति (व्यक्तमिति) भावः । इन्द्रियसञ्चारे प्रमाणमाह—तमुत्क्रामन्तमिति । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति । प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिः—

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।

## सर्वार्थसिद्धिः

वादाच्च ।आदिशब्देन देहान्तरावाप्तिगत्यागतिसंग्रहः । न चैतेषां जीववदणुत्वं विशेषतो दृश्यते! तथा सति श्रोत्रादीनामनेकाधिष्ठानवर्तित्वं स्पर्शनरसनयोश्च पृथुप्रदेशव्याप्तित्वं न स्यात् । सिद्धेऽपि ह्यणुत्वे विकासशक्त्या वृत्तिविशेषद्वाराऽऽप्यायकप्रचयाद्वा पृथुत्वमङ्गीकार्यम् । अन्यथा पिपीलिकादिशरीरस्थस्य स्पर्शनस्य गजादिशरीरप्रवेशे तादृशपृथुत्वासिद्धिप्रसङ्गात् । गजादिभ्यः कीटादिशरीरप्रवेशे तु तादृशस्संकोचः । मनसस्तु परमाणुत्वेऽपि सद्वारकविषयसंबन्धसिद्धेरविरोधः । तत्र 'युगपत् ज्ञानानुत्पत्ति-

## आनन्ददायिनी

गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥

इति स्मृतिः । सर्वोपकरणाधिष्ठातृत्वाज्जीवोऽत्रेश्वरः । ननु 'अणवश्च' इति, सूत्रस्वारस्यात् मध्यमपरिमाण(त्वे)साधकाभावादणुत्वमित्यत्राह—तथा सतीति । ननु अधिष्ठानस्यानेकत्वे चक्षुश्श्रोत्रयोरप्यनेकत्वमस्त्वित्यत्राह—स्पर्शनरसनयोश्चेति । जीववदणुत्वा (मध्यमपरिमाणान)ङ्गीकारे गौरवदोषं चाह—सिद्धेऽपीति । अणुत्वपक्षे दूरस्थवस्तु(दूरस्थद्रव्यशब्द) ग्रहार्थं व्यापिस्पर्शरसग्रहार्थं च संकोचविकासादिरूप(सार्ह) वृत्तिसाधकानामिन्द्रियाणां प्रचयः संघातो ।। वाच्यः ; तथा च अणुरूपेन्द्रियाणि तेषामणूनां विकासासंभवाद्विकासवृत्तिमद्द्रव्यं च किञ्चित् संघीभावार्थं (संघीभूतं) चक्षुरादीनामेकस्मिन्नेव शरीरे बाहुल्यं च कल्प्यमिति गौरवम् । (इन्द्रियाणां) मध्यमपरिमाणत्वे (तु) तेषामेव तादृशवृत्तिविशेषोऽङ्गीकर्तुं शक्य इति(विशेषार्हत्वात् )लाघवमिति भावः । अन्यथा—परमाणुत्वाङ्गीकारे । मनसस्त्विति- अपिशब्देन इन्द्रियत्वसाधर्म्येण मध्यमपरि-

## तत्वमुक्ताकलापः

**निष्क्रमादिः? चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमोऽप्यस्तु मानम् ।**

## सर्वार्थसिद्धिः

**मनसो लिङ्गम्' इति परोक्तं मनोविभुत्ववादप्रतिषेधोपयोगादनुमन्यते । चित्ताणुत्वे त्विति । अयं भावः—व्यासङ्गदशायां समग्रैरपि बाह्येन्द्रियैः युगपत् ज्ञानानि नोत्पद्यन्ते । दीर्घशष्कुलीभक्षणादिषु च व्यासङ्गदृष्टान्तेन धीक्रमोऽनुमेयः । क्रमभाविकारणान्तरसापेक्षो ह्यसौ! नचादृष्टभेदोऽपेक्ष्यः! तस्य दृष्टोपहारेण**

## आनन्ददायिनी

माण(त्वमेव)त्वं अणुत्वे च बाधकाभावमात्रं न साधकमिति(त्यस्वरसः)-सूच्यते । परोक्तमिति । इन्द्रियाणामनुमेयत्वं नास्तीत्युक्तमेव; तथाऽप्यनुकूलत्वान्मनोनुमानं न दूषितमिति भावः । ननु (धी) क्रमासिद्धेः कथं तन्मानम्? इत्यत्राह—अयं भाव इति । दीर्घेति—दीर्घशष्कुलीरसगन्धरूपादिधियः क्रमवत्यः (एकदा)स्वस्वविषयसन्निहिततत्तादिन्द्रिय(यान्तर)कालोत्पत्तिकज्ञानत्वात् तादृशेन्द्रियकालिकव्यासङ्गदशोत्पन्नक्रमिकधीवदिति केचिदाहुः । अन्येतु (केचित्तु)उक्तधियो न युगपदुत्पत्तिमत्यः धीत्वात् इन्द्रियजन्य(धी)त्वाद्वा संमतवत् इति वदन्ति । परेतु रूपधीर्न रसकालसमुत्पन्ना रूपधीत्वात् संमतवदिति प्रत्येकमेवानुमानमित्याहुः । ननु च अदृष्टक्रमादेव धीक्रमोपपत्तौ न क्रमभाविकारणापेक्षेत्यत्राह—न चादृष्टेति । दृष्टसंपत्तावदृष्टविलम्बेन कार्यविलम्बाभावात्; अन्यथा सहकारिमात्रस्य दृष्टकारणमात्रस्य वा विलोपप्रसङ्गादिति

## सर्वार्थसिद्धिः

चरितार्थत्वात्। अन्यथाऽतिप्रसङ्गात्। प्रतिबन्धकाभावे ह्यदृष्टोपनीत[illegible]मग्र्यैव कार्यसिद्धिर्नियता! तदिह कारणान्तरं यदि विभु स्यात् युगपदनेकेन्द्रियसंबन्धितया युगपत् पञ्चविषयज्ञानोत्पत्तिप्रसङ्गः। एवं देहपरिमाणत्वेऽपि। न च मनसस्ततोऽपि सूक्ष्ममध्यमपरिमाणत्वे प्रमाणमस्ति! विभुनोऽपि मनसः केनचित् शरीरावयवेन अवच्छिन्नतयैव कार्यकरत्वमिति चेन्न; तस्य निष्कम्पत्वे अन्यत्र कार्याभावप्रसङ्गात्। संचारित्वे तु तादृशवेगवतस्तस्य देहातिरिक्तत्वमणुत्वं च साधीयः; किमन्तर्गडुना व्यापकेन मनसा? यस्तु सर्वेषां देहावयवानां यथासंभवमवच्छेदकत्वं ब्रूयात् तस्य प्रागुक्तप्रस-

## आनन्ददायिनी

भावः। नन्वस्तु; मनसस्तावताऽणुत्वं कथम्? इत्यत्राह—<u>तदिहेति</u>। नन्वस्तु मनसो मध्यमपरिमाणत्वम्? इत्याशङ्क्य किं देहपरिमाणत्वेन मध्यमपरिमाणत्वं उत ततोऽपि न्यूनपरिमाणत्वेन? इति विकल्पमभिप्रेत्य क्रमेण दूषयति—<u>एवं देहपरिमाणत्वेऽपीत्यादिना</u>। विभुत्वेऽपि धीक्रमं शङ्कते—<u>विभुनोऽपि मनस</u> इति। <u>तस्य</u>—शरीरावयवस्य। <u>साधीय</u> इति—यदि इन्द्रियैस्संबन्धार्थं मनोऽवच्छेदकोऽवयवोऽवयवान्तरदेशं गच्छति तदा पूर्वावयवसंयोगनाशाच्छरीरनाशस्स्यात्। इन्द्रियाणामेव यदि तद्देशप्राप्तिः, विषयसंबन्धो न स्यात्। यदि तावदिन्द्रियदेशव्याप्यवयवः; तदा शरीरमेव स्यात्। यदि समवायिकारणभिन्नमवयवान्तरं; तर्हि तस्यैव मनस्त्वोपपत्तौ ततोऽतिरिक्तविभुकल्पनं व्यर्थमित्यर्थः। <u>प्रागुक्तेति</u>—युगपत्ज्ञानोत्पत्तिप्रसङ्गः। 'युगपत्ज्ञानानुत्पत्तिर्लिङ्गम्'

## तत्वमुक्ताकलापः

**वृत्त्याऽक्षयादेर्दवीयःप्रमितिजनकता वृत्तिराप्यायनार्थैर्भूतैर्जातः प्रसर्पः ;**

## सर्वार्थसिद्धिः

ज्ञानतिवृत्तिः अतिगौरवं च । यद्येवमिन्द्रियाणि देहान्तस्स्थानि त(था)दा कथं चक्षुश्श्रोत्रयोः दूरस्थग्राहकत्वम्? इत्यत्राह— वृत्त्येति । वृत्तिद्वारा संबन्धादित्यर्थः । ननु वृत्तिर्यदि स्वरूपं देहपरिच्छिन्नत्वात् न दूरस्थे वृत्तिः ; धर्मोऽपि न धर्मिणमतिवर्तेत इत्यत्राह—वृत्तिरिति । भूतैस्सहेति वा चारैः पश्यन्तीतिवद्वा योज्यम् । यद्यप्यप्राप्यकारित्वं हैतुकगत्या हठात्कारेण वक्तुं शक्यम् ; तथाऽपि 'दिवीव चक्षुराततम्' इत्याद्यागमिकव्यवहारस्वारस्यबाधाभावात् वृत्तिद्वारा प्राप्त्युक्तिः ।

## आनन्ददायिनी

इति व्यतिरेकमुखेनोक्तत्वादित्यर्थः । गौरवं चेति—शरीरावयवाविशेषाणामावश्यकत्वात् तैरेव मनःकार्यसिद्धौ तत्कल्पनं गौरवमित्यर्थः । भूतैस्सहेति—इन्द्रियस्य भूतैस्साहितस्य यो विसर्पो—विकारः स वृत्तिरित्यर्थः । अन्ये तु—आप्यायकभूतानां यो विसर्पः स वृत्तिरित्याहुः । अस्मिन् पक्षे चारैः पश्यन्तीति सुसंगतम् । ननु इन्द्रियाणां परमाणुत्वेऽपि भवदुक्ताप्यायनभूतद्वारा प्रागुक्तं सर्वमुपपन्नमिति किमर्थं मध्यमपरीमाणत्वमभ्युपगम्यत इति चेत्; सत्यम्; इन्द्रियाणां कार्यत्वात् कार्यस्य मध्यमपरिमाणत्वनियमादिति भावः । तथापीति—परिणाम-

## तत्वमुक्ताकलापः

**श्रुतिमितमपि चानन्त्यमेषां स्वकार्यैः ॥ ३१ ॥**

## सर्वार्थसिद्धिः

नयनरश्मिगतितत्प्रतिघातादिकं च भाष्योक्तम् । ननु 'प्राणशब्द-निर्दिष्टानीन्द्रियाणि' प्रक्रम्य 'सर्वे एवानन्ताः' इति श्रुत्या सर्वेषामिन्द्रियाणां विभुत्वं ग्राह्यमित्यत्राह—श्रुतिमितमिति । यथोक्तं भाष्ये—हृदयस्थानां चेन्द्रियाणां तत्तन्नाडीभेदैः तत्तत्प्रदेशविशेषप्रसर्पात् तत्र तत्र कार्यकरत्वं चावधातव्यम् । अत्र 'सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतेस्संकोचकाभावात्

## आनन्ददायिनी

द्वारा प्राप्तिः । वृत्तिर्हि विकारविशेषः; स च इन्द्रियव्याप्तिरेवेति भावः । ननु आगामिकव्यवहारस्वारस्यबाधाभावादित्यनेन रश्मिद्वारैव हैतुकवत् प्राप्तिस्सूच्यते । अत एव न्यायसिद्धाञ्जने 'दूरस्थग्रहणे तु चाक्षुषमहः-प्रसरात् संबन्धसिद्धिः । तच्च करणपादद्वितीयाधिकरणे प्रपञ्चितम् । प्रतिबिम्बग्रहणे तु स्वच्छद्रव्यप्रतिहतस्य नयनमहसः प्रतिप्रसरादि (मूलत्वं)भ्रान्त्यधिकरणे पूर्वपक्षेऽभिहितम्' इत्यादिना नयनरश्मि-(गमना)प्रसरादिकमुक्तम्; तत्कथं भाष्यानुमतम्? इत्यत्राह—नयन-रश्मीति । 'त एते सर्व एव समाः सर्वेऽनन्ताः' इति श्रुतेः 'अथ यो ह वैताननन्तानुपास्ते' इत्युपासनोपक्रमात् उपास्यप्राणविशेषणभूतकार्य-बाहुल्यपरत्वमित्याह—यथोक्तं भाष्य इति । 'अणवश्च' इति सूत्रभाष्य इत्यर्थः । अत्र 'सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतेस्संकोचकाभावा-दिति—ननु कर्मेन्द्रियाणां शरीरेण सहोत्पत्तिविनाशौ; न पुनस्तेषां

## आनन्ददायिनी

जीवेन स(तेनैव स)ह गमनम् ; तथाच कथं न संकोचः? अन्यथा सारे 'हस्तादयोऽपीन्द्रियाणि जीवे देहान्तरव(न्तराव)(न्तर) स्थिते उपकारकत्वाविशेषात्' इति वचनं विरुध्येत; देहान्तरवस्थितस्य जीवस्योपकारकाणि न तु सहागतानीति प्रतीतेः। तथा भाष्येऽपि 'न सप्तैवेन्द्रियाणि ; अपि त्वेकादश ; हस्तादीनामपि शरीरेऽवस्थिते जीवे तस्य भोगोपकरणत्वादिति' अत्रापि सहागमानाप्रतीतेर्विरोधः। तथा दीपे व्यक्तमेवोक्तम्—'श्रोत्रादीनि जीवेन शरीरान्तरगमनेऽपि गच्छन्ति ; वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीन्युपकारकाणि' इति ; तथा च दीपाविरोधश्चेति चेत् ; अत्राहुः—नैव विरोधः 'प्राणगतेश्च' इति सूत्रे 'सर्वे प्राणा अनूत्क्रामन्ति' इत्युदाहृतत्वात्। 'सप्तगतेः' इत्याधिकरणे च 'यानि त्वितराणि विषयाणां ग्राहकत्वेन तेषामौपचारिकः प्राणत्वव्यपदेशः' इति पूर्वपक्षं कृत्वा 'हस्तादयस्तु स्थितेऽतो नैवम्' इति तेषामपि प्राणत्वसमर्थनात् प्राणत्वमिन्द्रियत्वं 'प्राणगतेश्च' इत्यस्यैव समनन्तरे 'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्' इति सूत्रे भाष्यम्—'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वाचं प्राणः चक्षुरादित्यं इत्यादिना प्राणानां जीवमरणकाले अग्न्यादिष्वप्ययश्रवणात् न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेन्न ; भाक्तत्वादग्न्यादिष्वप्ययश्रवणस्य' इत्यादिकम्। अतः कर्मेन्द्रियस्य वाचोऽत्र गतिरभ्युपेतेति तदन्येषामपि सममेव। तथा सारेऽप्युक्तम्—'सप्तानां गतिश्रवणं विशेषणं च तेषां प्राधान्यात्' इति। दीपेऽपि 'सप्तानामेव गतिश्रवणं योगकाले विशेषणं च ज्ञानेन्द्रियाणां मनसः तत्प्रवृत्तिरूपबुद्धेश्च प्राधान्यात् इत्यादि। न च आहङ्कारिकेन्द्रियवादिनः प्रतिशरीरमिन्द्रियोत्पत्तिलयावुपपद्येते ; पाण्याद्यधिष्ठानानि त्वनिन्द्रियाणीति तदुत्पत्तिलयोपपत्तिः। कथं तर्हि श्रोत्रादीनीत्यादेर्निर्वाहः?

## सर्वार्थसिद्धिः

**'मनष्षष्ठानि' इत्यादेश्च न्यूनसङ्ख्याव्यवच्छेदमात्रेणाप्युपपत्तेः कर्मेन्द्रियाणां प्रतिशरीरमुत्पत्तिविनाशं व्यष्टिसमष्टिभावराहित्यं च वदन्तः प्रत्युक्ताः ॥ ३९ ॥**

**॥ इन्द्रियाणां सूक्ष्मत्वम् ॥**

———

## आनन्ददायिनी

इत्थम् — परमतवत् प्रतिशरीरमुत्पत्तिविनाशाभ्युपगमेऽपि तेषामिन्द्रियत्वं सिध्यतीति 'हस्तादयस्तु स्थितेऽतो नैवम्' इति सूत्रस्य योजनान्तराभिप्रायेणैवमुक्तम् । अत एकादशेन्द्रियाण्यपि शरीरान्तरेष्वप्यनुवर्तन्त इति भाष्यकाराभिप्रायं प्रतीम इति । अन्ये तु—उत्क्रमणशब्दस्य क्रियया पूर्वदेशविभागपूर्वकदेशान्तरसंयोगपरस्य विभुत्वपक्षे देशान्तरसंयोगमात्रे संकोचो वाच्यः; तत्र मानं नास्तीत्यर्थः । नचानन्त्यश्रुतिरेव मानम्; आनन्त्यश्रुतेः कालपरिच्छेदाभावस्य उत्पत्तिश्रुतिबाधेन देशपरिच्छेदाभावपरतया संकोचस्यावश्यकत्वात् अनन्तशब्दस्य बहुव्रीहिसमासत्वेन लक्षणयान्यपरत्वस्य स्वतः प्राप्तत्वात् । वाक्यत्वाच्च उत्क्रान्तिश्रुतेर्जघन्यत्वात् न तत्र तद्विरुद्धार्थप्रतिपादनसामर्थ्यमिति न संकोच इत्याहुः । <u>मनष्षष्ठानीति</u>— इन्द्रियाणामेव गतागतश्रवणात् कर्मेन्द्रियाणामिन्द्रियत्वाभावशङ्केत्याहुः । अन्ये तु उत्क्रान्तिप्रकरणे 'मनष्षष्ठानि' इति ज्ञानेन्द्रियाणामेवोक्तेः कर्मेन्द्रियेषु प्रतिशरीरमुत्पत्त्यादिशङ्कां परिहरति— मनष्षष्ठानीति । <u>व्यष्टिसमष्टीति</u>—तत्वोत्पत्तिकाल एव सर्वेषां संघीभूयावस्थितिर्व्यष्टिः । तत्तच्छरीरेषु पृथगवस्थानं समष्टिः । इदमुपलक्षणम्— सौगतकल्पितं स्त्रीन्द्रियपुरुषेन्द्रियादिवि(भ)भाजनं मानाभावान्निरस्तम् । अन्यैर्मनस्तैजसत्वं राजसाहङ्कारजन्यत्वं कर्मेन्द्रियत्वमित्यादि क(ज)ल्पित-

## सर्वार्थसिद्धिः

यदुक्तम्—'वृत्त्याऽक्ष्यादेर्दवीयःप्रमितिजनकता' इति, तत्र बाह्यैरेवमुच्यते—'वृत्तिप्रसरणे क्रमयौगपद्यविकल्पायोगात् दूर-

## आनन्ददायिनी

तमपि मानाभावान्निरस्तम् । तानीन्द्रियाणि प्रतिनियतानि, आमोक्षं आसृष्टेः परकायप्रवेशेऽपि तैस्सह प्रविशति ; मृतशरीरप्रवेशे तथा दर्शनात् 'गृहीत्वैतानि संयाति' इति स्मृतेरन्यदीयकरणस्यान्योपभोगकरणत्वायोगाच्च जीवच्छरीरेऽपि तैस्सह प्रवेश इति । अन्ये तु—प्रकृष्टादृष्टवशादन्यदीयभोगायतनस्यान्यदीयभोगायतनत्ववदन्योपकरणत्वं संभवतीति जीवच्छरीरे तैर्विनाऽपि प्रवेश इति वदन्ति । इन्द्रियेषु प्राकृताप्राकृतविभागान् केचिदाचार्या आहुः । अपरे तु—नित्यमुक्तादिज्ञानस्य करणाधीनत्वाभावात् प्रयोजनशून्याऽप्राकृतेन्द्रियक्लृप्तिः । 'कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादिव्यपदेशस्तु संस्थानमात्राभिप्राय इत्याहुः ॥ ३९ ॥

इन्द्रियाणां सूक्ष्मत्वम्

———

आक्षेपसंगत्याऽऽह—यदुक्तमित्यादिना । यदिन्द्रियं तदप्राप्यप्रकाशकं यथा मनः रूपादिग्राहकं चक्षुरादिकमपीन्द्रियमित्यनुमानाभिप्रायेणानुग्राहकं तर्कमाह—वृत्तिप्रसरणे इति । ननु दूरसन्निकृष्टार्थैरिन्द्रियं क्रमेण संबध्यते युगपद्वा ? नाद्यः ? परमाणुदेशक्रमेण संबन्धे विलम्बेन ग्रहणप्रसङ्गात् दूरसन्निकृष्टार्थयोर्युगपद्ग्रहणं न स्यात् । न द्वितीयः ; अयोगात् इति, क्रमयौगपद्यविकल्पेन संबन्धस्यायोगात् वृत्तिनिर्गमनकल्पनमयुक्तमित्याह—वृत्तिप्रसरण इति । प्रत्यनुमानं प्रतिपक्षः ; चक्षुरिन्द्रियं प्राप्यकारि बाह्येन्द्रियत्वात् त्वगिन्द्रियवदित्यर्थः । परानुमाने

## तत्वमुक्ताकलापः

**प्राप्यग्राहीन्द्रियत्वाद्विमतमितरवत् ;**

## सर्वार्थसिद्धिः

स्थविषया प्राप्तिर्न भवतीत्यतो यद्रूपग्राहकं यच्छब्दग्राहकमिन्द्रियं तदप्राप्यग्राहि यथा मन इति' तत्र तावत् प्रत्यनुमानमाह—प्राप्येति । ननु गृह्यमाणस्य वर्तमानक्षणस्य पूर्वक्षणवर्तीन्द्रियसंबन्धायोगात् इन्द्रियान्तराणामप्यसंबन्धग्राहकतया साध्यविकलो दृष्टान्तः? मैवम्; क्षणभङ्गकुसृतेः प्रागेव निरासात् ।

अतिप्रसङ्गोऽसंबन्धग्रहणे स्यात्समं त्विदम् ।
संबन्धग्रहणेऽपीति न सत् योग्यान्वितग्रहात् ॥
गृहीतस्येष्यते कश्चित्संबन्धो व्यभिचारतः ।
न संबन्धस्य सर्वस्य ग्रहणं व्यभिचारतः ॥

## आनन्ददायिनी

तर्कबाधश्चेत्याह — अतिप्रसङ्ग इति । ननु स्वकीयानुमानेऽपि संबद्धानां परमाण्वादीनां ग्रहणं स्यादित्यतिप्रसङ्गबाधस्सम इति शङ्कते—समं त्विदमिति । परमाण्वादीनामिन्द्रियसंबन्धे सत्यपि अयोग्यत्वान्नातिप्रसङ्ग इति वदति—न सत् योग्यान्वितेति । नन्वस्मिन् पक्षे योग्यत्वविशेषणे गौरवमित्यत्राह—गृहीतस्येति । अन्वयव्यतिरेकाभ्यां तत्प्रवेशस्य प्रामाणिकत्वात् न गौरवं दोष इत्यर्थः । गृहीतस्य पदार्थस्य अव्यभिचारेण ग्राहकसंबन्धः कल्प्यते ; तेन सर्वसंबन्ध(संबद्धस्य सर्व)स्यापि ग्रहणं व्यभिचारात् ; तथा च योग्यविषयसंबन्धो ग्राहक इति कल्पने न गौरवं दोषायेति भावः । ननु कर्मेन्द्रियाणां ज्ञानरूपग्रहण-

## सर्वार्थसिद्धिः

नात्र कर्मेन्द्रियैरनैकान्त्यम्; यथास्वं व्यापारेण स्पृष्टेर्ग्राहिशब्देन विवक्षितत्वात् । तस्य च सर्वत्र प्राप्तविषयत्वात् । न च मनसा; तस्यापि बाह्येन्द्रियद्वारा बहिर्विषयप्राप्तेः । यद्वा—बाह्यज्ञानेन्द्रियत्वादिति मनःकर्मेन्द्रियव्यवच्छेदः । ननून्मिषितमात्रं चक्षुश्चन्द्रं गमयति; न चैकस्मिन् क्षणे तावान् देशो वृत्त्या लङ्घयितुं क्षमः; क्रमे तु प्रतिपरमाण्ववच्छेदं विलम्ब्य गमनात् प्रतीतिरपि विलम्बेत; दूरासन्नग्रहणकालतारतम्यं च स्यात्? मैवम्; उदयत्येव सवितरि सकलदिग्व्यापिन्यां प्रभायामिव इन्द्रिय-

## आनन्ददायिनी

जनकत्वाभावाद्व्यभिचार इत्याशङ्क्य परिहरति—नात्र कर्मेन्द्रियैरिति । ग्राहीत्यत्र क्रियासाधारण्येन व्यापारस्पर्शस्य विवक्षितस्य तेष्वपि सत्त्वात् न तैर्व्यभिचार इति भावः । तस्येति—ग्रहणरूपादानक्रियादेः कर्मेन्द्रियादिप्राप्तविषयत्वादित्यर्थः । मनसि व्यभिचारं परिहरति—नच मनसीति । ननु स्वव्यापार(रातिरिक्त)द्वाराऽपि प्राप्तग्राहित्वेऽतिप्रसङ्गः व्यवहितस्यापि(स्याप्येवं)संबन्धात् इत्यस्वरसादाह—यद्वेति । परानुमानानुग्राहकं स्वानुमानप्रतिकूलं प्रागुक्ततर्कं क्रमयौगपद्यविकल्पानुपपत्तिरूपमाशङ्कते—ननून्मिषितमात्रमिति । इष्टापत्तिं परिहरति—दूरासन्नेति । तारतम्यं गृह्येत चेदित्यर्थः । तारतम्यमिति—प्रत्ययानुकरणादर्थलाक्षणिकात् ष्यञ् । वेगातिशयेन क्रमसंबन्धेन क्रमेण ग्रहणेऽपि शतपत्रशतं मया भिन्नमिति क्रियादिसंयोगात् न शतयौगपद्याभिमानवत् ज्ञाने यौग द्याभिमान इत्यर्थः । नचैवमनेक(नेन)ज्ञानोत्पत्तिः; इष्टापत्तेः । न च ज्ञानभेद(दा)ग्रहप्रसङ्गः; भ्रमरूपा(भ्रम इवा)संसर्गाग्रहवादिनः तदग्रहैक-

## सर्वार्थसिद्धिः

वृत्तेस्तादृशवेगातिशयस्याविस्मयनीयतया पद्मपत्रशतवेधनीत्या यौगपद्याभिमानोपपत्तेः । ननु सिद्धे गमने यौगपद्याभिमान- क्लृप्तिः; नात्र तत्सिध्यतीति चेन्न; स्वाभ्युपगतसाम्या.. । बुद्धिसंततेश्शरीरान्तरगमनं दीपालोकादिगमनं च दृष्टं कल्प्यं वा? नाद्यः; त्वयाऽप्यनभ्युपगमात् । द्वितीये तु तथेहापि किं न स्यात्? न देहान्तरादौ गतिः प्राप्तिर्वा; किं तु तत्र तत्र देशकालनैरन्तर्येणोत्पत्तिमात्रमिति चेत्; तथेहापि त्वया कल्प्यताम्; अविशेषात् । ननु प्राप्तिः कल्प्या; तद-

## आनन्ददायिनी

(तद्दुर्ग्रहैक) (तदेकग्रहैक)त्वव्यवहारयोरुपपत्तेरिति भावः । स्वाभ्युपगतेति—क्षणिकत्ववादि(भिः)ना निरन्तरोत्पद्यमानशरीरक्षणेषु बुद्धिक्षणानामपि तत्तच्छरीरकाल एवोत्पद्यमानानां तत्तदुत्पत्तिकाल एव संबन्धाङ्गीकारादित्यर्थः । ननु तत्र प्रमाणसत्त्वादङ्गीकार इत्यत्राह— बुद्धिसंततेरिति । त्वयाऽपीति । प्रत्यक्षरूपगमनाभ्युपगमादित्यर्थः । द्वितीये त्विति । इन्द्रियेष्वपि शीघ्रसंबन्धकल्पनासंभवादित्यर्थः । प्रतिबन्दि(बन्दीः) परिहरति—न देहान्तरादाविति । न बुद्धिसंततेर्दीपालोकादेश्च देशान्तरे उत्पन्नस्य तत्तद्देश(देह)तत्तद्विषयप्राप्तिः, अपि तु तद्देश एवैकस्मिन् काले उत्पात्तिरित्यर्थः । तथेति—चक्षुरादिवृत्तेरपि तावद्दूरव्यापिन्या नैरन्तर्येणोत्पात्तिरि(रस्त्वि)त्यर्थः । ननु बुद्धिसंतानादिप्रतिबन्दिर(रधिका)युक्ता; तयोस्स्वप्रकाशप्रत्यक्षासिद्धत्वात्, चक्षुरादीनामतीन्द्रियतया तद्वृत्तेः तद्व्यापार(तत्प्राप्ति) रूपसंयोगस्य च प्रथक्षत्वायोगादिति वैषम्यं शङ्कते—ननु प्रा(व्या)प्तिरिति । तथाच अनुपलम्भबाध इति

## तत्वमुक्ताकलापः

**प्राप्तिरुक्तप्राकारा; वृत्तिं दृष्टेर्निरुन्धे विरलपटनया-
दम्बुकाचादिरच्छः ।**

## सर्वार्थसिद्धिः

भावस्त्वनुपलम्भमात्रेण सिध्यतीति चेन्न; योग्यानुपलब्धेरभावात्। अतीन्द्रियस्य हि प्राप्तिरपि तथैव। अतो नात्र बाधशङ्का। ननु दूरस्थत्वाद्विषयेन्द्रिययोः प्राप्तिर्बाधितेत्यत्राह—प्राप्तिरिति। वृत्तिद्वारेति शेषः। उक्तप्रकारेति—पुनरनुवचनं वाद्यन्तरोक्तप्राप्तिप्रकारनिरासार्थम्। अथापि क्वचिद्व्यवहितग्रहणदर्शनात् प्रमाणतस्तर्कतश्च बाधस्स्यादित्यत्राह—वृत्तिमिति। अच्छः—आलोकाद्यनुप्रवेशानुगुणसन्निवेशवानित्यर्थः। दृश्यते ह्यनाविलसलिलमूलप्रविष्टस्सूर्यालोकः तत्रत्यं च तत्प्रतिफल-

## आनन्ददायिनी

भावः। योग्येति—नानुपलम्भमात्रं बाधकमिति भावः। योग्यानुपलब्धिमेवाह—अतीन्द्रियस्येति। अतीन्द्रियेन्द्रियप्राप्तेरतीन्द्रियत्वान्न योग्यानुपलब्धिरित्यर्थः। नन्विति—विप्रकृष्टयोः प्राप्त्यसंभवादिति भावः। वाद्यन्तरेति—सांख्याद्युक्तमित्यर्थः। तन्निरसनमनन्तरमेव दर्शयिष्यते। ननु प्राप्त्यभावेऽपि काचादिव्यवहितस्थले प्रकाशदर्शनात् प्राप्यप्रकाशतानुमानस्य व्यभिचारः; प्राप्यप्रकाशत्वे काचादिव्यवहितस्य प्रकाशो न स्यादिति तर्कबाधश्चेति शङ्कामनूद्य परिहरति—अथापीति। संनिवेशः—स्थानम्। ननु पटदृष्टान्तत्वे तद्वद्दृश्यमानरन्ध्रता स्यादित्यत्राह—

## सर्वार्थसिद्धिः

नदीषं शिलाविशेषादि । यथावत्प्रसरमत्यन्तनिरोधं च परिहर्तुं विरलपटनिदर्शनम् । अत एव हि तत्राविशदप्रतिभासः । सरन्ध्रत्वे स्फटिकादिषु सलिलगलनादिप्रसक्तिस्स्यादिति चेन्न; आलोकप्रवेशवत्सु सर्वेषु सलिलप्रवेशस्य त्वया दुर्वचत्वात् । अच्छिद्रपरुवकसम्पुटस्थगितकर्पूरकस्तूरिकादिगन्धनिस्सरणन्यायाच्च । द्रव्यविशेषप्रवेशानुगुणसन्निवेशवत्त्वं काचादेरङ्गीकार्यम् । अप्राप्यग्रहणेऽपि हि कुड्यादिव्यवहितं न ग्राह्यम्, काचादिव्यवहितं तु ग्राह्यमिति वस्तुस्वभाववैचित्र्यं त्वयाऽपि स्वीकृतम् ।

नीरन्ध्रेऽप्यम्बुकाचादौ दृक्प्रभादेः प्रवेशनम् ।
वस्तुस्वभाववैचित्र्यादिति केचित्प्रचक्षते ॥

## आनन्ददायिनी

यथावदिति । परु(पुरु)वकं—अत्यन्तस्वच्छद्रव्यविशेषः । (करण्ड इति केचित् । ) निर्मितकरण्डः । नन्वेवं स्वभावविशेषकल्पनं गौरवान्निरस्तमित्यत्राह—अप्राप्यग्रहणेऽपीति । केचित्तु दृक्प्रभादेरेवाम्बुकाचादिप्रवे(प्रका)शनसामर्थ्यं कल्प्यत इत्याहुरित्याह—नीरन्ध्रेऽपीति । ननु व्यवधानतदभावाभ्यां ग्रहणाग्रहणदर्शनात् प्रा(तत्प्रा)प्त्यप्राप्त्योस्तत्प्रयोज्य(जक)त्वादिन्द्रियाणां प्राप्त(प्राप्य)ग्राहकत्वं सिध्यतीत्यनुकूलतर्कोऽनुपपन्नः ग्रहणाग्रहणयोः ग्राह्ययोग्यत्वायोग्यत्वप्रयुक्तत्वात् व्यवधानाव्यवधानयोरप्रयोजकत्वम्; छा(तच्छा)दकं च न प्राप्तिविघटकं; तदभावश्च न तत्प्र-

## तत्वमुक्ताकलापः

**नो चेत् गृह्येत योग्यं सममिह निखिलं निष्फले छादकादौ**

## सर्वार्थसिद्धिः

'सर्वत्र स्वरूपयोग्यत्वायोग्यत्वाभ्यामेव ग्रहणाग्रहणे । तत्र छादकतदभावौ निरर्थकौ' इति वदतां बाधकं स्वोक्तानुमानस्य विपक्षे बाधकं अयस्कान्तनिदर्शनेऽपि छादकनैष्फल्येऽतिप्रसङ्गमभिप्रेत्याह—नो चेदिति । इह योग्यं निखिलं सर्वस्मिन् जगति स्वरूपयोग्यं सर्वं समं गृह्येत, अविशेषाद्युगपदेवेत्यर्थः । आदिशब्देन अतिदूरत्वकालविप्रकर्षादिकं दृष्टान्तय (ततया गृह्ण) ति । छादकाभावः स्वरूपतस्सहकारी न तु प्राप्तिविरोधिप्रत्यनीकतयेति चेन्न; आलोकादिप्राप्तिविरोधिच्छत्रादिन्यायस्यात्रानपायात् । न च यत्रक्वचिच्छादकाभावस्सहकुर्यात् अतिप्रसङ्गात्; किं तु नयनार्जवदेशे । अयं च (अयं नियमः) प्राप्तिविरोधिनिवृत्तिरूपतयेति युक्तमुत्पश्य ! रूपग्रह[illegible]चामेव प्रदीपादि-

## आनन्ददायिनी

योजक इति शङ्कते— सर्वत्रेति । दृष्टान्ततयेति—यथा (दूरत्व)कालविप्रकर्षादेस्सन्निकर्षप्रतिबन्धकत्वं तद्विरहस्य तदापादकत्वं च नास्ति(किन्तु) अयोग्यत्वमात्रेण ग्रहणाग्रहणे इ(ग्रहणमि)ति तयोर्निष्फलत्वं तथेत्यर्थः । छादकाभाव इति— व्यवधायकाभाव (इत्यर्थः) ।·प्राप्तिविरोधिरूपप्राप्त्यभावप्रत्यनीकतया प्राप्तिसंपादकतया न प्रयोजकं किं तु स्वयं कारणमित्यर्थः । आलोकादीति—अन्यत्र क्लृप्ता(दृष्टा)कारकल्पनस्योचितत्वादिति भावः । तन्न्यायमेवोपपादयति—नच यत्र क्वचिदिति । ननु

## तत्वमुक्ताकलापः

**स्थैर्ये तद्योग्यभावो**

## सर्वार्थसिद्धिः

च्छादकं प्रभाप्रतिघातार्थं दृष्टम् । उन्मीलितनिमीलितचक्षुषः पिठरकावृतदीपप्रभान्यायेन पूर्वप्रसृतनयनप्रभाया विनाशादतिक्रमाद्वा ग्राह्यग्रहणाभावः । अत्र गृहीतच्छन्नमपि गृह्येतेति प्रसङ्गारूढम् । तदा सममिति पूर्वमिवेत्यर्थः । तच्च क्षणभङ्गेन योग्यायोग्यभेदकल्पनया परिजिहीर्षतः सर्वलोकप्रसिद्ध्यनुसारिणा स्वमतेनोत्तरमाह—स्थैर्ये इति ।

## आनन्ददायिनी

विषयप्राप्त्यर्थमिन्द्रियवृत्तेर्विषयदेशव्यापने सति निमीलिताक्षस्यापि विषयग्रहणं स्यात् निर्गताया वृत्तेस्सत्त्वाद्विषयप्राप्तिसत्त्वादित्यत्राह—उन्मीलितनिमीलितेति । पिठरकं—वैतसादिपात्रविशेषः । अति(प्रति)क्रमाद्वेतिविषयदेशातिक्रमणेन तदा विषयप्राप्त्यभावादित्यर्थः । (इदमभ्युपगम्योक्तम्) । यद्वा—प्राप्तिपक्षे गृहीतच्छन्नमपि गृह्येतेति प्रसङ्गारूढं—प्रसङ्गेनापादितमपि तदा समं—छादकनैष्फल्यपक्षेऽपि समं—अम्बुकाचादिस्थलवदिति। प्रकारान्तरेणाप्यर्थमाह—गृहीतच्छन्नमपीति । तथाच मूलस्यायमर्थः—नो चेत् काचादीनामिन्द्रियप्रवेशनयोग्यसंस्थानवत्त्वाभावे तद्व्यवहितग्रहणवत् पिठरादिव्यवहितमपि योग्यं निखिलं गृह्येत छादकानामप्रतिबन्धकत्वादिति सममित्यर्थः । ननु गृहीतस्य पिठर (स्य) व्यवधानं नास्त्येव तस्य क्षणिकतया नाशात् ; तदनन्तरोत्पन्नं च पूर्व (पूर्वपूर्व) स्माद्भिन्नमिति तदयोग्यत्वादेव न गृह्यत इत्यत्राह—तच्च क्षणभङ्गेनेति । तच्च उक्तप्रसञ्जनमित्यर्थः ! तद्योग्यभाव इति मूलम् । तद्योग्यभावः—इन्द्रिययोग्य-

## तत्वमुक्ताकलापः

**न हि गलति समा सन्ततिस्त्वन्मतेऽपि ॥ ४० ॥**

## सर्वार्थसिद्धिः

अयं भावः—छादनदशायां पूर्वगृहीतस्य स्वरूपयोग्यत्वं स्थितं नष्टं वा? आद्ये कथं न गृह्येत? प्राप्तेर (नपेक्षणात्) प्रयोजकत्वात् । द्वितीये नाशकं न दृष्टम् । छादकमेव स्वरूपयोग्यतानाशकमिति चेन्न; अव्यवहितदेशस्थैरप्यग्रह (ण) प्रसङ्गात् । यं प्रति न व्यवधिस्तं प्रति योग्यता नष्टेति चेत्; छादकापगमेऽप्यग्रहप्रसङ्गात् । तदपगमात्पुनरुत्पद्यत इति चेत्; हन्त; अदृश्यमानानन्तोत्पत्तिनाशकल्पनात् प्रतिपुरुषनियतानन्तयोग्यताभेदकल्पनाच्च वरं प्रदीपप्रभान्यायेन प्राप्तिविघातकतया छादकसाफल्यस्वीकारः । परपक्षेणापि प्रसङ्गस्थैर्यमाह—समेति । अपिरन्वारोहद्योतकः । क्षणभङ्गपक्षेऽपि

## आनन्ददायिनी

(स्य)भावः—सत्त्वं व्यवहितस्थलेऽपीत्यर्थः । प्रतिज्ञामात्रेण नार्थसिद्धिरित्यत आह—अयं भाव इति । अव्यवहितदेशस्थैरिति—छादकेन योग्यताया नाशादिति भावः । हन्तेति—छादकस्य किञ्चिद्विघातकतया प्रतिबन्धकत्वस्य कल्पने गौरवपरिहारेण लघुपक्ष एवाश्रयितुं युक्त इति भावः । क्षणभङ्गपक्षेऽपीदं समानम्; छादकान्तर्हितस्य क्षणस्य पूर्वगृहीतक्षणापेक्षया भिन्नत्वेऽपि तस्यायोग्यत्वे समीपस्थैरन्तरितैरपि न गृह्येत; गृह्येत चेत् योग्यत्वादन्तरितैरपि गृह्येत । यदि प्रतिपुरुषं योग्यताभेदः कल्प्यते तदा प्राप्तिर्वा लाघवात्कल्प्यतामिति ध्येयम् । परपक्षेणेति—क्षणिकपक्षेणापीत्यर्थः—अन्वारोहोऽ-

## सर्वार्थसिद्धिः

योग्यक्षणादयोग्यक्षणोत्पत्तौ कारणक्षणस्य सर्वैरदृष्टस्तत्तत्स्वरूपातिरिक्तश्शक्तिभेदो वा सहकारिभेदो वा कल्प्यः । उभयपि स्वमतबाधकम् । दृष्टं छादकमेवायोग्यक्षणोत्पादसहकारीति चेन्न ; अपसिद्धान्तात् । छादकस्य किञ्चित्करत्वानपायात् । तोयादिव्यवहितेऽप्यग्रह(ण)प्रसङ्गात् । छन्नस्य च सर्वादृश्यत्वप्रसङ्गात् । नेत्रसन्नि(हितेन)कृष्टेन पक्ष्मकरतलादिना दवीयस्तरदिवाकरक्षणोत्पत्तेरत्यन्तम (रत्य) द्भुतत्वाच्च ; तस्मादस्मदुक्तमेव (छादक)साफल्यम् । उक्तातिप्रसङ्गस्सांख्यादिपक्षेऽपि समः । यदि

## आनन्ददायिनी

भ्युपगमः । योग्यक्षणादिति—अव्यवधानस्थले योग्यकारणक्षणस्य योग्यक्षणोत्पादकत्वस्यैव दर्शनात् व्यवहितस्थले शक्तिवैलक्षण्यं कल्प्यमित्यर्थः । ननु तत्र क्षणस्वरूपमेव हेतुरस्तु न तदतिरिक्तशक्तिकल्पनेति चेन्न ; वैजात्यस्यावश्यकल्प्यत्वात् ; अन्यथा घटादि(घटाधार)(अन्याधार)क्षणस्यान्य(स्यपटादि)क्षणोत्पादकतापातात् । स्वमतबाधकमिति—स्वरूपातिरिक्तशक्तिभेदाङ्गीकारे धर्मधर्मिभावभेदरहितस्वमतबाधः । सहकार्यङ्गीकारे च सहकारिणा सहकार्ये किञ्चित्कार उत्पद्यते न वेत्यादिविकल्पने (ल्पिते) न सहकारिनिरासात् स्वमते तद्बाध इत्यर्थः । केचित्तु इन्द्रियाणां प्राप्तिकल्पने गौरवादिति स्वापादितमतस्य बाधकमि (त्यर्थः) त्याहुः । ननु कल्प्यत्वे गौरवं किंतु दृष्टमेवाङ्गीक्रियते इत्याशङ्कते—दृष्टं छादकमेवेति । अपसिद्धान्तमेवोपपादयति—छादकस्येति । तोयादीति—तत्रापि छादकसहकारिणा योग्यताशून्य (स्यक्षण) स्योत्पत्तेरिति भावः । अत्यन्तमिति—कारणानां कार्यदेशसन्निहितानामेव जनकत्वात् अन्यथाऽतिप्रसङ्गादिति भावः । प्रागुपक्षिप्तं परोक्तं प्राप्तिप्रकारं दूषयति—उक्तातिप्रसङ्ग इति ।

## सर्वार्थसिद्धिः

ह्यहङ्कारविकारयोश्चक्षुश्श्रोत्रयोर्याविद्देशस्थविषयग्राहित्वं दृष्टं तावत्पृथुत्वं तत्तच्छरीरोत्पत्तिसमयासिद्धं ; तत्राधिष्ठानाद्बहिरवस्थितांशो वृत्तिरित्युच्यत इति तदा निमीलनाद्यवस्थायामपि ग्राहकत्वप्रसङ्गः ; प्राप्तेरनपायात्, अथ पृथ्वग्रा संतताऽपि बहिर्वृत्तिः दीपप्रभान्यायेन विनश्यति ; अत एव छन्नग्रहणाभाव इति ; तथात्वेऽप्येकस्यादृश्यमानपृथुत्वाणुत्वाद्यनन्तावस्था स्वतो भिन्नाभिन्नवृत्त्यंशनाशः तन्नाशेऽपि स्वरूपावस्थानमित्यादिबहुविधकल्पनापात इति । यत्तु कैश्चिदुच्यते—निष्क्रान्तमात्रमेव चाक्षुषं तेजः बाह्येन बहुदेशव्यापिना चन्द्रसूर्यादिज्योतिषा संव-

## आनन्ददायिनी

अतिप्रसङ्गमेव दर्शयति—तदा निमीलना (लिता) द्यवस्थायामिति । तथात्वेऽपीति—एकस्येन्द्रियस्य विषयग्रहणकाले विषयदेशव्यापिपृथुत्वावस्था निमीलनकाले नाशात्मकसंकोचरूपाणुत्वावस्था च अदृश्यमाने कल्प्ये इत्येको गौरवदोषः । बहिर्गतांशस्यावयविना समं भिन्नाभिन्नत्वाद्वा भिन्नांश (भिन्नाभिन्नत्वात्स्वांश) (भिन्नाभिन्नत्वात्स्वाभिन्नांश) नाशेऽपि तदभिन्नेन्द्रियस्वरूपस्यावस्थानं चात्यन्तादृश्यमानं कल्प्यमित्यपरो दोषः । तथा (तदा)पि (वि) नष्टावस्थस्य च चक्षुरुन्मीलनानन्तरं तावद्व्यापिनश्चक्षुष उत्पत्तिरित्यादिबहुदोष इत्यर्थः । यत्तु कैश्चिदिति—रसेश्वरादिसि (श्वरसि) द्धान्तिभिरित्यर्थः ॥

निष्क्रान्तं चाक्षुषं तेजो बाह्यालोकेन वर्धितम् ।
दूरासन्नार्थयोर्नित्यं गृह्णाति युगपत्क्वचित् ॥

इत्युक्तेः । नैयायिकैकदेशिन इत्यप्याहुः । चाक्षुषं तेज इति—चक्षू-

## सर्वार्थसिद्धिः

लितं तावत्प्रथिमानमवयविनमारभते । तेन च संबन्धादुन्मिषितस्य दूरस्थग्रहणम् । दूरासन्नयोर्युगपद्ग्रहणं च सिध्येदिति; तदयुक्तम्; निष्क्रमणकल्पनस्य गुरुत्वात् । अनिष्क्रान्तमेव किंनावयविनमार(भते)भेत? आन्तरानिष्क्रमणवद्बाह्यप्रवेशोपपत्तेः । अपि च अस्मिन् पक्षे त्रिभुवनविवरव्यापिना तेजसा सह चाक्षुषतेजस्संवलनात्तेन संबद्धं सर्वं युगपद्भासेत पश्चाद्भागाव(गादि)स्थितं च । अथ आर्जवावस्थानमपेक्षणीयमित्युच्येत; तदा अस्मद्व्याप्तेस्सिद्धत्वात् । अन्यथा दर्पणतरङ्गादिसन्निधाने स्वमुखादिग्रहणं न स्यात् । किञ्च निमीलिताक्षस्यापि प्राङ्निष्ठ्यूतन-

## आनन्ददायिनी

रूपं तेज इति विवक्षितं उत तत्संबान्धि? इति विकल्पमभिप्रेत्याद्यं दूषयति—निष्क्रमणेति । चाक्षुषं चक्षुरेव । प्रज्ञादित्वात् स्वार्थिकोऽण् प्रत्ययः । गौरवमेवोपपादयति—अनिष्क्रान्तमेवेति । तद्देशाप्रविष्टस्य कथं तत्रारम्भकत्वम्? इत्यत्राह—आन्तरेति । अन्तस्स्थस्य (विकारावस्थाशून्यस्य) तद्देशापरित्यागेन निष्क्रमणकल्पनायां निष्क्रमणं विनाऽपि बाह्यदेशप्रवेशोऽस्तु आन्तरदेशपरित्यागकल्पने चान्धतापत्तिरित्यर्थः । ननु भवतां वृत्तेरि (विवृत्तेरि)व चाक्षुषतेजःप्रभाया निर्गमने को दोषः? इत्यत्रा (निर्गमने दोष इति द्वितीयं पक्षमाशङ्कया) ह—अपिचेति तदा अस्मद्व्याप्तेरिति—तथाच अस्मदुक्तप्राप्तेरावश्यकत्वात्तन्मत्रेणैव ग्रहणोपपत्तौ(वा)बाह्यतेजसासमामवयव्यन्तरं न कल्प्यमित्यर्थः । अस्मदुक्तप्राप्तेरावश्यकतामाह—अन्यथेति । आभिमुख्येन तेजोऽन्तरोत्पत्तावपि नयनवृत्तीनां परावृत्य प्राप्त्यनभ्युपगमे स्वमु-

## सर्वार्थसिद्धिः

**यनमहस्संभवबाह्यालोका-वृत्त्या दृश्यदर्शनानुवृत्तिस्स्यात् । अतः प्रागुक्तप्रकारैव प्राप्तिरिति ॥ ४० ॥**

**चक्षुरादेः प्राप्यकारित्वम्**

---

**भवतु चक्षुषस्तेजसाप्यायितत्वात् मणिप्रभान्यायेन काचिद्वृत्तिः ; श्रोत्रस्य तु आकाशाप्यायितस्य सा कथमित्यत्राह—**

## आनन्ददायिनी

खव्यापित्वाभावादभ्युपेततेजसा मुखग्रहणं न स्यादिति भावः । नन्वाभिमुख्येनोत्पन्नस्यापि दर्पणादिसन्निधौ परावृत्तिरस्त्विति चेत् न ; तथात्वे नयनवृत्त्यैवोपपत्तौ अतिरिक्तकल्पने गौरवप्रसङ्गात् । नच दूरासन्नार्थयुगपद्ग्रहणा(य)र्थं तदभ्युपगमः ! तथाऽप्यवयव्यन्तरं विना स्वनयनतेजस्संवलितबाह्यतेजस एव ग्राहकत्वकल्पनोपपत्तेः । किं चान्धकारस्थपुरुषेण योजनदूरस्थालोकमध्यवर्तिपर्वतादिकं मध्ये च समीपस्थितालोकमध्यस्थमपि वस्तु युगपदेव गृह्यते । नच दूरासन्नपदार्थव्यापि किंचित्तेजोऽन्तरं जन्यते ! मध्येऽन्धकारस्थले बाह्यालोकाभावात् । क्रमेण दूरासन्नयोस्तेजसोर्द्वयोरुत्पत्तौ क्रमिकत्वेन यौगपद्यग्रहो न स्यात् । तत्र चेत् झडित्यादिना समर्थनं तदा नयनवृत्तेरेवोपपत्तिरिति भावः ॥ ४० ॥

॥ चक्षुरादेः प्राप्यकारित्वम् ॥

---

अत्राप्याक्षेपसंगतिमाह—भवत्विति । आकाशाप्यायितस्येति—

## तत्वमुक्ताकलापः

**शब्दं गृह्णाति दूराभ्युदितमपि बहिस्सन्तता श्रोत्रवृत्तिः**

## सर्वार्थसिद्धिः

शब्दमिति। विकारिद्रव्यस्य तावत् स्वरूपत आप्यायकद्वारा वा तत्र तत्र वृत्तिरविरुद्धा। नचानुपलम्भविरोधः; योग्य! त्वाभवात्। अन्यथा स्वेष्टमपि भज्येत। तवापि हि बुद्धिसंततेश्शरीरान्तरगमनमालोकादिगमनं च दृष्टं कल्प्यं वा? नाद्यः; अशक्यत्वादनभ्युपगमाच्च। न द्वितीयः; तद्वद्त्रापि कल्पनोपपत्तेः। न हि तत्र गतिः प्राप्तिर्वा कल्प्यते-किं तु तत्रतत्रोत्पत्तिमात्रमिति चेत्; तथाऽत्रापि त्वया कल्प्यं अविशेषात्। नच शब्दात्मकाः पुद्गलाः श्रवणदेशमायाताः दृश्यन्त इति युक्तम्! शब्दस्य रूपादिवद्गुणत्वोपपत्तेः पुद्गलत्वायोगात्।

## आनन्ददायिनी

आकाशस्य नित्यतया वृत्त्य (शस्यप्रभा) भावादिति भावः। विकारिद्रव्यस्येति—कार्यत्वाद्वृत्तिस्स्यादिति (प्रभाया अभावेऽपि परिणामविशेषस्यापि विरोधादिति) भावः। अन्यथेति— बौद्धपूर्वपक्ष्यनुसारेणेदमिति (बौद्धोऽत्रपूर्ववादीति) भावः। इष्टभङ्गमेवाह— बुद्धिसंततेरिति। अशक्यत्वादिति—दर्शनायोग्यत्वादित्यर्थः। जैनमतानुसारेण शङ्कते— नचेति। पूरयन्ति गलन्ति चेति पृथिव्यादि (द्रव्याणि पुद्गलः) परमाणुरूपं द्रव्यं पुद्गलशब्दार्थः। शब्दोऽपि परमाण्वात्मकद्रव्यपुञ्जमिति शब्दस्यैव गतिमत्तया श्रोत्रदेशगमनसंभवात् न वृत्तिः कल्प्येति

## तत्वमुक्ताकलापः

**दिग्भेदासन्नतादिग्रहणमपि तदा तत्र तत्सन्निधानात् ।**

## सर्वार्थसिद्धिः

नापि शब्दस्यैवागमनम्! बाह्यैकेन्द्रियग्राह्यतया श्रुत्यादिभिश्च रूपादेरिवाद्रव्यस्य क्रियानुपपत्तेः । न च शब्दस्य तद्व्यञ्जकस्य वा वीचीतरङ्गकल्पना! अत्यन्तगौरवात् । न च व्याप्तं श्रोत्रम्! युगपत्सार्वत्रिकशब्दोपलम्भप्रसङ्गात् । न च प्रतिनियतैः प्रदेशैश्शक्तम्! नियामकाभावात् । श्रोत्रसमवायेन शब्दो गृह्यत इति पक्षस्तु इन्द्रियाणामभौतिकत्वस्थापनयाऽपास्तः । अतो यथोपलम्भं [illegible] स्ववृत्त्या तावद्देशव्याप्तं श्रोत्रं तत्तद्देशे शब्दं गृह्णातीति । एवमनभ्युपगमे दोषमभिप्रेत्याह—दिग्भेदेति । यदि श्रोत्रवृत्तिः तत्रतत्र न स्यात् कथं तद्विशिष्टश्शब्दो गृह्यते?

## आनन्ददायिनी

भावः । न च शब्दस्य पुद्गलत्वमस्त्वित्याशङ्क्याह—नापीति । शब्दो गुणः बाह्ये(ह्यैके)न्द्रियग्राह्यजातिमत्त्वात् रूपादिवत् इत्यनुमानं द्रष्टव्यम् । आदिशब्देन पुराणादिग्रहः । न च शब्दस्येति—वीचीतरङ्गवदुपपत्तिकल्पनेत्यर्थः । ननु श्रोत्रस्य व्यापकस्यैवोत्पत्तिकल्पनास्त्वित्यत्राह—नचेति । न च प्रतिनियतैरिति—कदाचित्कुत्रचित् शब्दग्रह इति नानादेशव्यवस्थया शब्दग्रहात् नियतप्रदेशशक्तिकल्पनमित्यर्थः । अन्यथा दूरस्थशब्दस्याग्रहणेन तत्र देशे शक्त्यभावे तत्र गतेऽपि शब्दग्रहो न स्यादिति भावः । श्रोत्रसमवायेनेति—वैशेषिकपक्ष इत्यर्थः । भूत-

## तत्वमुक्ताकलापः

**इत्येकेऽन्ये तु दूरान्तिकगतजनताशब्दधीकाल-**

## सर्वार्थसिद्धिः

**न ह्यत्र प्राच्यादिप्रतिनियतं लिङ्गं दृश्यते! नापि दूरासन्नत्वनियतम्! अतश्शब्दस्वरूप इव तदुत्पत्तिदेशविशेषेष्वपि श्रोत्रवृत्तेश्शक्तिः कार्यकल्प्या। आसत्तितारतम्यानुरोधेन विशदाविशदावभासश्च चक्षुर्वृत्तिनयेन नेतव्यः। अत्र पक्षान्तरं स्थापयितुं सांख्यानुसारिणां पक्षोऽयमिति निगमयति—इत्येके इति। बुद्ध्यन्तरानुगुणमतान्तरमाह—अन्ये त्विति। दूरस्थः ताड्यमानभेर्यां दश (दूरस्थताड्यमानभेर्यादिदर्शी) कोणाभिघातात्पश्चात् विलम्बेन शब्दं शृणोति वादकास्तदासन्नाश्चाविलम्बितम्; तदेतत् गन्धाश्रयद्रव्यविसर्पन्यायमन्तरेण कथं स्यात्? अत एवानुवात-**

## आनन्ददायिनी

गुणस्य शब्दस्याहङ्कारिकेणेन्द्रियेण समवायायोगादित्यर्थः। श्रोत्रेणाग्रहणेऽप्यनुमानात्तद्ग्रह इत्यत्राह—न ह्यत्रेति। दूरासन्नत्वनियतं—दूरासन्नत्वव्याप्तम्। ननु श्रोत्रस्य वृत्त्यङ्गीकारेऽपि देशग्रहणासामर्थ्यात् कथं तत्तद्देशविशिष्टशब्दग्रहः? इत्यत्राह—अत इति। प्रकारान्तरेण तद्विशिष्टप्रतीत्यनिर्वाहादिति भावः। ननु तत्तच्छब्ददेशव्यापिवृत्तिस्वीकारे दूरासन्नयोः शब्दग्रहतारतम्यानुपपत्तिरित्यत्राह—आसत्तितारतम्यानुरोधेनेति। ग्राह्यशब्दापेक्षया ग्राहकपुरुषस्येति शेषः। बुद्ध्यन्तरं—दूरासन्नयोःक्रमेण बुद्धिरित्यर्थः। बुद्ध्यन्तरमेवोपपादयति—दूरस्थस्ताड्यमानेति। गन्धाश्रयेति—तथाच शब्दाश्रयद्रव्यस्य श्रवणदेशविसर्पः कल्प्यत इति भावः। अत एवेति—अतिदूरोऽप्यनुवाते

## तत्वमुक्ताकलापः

**भेदात् श्रोत्रायातस्य तस्य ग्रहं**

## सर्वार्थसिद्धिः

प्रतिवातयोरतिदूरानतिदूरं च शब्दो गृह्यते। बहिरन्तर्गृह्यतादं च दूरस्थशब्दग्रहणे स्फुटास्फुटधीश्च। अतः श्रोत्रप्रदेशायातभूत-धर्मस्य शब्दस्य ग्रहणम्। तस्यचायातत्वमाश्रयद्वारकम्। 'शब्दगन्धसूर्यालोकरत्नप्रभादयो धर्म्यतिवर्तिनो गतिमन्तश्च' इति आत्मासिद्धिवाक्ये शब्दशब्दो गन्धशब्दवदाश्रयलक्षकः॥

गुहासौधादिसंक्षोभः प्रतिशब्दश्च जृम्भते।
निस्साणादिप्रणादेन तदेतत्पक्षसंगतम्॥

## आनन्ददायिनी

शब्दो गृह्यते प्रतिवाते अनतिदूर एव गृह्यत इत्यर्थः। भूतधर्मस्येति— शब्दस्य द्रव्यत्वं येऽभ्युपगच्छन्ति तन्मतमसंगतामिति भावः। ननु तस्याद्रव्यत्वे कथमागमनमित्यत्राह— तस्यचेति। सिद्धान्तविरोधं परि-हरति—शब्दगन्धेति। गन्धस्य गुणत्वं सर्वसिद्धमिति भावः। शब्द-शब्द इति—ननु गुणत्वे धर्म्यतिवर्तिन इति विरोध इति चेन्न; धर्मिशब्देन समुदायस्याभिधानात् तदेकदेशरूपाश्रयद्वारा तदतिवर्तित्वं सम्भवतीति (समुदायरूपधर्म्यतिवर्तित्वस्य विवक्षितत्वादिति) भावः। ननु आश्रयद्वारा शब्दस्य कर्ण (अन्य) देशागमनं किमर्थं कल्प्यते? तावद्व्यापी शब्द एव प्रथममुत्पद्यतामित्यत्राह—गुहासौधादीति। शब्दस्य तावद्देशव्यापिन उत्पत्तौ गुहासौधप्राकारादीनाम (रादिष्व) भिघातरूपसंक्षोभा(भाभावात् )त् प्रतिशब्दो नोपपद्यते शब्दाश्रयद्रव्य-स्यागमनपक्षे तु तीव्रतरशब्दाश्रयद्रव्याभिघातेन गुहादौ प्रतिशब्द-

## तत्वमुक्ताकलापः

**अनुमितिमप्याहुरस्मिन् दिगादेः ॥ ४१ ॥**

## सर्वार्थसिद्धिः

**नन्वेवं दिगादिविशिष्टोपलम्भःकथमित्यत्राह—अनुमितिमिति। आदिशब्देन दूरासन्नत्वग्रहः दृष्टान्तप्रदर्शनं च ॥**

**यथा मयूरवीणादेश्शब्दोऽयमिति गृह्यते।**
**तथा प्राच्यादिजातोऽयमिति लिङ्गात्तथाविधात् ॥**
**तत्र यद्यपि शब्दस्य विशेषः कोऽपि दुर्वचः।**
**तथाऽपि विदितस्तैस्तैः लिङ्गं स्यात्संमतेष्विव ॥**

**नन्विमौ द्वावपि पक्षौ हाठिकौ; पूर्वत्र दिगादिषु श्रोत्रस्य शक्तिकल्पनागौरवात् उत्तरत्र दुर्वचालिङ्गदर्शनक्लप्तेरिति; हन्त! एवं वदन् किं शब्दग्रहे दिगादिग्रहणमेव नास्तीति मन्यते?**

## आनन्ददायिनी

(उत्पद्यत इत्यर्थः) स्सम्भवतीति भावः। नन्वस्मिन् पक्षेऽपि तत्तद्देश-विशिष्टशब्दग्रहो न स्यादित्याशङ्कते—नन्विति। ननु अस्मिन्पक्षे मयूरवीणादिशब्दविशेषग्रहेऽपि सामर्थ्यं श्रोत्रस्य कल्प्यताम् तथाच नायं दृष्टान्तः; अन्यथा तत्र तत्तत्प्रतिनियतविशेषस्याभावादानुमा-निकत्वानुपपत्तेरित्यत्राह—यद्यपीति। विशेषस्य शब्दे (दुर्वचत्वेऽपि) दुरभिलपत्वेऽपि तैस्तैः पुरुषैर्विदितोनुभवसिद्धस्संमतेष्विव—इक्षुक्षीरा-दिमाधुर्येष्विव विशेषो लिङ्गं भवत्वित्यर्थः; अन्यथा इक्षुक्षीरादि-माधुर्येष्वपि विशेषो न स्यादिति भावः। हाठिकौ—हठात्सिद्धौ—आपातसिद्धाविति यावत्। अध्यात्मादित्वाट्ठञ्। ननु शब्दग्राह-

## सर्वार्थसिद्धिः

सदपि वा निष्कारणकम्? सकारणमपि वा कारणान्तरासिद्धमिति? नाद्यः; सर्वलोकाविरोधात्। सामग्रीवैकल्यात्तु कदाचिद्दिगादिरहितधीः। न द्वितीयः; आगन्तोरहेतुकत्वविरोधात्। न तृतीयः; आगमादेरत्रासंभवात्। भ्रान्त्या दिगादिधीरिति चेन्न; प्रतिपुरुषनियतादिगध्यासहेतुभूतधर्मविशेषग्रहाभावात्; भावे वा तत एव तत्तदनुमानोपपत्तेः। तद्वदेव च दिगादेरप्युपलम्भोपपत्तेः। न चाबाधितांशे भ्रान्तिक्लृप्तिर्युक्ता! अतः प्रत्यक्षतोऽनुमानतो वाऽत्र दिगादिग्रह इत्यन्यतरपक्षोऽनतिक्रमणीयः। शब्दस्य

## आनन्ददायिनी

कस्य दिगादिग्राहकत्वे कदाचिदयं (ग्राहकेष्वयं) शब्दः कुत्रत्य इति सन्देहो न स्यात् इत्यत्राह—सामग्रीति। दोषादिना लिङ्गादिप्रतिसन्धानादि सहकारिवैकल्यादिति भावः। आगन्तोः—कार्यस्येत्यर्थः। आगमादिः—तद्बोधकश्रुत्यादिः। भ्रान्त्येति—भ्रान्तिः—दोषः तेनेत्यर्थः। यद्वा (केचित्तु) द्विद्रोणेन धान्यं क्रीणाति पञ्चकेन पशून् इत्यादिवत् प्रकृत्यादित्वात्स्वार्थे तृतीया। तथाच दिगादिधीर्भ्रान्तिरित्यर्थः(इत्याहुः)। प्रतिनियतेति—सादृश्यज्ञानस्याध्यासकारणत्वादिति भावः। तद्वदेवेति—प्रतिनियतधर्मवच्छ्रोत्रेणैव शब्दगतप्रतिनियतधर्मवद्दिगादिग्रहणोपपत्तेरित्यर्थः। एतच्च प्रथमपक्षानुसारेण; किञ्च बाधकाभावादपि न भ्रान्तिरित्याह—नचाबाधितेति। ननु शब्दो नित्यो विभुः श्रोत्रेण सर्वदा सम्बद्ध एव। यद्वा विभ्वाश्रितत्वादपि श्रोत्रेण सम्बद्ध एव; तथाच तद्ग्रहार्थं श्रोत्रवृत्तिशब्दागमनकल्पनाऽनर्थिकेत्यत्राह—शब्दस्येति ॥ ४१ ॥

श्रोत्रवृत्तिशब्दाश्रयागमनपक्षौ.

---

## तत्वमुक्ताकलापः

**प्रत्यक्षं व्योम नीलं नभ इति हि मतिश्चक्षुषैवा-**

## सर्वार्थसिद्धिः

**नित्यविभुत्वात्तदाश्रितत्वाद्वा श्रोत्रेण नित्यसंबन्ध इति वादस्तु अद्रव्यसरे निरासिष्यते ॥ ४१ ॥**

**श्रोत्रवृत्ति शब्दाश्रयागमनपक्षौ**

---

**इन्द्रियचिन्तानन्तरं भूतचिन्ताप्राप्तौ प्रथममाकाशे चार्वाकै-रपि संमन्तव्यं प्रमाणविशेषं पुरस्करोति—प्रत्यक्षमिति । कथमि-त्यत्राह—नीलमिति । धूम्रादेरुपलक्षणमेतत् । आरोपितं नभसि तलत्वादिवन्मलिनत्वादिकमिति चेत्; असावारोपश्चाक्षुषोऽन्यो वा? आद्ये अधिष्ठानमपि चाक्षुषमेष्टव्यम्; अन्यथातिप्रसङ्गात् । द्वितीयस्त्वसंभवी निमीलिताक्षस्य तादृशारोपादृष्टेः । अत एव**

## आनन्ददायिनी

अवसरसंगतिं दर्शयति—इन्द्रियेति । भूतोत्पत्तिक्रमे आकाशस्य प्राथम्यात् (प्राधान्यादाकाशस्य) तन्निरूपणे कर्तव्ये तत्र निरूपणस्य लक्षणप्रमाणाधीनत्वात् धर्मिसाधकं प्रमाणमाहेत्यर्थः । चार्वाकैरपीति—तस्य प्रत्यक्षमात्र(क्षेत्र) प्रमाणवादित्वादिति भावः । तलत्वं(कठिन)कार्य-देशत्वम् । अन्यथेति—अधिष्ठानस्य चाक्षुषत्वाभावेऽपि चाक्षुषरूपाद्या-रोपे ह्या(रोपआ)त्मादावपि तथाऽऽरोपप्रसङ्गादिति भावः । असंभवीति—चक्षुर्व्यापारानिरपेक्षो न सम्भवतीत्यर्थः । तदवोपपादयति—निमीलितेति । अत एवेति—अचाक्षुषे चाक्षुषारोपासम्भवादित्यर्थः । किञ्च नीलधियो

## तत्वमुक्ताकलापः

स्मदादेः

## सर्वार्थसिद्धिः

अनुमिते नभसि नैल्यारोप इति निरस्तम् । नच नीलं नभ इति धीरेव नास्ति! विश्वविसंवादात् । नाप्यसावचाक्षुषः ; अस्मदादि-चक्षुर्व्यापारानुविधानात् । नभसि विततानां पार्थिवावयवानां कृष्णगुणमात्रं चक्षुषा गृह्यते इति चेन्न ; नीलं नभ इति धर्मि-पर्यन्तबुद्धेः । गुणिलिङ्गत्वाच्चात्र नीलादिशब्दानाम् । एतेन नीलरूपस्मृतिप्रमोषोयमिति पक्षोऽपि निरस्तः। (ननु) नभसि स्व-तो नैल्याभावात् पञ्चीकृतेऽप्यस्मिन् नैल्यस्य पार्थिवांशमात्रादिगु-त्वात् तस्मिन्नेवांशे स्यादसौ चाक्षुषधीः ? मैवम् ; तस्य नभश्शब्दा-र्थत्वायोगात् । नीलपटन्यायस्य चात्र ग्राह्यत्वात् । बालातपसंनिधौ

## आनन्ददायिनी

गुणमात्रविषयत्वे तदधीनव्यवहारस्यापि तन्मात्रविषयत्वान्नीलशब्दस्य नैल्यमात्रविषयस्य नीलं नभ इति क्लीबता न स्यादित्याह—गुणिलिङ्ग-त्वाच्चेति । एतेनेति—धर्मिपर्यन्तधी(न्तत्व) दर्शनात् गुणिलिङ्गत्वाच्च नीलादिशब्दानामित्यनेनेत्यर्थः । स्मृतिप्रमोषः—तत्तानवगाहिस्मृतिः । ननु तर्हि स्वतोऽपि नीलरूपस्य विरहात् कथं नीलं नभ इति प्रतीति-स्स्यात् इत्यत्राह—नीलपटन्यायस्येति । स्वतोऽभावेऽपि पार्थिवसम्बन्धा-त्तथा धीरित्यर्थः । ननु रूपशून्यस्य कथमन्यरूपसम्बन्धेनाऽपि चाक्षुष-रूपारोपाधिष्ठानत्वमतिप्रसङ्गादित्यत्राह—बालातपेति । अतिप्रसङ्गस्त्व-नुभवबलाद्वार्य इति भावः । नन्वत्रान्य एव नभश्शब्दार्थ इत्यत्राह—

## सर्वार्थसिद्धिः

अरुणं नभ इत्यादिबुद्धेः । तत्राप्यरुणातपग्रहणमात्रमिति चेत्; कस्तर्हि तत्र नभश्शब्दार्थः? न ह्यनेकार्थोऽयं शब्दः; अनुवृत्तमनतिप्रसाङ्गि च निमित्तं दुर्लभम् । पृथिव्यूर्ध्वत्वादेस्तथात्वाभावात् । चन्द्रिकादिविशेषानादरेण विरलावस्थितद्रव्यमात्रं नभ इति चेन्न; वियति विरला चन्द्रिकेत्यादिपृथग्व्यपदेशात् वैरल्यदर्शनमपि नभःप्रत्यक्षतामन्तरेण न घटते। तत्तन्मध्यप्रदेशानां तैस्तैरस्पृष्टता हि विरलता। तथाच मध्यदेशभूतं नभः प्रत्यक्षम् । परस्परासंयोगमात्रं वैरल्यमिति चेन्न; भिन्नकालेषु गुणादिषु च विरलधीप्रसङ्गात् । वर्तमानानामासन्नदेशस्थानां द्रव्याणामसंयोगो विरलतेति चेन्न; चन्द्रिकादिष्वसंयुक्ततेजःकणानामासन्नदेशतया नभस एव ग्राह्यत्वात् । विरलविरलतरादि बुद्धौ

## आनन्ददायिनी

न ह्यनेकार्थोऽयमिति। नन्वेकप्रवृत्तिनिमित्तत्वे न नानार्थत्वदोष इत्यत्राह— अनुवृत्तमिति । पृथिव्यूर्ध्वत्वादेरिति । पक्षितरण्यादिगतत्वेनातिप्रसक्तस्य प्रवृत्तिनिमित्तत्वायोगादित्यर्थः ; ननु विरलसंस्थानश्चन्द्रिकावयवसङ्घो नभश्शब्दार्थः । वियति विरला चन्द्रिकेति प्रतीतिस्तु वने वृक्षप्रतीतिन्यायेन स्यादित्यत्राह—वैरल्यदर्शनमपीति । वैरल्यस्यैव नभश्शब्दार्थपर्यवसानादिति भावः । ननु संयोगाभाव एव वैरल्यमिति न (भावरूप) नभस्सापेक्षत्वमिति शङ्कते—परस्परेति । भिन्नकालेष्विति । तत्र संयोगाभावस्य सत्त्वादिति भावः । चन्द्रिकादिष्वपि तत्रासन्नदेशः पृथिव्यादिर्न भवतीति नभ एव स देशस्स्यादिति भावः । नन्वस्तु देशस्तत्र नभः; तथाऽपि तद्ग्रहो मास्त्वित्यत्राह—विरलविरलतरेति ।

## तत्वमुक्ताकलापः

**कूपोऽसौ रन्ध्रमेतत् पतति खग इहेत्यादिधीश्चात्र मानम् ।**

## सर्वार्थसिद्धिः

असंयोगाविशेषे मध्यदेशाल्पत्वभूयस्त्वग्रहणमन्तरेण का गतिः ? दूरदूरतरादिस्थितिरिति चेत्; तथाऽपि दूरासन्नदेशतया नभः प्रत्यक्षमेव । दिशस्तत्र देशत्वं स्यादिति चेन्न; उपाध्यतिरेकिण्यामपि तस्यां प्रत्यक्षत्वस्य नभस्समानचर्चत्वात् । दीर्घेण ह्रस्वेन च स्प्रष्टुं योग्यत्वमेव दूरत्वमासन्नत्वं च; अतो नात्र प्रदेशबुद्ध्यपेक्षेति चेन्न; तयोस्तत्तत्स्वरूपत्वेऽतिप्रसङ्गात् । अतिरेके तु देशविशेषस्थित्युपलम्भमन्तरेण तदसिद्धेः । अत्र चाक्षुषमेवोपलम्भान्तरमप्युदाहरंति—कूपोऽसाविति । कूपरन्ध्रादयो हि

## आनन्ददायिनी

अभावे भूयस्त्वाल्पत्वरूपतरतमभावानां स्वतोऽसंभवादिति भावः । ननु संयोगरहितावयवानां दूरदूरतरादिस्थितिरेव संयोगाभावे तारतम्यमिति शङ्कते—दूरदूरतरादीति । ननु दिगेव तत्र देशः स्यादित्याशङ्कते—दिश इति । तत्र किं दिगुपाधिरेव देशस्स्यात् उत तदतिरिक्ता दिगिति विकल्पमभिप्रेत्य तत्राद्ये वियति चन्द्रातपादिवैरल्ये पृथिव्यादीनामुपाधीनामसंभवाद्दिगुपाधिर्देशो न संभवतीति मत्वा द्वितीयं दूषयति—उपाध्यतिरेकिण्यामिति । रूपशून्यतया समानन्यायत्वादित्यर्थः । दीर्घेणेति—दण्डादिनेत्यर्थः । तयोरिति—तथाच देशविशेषज्ञानपूर्वकप्रतीत्या तदतिरिक्ततद्योग्यत्वेन किमिति भावः । नन्वावरणा-

## तत्वमुक्ताकलापः

**आधारोऽत्रातपादिर्यदि भवति कथं तस्य चेहेति बोधः ? तस्यांशैश्चेत् त्र्यणौ तच्छिथिलगति**

## सर्वार्थसिद्धिः

तत्तद्देशविशेषतया सर्वलोकप्रत्यक्षसिद्धाः। आवरणाभावमात्रं तु निरासिष्यते। पतत्रिणश्च पतनदेशतया नभः प्रत्यक्षयामः। तत्र इहप्रत्ययस्यान्यथासिद्धिमाशङ्कते—आधार इति। इहेति प्रतीयमानत्वमात्रमिहाधारत्वम्। परिहरति—कथमिति। इह नभस्यातपादिरिति व्यतिरेकानिर्देशात् नातपादिरिहशब्दार्थस्स्यादिति भावः। अत्रोदयनाद्युक्तमाशङ्कते—तस्यांशैरिति। आतपाद्यंशांस्तदाधारीकृत्येत्यर्थः। दूषयति—त्र्यणाविति। परैः त्र्यणुकानां अप्रत्यक्षद्व्यणुकाश्रिततत्वस्वीकारात् अंशैरिहप्रतीतिनिर्वाहस्तत्र कुण्ठित इत्यर्थः। म भूत्स्वांशैस्त्र्यणुकानामिहेति धीः, त्र्यणुकसमुदायमिहेति निर्दिश्य प्रत्येकं तदाधेयतयोपचर्यतामित्यत्र क्लिष्ट-

## आनन्ददायिनी

भावमात्रत्वाद्रन्ध्रस्य न तत्प्रत्यक्षसाधकमित्यत्राह—आवरणाभावमात्रमिति। पतनदेशतयेति—इह विहगः पततीति पतनाधारतयेत्यर्थः। नन्वातपादेः कथमाधारत्वम्? वैरल्यात्; अन्यथा तत्र क्षिप्तपाषाणादेः पतनाभावप्रसङ्गात् इत्यत्राह—इहेति। कुण्ठित इति—द्व्यणुकानामिहेति प्रत्यक्षविषयत्वासंभवादिति भावः। द्व्यणुकसमुदायातपादिष्वाकाशव्यवहारादर्शनात् प्रत्युत भेदव्यवहारात् तत्र विशेषस्यादृष्टचरत्वात्

## तत्त्वमुक्ताकलापः

न च व्योमवागातपादौ ॥ ४२ ॥

रूपस्पर्शोज्झितत्वान्न भवति गगनं दर्शनस्पर्शनार्हं घ्राणश्रोत्रे रसज्ञाऽप्यवगमयति न द्रव्यं;

## सर्वार्थसिद्धिः

गतौ लोकव्यवहारं प्रतिपक्षयति—न चेति। इह नभसि त्र्यणुकं इह व्योम्न्यातपः इत्यादिव्यवहारे त्र्यणुकतत्समुदायादिव्यतिरिक्ते कुत्राचिन्नभःपर्यायाणां प्रयोगः प्रसिद्धः; सर्वलोकप्रतीतिव्यवहारोल्लङ्घनं तु सर्वसंक्षोभकं साहसमिति भावः। चश्शङ्काद्योतकः अवधारणार्थो वा ॥ ४२ ॥

आकाशस्य प्रत्यक्षत्वे (परोक्तं) बाधं (धकं) शङ्कते—रूपेति। नभो न चाक्षुषं रूपशून्यद्रव्यत्वात्; नापि स्पार्शनं स्पर्शशून्यद्रव्यत्वात्; इति हेतुद्वयविभागः। अन्येषां तु बाह्येन्द्रियाणामत्रासम्भवमाह—घ्राणेति। घ्राणादीनि हि स्ववेद्य-

## आनन्ददायिनी

दृष्टविलक्षणातपादिकल्पने तस्यैवाकाशत्वमित्याह—इह नभसीति। अन्यथा घटादिकमपि पटादिधीगोचर इति साहसेन सर्व (लोक) व्यवस्थोच्छेदप्रसङ्ग इति प्रतीतिव्यवहारौ नातिलङ्घ्याविल्याह—सर्वलोकप्रतीतीति ॥ ४२ ॥

आक्षेपसंगतिमाह—आकाशस्येति। नभो न चाक्षुषमिति। लौकिकचाक्षुषधीविषयो नेत्यर्थः। रूपेति—घटरूपादौ व्यभिचार-

## तत्वमुक्ताकलापः

**अन्यत्त्वबाह्यम्। तस्मान्नाध्यक्षवेद्यं वियदिति यदि; न; प्रत्ययस्यापरोक्ष्यात्**

## सर्वार्थसिद्धिः

गुणाश्रयमपि नावगमयन्ति; किं पुनर्द्रव्यान्तरमिति भावः। मानसप्रत्यक्षमिह दूरनिरस्तमित्याह—अन्यदिति। तुशब्दोऽत्रात्यन्तासम्भवपरः। अबाह्यम्—आत्मतद्धर्मव्यतिरिक्तेषु न स्वातन्त्र्येण प्रवर्तत इत्यर्थः। सङ्कलितमाह—तस्मादिति। अस्मदादीति विशेषणीयम्। चोद्यस्य दत्तोत्तरत्वाभिप्रायेण प्रतिवक्ति—नेति। अभिप्रेतं व्यनक्ति—प्रत्यस्येति। अयं भावः—न रूपादिविरहाच्चाक्षुषत्वादिहानिः रूपादिप्रत्यक्ष(त्व)वत् यथादर्शनं व्यवस्थोपपत्तेः। प्रतिप्रयोगश्च—विगीतं अस्मदादि-

## आनन्ददायिनी

वारणाय विशेषणविशेष्ये। एवमुत्तरत्रापि द्रष्टव्यम्। मनो न बाह्यग्राहकं भवतीत्यभिप्रायेणाह—अबाह्यमिति। ननु मनसः सर्वज्ञानहेतुत्वात् कथं न बाह्यग्राहकत्वमित्यत्राह—स्वातन्त्र्येणेति। इन्द्रियान्तरादिसहकारितां विनेत्यर्थः। संकलितमिति—संगृहीत(मर्थ)मित्यर्थः। योगिप्रत्यक्षवेद्यत्वाद्बाध इत्यत्राह—अस्मदादीति। ननु प्रत्ययस्यापरोक्ष्यमसिद्धं; इन्द्रियग्राह्यत्वसंदेहे हि तस्यापि संदेह एवेति चेत्; तत्राह—अयं भाव इति। विगीतमिति—योगिबाह्येन्द्रियग्राह्यत्वेन (ह्यत्वमादाय) सिद्धसाधनवारणायास्मदादीति। अन्तरिन्द्रियग्राह्यत्वमादाय सिद्धसाधन-

## सर्वार्थसिद्धिः

बाह्येन्द्रियग्राह्यं बाह्यत्वे सति अस्मदाद्यपरोक्षधीविषयत्वात् अविगीतवत्। नात्र हेतुरसिद्धः; परिशेषप्राप्तेः। न तावदत्रागमिकी नभःप्रतीतिः; तदनभिज्ञानामपि सम्भवात्। नाप्यानुमानिकी; सिद्धेऽपि तदनुमाने अनधिगततादृशानुमानानां नभःप्रतीतेः। तदेवमाकाशस्या(त्रा)नुमानादिविषयत्वायोगात् आबालपण्डितमनुभूयमानत्वाच्च तद्बुद्धिरपरोक्षेति सिद्धम्। ननु असिद्धस्य सिद्धस्य वा नभसः प्रत्यक्षत्वसाधनम्? नाद्यः; अनुमानकथाबाह्यत्वात्। न द्वितीयः; अनुमानतस्तत्सिद्धेस्त्वदनभ्युपगमात्। प्रत्यक्षतस्तत्सिद्धेरस्मदनभ्युपगमादिति। मैवम्; उभयसंमतादागमतोऽपि तत्सि(ध्येत्)द्धेः। आस्तामागमः; पृथिव्याद्यतिरिक्तस्य नभःप्रतीतिविषयस्य कस्यचिदुभयसंमत्या पक्षीकारोप-

## आनन्ददायिनी

वारणाय बाह्येति। हेतावप्यात्मादौ व्यभिचारवारणाय बाह्यत्वेति। परमाणौ व्यभिचारवारणाय —अस्मदादीति। पारिशेष्यमेवोपपादयति—न तावदित्यादिना। नभःप्रतीतिरपरोक्षा स्मृत्यनुमितिशाब्दान्यत्वे सति प्रतीतित्वात् संप्रतिपन्नवत् इति परिशेषानुमानं द्रष्टव्यम्। ननु नभःप्रतीतिसिद्धौ तस्याः पारिशेष्यादापरोक्ष्यं सिध्येत् त(देव नास्ति)स्या एवासिद्धिः, इत्यत्राह—आबालेति। ननु नभसो बहिरिन्द्रिय(बहिः) प्रत्यक्षत्वसाधनं न संभभवती(वति आश्रयासिद्धेरि)त्याशङ्कते—नन्विति। आबालपण्डितमनुभूयमानत्वाच्चेति नभस्सि(संभवात्सि)द्धेरुक्तत्वादियं शङ्का न युक्ता, तथाऽपि तत्सिद्धि(प्रमाण)निरूपणे उभयसिद्ध(संमत)प्रमाणसिद्धत्वाभावादाश्रयासिद्धिरि(द्धिमाशङ्कत इ)ति द्रष्टव्यम्। आस्तामिति। उभयसंमतासिद्धिमत्त्वं पक्षताप्रयोजकम्; न तु उभयसंमतप्रमाणसिद्धत्व-

## सर्वार्थसिद्धिः

**पत्तेः; अन्यथा कथम(न्य)त्र त्वदुक्तमप्रत्यक्षत्वानुमानं जीवेत्। सर्वलोकप्रत्यक्षविरुद्धं च तत्। तथाऽपि तत्स्वीकारे बुद्धिव्यतिरिक्ततया बाह्यार्थस्सर्वोप्यप्रत्यक्ष इति वदन् सौत्रान्तिक एव समर्थस्स्यात्। तदेवं नीरूपस्यापि नभसश्चाक्षुषत्वं निर्व्याघातम्। भाष्ये त्वस्य पञ्चीकरणेन रूपवत्तया चाक्षुषत्वाविरोधवचनं**

## आनन्ददायिनी

मपि, गौरवादिति भावः। प्रतिबन्दिमाह—अन्यथेति। नन्वेवमपि म(त)दुक्तानुमानेन प्रतिरुद्धत्वात् प्रत्यक्षत्वसिद्धिरपि न स्यादित्यत्राह—सर्वलोकेति। तथाच त्वदुक्तस्य बाधितत्वेन न्यूनबलत्वान्न प्रतिपक्षतेति भावः। ननु श्वैत्यानुमानात्पीतप्रत्यक्षबाधवत् सर्वेषामाकाशप्रतीतेरेव बाधोऽस्त्वित्यत्राह—तथाऽपीति। दोषमूलत्वनिर्णयात् पीतप्रत्यक्षं न्यूनबलम्, इह तु न तथा; तथाऽपि बाधोक्तौ सौत्रान्तिकपक्ष एवाङ्गीकर्तुं शक्य इत्यर्थः। ननु नभसो रूपवत्त्वं भाष्य उक्तं; कथमत्र नीरूपत्वं सिद्धं कृत्वा प्रत्यक्षत्वसाधनम्; अपसिद्धान्तात् इत्यत्राह—भाष्य इति। ननु कथं तस्य वैभवत्वमुक्तम्; पञ्चीकरणेन रूपवत्त्वात्? इति चेत्; अत्रोक्तं कैश्चित्—'न चक्षुषा सन्मात्रं गृह्यते; तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात्' इति भाष्ये साक्षाद्रूपाश्रयस्यैव प्रत्यक्षत्वप्रतीतेः; अन्यथा संयुक्ताश्रयत्वादिसंबन्धेन सन्मात्रस्यापि रूपवत्त्वात् तद्भाष्यानुसाराद्वैभवत्वमिति। अन्येतु—वैभवात्स्यादित्यस्य युक्तिवैभवादित्यर्थः। न च संयुक्ताश्रयत्वसंबन्धेन रूपवतो ग्रहे आत्मादेरपि ग्रहप्रसङ्गः; पञ्चीकरणसंबन्धेन तद्वत्त्वस्य प्रयोजकत्वात्। यद्वा—पञ्चीकृतभूतव्य(सृ)ष्ट्यादीनामेव(वा)तत्संबन्धेन तद्वत्त्वप्रयोजकत्वम्। अत एवान्यरूपमादाय शङ्खस्य पीतप्रत्यक्षविषयत्वम्। न च

## तत्वमुक्ताकलापः

**पञ्चीकारेण नैल्यं पटमलिनिमवद्भाषितं वोपकुर्यात्॥**

## सर्वार्थसिद्धिः

**वैभवात्स्यात् । यथा रूपरूपिरूपसमवेतरूपैकार्थसमवेतानां चाक्षुषत्वमविशिष्टमङ्गीक्रियते तथा रूपिद्रव्यसंवलितस्यापि क्वचित्स्यात् । न चातिप्रसङ्गः; समचर्चत्वात् । न हि रूपिद्रव्यं रूपैकार्थसमवेतं वा सर्वं चक्षुर्ग्राह्यम्! योग्यतानियमस्य दुर्लङ्घत्वादिति; तदेतदभिप्रेत्याह—पञ्चीकारेणेति ॥ ४३ ॥**

आकाशस्य प्रत्यक्षत्वम्.

---

## आनन्ददायिनी

वायोरपि चाक्षुषत्वप्रसङ्गः; तन्निष्ठरूपस्यानुद्भूतत्वात् । उद्भूतरूपवत एव प्रत्यक्षत्वात् । नचैवमपि 'अद्यजातस्य चक्षुरपि न ह्यरूपं वायुं गृह्णाति' इति प्रमेयसंग्रहे रूपाभाववचनाद्विरोधः; तस्योद्भूतरूपाभाववत्परत्वादित्याहुः । ननु रूपशून्यस्यान्यरूपमादाय चाक्षुषत्वेऽतिप्रसङ्ग इत्यत्राह—यथेति । रूपसमवेतं रूपत्वादि । रूपैकार्थसमवेतं—परिमाणादि। समान्चर्चत्वमेवाह—न हीति । यद्यन्यरूपसंवलितस्य कस्यचित् बाह्यप्रत्यक्षत्वमापाद्यते तदा रूपैकार्थसमवायात्परिमाणादेश्चाक्षुषत्ववत् रसगुरुत्वादेरपि चाक्षुषत्वं स्यादित्यातिप्रसङ्गापादनं समानम्, तत्समाधानं च समानमित्यर्थः । योग्यतानियमस्य—प्रत्यक्षयोग्यतानियमस्य । दुर्लङ्घत्वात्—उभयाभ्युपेयत्वात् ॥ ४३ ॥

आकाशस्य प्रत्यक्षत्वम्.

---

## तत्वमुक्ताकलापः

**शब्दस्याधारभूतं कथमपि गगनं शक्यते नानु-**

## सर्वार्थसिद्धिः

अथाकाशस्यनुमानतस्सिद्धिं निराकरोति—शब्दस्येति। शब्दः क्वचिदाश्रितः गुणत्वादित्येतावता तावन्न पृथिव्याद्यतिरिक्तशब्दाश्रयसिद्धिः; सर्वस्य किञ्चिद्भावात्। परिशेषहेतूनां तु विपक्षे बाधकाभावात्। न हि शब्दस्य पृथिव्याद्याश्रितत्वे किञ्चिदनिष्टं स्यात्। पुष्पादिगन्ध इतिवत् भेर्यादिशब्द इति सर्वलोकबुद्ध्यनुविधाने कल्पना च लघ्वी। शब्दो विभुगुणो न भवति बाह्येन्द्रियग्राह्यगुणत्वादिति विपरीतपरिशेषस्यापि सुशकत्वात्। स्पर्शो न पृथिव्यादिधर्मः नीरूपेन्द्रियग्राह्यत्वादित्या-

## आनन्ददायिनी

प्रासङ्गिकीं सङ्गतिमाह—आकाशस्येति। सर्वस्य किंञ्चिद्भावादिति। शब्दः क्वचिदाश्रित इत्यत्र किंशब्दार्थत्वादित्यर्थः। परिशेषेति। शब्दः पृथिव्याद्याश्रितो न भवति श्रोत्रग्राह्यगुणत्वात् इत्यादिपरिशेषाणामित्यर्थः। विपक्षे बाधकाभावमेवाह—न हीति। पृथिव्याद्यनाश्रितत्वसाधने सर्वलोकप्रतीतिमप्याह—पुष्पादीति। तथाच लोकप्रतीतिबाधकल्पनाभावाल्लाघवं चेत्यर्थः। परिशेषानुमाने प्रतिपक्षमप्याह—शब्द इति। ज्ञाने व्यभिचारवारणाय बाह्येति, गुणत्वादिति जातौ व्यभिचारवारणायेति प्रयोजनं द्रष्टव्यम्। आभासयोगक्षेमतामप्याह—स्पर्श इति। रूपादौ व्यभिचारवारणाय नीरूपेति। नीरूप(परामर्श)शब्दात्मादिग्राह्यतया व्यभिचारवारणायेन्द्रियेति। ननु मनसा आत्मनिष्ठसत्ता(द्रव्यत्वादि)-

## तत्वमुक्ताकलापः

**मातुं स्वेच्छातः पारिशेष्य(ष्यात्)क्रम इह कथितोऽतिप्रसङ्गादिदुःस्थः। निष्क्रान्त्यादेर्न तद्धीः सति**

## सर्वार्थसिद्धिः

दिभिः पृथिव्याद्यतिरिक्तस्पर्शाधार(कल्पन)प्रसङ्गाच्च। तदेतदभिप्रेत्याह—स्वेच्छात इति। आदिशब्देन विपरीतप्रसङ्गसङ्ग्रहः। 'निष्क्रमणं प्रवेशनमित्याकाशलिङ्गम्' इति परोक्तं प्रतिवक्ति—निष्क्रान्त्यादेरिति। उपपादयति—सतीति। यत्राकाशस्तत्र सर्वत्र निष्क्रमणादिकं न सिध्यति; आकाशव्याप्ते कुड्यादौ निष्क्रमणादेरशक्यत्वात्। न च कुड्यादिष्वाकाशो नास्तीति वाच्यम्; तस्य सच्छिद्रत्व (त्वाभाव) प्रसङ्गादिति

## आनन्ददायिनी

समवायादिग्रहणात् त्वगिन्द्रियेण घटत्वादिजातिपरिमाणग्रहणाद्व्यभिचार इति चेन्न; नीरूपेन्द्रियग्राह्यविशेषगुणत्वादित्यर्थत्वात्। आदिशब्देन रसगन्धौ न पृथिवीजलाश्रितौ द्रव्यग्राहकेन्द्रियग्राह्यगुणत्वात् अचक्षुरिन्द्रियग्राह्यत्वात् शब्दवत्; रूपं न पृथिव्याद्याश्रितं द्रव्यग्राहकेन्द्रियग्राह्यविशेषगुणत्वात् ज्ञानवत् इत्यादयो गृह्यन्ते। तदेतदभिप्रेत्याह—स्वेच्छात इति। विपरीतप्रसङ्गेति। शब्दो विभुधर्मो न भवतीति प्रागुक्त इत्यर्थः। यद्वा शब्दः पृथिव्यादिचतुष्टयान्यतमाश्रयः बाह्येन्द्रियग्राह्यविशेषगुणत्वात् बहिरिन्द्रियव्यवस्थापकगुणत्वात् इत्यादिप्रसङ्गः। निष्क्रमणमित्यादि। एतत्सूत्रेण गौतमोक्तमित्यर्थः। सच्छिद्रत्वेति—तथा च तस्याकाशस्य सरन्ध्रतया सावयवत्वानित्यत्वा-

## तत्वमुक्ताकलापः

**नभसि यतो नास्ति कुड्यादिकेऽसौ रोधस्त्वावार-
कैश्चेत् तदभवनवशान्निष्क्रमादिश्च सिध्येत् ॥४४॥**

## सर्वार्थसिद्धिः

भावः । सहकारिवैकल्यात् कुड्यादिषु निष्क्रमणादिकार्यप्रतिरोध इति शङ्कते—रोध इति । तुशब्दः केवलाकाशाद्विशेषद्योतकः । एवं सति निण्क्रमणादेरन्यथासिद्ध्या निर्मूलं नभःकल्पनमित्यभिप्रायेणाह—तदभवनेति । न हि निष्क्रमणादेराकाशं समवायि; देहादिक्रियाया नभोनिष्ठत्वाभावात् । नाप्यसमवायि; द्रव्यस्य तथात्वानभ्युपगमात् समवायिकारणप्रत्यासन्नत्वायोगाच्च । निमित्तं तु ईश्वराद्यतिरिक्तमपूर्वमिह नापेक्ष्यमिति भावः ॥ ४४ ॥

आकाशानुमेयत्वभङ्गः.

---

## आनन्ददायिनी

दिकं स्यादित्यपसिद्धान्त इत्यर्थः । सच्छिद्रत्वाभावप्रसङ्गादिति क्वचित्पाठः । तदा तस्य सरन्ध्रकुड्यादेराकाशात्मकच्छिद्रवत्त्वं न स्यादित्यर्थः । सहकारीति । कुड्यस्य प्रतिबन्धकतया तदभावोऽपि कारणमित्यर्थः । अन्यथासिद्ध्येति । अपेक्षणीयकुड्याभावेनेत्यर्थः । (ननु)कुड्याद्यभावस्य निमित्तत्वेऽपि समवायादिसापेक्षतया तत्सिद्धिरित्यत्राह—न हीति । अथवा तदेवोपपादयति—न हीति ॥ ४४ ॥

आकाशानुमेयत्वभङ्गः.

---

## तत्वमुक्ताकलापः

यत्त्वाकाशोऽवकाशप्रद इति कथितं शास्त्रतस्तत्र
याऽसावन्योन्य(न्यं)स्पर्शभाजां विहतिरिह न सा

## सर्वार्थसिद्धिः

ननु शरीरादिष्वाकाशोऽवकाशदानेन उपकरोतीति तत्तच्छास्त्रसिद्धम् । अतोऽस्य निष्क्रमणादिलिङ्गत्वं ग्राह्यम्; तदिदमनुभाषते—यत्त्विति । शास्त्राभिप्रेतमस्योपकारकत्वं शिक्षयति—तत्रेति । पृथिव्यादिचतुष्कस्येव स्पर्शवत्प्रतिघातित्वमाकाशस्य नास्ति, तत्पूर्वेषामिवाहङ्कारादितत्वानाम् । अतः प्राणिसंचारादिप्रतिघातकत्वाभावादस्योपकारकत्वकथनमिति तात्पर्यं निपुणनिरूपणीयम् । न ह्याकाशेन देयमवकाशाख्यं द्रव्यान्तर-

## आनन्ददायिनी

पूर्वाक्षेपेण संगतिमाह—नन्विति । शास्त्रेति ।

शरीरेष्ववकाशं च नभः कुर्यात्तथा परः ।

इति शास्त्रसिद्धमित्यर्थः । अतोऽस्य निष्क्रमणादीति । (ननु) आकाशस्य शास्त्रसिद्धत्वात् कथं निष्क्रमणादिलिङ्गत्वमिति चेत्; न; निष्क्रमणादिलिङ्गत्वं निष्क्रमणादिकारणत्वमेवेत्यर्थः । पृथिव्यादीति । तथा च प्रतिघातकत्वाभावमात्रान्न तद्धेतुत्वमित्यर्थः । नन्ववकाशाख्यस्य कस्यचिद्द्रव्यस्य तद्धेतुत्वे तद्द्वारा तद्धेतुत्वमाकाशस्यास्तु इत्यत्राह—न ह्याकाशेनेति । नन्ववकाश इत्याकाशादिदेयद्रव्यान्तरं माऽस्तु, तथाऽपि तस्य निष्क्रमणादिहेतुत्वमवश्यं वाच्यम् । तथाच आकाश एवावकाशोऽस्तु; तथा (एवं)च आकाशस्य निष्क्रमणालिङ्गकत्वं युक्तमित्यत्राह—

## तत्वमुक्ताकलापः

**प्राज्यतत्वेष्विव स्यात् । इत्यैदम्पर्यमूह्यं; न यदि कथमिवान्येषु लभ्योऽवकाशः? सिद्धादेस्स्वप्रभा-**

## सर्वार्थसिद्धिः

मस्तीति भावः। आकाश एव तर्हि अवकाशस्स्यादित्यत्राह—न यदीति। अस्पर्शत्वाविशेषात् महदादिप्रदेशानामप्यवकाशत्वं ग्राह्यम्। ननु स्पर्शवतां मिथःप्रतिघातकत्वनियमो नास्ति; भूमावुन्मज्जति निमज्जतीत्यादिसिद्धप्रतिपादनादित्यत्राह—सिद्धादेरिति। अनेन जन्मौषधिमन्त्रतपस्समाधिभूतसिद्धिमतां तत्तदुपष्टब्धानां च संग्रहः। जलदृष्टान्तेन विभज्य प्रवेशनं पुनश्शीघ्रसंभेदश्च सूच्यते। केचित्तु—सिद्धादीनां प्रभावविशेषेण

## आनन्ददायिनी

आकाश एव तर्हीति। आकाशाभावस्थलेऽप्यवकाशसत्त्वान्नाकाशस्यावकाशत्वम्। अप्रतिघातकत्वमात्रेणाकाशस्य तत्त्वे महदादीनामपि तथात्वात्तत्त्वप्रसङ्गादि(ङ्ग इ)ति भावः। ननु—

सिद्धयोगस्तदा(था)भूमावुन्मज्जति निमज्जति।

इति योगरहस्यादावुक्तेः स्पर्शवद्द्रव्यस्यापि प्रतिघातकत्वनियमो नास्तीत्याशङ्क्य परिहरति—ननु स्पर्शवतामिति। तदुपष्टब्धानामिति। तादृशोपष्टम्भवतां (दृगौषधवतां) तदनुगृहीतानां चेत्यर्थः। विभागसम्भेदौ विनैव विवक्षा(पक्षा)न्तरमाह—केचित्त्विति ॥ ४५ ॥

अवकाशनिरूपणम्.

———

## तत्वमुक्ताकलापः

**वाज्जल इव कथितो(कठिने)युज्यते मज्जनादिः ॥ ४५**

## सर्वार्थसिद्धिः

**भूम्यादिषु प्रवेशप्रतिघात एव नास्तीति मन्यन्ते, काचादिषु नीरन्ध्रेषु नयनप्रभादेरिवेति ॥ ४५ ॥**

अवकाशनिरूपणम्.

---

अत्र केचिच्चार्वाकास्सौगताश्च प्राहुः—'चत्वार्येव भूतानि । आकाशस्त्वावरणाभा(व एव)वः । स च निस्स्वभावः; तुच्छतयैवोपलम्भात् । य(त्र चा)त्रावरणं न तत्राकाशः; अभित्त्वा दुर्दर्शत्वात् । भेदे त्वावरणाभावस्यैव सिद्धेः । यदि (च)तत्राकाशस्स्यात् निरवकाशं न किञ्चित्स्यात् । अतो घटतदभावन्यायादावरणेष्वसत्त्वादयमावरणाभावः । तदिह शून्यधातुसंज्ञिते च निस्तत्वेऽप्यावरणाभावे खपुष्पादिषु तत्तच्छब्द-

## आनन्ददायिनी

आक्षेपसंगतिं दर्शयति—अत्र केचिदिति । तुच्छतयेति । शून्यतयेत्यर्थः । आवरणाभावत्वे युक्तिमाह—यत्रावरणमिति । अभित्त्वेति । आवरणे सत्यनुपलम्भादावरणाभावस्यैवावकाशत्वादिति भावः । घटतदभावन्यायादिति । विरोधित्वादपि आकाशावरणयोर्भावाभावरूपतेत्यर्थः । नन्वाकाशस्य शून्यत्वे तत्राकाशादिशब्दानां व्युत्पत्तिग्रहो न स्यात्; सर्वत्र सत्ये(सत्य ए)व व्युत्पत्तिग्रह इत्यत्राह—तदिहेति । भ्रान्तिसिद्धेषु खपुष्पादिशब्दव्युत्पत्तिग्रहवत् भ्रान्तिसिद्धे तस्मिन् तच्छब्दस्य तद्ग्रह इत्यर्थः । नन्वारणाभावरूपत्वमेवाशङ्कितम्; न च तथात्वे

## सर्वार्थसिद्धिः

वत् मिथ्याजले मृगतृष्णिकादिशब्दवच्च व्यामोहैकनिबन्धना व्योमादिशब्दाः । अत्र नञुपश्लेषाभावादसद्रूपतातिरस्कारः । अत्र च तलत्वविपुलत्वमलिनत्वादिकमध्यासमन्तरेण न कथञ्चिदप्युपपद्यते । प्रतियोगिगतानां च स्मर्यमाणानां गृह्यमाणेऽस्मिन्नध्यासः । अस्ति चा(असति चा) (नचा)सौ सिद्धः ; दुःखाभावे सुखाभिमानात् आलोकाभावे नीलत्वबह (शब) लत्वाद्यध्यासस्य वैशेषिकादिभिरङ्गीकारात् शशशृङ्गं तीक्ष्णमित्यादिशब्दजन्याध्यासदृष्टेश्च । वदन्ति च—'शब्दज्ञानानुपाती

## आनन्ददायिनी

तुच्छता ; घटाभावस्य तुच्छत्वाभावात् तुच्छत्वे च सप्रतियोगिकत्वायोगा (त्वाभावा)दिति चेन्न ; तन्मते चतुर्धातुव्यतिरिक्तस्य तुच्छत्वात् । आवरणाभावत्वोक्तिः तस्य भावत्वनिरा(निरासार्था)सपरा, न तु नैयायिकादिवत्पारमार्थिकाभावपरा । तुच्छत्वे च सप्रतियोगिकत्वमविरुद्धम् । असतोऽत्यन्ताभाव इति मते तुच्छस्याभावप्रतियोगित्ववत् केवलान्वय्यभाववच्चे(वदि)ति ध्येयम् । ननु तर्हि अभावरूपतया पदात्प्रतीतिस्स्यादित्यत्राह—अत्रेति । सद्रूपताभ्रान्तिरित्यर्थः । नञ एवासत्त्वबोधकत्वादिति भावः । नन्वारोपे बाधनियमात् तदभावे कथमारोपरूपत्व(रूपवत्त्व)मित्यत्राह—तलत्वविपुलत्वादिकमिति । प्रत्यक्षबाधाभावेऽपि यौक्तिकबाधोऽस्त्येवेति भावः । नन्वभावे(नभसि) कथं भावधर्माध्यास इत्यत्राह—अस्ति चासाविति । वदन्तीति । बौद्धा इति शेषः । शब्दज्ञानानुपाती—शब्दज्ञानस्य शब्दश्रवणस्य आनुपाती अनन्तरभावी—वस्तुशून्यः—शून्यवस्तुविषयकः—विकल्पः सविकल्पक इत्यर्थः । 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि'

## तत्वमुक्ताकलापः

**सद्रूपेणैव भानान्न (बोधान्न) भवति वरणाभाव-मात्रं विहायः**

## सर्वार्थसिद्धिः

वस्तुशून्यो विकल्पः' इति, 'एष वन्ध्यासुतो याति' इत्यादि च(षु)। अतो नास्त्येव नभ इति तत्राह—सद्रूपेणेति। अयं भावः—सर्वं हि वस्तुजातं संविद्व्यवस्थाप्यम्! संविद्यते च भावरूपतयैव नभः। भावान्तरमेवाभाव इति स्थापयिष्यते। अन्यथाऽपि ब्रूमः—नाभावस्य निस्स्वभावता; अभावस्वभावतयैव तत्सिद्धेः। स्वान्यस्वभावतया सिद्धिस्तु न कस्यापि। न च स्वेन स्वभावेन सिद्धस्य परस्वभावविरहादसत्त्वम्! अति-

## आनन्ददायिनी

इति न्यायादिति भावः। तदुदाहरति—एष इति। आदिशब्देन 'शशशृङ्गधनुर्धरः' इत्यादिवाक्यशेषसंग्रहः। ननु नञुपश्लेषाभावमात्रेण सद्रूपेण प्रतीतावपि तलत्वादिवत् शशशृङ्गादिवच्च तुच्छता स्यादित्युक्तस्य नोत्तरमित्यत्राह—अयं भाव इति। ननु भावरूपत्वाभवात्तद्रूपतया भानं भ्रम इति चेत्; तत्राह—भावान्तरमिति। तथाच अभावत्वे (बुद्धे)ऽपि भावत्वबुद्धेर्न भ्रमत्वमिति भावः। अन्यथाऽपीति—भावादभावस्यान्यत्वेऽपीत्यर्थः। यदुक्तमाकाशस्यावरणाभावत्वान्निस्स्वभावत्वमिति; तदयुक्तमित्यत्राह—नाभावस्येति। नन्वभाव (स्वभाव)त्वेपि भावस्वभावत्वाभावान्निस्स्वभावतेति चेत्; तत्राह—स्वान्येति। घटादीनामपि स्वान्यपटादिस्वभावत्वाभावान्निस्स्वभावतापात

## सर्वार्थसिद्धिः

प्रसङ्गात्। उक्तं च न्यायभाष्ये—'असच्चासदिति गृह्यमाणं तथाभूत(तं विद्यमान)मविपरीतं तत्वम्' इति। तुच्छतयैवोपलब्ध्या(ब्धस्या)पि निरस्तं निस्स्वभावत्वम्। तुच्छता ह्यभावप्रतियोगित्वं अभावत्वं वस्त्वन्तरशून्यत्वं अन्यद्वा किञ्चित्? न प्रथमः; स्वकालादिषु सतामभावप्रतियोगिनां यथाप्रमाणं ततत्स्वभावविशिष्टत्वात्। न द्वितीयः; दत्तोत्तरत्वात्। न तृतीयः; ईदृशतुच्छत्वस्य स्वरूपाविरोधिनः सर्वत्र सुलभत्वात्। न चतुर्थः; अस्मन्मतविरोधिनस्त्वदिष्टस्य कस्यचित् कुत्रचिदप्यसिद्धेरिति। यत्तु—आवरणेष्वाकाशो नास्तीति; तदसत्; त्वदुक्तयुक्त्यैव तात्सिद्धेः। अभित्त्वा दुर्दर्शत्वं हि व्यव-

## आनन्ददायिनी

इति भावः। असच्चेति। अभावत्वेन गृह्यमाणं तथाभूतं अविपरीतं च तत्वं तादृशस्वभावं वस्तु न निस्स्वभावमित्यर्थः। तत्र किं तुच्छमेव निस्स्वभावत्वम् उत तदन्यन्निस्स्वभावत्वम्, इति विकल्पे प्रथमस्य सिद्धसाधनग्रासात् द्वितीयं विकल्प्य प्रथमं दूषयति—न प्रथम इति। स्वकालादिषु तत्तत्स्वभाववदभावप्रतियोगिषु व्यभिचार इति भावः। दत्तोत्तरत्वादिति। अभावस्वभावतयैवेत्यनेनेत्यर्थः। ईदृशेति। सिद्धसाधनमिति भावः। न चतुर्थ इति। (तत्)किमस्मन्मताविरोधि उताविरोधि, इति विकल्पमभिप्रेत्य आद्ये तन्न बाधकमिति, द्वितीये(त्व) सिद्धिः, तादृशस्य त्वादिष्टस्य निस्स्वभावत्वसाधकस्य कस्यचित् तुच्छपदा(शब्दा)ख्यस्य कुतश्चिदपि प्रमाणादसिद्धेरित्यर्थः। यत्तु—आकाशस्यावरणाभावत्वसाधनार्थं उपलम्भानुपलम्भोप(सदनं)न्यसनम्; तद्दूषयितुमनुभाषते—यत्त्विति। तात्सिद्धिमेवोपपादयति—अभित्त्वेति। नन्वभावेऽपि

## सर्वार्थसिद्धिः

हितत्वात् । अत एव तत्र नास्तीति न नि(श्चाय्यम्)र्धायम् । भित्वा तु प्रेक्ष(क्ष्यमा)णे नभस्तत्र दृश्यत एव । नचात्रावरणाभावमात्रोपलम्भः! इहावरणं नास्तीति साधिकरणस्य तस्योपलम्भात् । इहाकाश इतिवत् स्वात्मन्येव भेदोपचारात्स्यादिति चेन्न; बाधकाभावात् । अधिकरणानवस्थाप्रसङ्गो बाधक इति चेन्न;

## आनन्ददायिनी

दुर्दर्शत्वमुपपद्यत इति कथं तस्य साधन(क)त्वम्? इत्यत्राह—अत एवेति । कुड्यादौ दुर्दर्शदशायामाकाशमत्रास्ति न वेति सन्देहस्य दर्शनादभावत्वे प्रतियोगिनिश्चयेन सन्देहो न स्यादिति भावः । तथा च आकाशो नावरणाभावः आवरणवत्तया निश्चयसमानकालीनतदधिकरणधर्मिकसंशयविषयत्वात्; यत् यद्वत्तया निर्णयसमकालीनतदधिकरणसंशयविषयः स न तदभावः यथा रूपस्य रस इत्यनुमानमावरणाभावस्य आकाशभावाद्भेदे प्रमाणमिति ध्येयम् । प्रत्यक्षमपि प्रमाणयति—नभस्तत्रेत्यादिना । अन्यथासिद्धिमाशङ्कते—इहाकाश इति । बाधकाभावादिति—अन्यथा भूतले घट इत्यादावुप(वप्युप)चारप्रसङ्ग इति भावः । अधिकरणानवस्थेति—तथा सति आकाशस्याप्यधिकरणं तस्याप्यधिकरणान्तरं तस्यापीत्यनवस्थेत्यर्थः । ननु मास्तु साधिकरणतयोपलम्भनियमः; साधिकरणतयोपलम्भमात्रमधिकरणसाधकं स्यात्; नच नियमोऽपि साधककोटौ प्रविष्टोऽप्रयोजकत्वात्; अन्यथा घटादीनामप्यधिकरणासिद्धिप्रसङ्गात् इति चेत्; अत्राहुः—इहाकाश इति व्यपदेशमात्रमुपदेशमात्रादपि भवति; नचावरणाभावादपि तथा; अभावस्याधिकरणसापेक्षत्वात् तत्र नोपचारः । किञ्चाभावप्रतीतावधिकरण-

## सर्वार्थसिद्धिः

आकाशादेस्सा(देस्तद)धिकरणतयैवोपलम्भ इत्यनभ्युपगमात् । इहाकाश इतिवदित्यत्र चाकाशशब्देन आवरणाभावविवक्षायां पक्षदृष्टान्तभेदाभावः; त्वदनभ्युपगतस्य परमतासिद्धस्य त्वया दृष्टान्तीकर्तुमयुक्तत्वात् । प्रतिबन्दिग्रहणमात्रमिदमिति चेन्न; इह

## आनन्ददायिनी

प्रतीतिरङ्गम्; तथाच अभावात्पूर्वमेव प्रतीयमानस्याधिकरणस्य नाभावतादात्म्यमिति तत्र प्रतीतिर्भेदसाधिकैवेति नोपचार इति । अन्ये तु—इहाकाश इति बुद्धिराकाशैकदेशाधिकरणिका सामान्यविशेषाकारेण तत्तदधिकरणिका वा (न) निर्वोढुं (ढुम) शक्येति सम्भावितान्यथासिद्धिकतया नाधिकरणान्तरसाधिका । इहावरणाभाव इति बुद्धिस्तु स्वाधिकरणसाधिका । तत्र चाधिकरणमभावैकदेशः? उतावरणैकदेशस्याभावः? यद्वा आवरणाभाव एव? पक्षत्रयेऽपि सर्वस्याधिकरणत्वेन वर्णितस्याभावतया तस्याधिकरणसापेक्षतया तद्भुद्भावनवस्थापातात् अभावबुद्धिरेव न स्यात् । अभावेऽप्येकदेशादिकमनुपपन्नमित्याहुः । एके तु 'आकाशबुद्धिस्सर्वदा साधिकरणिकेति नियमो नास्ति; अभावबुद्धिस्तु साधिकरणिकेति नान(नतावदन)वस्थेत्याहुः । एतदस्वरसादेव युक्त्यन्तरमाह—इहाकाश इतिवदिति' इत्यप्याहुः । इहाकाश इति प्रतीतेरन्यथासिद्ध्युपवर्णनायोक्ते 'इहाकाश इतिवत्' इति वाक्ये इत्यर्थः । अत्र किमाकाशशब्देन आवरणाभावो विवक्षितः उत तदन्य इति विकल्प्य आद्यं दूषयति—आवरणाभाव इति । द्वितीयं दूषयति—त्वदनभ्युपगतस्येति । उभयसंमतस्य पक्षत्वं वाच्यमिति भावः । प्रतिबन्दीति—तथाच न दृष्टान्तासिद्धिर्दूषणमिति भावः ।

## सर्वार्थसिद्धि

मूर्ते वस्तुनि आकाशसंबन्ध इति प्रतीतौ विरोधाभावात्। आवरणाभावधीरपि तथैव स्यादिति चेत्; अस्त्वेवम्; तथाऽपि कदाचिदिह तारकेतिवत् निरधिकरणग(णतयाग)(गणत्ववद्ग)गनोपलम्भे तदतिरिक्तनभस्सिद्धिनिषेधः। आवरणेषु निरवकाशत्वं च विशेषणराहित्यात्। आवरणरहितमेव ह्याकाशमन्यद्वा किञ्चिदवकाशः! न त्वाकाशमात्रम्। आवरणेष्वविद्यमानतया तदभाव आकाश इतिचायुक्तम्; सर्वेषां स्वस्मिन्नविद्यमानतया स्वाभावत्वप्रसङ्गात्। यत्तु व्योमादिशब्दा व्यागोहि[illegible]न्धना इति; तदसत्; प्रमाणासिद्धे क्वचिद्वस्तुन्येव सर्वशब्दानां व्युत्पत्तेः। तद्विषयत-

## आनन्ददायिनी

आवरणाभावेति—तत्रापि मूर्तवस्तुनि सम्बन्धधीस्स्यादित्यर्थः। तथापीति—यथेह तारकेति धीस्तथा कदाचिदाकाशे तारकेति धीः। तथा च आकाशस्याधिकरणप्रतीतिनियमाभावादभावात्मकत्वे तदयोगान्निरधिकरणतया प्रतीयमानस्यावरणा(मानस्याकाशा)भावातिरिक्तत्वेन सिद्धौ तदतिरिक्तनभोनिषेधस्सम्भवति त्वत्पक्षे तु न संभवतीत्यर्थः। नन्वावरणाभावातिरिक्तत्वे आकाशस्य आवरणे सत्यपि सत्त्वात् तत्र तदभा(तदाकाशाभा)वो न स्यात् तस्यैवाकाशत्वादित्युक्तत्वादित्यत्राह—अवरणेष्विति। आकाश सत्त्वेऽपि नाकाशमात्रमवकाशः; अपि तु आवरणाभावविशिष्टमि(ष्टम्; तत्र विशिष्टं नास्ती)त्यर्थः। सर्वेषामिति—ननु आवरणेष्वविद्यमानतयेत्यत्र आवरणेषु सत्सु अविद्यमानतयेत्यर्थः। तथाच न सर्वेषां स्वाभावत्वप्रसङ्गः; स्वस्मिन्नसत्त्वेऽपि स्वाधिकरणे सत्त्वादिति चेत्; न; गोत्वाश्वत्वयोः परस्पराभावत्वप्रसङ्गात्। नच भावान्तराभाववादे इष्टप्रसङ्गः इति चेन्न; पीतत्वशङ्खत्वयोर्व्यभिचारात्।

## सर्वार्थसिद्धिः

यैव च व्यवहारात् । खपुष्पादिषु त्वयोग्यसमभिव्याहारादन्यथाधीः । मृगतृष्णादिशब्दा अपि जलाध्यासाधिकरणार्हमरीचिव्यूहविषयाः । यद्यपि तलत्वादिकमाकाशेऽध्यस्तम् ; अल्पत्वविपुलत्वा (त्वबहुत्वा)दिकं त्व(दिकं क्वचित्तत्तद)वच्छेदकभेदायत्तम् ; तथाऽपि सत्येवारोपः । यत्त्वसति दुःखाभावे सुखाध्यासो दृष्ट इति ; तदर्भकवाक्यम् । सत्येव दुःखाभावे सुखारोपात् । अभावस्य भावान्यत्वमात्रमेव ह्यसत्त्वं सिद्धम् ! तेन च स्वरूप(तेनचस्वरूपेण)सन्नेवासौ । आलोकाभावे नीलत्वाध्यासस्त्वस्मान् प्रति नोदाहर्तव्यः । अत एवाध्यस्तनैल्यमालोकाभावमात्रमेव

## आनन्ददायिनी

नच तयोरप्य(रपिपरस्वरा)भावत्वम् ; सामानाधिकरण्यधीविरोधादिति भावः । खपुष्पादिष्विति—प्रामाणिक एव व्युत्पन्नानां पुष्पादिशब्दानां भ्रान्तिजनकत्वमित्यर्थः । नन्वस्तु खपुष्पादौ यौगिकत्वात् प्रत्येकव्युत्पन्नानां समभिव्याहाराद्धीः । मृगतृष्णादिषु रूढमतिः कथमित्यत्राह—मृगतृष्णादीति । तत्रापि मरीचिकाव्यूहस्य प्रमाणसिद्धत्वादिति भावः । अल्पत्वेति—तथाच तदध्यासवचनं भ्रान्तिनिबन्धनमिति भावः । सत्त्वमेवोपपादयति —अभावस्येति । अस्मान् प्रतीति—अन्धकारस्य नीलरूपाश्रयद्रव्यतयाऽस्माभिरङ्गीकारान्न तत्र रूपाध्यास इत्यर्थः । ननु तदालोकाभावस्यापि प्रतीतेस्तत्राध्यास इति चेन्न ; तत्प्रतीतावपि तस्य नीलतया प्रतीतौ मानाभावन्नीलबुद्धेरन्धकारविषयत्वादिति भावः । अत एवेति—आभावे आरोपाभावादित्यर्थः । वस्तुतस्तु मध्याह्नेऽपि वियति विसर्पति सौरा-

## सर्वार्थसिद्धिः

**नीलं नभ इति भातीति निरस्तम्; आलोकदेशे(च) नभः प्रतीत्यनुवृत्तेः। ननु अस्मदिष्ट(ष्ट)क्षणिकत्वादिकं क्वचित्ते सिद्धमसिद्धं वा? उभयथाऽपि कथं तत्प्रतिक्षेपः? कथं वा तस्मिन् केषाश्चित् सत्यताभ्रमं निर्वक्ष्यसि? इत्थम्; एतदुत्तरक्षणवृत्तित्वाभावो हि यत्र क्वचिदन्यत्र सिद्धः! स सर्वस्मिन् कुताश्चिदारोप्यते प्रतिक्षिप्यते चेति सुस्थमेतत्। एवमन्यदपि सर्वं(अन्यत्सर्वमपि) चिन्त्यम्। शशशृङ्गं तीक्ष्णमित्यादिषु च प्रमिते शशादौ शृङ्गवत्त्वारोपः शृङ्गादौ च प्रमिते सत्याऽसत्या(सत्यसति)वा तीक्ष्णधीः इत्येताव(इत्यत)त् सहृदयहृदयारूढम्। नात्रासति किञ्चिदा-**

## आनन्ददायिनी

लोके नीलं नभ इति प्रतीतेर्ना(सावा)लोकाभावो विषयः इत्याह—आलोकेति। ननु प्रमाणसिद्ध एव सत्ये(पदार्थे)पदानां व्युत्पत्तिः। तर्हि क्षणिकादिशब्दानां व्युत्पत्तिग्रहो न स्यादिति शङ्कते—नन्विति उभयथापीति—सिद्ध्यसिद्धिव्याघातादिति भावः। तथाच सत्येव सत्यतारोपोऽस्मिंश्चासत्ये व्युत्पत्तिश्च वक्तव्येति भावः। नात्रासति सत्यतारोपो नापि तत्र व्युत्पत्तिरित्याभिप्रायेण परिहरति—इत्थमिति। उत्पत्तिकालिकघटानन्तरकालसत्त्वं मृत्पिण्डावस्थायां सदेव घटे आरोप्यते; स्वोत्पत्तिक्षणानन्तरक्षणासत्त्वमेव स्वस्मिन् निषिध्यते; तदन्यत्र सदेवेति नानुपपत्तिरिति भावः। अन्यदपि—अनिर्वचनीयत्वादिकमपीत्यर्थः। सत्याऽसत्या वेति—प्रमितस्य शृङ्गस्य तैक्ष्ण्यवत्त्वे धियस्सत्यता; तदभावे भ्रान्तिरित्यर्थः। नात्रासतीति—तथाच व्योम्नोऽसत्त्वे तस्मिन्

## तत्त्वमुक्ताकलापः

**संसर्गाभावमात्रं (भावतास्मिन्) न च भवति यतो नास्ति संसर्गबोधः! ।**

## सर्वार्थसिद्धिः

रोप्यते । एवमनभ्युपगमे वणक्रमनिर्देशवत्स्यात् । एतेन शशस्तीक्ष्णश्रृङ्गवानित्यपि निर्व्यू(रू)ढम् । भूतेषु भाविषु च कथं भ्रम इति चेत्? कथं वर्तमानेषु? तेषां सत्त्वादिति चेन्न; स्वकाले (काल) सत्त्वस्य कालान्तरा(र)सत्त्वस्य च साधारणत्वादिति । आवरणाभावश्च सत्योऽसत्यो वा संसर्गाभावादिविभागं नातिक्रामेदिति मत्वा तत्र तत्र दूषणमाह—संसर्गेत्यादिना पद्य-

## आनन्ददायिनी

नैल्याद्यध्यासोऽनुपपन्न इति भावः । अन्यथाख्यातिमवलम्ब्य परिहार उक्तः; इदानीमख्यातिपक्षमवलम्ब्याह—एवमनभ्युपगमे इति । यथा नैरन्तर्येण प्रतीतिमात्रेण वर्णक्रमव्यवहारः; तथा शशश्रृङ्गादीनां प्रत्येकं स्वरूपतः प्रतीतानां शशश्रृङ्गं तीक्ष्णमिति व्यवहारो नात्र विशिष्टतया कस्यचित् प्रतीतिरित्यर्थः । नच नभस्सत्त्वव्यवहारोऽपि तथाऽस्त्विति वाच्यम्; असतः प्रतीत्यनर्हत्वात् । एतेन—असंसर्गाग्रहेणेत्यर्थः । ननु भूतभाविनोरसत्त्वात् तत्राध्यासो दृष्टान्तस्स्यादिति शङ्कते—भूतेष्विति । गूढाभिसन्धिः प्रतिबन्द्या समाधत्ते—कथमिति । अभिसन्धिमजानान आह—तेषामिति । अभिसन्धिमुद्घाटयति—स्वकालसत्त्वस्येति । आरोपसमकाले सत्त्वमसत्त्वं च नारोपतदभावयोः प्रयो-

## तत्वमुक्ताकलापः

**अत्यन्ताभावनाशावजननिरपि वा सत्सु तेष्वेव न स्युः**

## सर्वार्थसिद्धिः

**शेषेण; संसर्गाभावस्तावन्निरूप्यमाणः (संसर्गिनिरूप्य)संसर्गप्रतियोगितया अधिकरणप्रतियोगिभूतसंसर्गिबोधाभावे कथं बुध्येत? अत्यन्ताभावोऽपि संसर्गाभावभेद एव। यथा(च)अश्वे गोत्वस्य शशे वा शृङ्गस्य। तथाच अत्रावरणं नास्तीति साधिकरणा(णभूता)**

## आनन्ददायिनी

जकम्; अपि तु सत्त्वमात्रम्; तच्च भूतभाविनोरस्त्येव प्रामाणिकत्वात्। तथा च न त्वदभिमतासत्त्वारोपः कुत्रापि; इयांस्तु विशेषः—भूतभाव्यधिकरणकभ्रमो न प्रत्यक्षः; किं तु व्याप्त्याद्यादिज्ञानमूल इति। निरूप्यमाणः—ज्ञायमानः। संसर्गिनिरूप्यः—सबन्धिनिरूप्यः। अधिकरणप्रतियोगीति—तत्प्रतीतिनियतप्रतीतिक इत्यर्थः। तथाच अधिकरणप्रतियोगिभिन्नो(प्रतियोगिनोः)यस्संसर्गः तत्प्रतियोगिकतया (तत्प्रतीतिपूर्वकतया) अभावप्रतीतेस्तद्बुद्ध्यभावेऽभावबुद्धिर्न स्यादित्यर्थः। केचित्तु—प्रतियोग्यधिकरणसंसर्गप्रतियोगिकत्वमेव संसर्गाभावस्य; तेनैव विरोधात्। तत्प्रतियोगिकत्वमेव (तद्बलादेव) घटादिप्रतियोगिकत्वमि (त्वव्यवहारइ)त्याहुः। सामान्यतो दूषणमुक्त्वा अत्यन्ताभावादिविकल्पमुखेन विशिष्य दूषणमाह—अत्यन्ताभावोऽपीति। तथाच आकाशस्यात्यन्ताभावत्वे इहाकाशे तारकेति निराधिकरणाकाशधीर्न स्यादित्यर्थः। ननु खपुष्पं नास्तीति खपुष्पाभावप्रतीतौ प्रतियोग्यधिकरणसंसर्गप्रती-

## सर्वार्थसिद्धिः

भाव(साधिकरणभूत)धीरनिवा(रपरिहा)र्या। खपुष्पवदावरणानामत्यन्तासत्त्वे तु शून्यवादश्शरणम्। वर्तमानेषु चावरणेषु तत्प्रध्वंसप्रागभावौ दुर्वचौ। तौ हि किमन्यत्र विद्यमानानां उताविद्यमानानाम्? नाद्यः; तेषां तदुभयायोगात्। न द्वितीयः; तत एव; न हि शशे शृङ्गस्य नाशप्रागभावौ! तदिह सर्वावरणनाशादिकं दुर्वचम्; असंभवात्। कतिपयावरणनाशादिकं चावरणदेशेऽप्यस्तीति

## आनन्ददायिनी

त्यपेक्षा नास्त्येव ; तद्वदत्रापि स्यादित्यत्राह—खपुष्पवदिति । तथाच प्रतीयमानानामावरणानामत्यन्तासत्त्वे पदार्थमात्रस्यात्यन्तासत्ता स्यादिति आवरणानां सत्त्वं वाच्यमेव ; तथा च सत्प्रतियोगिकाभावप्रतीतौ अधिकरणनियम इति भावः । यद्यपि ख(खे)पुष्पं नास्ति श(शे)शशृङ्गं नास्तीति तत्रापि सत्प्रतियोगिकत्वमेव ; तथा अत्यन्तासत्त्वेऽपि तदभावप्रतीत्यभ्युपगमे अधिकरणधीनैयत्यमस्त्येव ; तथाप्यभ्युपगम्योक्तमिति ध्येयम् । दुर्वचत्वमेवोपपादयति—तौ हीति । अविद्यमानानां—तुच्छानामित्यर्थः । तेषामिति—प्रतियोगिकाले ध्वंसप्रागभावयोर्विरोधादित्यर्थः । तत एवेति । अविद्यमानत्वादेवेत्यर्थः । अविद्यमानत्वं तुच्छत्वम् । प्रतियोगिनोऽसत्त्वेऽपि तौ भवेतामित्यत्राह—न हीति । शृङ्गस्य—शशशृङ्गस्य । नन्वावरणन्यायेन तावभावौ(भावाभावौ)भवेतां विरोधाभावादित्याशङ्क्य यत्किंचिदावरणाभावो नाकाशं, अपि तु यावदावरणाभावसमूहः ; अन्यथा कुड्यादावपि यत्किंचिदावरणाभावसत्त्वात्तद्धीप्रसङ्गात् । तथा च यत्किंचिदावरणस्य सर्वकालेऽपि सत्त्वेन(विद्यमानतया) तद्ध्वंसप्रागभावासम्भवात्तद्घटितयावदभावासंभव इत्याह—तदिहेति ।

## तत्वमुक्ताकलापः

**तादात्म्याभावसिद्धिः कथमपि न भवेत्तंतमर्थं विहाय ॥ ४६ ॥**

## सर्वार्थसिद्धिः

तत्रापि निष्क्रमणादिप्रसङ्गः। ननु संसर्गे तु विधिरेकेनापि; तन्निषेधस्तु सर्वप्रतियोगिकः; तद्वदत्रापि सर्वावरणाभावे व्योमधीः स्यात्; न; असंभवस्योक्तत्वात्। एवं सति च संसर्गाभाव एव नामान्तरेणोच्यते। तत्र च दत्तमेवोत्तरम्। अस्तु तर्ह्यावरणतादात्म्याभावोऽसौ स्यात्। स ह्यसिद्धप्रतियोगिकतया स्वयमप्यसिद्धः। तदात्मनश्चाकाशस्य तुच्छत्वं युक्तमिति; तत्राह—तादात्म्येति। चो दूष्यसमुच्चये। श्रुत्यादिविरोधरूपदूषणसमुच्चये वा। असिद्धप्रतियोगिकत्वमस्य क्वचिदपि तादात्म्यपदार्थाभावाद्वा, आवरणद्वयस्य तदभावाद्वा? नाद्यः; अभावप्रतियोगिकत्वेन तत्कल्पनस्यासिद्धिप्रसङ्गात्। न हि क्वचित्सि-

## आनन्ददायिनी

आशयमविदित्वा शङ्कते—नन्विति। असंभवस्योक्तत्वादिति। सर्वेषां ध्वंसप्रागभावानामेकदैकत्र सत्त्वे सत्येकप्रतियोगिसंसर्गबोधादपि धीः स्यात्; तदेव न संभवतीत्युक्तमित्यर्थः। एवं तर्ह्यत्यन्ताभाव एवास्त्वित्राह—एवं सति चेति। असिद्धप्रतियोगिकतयेति। प्रतियोग्यधिकरणयोस्तादात्म्यस्य तुच्छत्वात् तुच्छप्रतियोगिकाभावस्य तुच्छत्वादित्यर्थः। तदात्मनः—तादृशाभावात्मनः। दूष्यं—संसर्गाभावादि। श्रुत्यादीति। आकाशाद्वायुरित्यादिभिर्भावरूपत्वमित्यर्थः। अभावेति। प्रतियोगित्वधर्मस्य तद्वृत्तित्वायोगादिति भावः। अन्यथा गगनसूने सौरभादिप्रसङ्गात्। तदेवोपपादयति—न हीति। असिद्धप्रतियोगिकत्व-

## सर्वार्थसिद्धिः

द्धिमनपेक्ष्य कस्यचिदपि कल्पना! माध्यमिकमतोत्थानप्रसङ्गात् । नोत्तरः; संसर्गाभावस्याप्यसिद्धप्रतियोगिकत्वापातात् । न ह्येतत्कालीनैतद्भूतलघटसंसर्गो निषिध्यमान इहान्यत्र च सिद्धः! घटसंसर्गमात्रं यत्र क्वचित्सिद्धमिति चेत्; घटतादात्म्यमपि तथैव। अस्तु तर्ह्युभयत्राप्यसिद्धप्रतियोगिकत्वम्; किं नश्छिन्नमिति चेन्न; अतिप्रसङ्गस्योक्तत्वात् । अत्यन्ताभावोऽप्यसिद्धप्रतियोगिक इति पक्षश्च निरस्तः ।

तत्र तत्र स्वतादात्म्यं सिद्धमन्यत्र कल्प्यते ।
बाधकैः क्षिप्यते चेति नास्माकमिह विप्लवः ॥

सर्वत्र(च)तादात्म्याभावस्तत्तद्वस्तुनिष्ठतयैव सिध्येत्; न तु तन्मध्यादिदेशतया; यथा मिथस्संयुक्ते वियुक्ते वा सिंहे गजान्यत्वं गजे च सिंहान्यत्वमिति । इदमावरणं न भवतीति तादात्म्यनिषेधश्च कस्यचिदावरणस्य वाना(स्याना)वरणस्य वा? आद्ये विरोधः । आवरणान्तरं न भवतीति विवक्षायामविरोध

## आनन्ददायिनी

मेवोपपादयति—न ह्येतत्कालीनेति । एतत्कालिकेति क्वचित्पाठः । प्रचुरप्रयोगसत्त्वाद्वृद्ध्यभावः; (ठन्वा ।)एतत्कालीनेति पाठान्तरम् । स च तदा पूर्वकालीनवत्साध्यः । अतिप्रसङ्गस्येति । तादृशतादात्म्यस्य तुच्छत्वेन तदभावस्यावरणादेरपि सत्त्वेनाकाशधियोऽतिप्रसङ्गस्योक्तप्रायत्वादित्यर्थः । यद्वा प्रसङ्गमुक्तमतिक्रान्तमतिप्रसङ्गं तुच्छे प्रतियोगिनि प्रतियोगित्वस्य दुर्वचत्वमिति यावत्; तस्योक्तत्वादित्यर्थः । स्वपक्षं कारिकयोपपादयति—तत्रेति अन्यत्र कल्प्यत इति—आरोप्यत इत्यर्थः । सर्वत्रेति । तथाचान्तराले द्वयोरावरणयोस्तादात्म्याभावादाकाशबुद्धिरधिकमाकाशं साधयतीति भावः । आद्य इति—स्वस्य स्वापेक्षया भेदा_

## सर्वार्थसिद्धिः

इति चेत्; सत्यम्; तथाऽपि न तत्राकाशप्रतीतिविषया(प्रतीत्य-विषयत्वादा)वरणाभावसिद्धिः । द्वितीये त्वावरणान्यद्रव्यमिदं (मिदङ्कारास्पदं) सिध्यत्येव । नन्वावरणाभाव एवेदङ्कारगृहीत आवरणतादात्म्याभावाधिकरणतया बुध्यताम्; न हि तत्तद-भावयोस्तादात्म्यमिति; मैवम्; न ह्यावरणतादात्म्याभावस्या-वरणान्यत्वं बुद्ध्वा कश्चित्तत्र नभः पर्यायान् प्रयुङ्क्ते, निष्क्रमणादौ वा प्रयतत इत्यलमतिविस्तरेण । 'आकाशे चाविशेषात्' इति सूत्रभाष्ये चैतत्सर्वमनुसन्धेयमिति ॥ ४६ ॥

आकाशस्यावरणाभावमात्रत्वभङ्गः.

---

## आनन्ददायिनी

संभवादिति भावः । तथाऽपीति । तथा सति कुड्यादावावरणे सत्यप्यावरणान्तरभेदसत्त्वात्तत्राकाशबुद्ध्यादि स्यादित्यर्थः । द्वितीय इति । आवरणप्रतियोगिकभेदाश्रयस्य (येषु) द्रव्यस्यावश्यकत्वे अन्तरिक्षे प्रदेशे पृथिव्यादेरयोगादिदङ्काराश्रय आकाशस्सिद्ध इति भावः । ननु इदमावरणं न भवतीत्यत्रेदमर्थोऽप्यावरणाभाव एव न भवतीति तादात्म्याभावो भेदो नञर्थोऽपि स एवेति तादात्म्याभावास्पदत्वेन नाकाशसिद्धिरिति शङ्कते—नन्विति । तादात्म्यप्रतियोगिकाभावाश्रयो नावरणाभावे अभावा-संभवादित्यत्राह—न हीति । अनन्यगत्या भावेऽप्यभावोऽभ्युपेत्य इत्यर्थः । आवरणतादात्म्याभावस्येति । तथा सति आकाशत्वमावरणान्योन्याभावत्वं पर्यवस्यति । न च तज्ज्ञानादेवाकाशादिव्यवहारः; तथाच तदन्य आकाशा-दिपदवेदनीयः सिध्यतीत्यर्थः । 'अत्यन्ताभावनाशावजननिः' इति मूलस्यात्यन्ताभावश्च नाशो ध्वंसश्च अजननिः प्रागभावश्चेत्यर्थः ॥ ४६ ॥

आकाशस्यावरणाभावमात्रत्वभङ्गः.

---

## तत्वमुक्ताकलापः

**नित्यत्वाद्यम्बरादेर्यदि निरवयवद्रव्यताद्यैः प्रसाध्यं**

## सर्वार्थसिद्धिः

सोऽयमाकाशः सर्वव्यापी नित्यश्चेति वैशेषिकादयः । जैनास्तु तत्र लोकाकाशः अलोकाकाशश्चेति विभागमप्याहुः । मूलप्रकृतिर्विभ्वीति साङ्ख्याः । मनो विभ्विति भाट्टाः । तेषां पक्षं सहेतुकमनुभाषते—नित्यत्वादीति । नित्यत्वं व्यापित्वं च पृथक्साध्यम्; प्रत्येकं तयोरेते हेतवः; विगीतं नित्यं विभु च निरवयवत्वे सति महत्त्वात्

## आनन्ददायिनी

प्रसङ्गसंगतिमाह—सोऽयमिति ।

पङ्कलिप्तं तृणं यद्वज्जले मग्नं तदत्यये ।
ऊर्ध्वमुद्गच्छति तथा जन्तुः कर्मात्यये पुनः ॥
ऊर्ध्वमाक्रमतेऽजस्रं लोकाकाशं विहाय सः ।
सततोर्ध्वगतिर्मुक्तिरलोकाकाश ईरिता ॥
व्यापि नित्यं द्विधाऽऽकाशमेकमेव विभज्यते ।

इत्युक्तपक्षमाह—जैनास्त्विति । लोकाकाशः—जन्तुसंचारविशिष्टाकाशः । तद्रहिताकाशः—अलोकाकाशः । मूलप्रकृतिरिति । उत्तरावधिराहित्यमाहुरित्यर्थः । आदिशब्दार्थमाह—व्यापित्वं चेति । आदिशब्देन हेतुविशेषणानि हेत्वन्तराणि च विवक्षितानीत्याह—एते हेतव इत्यादिना । निरवयवत्व इति तावत्युक्ते गुणे व्यभिचारः, अतो महत्त्वादिति । तावताऽपि घटे व्यभिचारः, अत उक्तं—निरवयवेति । ननु महत्त्वं

## तत्त्वमुक्ताकलापः

**कः स्याद्बाधो विपक्षे कथमिव निगमे बाधकेऽ-**

## सर्वार्थसिद्धिः

सर्वदा निस्प(ष्प)न्दत्वे सति महत्त्वात् सर्वदा स्पर्शरहितद्रव्यत्वादित्यादयः । निरवयवेन्द्रियग्राह्यगुणत्वादित्याकाशस्यैव ; ज्ञानासमवायिसंयोगाधारत्वादिति मनस एव ; (एते) षां साधारणमप्रयोजकत्वमभिप्रेत्याह—कः स्यादिति । न ह्येतेषामनित्यत्वादौ किंचिदनिष्टं स्यात्! स्वाच्छन्द्येनानिष्टकल्पने विपरीतकल्पनस्यापि शक्यत्वात् । अक्षोभ्यं दूषणान्तरमाह—कथमिवेति । येष्वनित्यत्वमविभुत्वं च सृष्ट्यादिवाक्यै(दिवादै)स्तत्वा-

## आनन्ददायिनी

परिमाणविशेषः ; तथाच परिमाणत्वमेव गुणादौ व्यभिचारवारकमिति विशेष्यांशो व्यर्थ इति चेन्न; महत्त्वस्य जातितया परिमाणत्वाघटिततया वैयर्थ्योक्त्ययोगात्; बहुत्वे साध्ये परमाणौ व्यभिचारवारकत्वाच्चेति भावः । सर्वदेति । निस्स्पन्दत्वं क्रियारहितत्वम् । कदाचित्क्रियारहिते घटादौ गुणादौ व्यभिचारवारणं विशेषणानां द्रष्टव्यम् । सर्वदेति । पूर्ववदेव विशेषणप्रयोजनं द्रष्टव्यम् । निरवयवेति । निरवयवेन्द्रियजन्यलौकिकप्रत्यक्षविषयगुणत्वादित्यर्थः । आकाशस्येति । आकाशपक्षकानुमानस्येत्यर्थः ; मनस्यसंभवादिति भावः । एवमुत्तरत्रापि । अप्रयोजकत्वमेवोपपादयति—न ह्येतेषामिति । ननु नित्यत्वाद्यनभ्युपगमे निरवयवत्वे सति महत्त्वादिकं न स्यादिति विपक्षे बाध इत्यत्राह—स्वाच्छन्द्येनेति । अप्रयोजकत्वेन तस्य प्रयोजकत्वाभाव उक्तः सत्यप्रयोजकव्यतिरेकापादन-

## सर्वार्थसिद्धिः

न्तरावृतत्वादिवाक्यैश्च सिद्धम् । तेषु तद्विरुद्धसाधनमागमबाधितमित्यर्थः । उक्तेषु च हेतुषु निरवयवत्वं(त्वादिकं) पञ्चीकरणवा-(णत्वा)दिशास्त्रविरुद्धम् । सर्वदा स्पर्शरहितद्रव्यत्वादिति विभुत्वसाधने अणुत्वेन श्रुति(त्वेनप्र)सिद्धैर्जीवैरनैकान्त्यम् । ज्ञानासमवायिसंयोगाधारत्वमात्ममनसोरसिद्धं च ; ज्ञानद्रव्य(ज्ञाननित्य)-त्वादेर्वक्ष्यमाणत्वात् ज्ञानावस्थानां त्वा(चा)त्ममनस्संयोगासमवायिकारणकत्वाभावात् । किंचात्र नित्यत्वसाधनमाकाशादिद्रव्य-

## आनन्ददायिनी

स्यैव विपक्षबाधकता यद्युच्येत तर्ह्यनित्यत्वाभावे साध्ये इन्द्रियग्राह्यगुणत्वं न स्यादित्यापादनेन विपरिवृत्तिप्रसङ्गादिति विपरिवृत्तापादनस्यापि सुवचत्वादित्यर्थः । सृष्ट्यादीत्यादिशब्देन प्रलयग्रहः । आवृतत्वादीत्यादिशब्देन प्रकृतेरप्युत्तरावधिपरिच्छिन्नत्वप्रतिपादकवाक्यसंग्रहः । स्वरूपासिद्धिदूषणमप्याह—उक्तेष्विति । निरवयवत्वे पञ्चीकरणायोगादिति भावः । व्यभिचारमप्याह—सर्वदेति । व्याप्यत्वासिद्धिं स्वरूपासिद्धिं चाह—ज्ञानेति । ननु ज्ञानद्रव्यस्य नित्यत्वेऽपि तदवस्थानां च जन्यत्वात्तदसमवायिकारणसंयोगाधारत्वं विवक्षितमिति नासिद्धिरित्याह—ज्ञानावस्थानां त्विति । नन्वात्ममनस्संयोगस्य तदसमवायिकारणत्वाभावेऽपि ज्ञानद्रव्यमनस्संयोगोऽसमवायिकारणमस्तु ; तथा स एव हेतुः, ज्ञानद्रव्यमेव दृष्टान्तोऽस्त्विति चेत् ; आत्मज्ञानद्रव्यसंयोगो वा आवश्यकप्राणमनस्संयोगो वा असमवायिकारणमस्तु ; मनस्संयोगः कारणमित्यत्र मानाभावात् । न च विनिगमकाभावात्सर्वेषां संयोगानामसमवायिकारणत्वं; तथाच नासिद्धिरिति वाच्यम् ; तर्हि व्यभिचारापातात् । इदं ज्ञानस्य अनित्यत्वाङ्गीकारेऽपि समानम् । वस्तुतस्तु समवायिकारणाभावादसम-

## तत्वमुक्ताकलापः

त्रानुमा स्यात् । बाधः सामान्यदृष्टया श्रुतिसम-
धिगते नैव कुत्रापि शक्यः तेनामूर्तत्वलिङ्गान्न

## सर्वार्थसिद्धिः

पक्षीकारेण वा? आकाशत्वाद्यवस्थापक्षीकारेण वा? आद्ये सिद्धसाध्यता। द्वितीये तु स्वानभ्युपगतपक्षीकारो न युक्तः। श्रुत्यैव तदङ्गीकारे तयैव बाधः। अनुमानेन श्रुतिबाधे तु हैतुकप्रलापैः श्रुतिप्रामाण्यस्य निश्शेषोच्छेदप्रसङ्गमभिप्रेत्याह—बाध इति। प्रत्यक्षविरोधरहितानन्यपरश्रुत्या यथावदधिगतेऽर्थे येनकेनचित्सामान्यतो दृष्टेन बाधशङ्कायां 'श्रौतहिंसा न धर्मः हिंसात्वात्' 'विगीतमस्थि पवित्रं अस्थित्वात् शङ्खवत्' इत्यादेरपि प्रसङ्गः स्यादिति भावः। उक्तं दूषणं प्रकृ(प्रस्तु)ते पक्षे साध्यान्तरविषयहेत्वन्तरेष्वपि दर्शयति—तेनेति। आकाशो न

## आनन्ददायिनी

वायिकारणमेव नस्तीति ध्येयम्। द्वितीये त्विति। तथाच परस्याश्रयासिद्धिरपि दोष इति भावः। ननु प्रसाध्याङ्गस्याप्यनुमानस्य संभवान्न दोष इति चेन्मैवम्; अवस्थायाः प्रसाधनं नानुमानेन; लिङ्गाद्यभावात्; तथाच श्रुत्यैव वाच्यम्। तया जन्यत्वविनाशित्वबोधेनानित्यतयैव सिद्धेर्बाध इत्याह—श्रुत्यैवेति। ननु श्रुतेरेवानुमानतो बाधः किं न स्यादित्यत्राह—अनुमानेनेति। निश्शेषोच्छेदप्रसङ्गमेव दर्शयति—प्रत्यक्षेति। विगीतमिति। पवित्रत्वेन संदिग्धनरास्थ्यादिकमित्यर्थः। साध्यान्तरविषयहेत्वन्तरं दर्शयति—आकाश इति। न स्पर्शवदिति। स्पर्शवतो वायोर्नोपादानमित्यर्थः। तेनामूर्तत्वलिङ्गान्न सृजति विमतो

## तत्त्वमुक्ताकलापः

सृजति विमतो मूर्तमित्याद्यपास्तम् ॥ ४७ ॥

प्राक्प्रत्यक्त्वादिभेदं भजतु वियदिदं भानुयोगा-

## सर्वार्थसिद्धिः

स्पर्शवदुपादानम् स्पर्शशून्यत्वात् एवं वाय्वादिकमपि न तेजः-प्रभृत्युपादानं रूपशून्यत्वात् रसशून्यत्वादित्यनुमानजातं श्रुत्या-दिविरोधादपास्तमित्यर्थः ॥ ४७ ॥

आकाशादेरनित्यत्वाव्यापित्वादि.

---

अथ पराभिमतां विश्वव्यापिनीं दिशमनभ्युपगच्छन् तत्कल्पकानामन्यथासिद्धिमाह—प्रागिति । यदि प्रागादिधी-व्यवहारसिद्ध्यै दिक्तत्त्वं कल्प्यते; तत्संप्रतिपन्नं व्योमैव भवतु; सूर्योदयाद्युपाधिभेदेन तद्विभागात्पूर्वदक्षिणपश्चिमाद्युपाधिक्लृप्ति-

## आनन्ददायिनी

मूर्तमिति—विमत आकाशादिः अमूर्तत्वस्य विभुत्वस्य लिङ्गात् साधकत्वेनाभिमतात् निरवयवत्वे सति महत्त्वादिलिङ्गात् अमूर्तं विभु न सृजति न साधयतीत्यर्थः । यद्वा—'अमूर्तत्वलिङ्गान्न सृजति विमतं मूर्तमित्याद्यपास्तम्' इति पाठः । तथाचायमर्थ—अमूर्तत्वलिङ्गं निरवयवत्वे सति महत्त्वादिकं विमतममूर्तं न सृजति न जनयति महत्त्वे सति निरवयवद्रव्यत्वादित्याद्यपास्तामित्यर्थः ॥ ४७ ॥

आकाशादेरनित्यत्वाव्यापित्वादि.

---

प्रसङ्गस्संगतिरित्याह—अथेति । दिक्तत्वानङ्गीकारे आकाशादे-रुपाधिभेदेन भेदक्लृप्तिर्गुर्वीत्यत्राह—पूर्वदक्षिणेति । अधिकादिगङ्गीकारेऽपि

## तत्त्वमुक्ताकलापः

दिग्भेदात् अस्यैवोपाधिभेदादधिकदिश इव स्तां

## सर्वार्थसिद्धिः

श्चाधिकेऽनाधिकेऽपि समाना । अप्रत्यक्षायां च दिशि प्रत्यक्षै-रुपाधिभिरवच्छेदधीर्दुर्लभा । सूर्योदयादिविशेषितातपादिभिरेव प्रागादिधीव्यवहारसिद्धौ किं तदन्यकल्पनया ? शाखाचन्द्रनया-च्चातपादेः सूर्योदया(सूर्या) देश्च संबन्धधीर्युज्येत । उपहितस्य शब्दार्थत्वान्न दिक्शब्दस्य व्योमातपादिपर्यायता स्यात् । ननु साक्षात्संबन्धरहितसंयुक्तसंयोगभूयस्त्वाल्पत्वनिबन्धने दूरासन्नप-रत्वापरत्वे तत्तत्संबन्धोपनायकव्यापक(सं)द्रव्ययोगमन्तरेण कथं स्यातामित्यत्राह—अस्यैवेति । न हि त्वया कल्प्यमानमपि दिक्त्वं तदुपाधियोगमन्तरेण परत्वापरत्वे जनयेत्; तथा सति

## आनन्ददायिनी

सूर्योदयास्तमयादितस्तद्भेदक्लृप्तिरवर्जनीयेत्यर्थः । अप्रत्यक्षायामिति । देहाद्यवच्छिन्नेश्वरस्योपाधिप्रत्यक्षमात्रेण प्रत्यक्षा(क्षत्वा)दर्शनाद्दिशोऽपि नोपाधिप्रत्यक्षमात्रेण प्रत्यक्षतेत्यतिरिक्तदिक्पक्षेऽपि प्रागादिप्रत्यक्षव्यवहार उपाधिमात्रविषय इति भावः । ननु आकाशस्याप्यस्मन्मते प्रत्यक्षतया कथं प्राच्यादिबुद्धेरुपाध्यवच्छिन्नतद्विषयताऽस्त्वित्यत्राह—सूर्योदयादीति । शाखाचन्द्रेति । परम्परासम्बन्धधीरित्यर्थः । ननु व्योमादीनामेव दिक्त्वे व्योमादिशब्दानां दिक्शब्दपर्यायता स्यादित्यत्राह—उपहितेति । परोक्त-(पराभिहित) दिक्साधकोपपत्तिमनूद्य परिहरति—नन्वित्यादिना । नहि त्वयेति । अतिप्रसङ्गादिति भावः । तथासतीति । उपाधिसापेक्षत्व

## तत्वमुक्ताकलापः

परत्वापरत्वे। व्योमोत्तीर्णेऽपि देशे प्रभवतु तदुपा-

## सर्वार्थसिद्धिः

तैरेवोपाधिभिरुपहितं व्योमाद्येव परत्वादिसिद्धौ पर्याप्तम् । अधिकशब्देन कल्पनागौरवं सूच्यते । नन्वाकाशः परिच्छिन्न इति भवत्सिद्धान्तः । तथाच कथमाकाशरहितप्रदेशे दूरत्वादिक्लृप्तिरित्यत्राह—व्योमेति । दूरत्वादिसिद्ध्यनुगुणोपाधिमाद्भिर्महदादिभिस्तात्सिद्धिः स्यात् । व्योमोत्तीर्ण इत्युपलक्षणम्; व्योमसंपृक्तद्रव्यादिभिरपि तदुपपत्तेः । अनियमेन बहूनां दिक्क्लृप्तने गौरवं स्यादिति चेन्न; असिद्धकल्पनादनेकैरपि सिद्धैरेव निर्वाहस्य लघुत्वात् । यद्येकमेव सर्वत्र दिग्व्यवहारकारणमिष्यते तदा सर्वव्यापिना सर्वहेतुभूतेन परमात्मनैव सर्वं सिध्येत्; तस्यैव सन्तूपाधिभेदास्सहकारिणः; अथवा तत्तदुपाधयस्ताव-

## आनन्ददायिनी

इत्यर्थः । अधिकशब्देन—मूलस्थाधिकशब्देन । व्योमसंपृक्तद्रव्यादिभिरिति—तत्संपृक्तप्रकृत्यादिभिरित्यर्थः । आदिशब्देन सत्वादीनां संग्रहः । नेति—व्योमादिसम्भवस्थले व्योमादि तदुत्तीर्णस्थले तदन्यदिति अनेककल्पने गौरवमित्यर्थः । असिद्धेति—असिद्धस्य धर्मिणः कल्पने गौरवमिति भावः । नन्वेकं दिग्व्यवहारनिमित्तमेषितव्यम्; नानाभूतेष्वनुगतधर्माभावेनानुगतव्यवहारासम्भवादित्यत्राह—यद्येकमेवेति । तस्यैकत्वे कथं प्रागादिभेदः? इत्यत्राह—अथवेति । यद्वा दिगुपाधीनामेवावश्यकत्वाद्दिग्व्यवहारहेतुत्वमस्तु न तदुपहितापेक्षेति पक्षान्तरमाह—अथवेति । तेषामननुगतत्वेऽपि प्राच्यादिव्यवहाराणामननुगतत्वान्न

## तत्वमुक्ताकलापः

**ध्यन्वितैस्तत्तदर्थैः दूरत्वादिव्यवस्था स्वय(मुत)मिह विभुना ब्रह्मणा किं परैर्नः? ॥ ४८ ॥**

## सर्वार्थसिद्धिः

त्प्रत्यक्षाः ; तत्सम्बन्धो(हि)ऽपि साक्षात्परम्परया वा दूरासन्नादेर्दृष्ट एव ; तद्दृष्टया च परत्वादिसिद्धौ किं तदुपाहितगवेषणया ? कार्यविशेषाणामन्यतस्संभवे च न क्वचित्तदतिरिक्तं कल्प्यमित्यभिप्रायेणाह—किं परैर्न इति । परैः—व्यापकेश्वरव्यतिरिक्तैः उपाधिमात्रव्यतिरिक्तैर्वेत्यर्थः । नः—ईश्वरमिच्छतां गौरवभीतानां चेति यावत् ॥ ४८ ॥

ननु यद्याकाशादयः परधर्मं परत्र घटयेयुः ततः पाण्ड्यदेशस्थितेन जपाकुसुमेन पाटलीपुत्रस्थितं स्फटिकमनुरञ्जयेयुः विश्वमपि व्यामिश्रसर्वस्वभावं स्यादिति प्रसक्तिमुद्भाव्य परि-

## आनन्ददायिनी

दोषः । यद्यपि दिगिति व्यवहारोऽननुगतः ; तथाऽपि तेषामेवोपाधीनां दिग्विषयकव्यवहारहेतुत्वेन कालकृतपरत्वादिहेतुत्वेन वाऽनुगतिसम्भवादुपपन्नतरः ॥ ४८ ॥

आक्षेपसङ्गतिमाह—नन्विति । आकाङ्क्षा ह्यन्यबुद्ध्यपेक्षया परत्वापरत्वसिद्धये तत्तद्देशावयवसंयोगभूयस्त्वाल्पीयस्त्वे दूरनिकटस्थयोः पिण्डयोरासञ्जयतीत्यन्यधर्मोपरञ्जकमिति वाच्य (वक्तव्य) मित्यर्थः ।

## तत्वमुक्ताकलापः

अन्यस्मिन्नन्यधर्मान् घटयतु वियदाद्यत्र नातिप्रसक्तिः सिध्यत्कार्योपयुक्तोपनयननियमोपेततच्छक्तिक्लृप्तेः । एवं ह्येवाधिकायामपि दिशि भवतोऽतिप्रसङ्गो निषेध्यो धर्मो धर्मी च कल्प्यौ

## सर्वार्थसिद्धिः

हरति—अन्यस्मिन्निति । हेतुमाह—सिद्ध्यदिति । यथा कलमबीजस्याङ्कुरजननशक्तिकल्पनेऽपि न कोद्रवाङ्कुरजनकत्वं; दृश्यमानकार्यानुगुणकारणशक्तिकल्पनात् । तथा वियदादिष्वपि परत्वादिसिद्ध्युपयुक्तोपनायकतयैव तच्छक्ति क्लृप्तेरित्यर्थः । अत्र प्रतिबन्दिमभिप्रेत्याह—एवं हीति । नन्वधिकाया दिशस्तावदर्थत(या)यैव धर्मिग्राहकेण सिद्धिः; न तथा वियदादेः; तत्स्वरूपस्यान्यतस्सिद्धत्वादिति चोद्यं विपरीतफलमित्यभिप्रायेणाह—धर्मीति । नावश्यं धर्मिग्राहकेणैव सर्वत्र शक्तिसिद्धिः; गृहीतेष्वपि धर्मिषु तत्तत्कार्यदर्शनेन तन्नियतशक्तिक्लृप्तेः । अत एव

## आनन्ददायिनी

तत इति—अविशेषादिति भावः । यथा कलमेति—अन्यथा अङ्कुरजननशक्तिकल्पनाऽविशेषात् सर्वत्राङ्कुरजनकतापि स्यादिति भावः । अत्र प्रतिबन्दिमभिप्रेत्येति—अतिरिक्तदिक्परिकल्पनापक्षेऽपि तस्यान्यधर्मोपनायकत्वेऽतिप्रसङ्गस्समान इति प्रतिबन्दि (न्दी) मित्यर्थः । प्रतिबन्द्याः परिहारमाशङ्कते—नन्विति । विपरीतफलम्—अफलमित्यर्थः । तदेवोपपादयति—नावश्यमिति । धर्मिग्राहकमानेन सधर्मकसिद्धिर्भ-

## तत्वमुक्ताकलापः

**तव तदितरता स्यात्तु काले(समाना)स्वमानात् ॥**

## सर्वार्थसिद्धिः

**नातिप्रसङ्गः अयस्कान्तादिवत्तन्नियमात् । यन्निबन्धनस्त्वतिप्रसङ्गः स सिद्धे कल्प्येऽपि समसमाधिः । एवं स्थिते वरमुभयकल्पनादेककल्पनम् । ननु शक्तिरपि कल्प्यमाना न निराधारा कल्प्यते ; तस्मात् साधारशक्तिकल्पने शक्तिविशिष्टाधारकल्पने वा समं गौरवम्! तन्न ; यद्यपि शक्तितद्वन्तौ मिथोऽवच्छिन्नौ तथाऽपि सिद्धांशस्य कल्प्यत्वायोगादसिद्धांशनियतैव क्लृप्तिरिति विशेषसिद्धिस्स्यादिति भावः । नन्वेवं वियदादेरेव सूर्यपरिस्पन्दाद्यु(न्दप्रकर्षाद्यु) पनायकत्वसम्भवात्तदन्यः कालो न सिध्येदित्यत्राह—तदितरतेति । न हि वयं परत्वादिलिङ्गैराकाशा-**

## आनन्ददायिनी

वतु तदतिरिक्तमानेन वा धर्म (र्मि) क्लृप्तिरस्तु तत्रान्वयव्यतिरेक एव नियामकः ; अन्यथा धर्मिग्राहकस्यैवासिद्ध्या धर्मिण एवासिद्धिप्रसङ्गात् । तथा च क्लृप्तेष्वेव शक्तिकल्पनान्नातिरिक्तदिक्सिद्धिरित्यर्थः । अयस्कान्तादिवदिति—यथाऽयस्कान्तेऽयःकर्षणशक्तिरेव नान्याकर्षणशक्तिरित्यर्थः । ननु धर्मिकल्पनमुभयत्रापि सममिति शङ्कते—नन्विति । साधारणस्य कल्प्यत्वे विशेषणांशेऽपि विशिष्टकल्पनायाः प्राप्तत्वादित्यर्थः । सिद्धांशस्येति—विशिष्टकल्पना हि विशेषणमपि व्याप्नोति! नात्र विशिष्टकल्पना । विशेषणे धर्मिणि पाकादिना रूपन्यायेन विशेष्यभूतशक्तेः (शक्तिमात्रस्य) कल्पनमित्यर्थः । नन्वेवमिति—दिगादिवदित्यर्थः । ‘तदितरता स्यात्तु काले समाना’ इति मूलस्यायमर्थः—दिक्साम्याभावात्काले तदितरता—

## तत्वमुक्ताकलापः

सङ्ख्यानं तत्वपङ्क्तौ क्वचिदपि न दिशः;

## सर्वार्थसिद्धिः

व्यतिरिक्तं कल्पयामः ! किन्त्वागमिकमभ्युपेमः ; अतो न तस्या-सिद्धिरिति भावः ॥ ४९ ॥

यदि पृथक्त्वेन लोकवेदप्रसिद्धा दिगपह्नूयेत ; तथा वायु-रपि ; अस्य हि उपलभ्यमानः स्पर्शः उष्णश्शीतोऽनुष्णाशीतो वा ? त्रेधाऽपि न छान्दोग्याधीततेजोऽबन्नातिरेकस्सिध्येत् । तिर्यक्पवनमप्यदृष्टवशात्तेषामेव स्यात् । शब्दधृतिकम्पैरपि नातिरिक्तमनुमातव्यं ; तैरेव तत्संभवात् । वातोपनीततत्तद्भूता-न्तरावयवन्यायादनुद्भूतरूपतया दुर्दर्शत्वं स्यादित्यत्राह— सङ्ख्यानमिति । अयं भावः—न हि वयमप्रत्यक्षस्य वायोः

## आनन्ददायिनी

व्योमेतरतेत्यर्थः ॥ ४९ ॥

आक्षेपसंगतिमाह—यदि पृथक्त्वेनेति । उष्ण इत्यादि—उष्णतया शीततया अनुष्णाशीततयोपलभ्यमान इ(इती) त्यर्थः । छान्दोग्याधी(धिग)त इति—' हन्ताहमिमास्तिस्रो देवता ' इति छान्दो-ग्याधीतपृथिव्यप्तेजोऽतिरेकेण न सिध्येदित्यर्थः । ननु पृथिव्यादिवि-लक्षणधर्मवत्त्वादतिरिक्तस्सिध्येदित्यत्राह—तिर्यक्पवनमिति । ननु पृथि-व्याद्यन्यतमत्वे रूपवत्त्वापत्तिरित्यत्राह—भूतान्तरेति । वायू (वातो) पनीतगन्धावयवतप्तवारिगतवह्न्याद्यवयववदनुद्भूतरूपवत्त्वसंभवादित्यर्थः । ननु दिशस्तत्वपङ्क्तिपरिगणनाभावो दिक्सिद्धिबाधको न तु वायुसाधक इत्यत्राह—अयं भाव इति । 'आकाशाद्वायुः' इति तत्वपरिगणना-

## तत्वमुक्ताकलापः

कालवद्वा न भेदः कण्ठोक्तो व्याक्रियादिव्यत्र-

## सर्वार्थसिद्धिः

स्पर्शशब्दधृतिकम्पलिङ्गैस्सिद्धिरिति वदामः! येन तेषामन्यथा-सिद्धिरुच्येत; किंतु तेषु तेषु शास्त्रेषु तत्वपङ्क्तौ परिगणनात्; नैवं दिक्तत्वं गण्यत इति। अ(तः)त्र कालप्रतिबन्दिं निस्तरति—कालवद्वेति। अस्ति हि 'रूपान्तरं तद्विज! कालसंज्ञम्' इत्यादि। ननु 'दिग्देशकालेष्वस्तातिः' इत्यादिषु देशाद्भिन्ना दिक् कालवत् शास्त्रेषु व्यवह्रियते इत्यत्राह—व्याक्रियेति। प्रमाणसिद्धदिक्तत्वानुसारेण त(त्त)त्कार्यविशेषविधायिनां शास्त्राणां तत्स्वरूपनिष्कर्षे तात्पर्याभावान्न ततस्तद्विशिष्टसिद्धिरित्याशयः। अथ स्यात्; 'प्राणाद्वायुरजायत' इत्यादौ वाय्वादितत्वैस्सह दिशः पृथक् सृष्टिरुच्यते; अतस्तद्वद्दिशोऽपि तत्वान्तरत्वं स्यात्; एवं

## आनन्ददायिनी

दपि तत्सिद्धिरिति भावः। ननु 'आत्मन आकाशः' इति तत्वपङ्क्तौ कालस्या (काला) परिगणनात् तत्सिद्धिरपि न स्यादिति प्रतिबन्दिं परिहरति—अत्र कालप्रतिबन्दिमिति। ननु 'रूपान्तरं तद्विज कालसंज्ञम्' इति पौराणिकभेदव्यवहारवत् (व्याकरणे) 'दिक्छब्देभ्यस्सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इति दिशोऽपि भेदेन व्याकरणव्यवहारात् तत्सिद्धिरपि स्यादित्याशङ्कते—नन्विति। प्रमाणसिद्धेति—दिशस्तत्वान्तरत्वाभावेऽपि क्लृप्ततत्वविषयकदिग्व्यवहारमादायाप्यस्तातिविधानसंभवान्न ततोऽतिरिक्तदिक्सिद्धिरिति भावः।

## तत्वमुक्ताकलापः

**हरणमपि ह्यन्यथैवोपपन्नम् । श्रोत्रादुक्तस्तु लोक-प्रभृतिवदुदयस्तस्य तत्राप्ययो वा नैतावत्तत्वभेदं**

## सर्वार्थसिद्धिः

'दिशः श्रोत्रम्' इति तद्वदप्ययोऽपि श्रूयते इत्यत्राह—श्रोत्रादिति। लोकप्रभृतिवदिति प्रतिबन्दिवचनम् । अत्र हि 'नाभ्या आसीदन्तरिक्षम्' इत्यादिभिर्न तत्वसृष्टिश्श्रूयते ; किं तु ब्राह्मणक्षत्रिय(वैश्य-शूद्र)चन्द्रसूर्यादिव्यष्टिसृष्टिप्रकरणे अन्तरिक्षस्वर्गादि(लोक)कल्पनम् । अतो दिक्सृष्टिरपि व्यष्टिविषया न तत्वान्तरं कल्पयितुं शक्नुयादित्याह—नैतावदिति। अथापि दिशश्श्रोत्रोपात्त(स्य)व्यष्टि-विशेषत्वं स्यादित्यत्राह—न चेति। श्रौत्रतां—श्रोत्रोपादानकता-मित्यर्थः। न हि इन्द्रियाणि कस्यचिदुपादानानीति प्रागेवोक्तम् । गत्यभावादत्र विशेषः कल्प्यतामित्यत्राह—आन्यपर्यादिति । अत्र हि धिगुपाधीनां तत्तद्देवतानां वा भगवतः श्रोत्रात् चन्द्रादे-

## आनन्ददायिनी

अथापीति—उक्तानन्तर्गतत्वात् अर्था (तत्वा) न्तरं स्यादित्यर्थः । दिगुपाधीनामिति—सूर्यादीनां चक्षुरादिजन्यतया तत्प्रमाणगम्यत्वेऽपि न तेषां तेजःप्रभृत्यतिरिक्ततत्वान्तरत्वं ; तथाऽत्रापीति भावः । ननु प्रमेयसंग्रहे 'गगनस्य दिशां च त्रिवृत्करणेन रूपवत्वं ; अतश्चाक्षुषं सर्वम्' इति दिशः पृथग्गणनमस्ति । तथा वरदविष्णुमिश्रैः—'द्रव्यं च षड्विंशतिविधम्—सत्वरजस्तमांसीत्यारभ्य दिग्द्रव्यं पृथगेव संख्यातम् । आकाशकालदिशश्चक्षुरिन्द्रियेणेति चाक्षुषत्वं चोक्तम् ।

## तत्वमुक्ताकलापः

**गमयति न च तच्छ्रौत्रतामान्यपर्यात् ॥ ५० ॥**

## सर्वार्थसिद्धिः

**रिव सृष्टिस्स्यात्; अतस्तत्वान्तरकल्पनं निर्मूलमित्यर्थः ॥ ५० ॥**

**दिश आकाशादावन्तर्भावः**

---

## आनन्ददायिनी

तथा सूत्रकारानिरस्तत्वाच्च तत्त्वान्तरमिति शङ्कामुपसंहारव्याजेन निराकरोति—अत इति। अयं भावः— न तावत्प्रमेयसंग्रहानुरोधात्तत्वान्तरत्वं पञ्चीकृतभूतारब्धत्वप्रतीत्या महदादिवत्तत्वान्तरत्वायोगात्। नापि वरदविष्णुमिश्रवाक्यबलात्तत्वान्तरत्वम्; भाष्यविरुद्धसत्वादिद्रव्यपरिगणनवत् तत्वान्तरत्वसाधकत्वाभावेन अन्यपरतया नेतव्यत्वात्, नापि सूत्रकारानिरस्तत्वात्तत्वान्तरम्; 'न वायुक्रिये पृथगुपदेशात्। इत्यधिकरणे पृथक् सृष्ट्याद्युपदेशवतोऽपि प्राणस्य वाय्वन्तर्भावोक्तेः। तन्न्यायस्य दिगादावपि समत्वेन पृथग्दर्शनार्थत्वादिति। नैतावत्तत्वभेदं गमयतीति मूलस्य एतावत्तत्वभेदं गमयतीति वाक्येन किमुच्यते? इत्युक्ते अप्ययो वेति वाक्यभेदेन योजना। 'क्षुदुपहन्तुं शक्यमिति पस्पशाभाष्यदर्शनान्न क्लीबतानुपपत्तिरिति। यद्वा—एतावद्भ्यस्तत्वेभ्यो भेदं न गमयतीत्यर्थः ॥ ५० ॥

दिश आकाशादावन्तर्भावः.

---

## तत्वमुक्ताकलापः

वातो वातीति साक्षान्मतिरितरसमा स्पर्शतो नानुमाऽसौ अन्धेऽन्येषु प्रसङ्गात्

## सर्वार्थसिद्धिः

आकाशे चिन्तिते प्रसङ्गाद्दिगन्तर्भाव उक्तः; अथाकाशानन्तरभाविनि वायौ स्वरूपतस्संप्रतिपन्ने प्रमाणविप्रतिपत्तिं निरस्यति—वातो वातीति। त्वगिन्द्रियपवनसंयोगे सति सावधानस्य वातो वातीति धीस्तावद्दुरपलपा; सा साक्षात्काररूपा क्षित्यादिधीसमत्वादित्यर्थः। यदत्र गुणेन गुण्यनुमानमाहुः; तत्प्रतिषेधति—स्पर्शत इति। न हि गन्धादिवदिह गुणमात्रोपलम्भ इति भावः। अन्यथाऽतिप्रसङ्गमाह—अन्धे इति। अन्धे पुरुषे अन्येषु पृथिव्यादिषु भूतेषु त्वगिन्द्रियेण या स्पर्शधीस्सा स्पर्शमात्रविषया तत्तद्द्रव्यानुमितिहेतुस्स्यात्; अन्धोक्तिश्चक्षुषा

## आनन्ददायिनी

अवसरलक्षणसंगत्या वायोर्निरूपणीयत्वेन प्रसक्तौ (क्तेः) मध्ये दिङ्निरूपणस्य का संगतिरित्याशङ्कां परिहरन्नवतारयति—आकाशे इति। ननु वायुस्वरूपे विवादाभावात् तत्र निरूपणीयं किमित्यत्राह—अथेति। अनुमानतस्सा धीरस्त्वित्यत्राह—सेति। क्षित्यादिधीवत् वायुं स्पृशामीत्यनुव्यवसायादिति भावः। अन्यथेति—गुणमात्रोपलम्भे इत्यर्थः। तदेवोपपादयति—त्वगिन्द्रियेणेति। इष्टापत्तिं परिहरति–

## तत्वमुक्ताकलापः

**न पुनरगमकं स्पर्शनं रूपशून्ये । अन्याक्ष-ग्राह्यताद‍ृग्विधगुणविरहो ह्यन्यदक्षं न रुन्धे**

## सर्वार्थसिद्धिः

द्रव्यग्रहणनिवृत्त्यर्था । उपलक्षणमेतत् अन्धतमसमध्यस्थस्य; सालोकेऽपि निमीलितचक्षुषश्च । नचैतद्युक्तम्? दर्शनस्पर्शनाभ्या-मेकार्थग्रहणाभ्युपगमात्; अन्यथा द्रव्यापह्नवप्रसङ्गाच्च । ननु नीरूपं कथं प्रत्यक्षम्? आत्मादीन् पश्य! कथं बाह्याक्षग्राह्यम्? रूपादीन्निरूपय! कथं स्पर्शनवेद्यम्? स्पर्शमेव परामृश! इत्यभि-प्रायेणाह—न पुनरति। तथाऽपि नीरूपद्रव्यं कथं बाह्येन्द्रिय-ग्राह्यम्? त्वगिन्द्रियग्राह्यं वा? इत्यत्राह—अन्याक्षेति। इन्द्रि-याणां स्वग्राह्यविशेषगुणोपधानेन हि द्रव्यग्राहकत्वमिति वः क-ल्पना । ततश्चेन्द्रियान्तरग्राह्यविशेषगुणविरहेऽपि वायोस्त्वगिन्द्रि-

## आनन्ददायिनी

न चैतदिति । तेनैव द्रव्यसाधनादिति भावः । आत्मादीनिति—नीरूप-स्याप्यात्मनः प्रत्यक्षत्वदर्शनात् तेनाप्रत्यक्षत्वसाधनमनुपपन्नमिति भावः । शङ्कते—कथमिति । उत्तरमाह-रूपादीनिति । तद्बाह्येन्द्रियग्राह्यत्वा-व्याप्यमपि न भवति रूपे व्यभिचारादित्यर्थः । पुनर्विशे(पुनरपि-विशे)षव्याप्तिमभिप्रेत्याशङ्कते—कथं स्पर्शनेति । उत्तरमाह—स्पर्शमेवेति । इन्द्रियाणामिति—तथाच स्वग्राह्यगुणाभावे तदिन्द्रियग्राह्यता न स्यात्; न चात्र तदभावः! इति भावः । यदीन्द्रियान्तरग्राह्यगुणाभावाददपि

## तत्वमुक्ताकलापः

**निर्गन्धो नीरसोऽपि स्फुरति यदनलो दर्शनस्पर्श-नाभ्याम् ॥ ५१ ॥**

**सङ्ख्याद्याः स्पर्शनास्स्युः तदधिकरणकाः स्पर्शने गन्धवाहे तेषां द्रव्योपलम्भप्रतिनियतनिजाध्यक्षयोग्यत्वतश्चेत् ।**

## सर्वार्थसिद्धिः

यग्राह्यत्वमविरुद्धमित्यर्थः । यदि रूपशून्यद्रव्यत्वाद्वायुरप्रत्यक्ष इत्युच्येत; तदा रसशून्यद्रव्यत्वात्तेजोऽपि किं तथा? गन्धशून्यद्रव्यत्वाद्वा? अतोऽवादि—इन्द्रियान्तरग्राह्यविशेषगुणविरहो नेन्द्रियान्तरवेद्यत्वविरोधीति । अत्राविगीतमुदाहरणमाह—निर्गन्ध इति ॥ ५१ ॥

वायुप्रत्यक्षतायां परोक्तमनिष्टं शङ्कते—संख्येति । वायौ त्वगिन्द्रियग्राह्ये तन्निष्ठसंख्यापरिमाणादिद्वीन्द्रियग्राह्यवर्गोऽपि तेन सह त्वचा गृह्येत । तेषां—संख्यादीनाम् ।

## आनन्ददायिनी

(दप्यग्राह्यत्वम्;) इन्द्रियान्तरग्राह्यत्वमपि न स्यात् तदाऽतिप्रसङ्गमाह—यदीति ॥ ५१ ॥

आक्षेप(पिकीं)संगतिं दर्शयति—वायुप्रत्यक्षतायामिति । संख्यापारि-

## तत्वमुक्ताकलापः

**इष्टं त्वंशे नचात्मप्रभृतिषु सह ते तैः प्रसिध्यन्ति सर्वे**

## सर्वार्थसिद्धि

स्वाधारद्रव्योपलब्धियोग्यतासमानयोग्यताकत्वादित्यर्थः। अत्रांशत इष्टप्रसञ्जतामाह—इष्टमिति। उपलभ्यते ह्येका वह्निशिखा एका वारिधारेत्यादिवत् एकोऽयं वायुरीति! रन्ध्रभेदनिष्क्रान्तेषु च वायुषु सावधानं स्पृश(तो)तां द्वित्वद्विपृथक्त्वादयो भान्ति। यावता च त्वगिन्द्रियभागेन वायुस्संबध्यते तावदवच्छिन्नं तत्परिमाणं च गृह्यत एव। न हि घटादावपि त्वगिन्द्रियसंबद्धप्रदेशाभ्यधिकवर्ति परिमाणं तेन गृह्यते! स्पृष्टापसृते वायौ संयोगविभागौ स्फुटौ। एकस्मिन् शरीरे अनेकैर्वंशरन्ध्रादिभिरनेकेषु वायुस्रोतस्सु प्रवर्तितेषु तत्तदपेक्षया परत्वापरत्वे अपि सुलभे। कर्म च वातीति प्रत्ययात्। अन्यथा शरीरगतो ह स्यन्द(त्वं)नं त्वचा न गृह्येत। यस्तु वायोस्संमूर्छनाद्यवस्थासु

## आनन्ददायिनी

माणादीत्यादिग्रहणेन संयोगविभागपरत्वादिसंग्रहः। स्वाधारेति—संख्यादेः स्वाधारभूतद्रव्यप्रत्यक्षत्वयोग्यताव्यापकप्रत्यक्षत्वयोग्यताकत्वादित्यर्थः। वायुगतसंख्यादिमात्रपक्षीकारे अंशत इष्टापत्तिरित्याभासत्वं तर्कस्येत्याह—अत्रांशत इति। ननु सर्वप्रदेशावच्छेदेनापि परिमाणं गृह्यते सन्निकृष्टत्वादित्यत्राह—न हीति। अन्धकारस्थह्रस्वा(ह्रस्वदीर्घा)दिस्तम्भैकदेशस्पर्शे अयमस्मादधिकपरिमाणवान्न वेति संशयदर्शनादिति भावः। अन्यथेति—अविशेषादिति भावः। संमूर्छनं—विरुद्धगतिमतो(राभिख्येन संबन्धः)स्समूहीभावः। आदिशब्देन निरन्तरस्रोतो-

## तत्वमुक्ताकलापः

**तद्बाह्ये व्याप्तिरिष्टा यदि सततगतेरप्यसावस्तु बाह्ये॥**

## सर्वार्थसिद्धिः

सङ्ख्यादेरग्रहः स तोयादावपि समः। प्रसङ्गस्य व्याप्तिभङ्ग-मा(ङ्गस्याव्याप्तिमप्या)ह—नचेति। आत्मनि तावद्यद्यप्यहमेक इति धीस्स्यात्; तथाऽपि तत्परिमाणं न गृह्यते। अत एव ह्यणुत्वविभुत्वदेहपरिमाणत्वसंदेहः। एवमन्यदपि। तथा बाह्ये-ष्वपि द्रव्योपलम्भेऽपि द्वित्वत्रित्वाद्यग्रहो दृष्टः। उक्तव्यतिरि-क्तेष्वयं नियम इति शङ्कते—तद्बाह्य इति। सान्तर्हासमाह—सततगतेरिति। यथादर्शनं व्यवस्था त्वयाऽपि दुस्त्यजेति भावः॥

वायुप्रत्यक्षत्वम्.

---

## आनन्ददायिनी

भाव उच्यते। तोयादिवत् सजातयिसंमेलनस्य प्रतिबन्धकत्वात् राशि-वन्याद्यवयव(न्यागत)व्रीहिवृक्षादिगतसंख्यादिप्रत्यक्षव (ख्याद्यप्रत्यक्षत्वा)-दित्यर्थः। अनिष्टप्रसङ्गरूपाङ्गहानिमुक्त्वा अङ्गान्तरहानिमप्याह—प्रसङ्ग-स्येति। नन्वह(न्वात्मन्यह)मेक इति संख्याया ग्रहणात्तत्र व्यभिचारा-भावात् कथं व्याप्तिभङ्ग इत्यत्रह—आत्मनीति। तथा च संख्याव्यति-रिक्तेषु प्रत्यक्षत्वापादने आत्मगतपरिमाणा(दौ)दिषु व्याप्तिभङ्ग इत्यर्थः। मूलोक्तप्रभृतिशब्दार्थं विवृण्वन् संख्यायामपि व्याप्तिभङ्गं दर्शयति—तथा बाह्ये(ष्वपी)ष्विति। राशिसेनावनस्पतिवन्याद्यवयवगतद्वित्वादावि-त्यर्थः॥ ५२॥

वायुप्रत्यक्षत्वम्

---

## तत्वमुक्ताकलापः

### न प्राणो वायुमात्रं सह परिपठनात्

## सर्वार्थसिद्धिः

अथ राजसमहान् प्राण इति वदतः प्रतिवक्तुं प्राणस्य वायुविशेषतां विवक्षुः तत्र विशेषापह्नवं प्रतिषेधति—न प्राण इति। वायुत्वप्रसिद्ध्याऽसौ वायुमात्रमिति चेन्न; सर्वत्र सामान्यप्रसिद्ध्या विशेषत्यागप्रसङ्गात्। अयोग्ये च नानुपलम्भबाधः। श्रुतिप्राप्तं हेतुमाह—सहेति। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः' इति सृष्टिवाक्ये वायु-

## आनन्ददायिनी

राजसमहान् प्राणो देहं धत्ते वाय्वधिष्ठातेति साङ्ख्यपक्षं वायुमात्रं तत्क्रिया वा प्राण इति योगपक्षं आकाशादि पञ्चकं रजःप्रकृतिकं (शादिःरजःप्रकृतिकः) प्राण इति माय्येक(यिमतैक)देशिपक्षं च प्रसङ्गसङ्गत्या निराकरोतीत्याह—अथेति। विशेषो—वायुत्वावान्तरजातिः। अयं प्राणो वायुमात्रं वायुत्वप्रासिद्धिमत्त्वात्; यद्यत्प्रसिद्धिमत् तत्तन्मात्रं यथा समुद्रजलम्। जल(मात्र)प्रसिद्धिमज्जलमात्रमित्यनुमानमभिप्रेत्य व्या-(व्यभिचारमाह—)चष्टे—सर्वत्रेति। तेजस्त्वेन प्रसिद्धवह्न्यादेर्विशेषता न स्यादिति भावः। विशेषत्वस्य प्राणादावनुपलम्भबाध इत्यत्राह—अयोग्ये चेति। ननु बाधकाभावमात्रान्नानुपलम्भ(लब्धि) विशेषसिद्धिरित्यत्राह—श्रुतीति। सहपाठो हि नानार्थानां सामान्यविशेषार्थानां वा दृष्टो न पर्यायाणां; अतो न वायुशब्दपर्यायता प्राणशब्दस्येति। प्राणो वायुत्वातिरिक्तवायुत्व (तत्व) व्याप्यप्रवृत्तिनिमित्तकशब्दबोध्यः

## सर्वार्थसिद्धिः

प्राणयोस्सहपाठात् । न चात्र प्राणशब्दोऽन्यार्थः; अबाधे (अ)प्रसिद्धत्यागायोगात् । न च वायुसामान्ये प्राणशब्द-प्रसिद्धिः! जगत्प्राण इति समाख्या तु न तदंशस्य शक्तिं गमयेत् । देहावच्छेदमात्रेण विशेषात् पृथगुक्तिरिति चेन्न; तत्सृष्टेः-

## आनन्ददायिनी

तत्सहपठितवायुत्वा(न)तिरिक्त(वायु)वृत्तिप्रवृत्तिनिमित्तकशब्दबोध्यत्वात्। प्राणशब्दो वायुत्वातिरिक्त(धर्म)प्रवृत्तिनिमित्तकः तत्सहप्रयोगविषयत्वात् फूत्कारमन आ(फूत्कार उदका)दि(शब्द)वदिति विशेषसिद्धेरित्यर्थः । ननु (साङ्ख्योक्तरीत्या) वाय्वन्यत्वमेवास्तु! तत्राह—न चेति । प्राणो वायुरिति प्रसिद्धेर्घटो द्रव्यमिति प्रसिद्धिवद्बाधकाभावात् प्रत्यक्षतो वायुत्वस्योपलम्भाच्चेति भावः । ननु वायुप्राणशब्दौ पर्यायावेव; अत एव 'जगत्प्राणसमीरणाः' इति नामानुशासनं; सहपाठश्च कथञ्चिन्नेय इत्यत्राह—न च वायुसामान्य इति । बाह्यवायौ प्राणशब्दप्रयोगाभावात् नामानुशासनस्याश्वकर्णादिवत् विशिष्टशक्तिग्राहकस्यावयव-शक्तिग्राहकत्वाभावान्न पर्यायत्वमिति भावः । ननु प्राणशब्दस्य देहावच्छिन्नत्वाकारेण लक्षणया प्रयोगोऽस्तु; तथा च न भेदसिद्धिरिति शङ्कते—देहावच्छेदेति । तत्सृष्टेरिति—तत्सृष्ट्युक्तेरित्यर्थः । वायु-सामान्यसृष्ट्यैव तत्सृष्टेरुक्तत्वादिति भावः । न च सिद्धान्तेऽपि प्रयोजनमान्ध्यम्; प्राणत्वस्य विशेषतया तदवच्छेदेनोत्पत्तेर्ज्ञाप्यत्वात् । न चैवं शरीरावच्छिन्नत्वेनात्रापि ज्ञाप्यभेदः; शरीरावच्छिन्नवायुत्वस्य वायुत्वशरीराद्यतिरिक्तत्वाभावेन तदतिरिक्तज्ञाप्याभावात् । ननु क्रियैव प्राणः; तथा च पृथगुक्तिर्यु(क्तैव)ज्यत एव । न च प्राणो वायुरिति

## तत्वमुक्ताकलापः

**न क्रिया द्रव्यतोक्तेः तेजोवद्वा न तत्वान्तरमगणनतो**

## सर्वार्थसिद्धिः

प्रयोजनमान्द्यात् । अस्तु तर्हि वायोः क्रियाविशेषः प्राणः? स्तिमितवायौ प्राणशब्दप्रयोगाभावात् उच्छ्वासादौ प्रयोगाच्चेत्यत्राह—न क्रियेति । हेतुमाह—द्रव्यतोक्तेरिति । वायुर्द्रव्यमि(ति) त्येतावत्सिद्धम् । प्राणे च तदुक्तिस्सार्वत्रिकी । प्राणस्स्पन्दत इति च पृथग्व्यपदिशन्ति । उक्तश्च सह पाठो न तत्क्रियायाः; अग्रचप्रायनयविरोधात् । न च मनः प्रभृतीनां क्रिया तैस्सहात्र पठ्यते! इति भावः । यद्यसौ वायुविकारविशेषः; वह्निरिव तत्वान्तरं स्यादित्यत्राह—तेजोवदिति । यदि तत्वपङ्क्तौ निविष्टः प्राणः; भूतान्तरवत् पृथक् संख्यायेत; न ह्येवमसौ इत्याह—अगणनत इति । तत्वपरिगणनं च पूर्वपूर्वनियतस्वभावपरित्यागेन विकारान्तरसृष्टौ; न तु विकारमात्रे;

## आनन्ददायिनी

प्राणे वायुशब्दप्रयोगानुपपत्तिः; उपचारादुपपत्तेरिति शङ्कते—अस्तु तर्हीति । द्रव्यतोक्तिः—द्रव्यवाचकवायुशब्देनोक्तिरित्यर्थः । क्रियात्वे अनन्यथासिद्धहेत्वभावेन वायुव्यपदेशस्य औपचारिकत्वाभावादिति भावः । द्रव्यत्वे सौत्रमाह—प्राणस्स्पन्दत इति । सौत्रोपदेशशब्दस्वारस्याद्विवक्षितहेतुमाह—उक्तश्चेति । यद्यसाविति—वायुविकारत्वाविशेषादिति भावः । ननु तर्ह्यस्य वायुविकारत्वे 'चतुर्विंशा प्रकृतिः पञ्चविंश आत्मा' इत्यादिपरिगणनमयुक्तं अधिकस्य सत्त्वादित्यत्राह—तत्वपरिगणनं चेति ।

## तत्वमुक्ताकलापः

**वायुतानुज्झनाच्च। तस्माद्वातो विशेषं घनजलकर-**

## सर्वार्थसिद्धिः

'पृथिव्या ओषधय' इत्यादिषु तत्प्रसङ्गात्। प्राणे च वायुत्वं न निवृत्तम्। अतश्च न तत्वान्तरमित्याह—वायुतानुज्झनाच्चेति। तथाऽपि देहोपादानत्वावस्थापन्नो वायुः प्राणस्स्यात्; किमधिककल्पनयेत्यत्राह—तस्मादिति। अयं भावः—'यावद(द्ध्य)स्मिन् शरीरे प्राणो वसति तावदायुः'—

अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः।
प्राणापानसमायुक्तः पचामि . . . ॥'

इत्यादिषु देहात्पृथक्त्वेन प्राणवायुः प्रसिद्धः; अतो न देहोपादानवायुरसौ; किं तु योगाद्युपयुक्तशास्त्रवेद्यविशेषवान् कश्चिद्वायुरयमिति। वायुत्वानुवृत्तिव्यक्त्यै जलमयकरकानिदर्शनम्।

## आनन्ददायिनी

हेतुमाह—पृथिव्या ओषधय इति। यावद्विकाराणां परिगणनासम्भवात् परिगणननिमित्तं किञ्चित्प्रयोजकं वाच्यम्; तच्च पूर्वतत्वपरिगणननिमित्तासाधारणधर्मनिवृत्तिपूर्वकरूपान्तरं परिगणननिमित्तमाश्रयणीयमिति प्राणे स्वोपादान(गत)वायुत्वापरित्यागान्न तत्वान्तरतेत्यर्थः। तथापीति—तावता प्राणे वायुत्वप्रतीतिसहप्रयोगयोरुपपत्तेरि(त्यर्थः)ति भावः। तस्मादित्यादिना देहोपादानावस्थाविशिष्टाद्भेदाप्रतिपत्तेराह—अयं भाव इति। किन्त्विति—कुण्डल्यादियोगाद्युपयुक्तशास्त्रवेद्यवायुतिरोधिसाधन (वेद्यवायुनिरोधस्थान) विशेषवानित्यर्थः।

## तत्वमुक्ताकलापः

**कन्यायतः प्राप्य कश्चित् देहान्तर्दाशविध्यं भजति बहुविधोपक्रियो वृत्तिभेदैः ॥ ५३ ॥**

## सर्वार्थसिद्धिः

दाशविध्यं प्राणा(पाना)दिभेदैर्नागकूर्मादिभेदैश्च दशविधत्वम् । तत्तद्वृत्तिभिरुपकारप्रपञ्चस्तत्तदागमेषु ग्राह्यः । अयं चार्थो 'न वायुक्रिये पृथगुपदेशात्' इत्यधिकरणासिद्धः । 'आपो मयः प्राणः' इति तु 'अन्नमयं हि सोम्य मनस्तेजोमयी वाक्' इतिवदाप्यायनपरम् । अन्यथा अनेकशास्त्रविरोधात् ॥ ५३ ॥

प्राणस्य वायुविशेषत्वम्.

## आनन्ददायिनी

घनस्य—मेघस्य जलं घनजलं । दाशविध्यं—दशविधत्वम् । गुणवचनत्वात् ष्यञ् । प्राणादीति—अपानोदानव्यानसमाना आदिशब्दार्थः । प्राणः—प्रागननवान् हृदयवर्ती । आसनादिस्थानवर्ती अपानः अवागननशीलः । पायुस्थानो व्यानः विषवत्संचारी सर्वशरीरव्यापकः । उदानः कण्ठस्थानः । उत्क्रमणवायुस्समानः शरीरमध्यग(रावयवनाभिस्थानः) शीतपित्तादिसमीकरणपरः । नागकूर्मादिभेदैश्चेति—'कृकलदेवदत्तधनञ्जया आदिशब्दार्थः । नागः—उद्गिरणकरः । कूर्म उन्मीलनहेतुः । कृकलः क्षुधासाधनः । देवदत्तो जृम्भणहेतुः । धनञ्जयः पोषणकरः' इति योगरहस्ये शास्त्रे उपयोग उक्त इत्यर्थः । सूत्रकार एवामुमर्थं निर्णीतवानित्याह—अयं चार्थ इति । नन्वविशेषः प्राणस्यात्; तथा श्रुतेरित्यत्राह—आपोमय इति । प्रत्यक्षविरोधाभावे तदुपादानकत्वविवक्षायामाह—अन्यथेति ॥

प्राणस्य वायुविशेषत्वम्.

## तत्त्वमुक्ताकलापः

**प्राणोऽक्षं प्राणशब्दादुपकरणतया क्षेत्रिणश्चे-
त्ययुक्तम् शब्दैक्यं ह्यैकजात्यं व्यभिचरति**

## सर्वार्थसिद्धिः

अत्र कश्चिदाह—'प्राणसंवादादिष्विन्द्रियैस्सह प्राणः पठितः। प्राणशब्दश्च साधारणः प्रयुक्तः। चेतनो (क्षेत्रज्ञो) पकरणत्वं च समानम्। अतः प्राण इन्द्रियमिति'। एतदनूद्य परिहरति—प्राण इति। सहपाठमात्रं न तज्जातीयत्वसाधकमित्याभिप्रायः। प्राणशब्दवाच्यत्वं नेन्द्रियत्वसाधकमित्याह—शब्दैक्यामिति। अन्यथा अनेकार्थशब्दलोपप्रसङ्ग इति भावः। अत्र च प्राणशब्दः

## आनन्ददायिनी

प्रसङ्गसंगत्याऽऽह—अत्र कश्चिदिति। प्राणसंवादो नाम छान्दोग्ये प्रकरणविशेषः; तत्प्रायपाठात्तज्जातीयत्वमित्यर्थः। प्राणशब्दश्च साधारण इति—इन्द्रियाणां प्राणस्य च प्राणशब्दवाच्यत्वे इन्द्रियत्वमेव प्रवृत्तिनिमित्तं लाघवात्। तथाच समानवृत्तिनिमित्तकैकशब्दवाच्यत्वात्तज्जातीयत्वमित्यर्थः। किंच—प्राणादय इन्द्रियाणि चेतनोपकरणत्वात् चक्षुरादिवत् इत्यभिप्रायेणाह—चेतनोपकरणत्वं चेति। सहपाठमात्रमिति—सहपाठमात्रस्य प्रत्युत भेदकत्वमेव; अन्यथा वैयर्थ्यादिति भावः। अग्रचप्रायनयश्च सहपाठप्रयोजकधर्मातिरिक्तधर्मेण साजात्यप्रयोजको न तु तद्धर्मेणापीति भावः। एकशब्दप्रयोगविषयत्वमपि मुख्यवृत्त्या प्रयोगविषयत्वं विवक्षितम्? उतैकशक्त्या? उत प्रयोगविषयत्वमात्रम्? इति विकल्प्य आद्ये दूषणमाह—अन्यथेति। अक्षादिपदप्रयोगविषयेषु

## तत्वमुक्ताकलापः

**न च प्राणताक्षेषु मुख्या। देहस्यानक्षभावेऽप्युपकृति-रधिका तत्समाक्ष्योक्त्यदृष्टिः न प्राणे सात्विका-**

## सर्वार्थसिद्धिः

क्वचिन्मुख्यः क्वचिद्गौणः। एवमप्येकशब्दप्रयोगमात्रात्साजात्ये वैजात्यमेव जगति लुप्येतेत्यभिप्रायेणाह—नचेति। क्षेत्रज्ञोपकरणत्वस्य व्यभिचारमाह—देहस्येति। क्षेत्रज्ञोपकारकत्वं देहे (भूयसा) संदृश्यते; न तत्रेन्द्रियत्वमिष्यते। इन्द्रियशब्दप्रयोगाभावात्तत्रानिन्द्रियत्वमित्यत्राह—तत्समेति। इन्द्रियत्वोक्तेरदर्शनं देहे प्राणेऽपि समम्; अतः प्राणोऽपि नेन्द्रियमित्यर्थः। इन्द्रियलक्षणनिवृत्त्या च प्राणे तच्छब्दवाच्यत्वनिवृत्तिरित्यभिप्रायेणाह—न प्राणे इति। सात्विकाहङ्कारोपादानकत्वमेवेन्द्रियलक्षणम्;

## आनन्ददायिनी

व्यभिचार इत्यर्थः। द्वितीये आह—अत्र च प्राणशब्द इति। तथा(चा)सिद्धिरिति भावः। तृतीयं दूषयति—एवमपीति। अत्र च साजात्यं शब्दप्रवृत्तिनिमित्तमादाय वाच्यम्; अन्यथा प्रमेयत्वादिना सर्वेषां साजात्यात्सिद्धसाधनात्; तथाच सर्वशब्दानां सर्वत्र यया कयाच(न)वृत्त्या प्रयोगसंभवात् तत्तत्प्रवृत्तिनिमित्तधर्ममादाय सर्वस्यापि सर्वशब्दप्रवृत्तिनिमित्तधर्मवत्त्वे वैजात्यमुच्छिद्येत। उच्छिद्येत च पदानां वृत्त्यन्तर(लक्षणादिक)मित्यर्थः। प्राणस्येन्द्रियत्व किं क्षेत्रज्ञोपकत्वं हेतुः? उतेन्द्रियशब्दप्रयोगसहितमिति विकल्पं मनसि कृत्वा आद्यं दूषयति—क्षेत्रज्ञोपकारकत्वमिति। द्वितीयं दूषयति—इन्द्रियत्वोक्तेरिति। इन्द्रियत्वस्योक्तिः—इन्द्रियत्वप्रतिपादकवाक्—इन्द्रियशब्द इति

## तत्वमुक्ताकलापः

**हृङ्करणविकृतिता लक्षणं तद्धि तेषाम् ॥ ५४ ॥**

## सर्वार्थसिद्धिः

**परोक्तलक्षणानुपपत्तेरित्यभिप्रायेणाह—लक्षणमिति। यत्तु शरीरयोगे सत्येव साक्षात्प्रमितिसाधनं इन्द्रियमिति; अत्र कर्मेन्द्रियेष्वव्याप्तिस्तावदास्ताम्! स्वेदादिशैत्याभिव्यञ्जकव्यजनवातादेरुक्तलक्षणयोगादतिव्याप्तिर्दुर्वारा। शरीरसंयुक्तमतीन्द्रियमिति विशेषणेऽपि चाक्षुषतेजःकणानां चूर्णविक्षेपवद्विसर्पे मूलस्कन्धस्य प्रमितिसाध(क)नत्वाभावात् अग्रस्कन्धस्य शरीरसंयुक्तत्वायोगात् नोभयत्राप्येतद्विशिष्टमिन्द्रियलक्षणमस्ति। परम्परया संबन्धस्त्व-**

## आनन्ददायिनी

यावत्। तस्य प्रयोगादर्शनं तुल्यमित्यर्थः। तथा च स्वरूपासिद्धिः; लक्षणया तदुद्धारे देहेऽपि सम इति भावः। ननु प्रमितिसाधनत्वमिन्द्रियत्वम्; तच्च प्राणेऽप्यस्त्येव; प्राणस्याप्यन्वयव्यतिरेकाभ्यां मनोवत्साधनत्वादित्याह—परोक्तेति। नोभयत्रापीति—मूलाग्रस्कन्धयोः शरीरसंयुक्तस्य विषयसंयुक्तस्य चैकस्याभावादित्यर्थः। यत्प्रमितिकरणं विषयसंयुक्तोऽग्रभागः तत्(त्वं)परम्परया शरीरसंयुक्तमित्यत्राह—परम्परयेति। स्व(स्पर्श)प्रत्यक्षहेतुसंबन्धघटकवाय्वादौ त्र्यणुकपरिमाणप्रत्यक्षहेत्ववयवसंयोगद्व्यणुकादौ अतिव्याप्तमित्यर्थः। ननु साक्षाच्छरीरयोग एव विवक्षितः; स च मूलस्कन्धस्यास्त्येव। नच तस्य प्रमितिसाधनत्वाभावः! अग्रद्वारा साधनत्वादिति चेत्; उच्यते—अग्रभागस्य प्रमितिजनकत्वस्यावश्यकत्वे तज्जनकस्यान्यथासिद्धत्वान्न तस्य साधकत्वं मानाभावाच्च न

## सर्वार्थसिद्धिः

**तिप्रसञ्जकः। आद्रष्टुराचन्द्रमसश्च कश्चिच्चक्षुरिन्द्रियावयवी तदानीमेव निष्पन्न इत्यत्र न किञ्चित्प्रमाणमन्यत्र संप्रदायात्। इन्द्रियदोषवदिन्द्रियगुणाश्च शरीरसंयुक्तास्साक्षात्प्रमितिसाधकास्सन्ति। तैश्चानैकान्त्यं सुवचम्। शुद्धेष्वपि परोक्तलक्षणेषु न प्रस्तुते तत्सिद्धिरिति ॥ ५४ ॥**

प्राणस्यानिन्द्रियत्वम्.

---

## आनन्ददायिनी

तद्वारत्वमिति भावः। ननु आद्रष्टुराविषयादेकोऽवयवी जन्यते; तच्छ(च्च श)रीरसंयुक्तं प्रमितिसाधनं चेत्यत्राह—आद्रष्टुरिति। ननु भवन्मते यथा तावद्व्यापिवृत्त्युत्पत्तिः; यथा वा सौरा(द्या)लोकः; तथाऽवयव्यप्यस्त्विति चेत्; उच्यते—किमवयवि प्रमित्यन्यथानुपपत्त्या कल्प्यते? उत तेषु(उतेन्द्रिय)लक्षणनिर्वाहार्थम्? नाद्यः; आवश्यकतावद्दूरव्यापितेजोमात्रेणापि ज्ञानसंभवे तत्क्ल(तत्रक्ल)प्त्यनपेक्षणात्। न द्वितीयः; लक्ष्यानुसारित्वाल्लक्षणस्य तत्कल्पकत्वायोगात्। अनैकान्त्यं—अतिव्याप्तिरित्यर्थः। यद्वा उक्तमिन्द्रियलक्षणं न भवति; व्यावृत्तिव्यवहारयोस्साधनेऽनैकान्त्यमित्यर्थः। गुणानां संयोगाभावादतिव्याप्तिर्नास्तीत्यतो दोषान्तरमाह—प्रस्तुते इति। प्राणादेः प्रत्यक्षत्वात् तदुक्तलक्षणं नास्तीति न ततस्तेषामिन्द्रियत्वसिद्धिरित्यर्थः ॥ ५४ ॥

प्राणस्यानिन्द्रियत्वम्

---

## तत्वमुक्ताकलापः

**प्राणापानाख्यभस्त्रारभसविसृमरः प्राप्य वैश्वानराख्यां मध्येदेहं हुताशो वसति जलनिधावौर्ववत्सर्वभक्षः । तत्तद्विद्यासु वेद्यं त्व(द्यस्त्व)न इव हि**

## सर्वार्थसिद्धिः

वायोरनन्तरं वह्निनिरूपणे प्राप्ते प्राणसंगत्या वैश्वानरं तावच्छिक्षयति—प्राणेति । 'तस्य मध्ये महानग्निः' इत्यादिकमिहानुसंधेयम् । वारिनिर्वाप्यत्वानिवृत्त्यै बाडबनिदर्शनम् । प्राणवैश्वानरविचारस्य प्रधानशास्त्रार्थोपयोगमाभिप्रेत्याह—तत्तदिति। अनः—प्राणः। 'अथ यदतः परो ज्योतिर्दीप्यते' इत्यारभ्य 'इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इत्याद्यामनन्ति छन्दोगाः। प्रसङ्गात् नास्तिकयोगिजननिरासाय द्वितीयसरवक्तव्यमुपक्षिपति—

## आनन्ददायिनी

वैश्वानरनिरूपणे संगतिमाह—वायोरनन्तरमिति । प्राणविद्यायां प्राणस्येव वैश्वानरविद्यायां वैश्वानरस्य वेद्यत्वादिति भावः । प्रमाणं दर्शयति—तस्य मध्ये इति । हृदयमध्ये इत्यर्थः । काकदन्तपरीक्षावैषम्यं दर्शयति—प्राणवैश्वानरेति । तदेव शास्त्रमुदाहरति—अथ यदत इति । वैश्वानरविद्यायामामनन्तीत्यर्थः । नन्वात्मनः प्राणवैश्वानराभ्यां भेदसाधनमप्रस्तुतमित्याशङ्क्याह—प्रसङ्गादिति । मूलस्य प्राणापानाख्यो यो भस्त्रायाः—चर्मविकारस्य देहस्य रभसो—वेगयुक्तो वायुः तेन विसृमरो—व्यापनशीलस्सन् समुद्रमध्ये और्व इव देहमध्ये वैश्वानरनाम प्राप्य वसति ; स च प्राणविद्यासु प्राण इव वैश्वानरविद्यायां

## तत्वमुक्ताकलापः

परज्योतिषस्सोऽपि रूपम् नात्मानौ तौ जडत्वात्
जनिविलयमुखैर्भेदकण्ठोक्तिभिश्च ॥ ५५ ॥

धर्मो भाति प्रभैका

## सर्वार्थसिद्धिः

नात्मानाविति । अजडो नित्यो भूतभौतिकविलक्षणश्चात्मा स्थापयिष्यते ॥ ५५ ॥

प्राणवैश्वानराग्न्योस्सांगत्यमानात्मत्वंच

---

अथात्र धर्मधर्मिणोस्सजातीयत्वे निदर्शनार्थं लोकबुद्ध्यनुगुणं भाष्यस्थं प्रभानिरूपणं प्रदर्शयति—धर्म इति । प्रदीपादिधर्मभूता तद्वत् स्वयमप्येका विष्वक्प्रसृता सूक्ष्मांशुक(कादि)न्यायेन सुघटितसंघातलक्षणा प्रभा सर्वेषां भाति । तत्र मूलाग्रयो-

## आनन्ददायिनी

परज्योतिषः परमात्मनः वेद्यं रूपं—शरीरम् । तौ प्राणवैश्वानरौ जडत्वात् जनिप्रध्वंसादिमत्वाच्च नात्मानौ—जीवपरौ न भवतः ॥ ५५ ॥

प्राणवैश्वानरयोस्साङ्गत्यमनात्मत्वं च.

---

प्रभानिरूपणस्य प्रयोजनं दर्शयन् अवसरसंगतिमाह—अथात्रेति इति केचिदाहुः । प्रसङ्गसंगतिरित्यपरे । तेनात्मनो ज्ञानात्मकस्यापि ज्ञानधर्मकत्वमुच्यमानं सुगम (सुसंगत)मिति भावः । प्रदीपादिधर्मत्वैकत्वादौ प्रमाणमाह—सर्वेषामिति । भातीति सर्वलोकप्रत्यक्षं तत्र प्रमाणमिति भावः । तत्र मूलाग्रयोरिति—अवच्छेदकभेदेन वृक्षे संयोग-

## तत्त्वमुक्ताकलापः

**बहुलविरलता(द्य)तत्र दृष्टानुसारात् सा दीपांशा विशीर्णा इति यदि बहुधा कल्पनागौरवादिः । रत्नादीनां स्थिराणां विशरणविहतेर्निष्प्रभत्वादि**

## सर्वार्थसिद्धिः

बहलत्वविरलत्वोष्णत्वानुष्णत्वाद्युपलम्भस्तत्तद्वस्त्वन्तरेष्विव नैक्यबाधक इत्यभिप्रायेणाह—बहलेति । अन्यथा स्थूलमूलत्वादिना दीपादिष्वपि नैक्यं सिध्येदिति भावः । अवयवविशरणवादमनूद्य प्रतिवक्ति—सेति । विशरणाक्रिया तत्स्वभावानां वेगवतां तेजोऽवयवानामनुपशान्तवेगानामेव संभूय किञ्चिदुद्गमनेन दीपाद्यवयव्यारम्भणं घनीभूतानामनन्तरक्षणे विशरणं ऊर्ध्वगमनशीलानां च तेषां तत्तदंशतश्च तिर्यगूर्ध्वमधश्च प्रसरणं तादृशप्रसरणहेतुवैचित्र्यं बहुलविरलत्वादिसिद्धयै केषां चिद्वेगातिशयः इत्याद्यनुपलब्धविविधार्थकल्पनागौरवं प्रसज्य(ज्येत)ते । आदिशब्देन सर्वलोकापलम्भशास्त्रविरोधसंग्रहः । बाधकान्तरमाह—रत्नादीनामिति।

## आनन्ददायिनी

तदभावयोरिवाविरोधान्नैकत्वबाधकतेति भावः । यद्यवच्छेदभेदेन विरोधपरिहारो न स्यात्; तदा बाधकमाह—अन्यथेति । विशरणं—विशीर्णता । गौरवमुपपादयति—विशरणक्रियेत्यादिना । बहलाविरलत्वादीति—दीपसामीप्ये बहलत्वं दूरे विरलता । तत्सिद्धिश्च सर्वावयवानां तुल्यवेगत्वे न स्यादित्यर्थः ।

प्रभा भासयते (चार्थान्) सर्वान् यथैका दीपसंश्रिता ।

## तत्वमुक्ताकलापः

**च स्यात् तेजस्तत्सप्रभाकं तिमिरहरतया साऽपि तेजोविशेषः ॥ ५६ ॥**

## सर्वार्थसिद्धिः

प्रत्यभिज्ञाविषयप्रधानोदाहरणतया प्रसिद्धेषु स्थिरतरेषु रत्नादिषु प्रतिक्षणविनाशोऽवयवविशरणं च न कल्पयितुं शक्यम्। अतस्तेषु त्वदुक्तप्रकारेण प्रभोत्पत्तिकल्पनायोगान्निष्प्रभत्वप्रसङ्ग इत्यर्थः। परिशेषतः स्वाभिमतमाह—तेज इति। उक्तानुपपत्त्या दीपादितेजः प्रभाविशिष्टमेवोत्पद्यत इत्यर्थः। ननु प्रभाद्रव्यं न तत्वपङ्क्तौ गण्यते; तद्बहिर्भावश्चापसिद्धान्तः; अन्तर्भावश्च न वायुपर्यन्तेषु रूपवत्त्वात्। न तोयपृथिव्योः; रसगन्धादिराहितत्वात्। न तेजसि; तद्धर्मतयाऽभ्युपगमात्। अतो विशीर्णतेजोऽतिरिक्ता प्रभा नास्तीत्यत्राह—तिमिरहरतयेति। तिमिरहरत्वं तेजस्त्वमात्रे हेतुः। विशेषशब्दस्तु प्रतीतिसिद्धावा-

## आनन्ददायिनी

इति शास्त्रम्। नन्विति—अतिरिक्तत्वानुपपत्तौ उ(त्वमनभ्युपेत्यो)क्तान्तर्भावस्य वक्तव्यत्वे प्रकारान्तरेणान्तर्भावस्य वक्तुमशक्यत्वा(र्भावस्यानुमतत्वा)दिति भावः। अवान्तरवैषम्यं—प्रभात्वम्। ननु प्रभा तेजो भवितुमर्हति तिमिरहरत्वात् दीपवदित्यत्र साध्याविशेष इत्यत्राह— तिमिरहरत्वमिति। भास्वररूपाविशिष्टतयेति—प्रकृत्यादित्वात् स्वार्थे तृतीया। तथाच भास्वररूपविशिष्टत्वात्तेजस्त्वमित्यर्थः। यद्वा तिमिरहरत्वात्तैजसमित्यत्र तैजसत्वाज्ञाने तिमिरहरत्वज्ञानं न संभवति तेजस्त्वेनैव

## तत्वमुक्ताकलापः

**भाष्ये भास्वत्प्रभादौ प्रतिहतिबहुलीभावपूर्वं**

## सर्वार्थसिद्धिः

न्तरवैषम्यव्यक्त्यर्थः। तिमिरहरत्वं चात्र भास्वररूपविशिष्टतया; न तेजस्त्वमात्रेण, अतो न साध्याविशेषशङ्का। एवं नीरसत्वे सति रूपवत्त्वादित्यपि हेतुः ॥ ५६ ॥

प्रभायाः प्रभावदवयवातिरेकतेजस्त्वे.

---

अत्र ग्रन्थान्तरसिद्धमतान्तरमाह—भाष्ये इति। करतलेना-हिमकररश्मीनां गतिप्रतिहतिः तथै(तयै)व तत्र बहलतया स्फुटो-

## आनन्ददायिनी

तिमिरहरत्वात्। तज्ज्ञाने च सिद्धसाधनं तदज्ञाने च साध्याविशेष इत्यत्राह—तिमिरहरत्वमिति। तैजसत्वसाधकमनुमानान्तरमप्याह—नीरसत्व इति। प्रभा तेजः नीरसत्वे सति रूपवत्त्वात् दीपवदिति प्रयोगः। रूपादौ जलादौ च व्यभिचारवारणाय विशेषणविशेष्ये ॥५६॥

प्रभायाः प्रभावदवयवातिरेकतेजस्त्वे.

---

ननु प्रथमसूत्रभाष्ये क्वचित् 'प्रभाप्रभावद्द्वयगुणभूता' इत्यारभ्य 'अतस्सप्रभाका एव दीपा भवितुमर्हन्ति' इति विशीर्णपक्षनिराकरणं दृश्यते। क्वचित् करतले रश्मीनां गतिप्रतिहतिः तथै(तयै)व तत्र स्फुटोपलम्भश्च। तथा च क्वचिन्नयनरश्मीनां दर्पणे प्रतिहतानां परावृत्तिश्च। तेन विशीर्णानामवयवानामेव प्रभात्वमिति गम्यते। तथा च भाष्यग्रन्थविरोधद्वयं परिहरन् स्वोक्तस्यैतद्भाष्यविरोधं परिहरति—अत्रे-

## तत्वमुक्ताकलापः

**यदुक्तं तेन स्रोतस्समाधिं परमतनयतः प्राहुरेके**

## सर्वार्थसिद्धिः

**पलम्भश्चाभाष्यत । प्रतिबिम्बनिरूपणे च नयनरश्मीनां दर्पणे प्रतिहतिरुक्ता; तदेतत् प्रभाप्रभावतां सहोत्पत्तिनाशपक्षे नोपपद्यते । दृश्यते च रत्नप्रभादेरपि प्रतिघातकसन्निधौ संकोचः तदपगमे विकासश्च । अतः पाञ्चभौतिकस्य रत्नादेः पार्थिवाद्यंशेन दृढावस्थितस्यापि तेजोंऽशेन गन्धादिन्यायवता विशरणप्रसरणादिकं युज्यते । आतपवारणादिवृत्तान्तश्च वर्षवारणादिन्यायात् किरणगतितत्प्रतिघातावगमापयति । निवृत्ते चातपे क्षितिजलयोरौष्ण्योपलम्भात् तेजोंऽशविशरणसंक्रमणे गम्येते ।**

## आनन्ददायिनी

तीत्येके । आक्षेपसङ्गतिरित्येके । प्रसङ्गसङ्गतिरित्यपरे । तदेतदिति—दीपस्य प्रतिक्षणविनाशात् तेन सह प्रभाया अपि नाशात् सप्रभस्योत्पत्तिपक्षे बहुलीभावपरावृत्त्योरसम्भवादित्यर्थः । स्थिर(दृढ)तररत्नादिस्थले अवयवविशरणाभावात् प्रभा न स्या(न स्यात् तत्र विशीर्णावयवासम्भवा)दित्यत्राह—भौतिकस्येति । यथा स्थिरतरगन्धद्रव्यस्य सर्वत्र गन्धोपलम्भेनावयवविशरणं; तथाऽत्रापि विशीर्णतेत्यर्थः किरणगतीति—आतपादिगतीत्यर्थः । सहोत्पन्नत्वपक्षे युगपदेव तावद्देशव्याप्यु(व्यापितयो)त्पत्तिमतो गतिमत्त्वाभावात् गतिप्रतिबन्धकत्वलक्षणातपवारणादिव्यपदेशो न स्यादिति भावः । निवृत्ते चेति—सहोत्पत्तिविनाशपक्षे विशीर्णतेजोऽवयवसंक्रमणाभावादौष्ण्योपलम्भानुपपत्तिरिति भावः । विशीर्णपक्षे आश्रयाश्रयिभावाभावात् सजातीयस्य धर्मधर्मिभावे प्रभाश्रय-

## तत्वमुक्ताकलापः

**प्रभायाम् । वस्तुन्यस्ते विक(ल्पे)ल्पैः स्फुटविघट-
नयोर्वक्तुराप्तस्य वाचोस्तात्पर्यं तर्कमानानुगुण-
मधिगुणैश्चिन्त्यमन्ते वसद्भिः ॥ ५७ ॥**

## सर्वार्थसिद्धिः

प्रभातद्वतोराश्रयाश्रयित्वादिभाषणं तु परसंमत्यैव तन्मतनिदर्श-
नम् । प्रभा हि प्रदीपादिना सह जनिध्वंसिनीति केचित् ।
तथा हि—सांख्या इन्द्रियवृत्तिनिदर्शनतया आहुः—

दीपप्रभा यथा तस्मिन् विनश्यति विनश्यति ।
तथा बहिर्गताऽप्येषा मूलच्छेदाद्विनश्यति ॥

इति। ननु विरुद्धभाषणादुभयं त्यक्त्वा सौगत(गती)गतिरिह संग्राह्ये-
त्यत्राह–वस्तुनीति । न तावदिह सिद्धे वस्तुनि विकल्पः । न च
वाक्ययोरैकार्थ्यं क्लिष्टगत्या कल्प्यं; विरोधस्फौट्यात् । आप्त-

## आनन्ददायिनी

दीपनिदर्शनं भाष्यस्थंवि रुद्ध्येतेत्यत्राह—प्रभातद्वतोरिति । यद्यप्ययमपि
ग्रन्थो भाष्यस्थः सप्रभोत्पत्तिग्रन्थतुल्य इति न विरोधोऽत्र परिहार्यः;
परपक्षानुसारेण परिहारस्तु सप्रभग्रन्थेऽपि समः; तथाऽपि अयं ग्रन्थो
निदर्शनार्थो यथावत्स्वीकार्योऽन्यथा सजातीयधर्मधर्मिभावो न सिद्ध्ये-
दिति यथाश्रुतार्थमभिप्रेत्य समाहितामिति ध्येयम् । केचिदित्युक्तानां
ग्रन्थमुदाहरति— दीपप्रभेति । सौगतगतिः—क्षणिकपुञ्जद्वयपक्षः ।
यद्यप्यस्मिन् (सहजनिप्रध्वंस)पक्षे बहुलीभावपरा(वप्रतिनिविष्ट)वृत्त्यादि-
मतिमत्त्वं न सम्भवति; तस्य कथंचिन्निर्वाहे सप्रभपक्ष एव श्रेयान्

## सर्वार्थसिद्धिः

वाक्ये च नोभयत्यागः। सहजक्षणिकपुञ्जद्वयपक्षस्य क्षणभङ्ग-निरासेनैव निरस्तत्वाच्च। अतोऽन्यतरवाक्यस्य अन्यपरत्वे प्राप्ते प्रमाणतर्कानुगुणं परमार्थतात्पर्यं प्रज्ञाशालिभिश्छात्त्रैः प्रति-बोद्धव्यमिति ॥ ५७ ॥

प्रभाविषयग्रन्थद्वयगमनिका.

———

ननु दीपादीनां स्थिरतया गृहीतानामपि क्षिप्रविनाशि-त्वमभ्युपगतम्; तच्च अवयवविशरणपक्ष एवोपपद्यते। तथाऽऽहुः—

अवयवविशरणलिङ्गजबोधसहायेन चक्षुषा भेदम्।
ज्वालेषु निर्णयामः . . . . . . ॥

## आनन्ददायिनी

घटादिन्यायेन तथा निर्वाहस्य मुख्यत्वात्तथोक्तमिति भावः। अत इति—विशीर्णपक्षस्य प्रत्यक्षादिप्रमाणविरोधात् बहुकल्पनागौरवप्रसङ्गात् क्षण-(णिकवाद)भङ्गनिरासेन कंचित्कालमवस्थाने विरोधाभावेन बहुली-भावसम्भवात् दीपादीनामन्यस्य विनाशेऽपि तदवयवसम्बन्धेनौष्ण्य-वदातपत्रादिवारितस्थलेऽप्यातपादिप्रभावयवसत्त्वस्य निरन्वयविनाशनि-राकरणेनाविरोधाच्च धर्मिणः स्थिरत्वे प्रभाया अपि स्थिरत्व तन्निरोधे च ह्रासः तदभावे विकासः अस्थिरदीपादौ च तत्समानकालीनप्रभागति-मत्त्वाङ्गीकाराच्च वारणादिकं च युज्यते इति पूर्वोक्त एव संमत इति तदनुरोधेन ग्रन्थो योजित इति भावः ॥ ५७ ॥

प्रभाविषयग्रन्थद्वयगमनिका

———

आक्षेपसङ्गतिमाह—नन्विति। अवयवेति—विशेषदर्शनसहित-

## तत्त्वमुक्ताकलापः

**प्राच्ये स्नेहादिनाशे चरम इव दृढोऽनन्तरं दीप-**

## सर्वार्थसिद्धिः

इति । पक्षान्तरेषु तु प्रत्यभिज्ञा दुर्बाधेत्यत्राह—प्राच्ये इति । दाह्यविनाशानन्तरं वह्निनाश इति चरमदीपादिषु दृष्टम् । इष्टं च सर्वेषाम् । प्रतिक्षणं च दीपदशादिप्रक्षयो दीपादिषु प्रत्यक्षः । प्रयोगश्च —प्राच्यस्नेहदशादिनाशः स्वानन्तरभाविस्वजनकदी-पनाशकत्वाद् दीपारम्भकस्नेहादिनाशत्वात् अन्त्यवत् इति ।

## आनन्ददायिनि

प्रत्यक्षेणेत्यर्थः । पक्षान्तरे इति—अवयवविशरणानङ्गीकारात् उत्पाद-(उत्पन्न)विनाशप्रत्यक्षस्य प्रत्यभिज्ञातोऽधिकत्वाभावात् विनाशित्वं न साधयतीत्यर्थः । दाह्यविनाशानन्तरमिति—दाह्यभूतदशाविनाशानन्तरं वह्नेर्दीपस्य विनाश इत्यर्थः । तथाचेदृशविशेषदर्शनबलाज्जात्यादि-विषयतयाऽन्यथासिद्धा प्रत्यभिज्ञा न विरोधिनीत्यर्थः । दीपदशादी-त्यादिपदेन तैलादिसंग्रहः । अनुमानतोऽपि विनाशस्सिध्यतीत्याह—प्रयोगश्चेति । दिङ्मोहादिवत् प्रत्यभिज्ञा न बाधिकेति भावः । अन्त्यस्नेहादिनाशस्य सपक्षत्वात्तद्वारणाय—प्राच्य इति पक्षविशेष-णम् । स्वानन्तरभावीति सिद्धसाधनवारणाय । स्वानन्तरभावित्वं च स्वोत्पत्त्यव्यवहितक्षणभावित्वम् । स्वजनकेति वर्त्यग्निसंयोग-(दीपान्तर) नाशमादायार्थान्तरवारणाय दीपारम्भकेति । अदृष्टादि-नाशे व्यभिचारवारणाय स्नेहेति । आदिशब्देन वर्तिनाशसंग्रहः । अन्त्यवदिति—अन्त्यस्नेहादिनाशवदित्यर्थः । दीप (भेदे नाशे) प्रत्यक्ष-

## तत्वमुक्ताकलापः

**नाशः सामग्र्यन्यान्यकार्यं न जनयति नचानेक-**

## सर्वार्थसिद्धिः

**सावधानं प्रपश्यद्भिश्च प्रवाहवद्दीपो दृश्यते । दशाग्रमारभ्य तन्मूलपर्यन्तं प्रतिकलमन्योन्यो दीपः प्रवर्तमानो निवर्तमानश्च दृष्टः। प्रयोगान्तरमभिप्रेत्याह—सामग्रीति । द्वितीयादिस्नेहादिसामग्रीदीपजनिका अविकलदीपजनकजातीयसमुदायत्वात् आद्यवत्; अन्यथा प्रथमाऽपि नोत्पादयेत्; तथाच जितं चार्वाकैः । नन्वस्तु प्रतिक्षणदीपारम्भः; प्रतिक्षणविनाशस्तु कुतस्त्यः? इत्यत्र पूर्वानुमानासिद्धेऽपि युक्त्यन्तरबाधमाह—नचेति । यदि द्विती·**

## आनन्ददायिनी

मुदाहरात—सावधानमिति । यथा प्रवाहः प्रबलान्य(पूर्वपूर्वजलान्य)-जलपरम्परारूपो दृश्यते; तथा पूर्वपूर्वदीपान्यदीपपरम्परावत्त्वेन भेदो (पि)दृश्यत इत्यर्थः । भेदप्रत्यक्षादपि प्रत्यभिज्ञा दुर्बलेति भावः । उत्पत्तिविनाशप्रत्यक्षमुदाहरति—दशाग्रेति । प्रवृत्तिरुत्पत्तिः । निवृत्तिर्विनाशः । प्रयोगान्तरं—अनुमानान्तरम् । आद्यादिपदेन तृतीयादीनां ग्रहणम् । द्वितीयेन वर्त्यग्निसंयोगादयो गृह्यन्ते । प्रथमे सिद्धसाधनतानिवृत्त्यर्थं पक्षविशेषणम् । अविकलं अन्यूनं—सर्वकारणमिलितामिति यावत् । वर्तितैलसमुदाये व्यभिचारवारणाय तद्विशेषणम् । घटादिसामग्र्यां व्यभिचारवारणाय—दीपजनकेति । समुदायत्वं च सामग्रीत्वम् । प्रमेयत्वेन (सजातीय) घटसामग्र्यां व्यभिचारवाणाय तत् । तथाच दीपजनकसामग्रीत्वेन सजातयित्वादित्यर्थः । आद्यवदिति—आद्यदीपजनकसामग्रीवदित्यर्थः । अप्रयोजकत्वं परिहरति—अन्यथेति । प्रथमाऽपि दीपसामग्री द्वितीयाविशेषान्नोत्पादयेदित्यर्थः । युक्त्यन्तरबाधं—

## तत्वमुक्ताकलापः

**दीपप्रतीतिः। साम्यादेस्स्यात्तु तद्धीः प्रवहणभिदुरास्सप्रभास्तत्प्रदीपाः निर्बाधा भास्करादौ प्रथयति नियतं प्रत्यभिज्ञास्थिरत्वम् ॥ ५८ ॥**

## सर्वार्थसिद्धिः

यादिक्षणे पूर्वपूर्वदीपनाशो न स्यात्; अनेकघटाद्युत्पत्तिनयाद्युगपदनेकदीपोपलब्धिस्स्यात्; न चैवमस्ति! निगमयति—साम्यादेरिति। प्रभया सहोत्पत्तिपक्षेऽप्येवं दीपादेराशुतरविनाशित्वं सिद्धम्। यत्र तु सामग्रयनुवृत्त्यादिहेतुविरहः तत्र स्थिरत्वप्रसङ्गो न दोष इत्यभिप्रायेणाह—निर्बाधेति ॥ ५८ ॥

स्तिरास्थिरतेजो विभागः.

---

## आनन्ददायिनी

अनुमानान्तरव्याप्तिमित्यर्थः। पूर्वोत्पन्नदीपो द्वितीयादिकाले नष्टः उत्पन्नत्वे सति देशान्तरासत्त्वे सति योग्यत्वे सति द्वितीयादिप्रतीतिसमयेऽप्रतीयमानत्वात् यद्देशन्तरासत्त्वे सति योग्यत्वे सति द्वितीयादिकाले न प्रतीयते तत् तत्काले नष्टं तेजः प्रतीतिकाले नष्टं यथा तमः इ(त्यनुमानान्तरं द्रष्टव्यम्)ति प्रयोगो द्रष्टव्यः। साम्यादेरित्यादिमूलस्य; तद्धीः—तदेवेति प्रत्यभिज्ञा साम्यात्—अत्यन्तसादृश्यात् स्यात्। तस्मात्—उक्तहेतोः सप्रभाः प्रदीपाः प्रवहणभिदुराः प्रवाहवत् प्रतिक्षणभिन्ना इत्यर्थः ॥ ५८ ॥

स्थिरास्थिरतेजोविभागः

---

## तत्वमुक्ताकलापः

**वर्णानां तादृशत्वादतिकठिनतया गौरवस्यापि भूम्ना धात्रीभागैः प्रभूतैः स्फुटमिह घटिता धातवो**

## सर्वार्थसिद्धिः

यत्तु हेमादेस्तैजसत्वमाहुः—'त्रपुसीसलोहरजतसुवर्णानां तैजसानां अग्निसंयोगाद्द्रवत्वमद्भिस्सामान्यम्' इति ; तत् प्रागेव पाञ्चभौतिकत्वसाधनात्प्रत्युक्तम्। विशेषतश्च परोक्तेर्भङ्गाय ब्रूमः— वर्णानामिति। हेमरूप्यादिवर्णाः पार्थिवत्वाभिमताभ्रकशुक्त्यादिसमा दृश्यन्ते। अन्यथा कथं तत्तद्भ्रमः? काठिन्यं च तेष्व-

## आनन्ददायिनी

प्रसङ्गसङ्गतिमाह--यत्त्विति । गौतमसंमतिमाह—त्रपुसीसेत्यादि । अद्भिस्सामान्यं—अप्सु सामान्यं स्वाभाविकमित्यर्थः । नैयायिकैरपि हेमादेः तेजस्संसृष्टत्वमात्रसाधनं सिद्धसाधनग्रस्तमित्याह—तत्प्रागेवेति । नन्वेवमपि वह्न्यादेस्तैजसत्वं यादृशं तादृशं साध्यत इत्याह—विशेषत इति । शुक्त्यादिसमा इति—शुक्त्यादिवर्णसमा इत्यर्थः । तथाच हेमादिवृत्तिपार्थिवं जलवृत्तित्वरहितजातिविशेषेण पार्थिवरूपसजातीयरूपवत्त्वात् अभ्रकादिवदित्यनुमानात् पार्थिवत्वमित्यर्थः । अभ्रकं स्वर्णवर्णः पार्थिवविशेषः । ननु प्रतीयमानो वर्णःशुक्त्यादिसजातीयो न भवति हेत्वासिद्धेरित्याह—अन्यथेति । तत्समत्वाभावे अभ्रकशुक्त्यादौ सुवर्णरजतादिभ्रमः सादृश्यनिमित्तो न स्यादित्यर्थः । काठिन्याच्च हेमादि पार्थिवमित्याह—काठिन्यं चेति । अभ्रकशुक्त्याद्यपेक्षयेत्यर्थः ।

## सर्वार्थसिद्धिः

धिकम्। तच्च स्वतः पृथिव्या एव। 'काठिन्यवान् यो बिभर्ति' इत्यादिदर्शनात्। गुरुत्वं च तेषुतेषु भूयिष्ठम्। तेजोमात्रे तु न तत्प्रसङ्गः। जले तु सदप्येतन्नैवं क्वचिदतिशयितम्। नचाप्यत्वं तेषामिच्छसि! तदिह पञ्चीकृतारब्धव्यष्टिप्रपञ्चे हेमादिषु पार्थिवांशः प्रभूत इति निश्चीयते। 'कथमन्यथा निष्के तु सत्यवचनम्' इत्यादि निरूह्येत? तथात्वे तैजसत्वस्मरणं कथ-

## आनन्ददायिनी

ननु काठिन्यं करकादौ व्यभिचारीति तत्राह—तच्चेति। करकादावौपाधिकमिति स्वाभाविकं काठिन्यं हेतुरित्यर्थः। पृथिव्याः स्वाभाविकतद्वत्त्वे वैष्णववचनं प्रमाणयति—'काठिन्यवान् यो बिभर्ति' इति कठिनपृथिवीशरीरकत्वेन भगवतः काठिन्यवत्त्वामिति भावः। किञ्च सुवर्णादि तैजसं न गुरुत्वाधिकरणत्वात् यत्तैजसं न तद्गुरुत्वाधिकरणमिति परिशेषात्पार्थिवत्वमित्याह—गुरुत्वं च तेष्विति। ननु परिशेषात्कथं पार्थिवत्वम्? जलस्यापि गुरुत्वात्; इत्याशङ्क्य समानपरिमाणानां (जलानां न) तारतम्यवद्गुरुत्वाश्रयत्वमित्येवम्भूतगुरुत्वं पृथिव्या एव; अन्यथा समानपरिमाणजलान्तरन्यूनाधिकगुरुत्वाधिकरणं न भवति; यथा तुल्यपरिमाणजलद्वयमिति। किञ्च स्वर्णस्याप्यत्वं तव सिद्धान्तविरुद्ध(त्वत्वमपसिद्धान्तावह)मित्याह—न चाप्यत्वमिति। ननु सिद्धान्ते हेमादस्तजोंऽशसंवलनमङ्गीक्रियते; (एवञ्च कथं तैजसत्वनिषेधः? इत्यत्राह—तदिह पञ्चीकृतेति—यद्यपि तेजोंऽशोऽपि विद्यत एव; तथाऽपि घटादिभ्योऽभिमतपार्थिवत्वेभ्यो न वैलक्षण्यमित्यर्थः। कथमन्यथेति—सर्वात्मना तैजसत्वे प्रभादाविव निष्कादिव्यवहारप्रयोजकगुरुत्वाभावात् 'निष्के तु सत्यवचनं वाच्यं नापह्नवः कार्योऽधिकदोषात्; इत्यादि-

## तत्वमुक्ताकलापः

**हाटकाद्याः । तादृक्त्वेऽपि स्फुरत्ताद्यनितरसुलभं किञ्चिदन्वीक्ष्य तज्ज्ञैः व्याख्यातं तैजसत्वं विधित-**

## सर्वार्थसिद्धिः

**मित्यत्राह—तादृक्त्वेऽपीति । स्फुरत्तादि—तेजस्समानं वर्णविशेषं स्वतश्शुद्धत्वं चेत्यर्थः । तज्ज्ञैः—तथाभूतवेदिभिः । व्याख्यातं—विशेषतः प्रकथितम् । किमर्थमित्यत्र तैजससमाख्यातेषु विधिनिषेधसाधारण्यसौकर्यार्थमित्याह—विधीति । ननु सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामत्यन्तावलुप्तद्रवत्वं दृष्टम् । न तथा हेमादौ ! ततस्तेषामपार्थिवत्वम् ? मैवम् ; एवमपि तोयान्यत्वस्य दुस्साधत्वात् । द्रवत्वविशेषात्तैजसत्वसाधने च न कश्चिद्दृष्टान्तः ।**

## आनन्ददायिनी

धर्मशास्त्रव्यवहारो न स्यादित्यर्थः । तथात्वे इति—पार्थिवत्वे इत्यर्थः । विधिनिषेधेति—'तैजसं शोधकैश्शुद्धम्' 'आयसात्तैजसं शस्तम्' 'भुञ्जीत तैजसे पात्रे एक एव श्रियं लभेत्' 'तैजसं शुध्यते नित्यम्' इति विधिः । 'न हरेत्तैजसं विद्वान्' 'तैजसं न यते(र्गृहे)र्ग्राह्यम्' 'न यतिस्तैजसे प्रात्रे' इत्यादिनिषेधः ! ननु स्वर्णं न पार्थिवं अत्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् व्यतिरेकेण सर्पिर्जत्वादिवत् इत्यनुमानात् पार्थिवत्वं बाधितमित्याशङ्कते—नन्विति । सुवर्णं नाप्यं नैमित्तिकद्रवत्वाधिकरणत्वात् जतुवत् इति जलभेदे रूपवतः परिशेषात्तैजसत्वमिति चेत् ; तत्राह—द्रवत्वविशेषादिति । ननु द्रवत्वविशेषाज्जलभेदमात्रं साध्यते ; परिशेषात्तैजसत्वं सिद्धमिति चेत् ; तत्राह—

## तत्वमुक्ताकलापः

**दितरयोस्तन्त्रसौकर्यसिद्ध्यै ॥ ५१ ॥**

## सर्वार्थसिद्धिः

**पाकजद्रवत्वेन पार्थिवत्वसाधने तु सर्पिराद्यस्ति । अलुप्तद्रवत्वं च हेमादेस्तदुपष्टम्भकपार्थिवांशेऽप्यास्ति ; अन्यथा तत्र तदानीं काठिन्यानुवृत्तिप्रसङ्गात् । अतः पक्षविपक्षमात्रवृत्तित्वाद्विरुद्धता ।**

**अवान्तरविशेषाच्च नातज्जातीयता भवेत् ।**
**अतिप्रसङ्गसाम्राज्यात् अशेषापह्नवेन वा ॥**

## आनन्ददायिनी

पाकजद्रवत्वेति । नैमित्तिकद्रवत्वेन पार्थिवत्वं साध्यते । नन्वनुच्छिद्यमानद्रवत्वाधिकरणत्वादपार्थिवत्वमिति चेत् ; तत्राह—अलुप्तेति । उपष्टम्भके पृथिव्यंशे विपक्षे पक्षे स्वर्णे च तव मते वृत्तेर्विरुद्धत्वमपीत्याह—अत इति । अयं भावः—अनुच्छिद्यमानद्रवत्वं चास्यासिद्धम् सुवर्णभस्मादिदर्शनात् । अनुच्छिद्यमानद्रवत्वेऽपि पर्थिवत्वे न किञ्चिद्बाधकम् । स्वेच्छाकल्पितभेदमात्रादपार्थिवत्वे द्रवत्वात्तैजसत्वमपि न स्यात् । यदि तेजो विशेषस्य द्रवत्वं कल्प्यते तदा लाघवादष्टगुणत्वनैमित्तिकद्रवत्वपीतरूपाद्यनुरोधात् पार्थिवविशेषस्यानुच्छिद्यमानद्रवत्वामभ्युपगन्तव्यम् । ननु पृथिवीत्वेन संप्रतिपन्नजत्वादिविलक्षणानुच्छिद्यमानद्रवत्वरूपधर्माधिकरणत्वात्पृथिवीभेद इत्यत्राह—अवान्तरेति । गुरुत्वादिभिः पृथिवीत्वे सिद्धे तद्विशेषत्वादुक्तधर्मस्य ततोऽतज्जातीयता पृथिव्यतिरिक्तजातीयता न भवेत्—न साधयितुं शक्येत्यर्थः । तत्र हेतुमाह—अतिप्रसङ्गेति । सार्पिर्जत्वादावप्येवं प्रसङ्गात् सर्वस्यापि किञ्चिद्विशेषत्वात् सर्वस्य सर्वबहिर्भावे सामान्यविशेषभावो न स्यादिति न निर्विशेषं सामान्यमिति

## तत्वमुक्ताकलापः

**नैल्याद्भौमं तमिस्रं**

## सर्वार्थसिद्धिः

न च हेमादिशब्दानां युक्तं दृष्टप्रमाणतः ।
अलोकव्यवहारार्हे कुत्रचिद्वृत्तिकल्पनम् ॥ ५९ ॥

हेमादेस्तैजसत्वोक्तितात्पर्यम्.

---

तेजोऽनन्तरे तोये विप्रतिपन्नार्थाभावात् तदुल्लङ्घनेन तमसः पृथिव्यामन्तर्भावमाह—नैल्यादिति ॥

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यात् नवभ्यो भेत्तुमर्हति ॥

## आनन्ददायिनी

सर्वव्यवहारोच्छेद इत्यर्थः । तैजसत्वे बाधकान्तरमाह—नच हेमादिशब्दानामिति । दृष्टप्रमाणत इति ल्यब्लोपे पञ्चमी । दृष्टं—प्रत्यक्षं तेन सिद्धमुपष्टम्भकं परित्यज्य लौकिकव्यवहारानर्हे वस्तुनि शक्तिकल्पनं विरुद्धमित्यर्थः ॥ ५९ ॥

हेमादेस्तैजसत्वोक्तितात्पर्यम्

---

अवसरसंगतिमाह—तेजोऽनन्तरमिति । तमसः क्रियावत्त्वात् परत्वापरत्वविभागादिगुणवत्त्वाद्द्रव्यत्वे सिद्धे स्पर्शासमानाधिकरणनील-रूपात्मकवैधर्म्यात् पृथिव्यादिनवद्रव्येभ्यो भेद इति मीमांसका आहुः । तत्र तदभिमतं पृथिव्यादिभ्यो भेदं प्रतिक्षेप्तुमनुभाषते—तमःखल्विति ।

## तत्वमुक्ताकलापः

### चटुलबहुलताद्यन्वयात्तन्न नैल्यम्

## सर्वार्थसिद्धिः

इति य एवं वदन्ति तान् प्रति उभयसंमतेन नीलत्वेन पार्थिवत्वं साध्यते ; द्रव्यान्तरकल्पने गौरवात् । अवान्तरविशेषश्च न वैजात्यहेतुरित्युक्तम् । प्रभातुल्यत्वपक्षे पित्तवदृक्प्रभापसर्पपक्षेऽपि नीलत्वाद्भौमत्वं सिद्धमेव । ये त्वाहुः—'वियति विततानां सूक्ष्माणां पृथिव्यवयवानां कृष्णो गुणस्तमः' इति ; तेषां निराधारनैल्योपलम्भोऽशक्यसाधन इत्यभिप्रायेणाह— तन्न नैल्यमिति । हेत्वन्तरमाह—चटुलेति । चटुलत्वबहलत्वविरलत्वादिकं हि द्रव्यधर्म एव । नच तदुपलम्भो नास्ति नीलोपलम्भो वा ! विश्वाविरोधात् । नचात्रालोकापसर्पणादिहेतुभेदैश्चटुलत्वमारोपितम् ! प्रत्यक्षभ्रमेषु गुणमात्राधिष्ठानत्वादृष्टेः ।

## आनन्ददायिनी

उक्तेष्वन्तर्भावप्रकारमाह—उभयसंमतेनेति । तमः पार्थिवं नीलत्वात् संमतवदित्यनुमानेऽनुकूलं तर्कमाह— द्रव्यान्तरेति । स्पर्शरहितत्वे सति रूपवत्त्वं विशेषो भेद(नभेद)क इत्याह—अवान्तरेति । केचित्तु— प्रभातुल्यं द्रव्यं तम इत्याहुः । अन्ये तु पीतश्शङ्ख इत्यादौ नयनगतपित्तद्रव्यस्येव चक्षुषःकृष्णतारस्य विसर्पिप्रभा तम इति वदन्ति । तन्मतेऽपि पार्थिवत्वमविरुद्धमित्याह—प्रभा तुल्यत्वेति । निराधारेति— सूक्ष्मत्वेन पार्थिवावयवानामुपलम्भासंभवात् (गुणस्य) धर्मिभावनियतत्वेन तदभावान्नैवमित्यर्थः । यदि विततानां पार्थिवानामेव तमस्त्वं तदा सिद्धान्तविरोधः; आतपादावभानं च कल्प्यमित्यवधेयम् । चटुलत्वं— क्रियावत्त्वम् । तदुपलम्भश्चटुलत्वाद्युपलम्भः । प्रत्यक्षभ्रमेष्विति—

## तत्वमुक्ताकलापः

**छायावत्पारतन्त्र्यं त्वयस इव मणौ दृष्टिसिद्धात्स्व-भावात् । स्पर्शाख्यातिर्न रूपं हरति हरिशिलालोक-**

## सर्वार्थसिद्धिः

**गन्धो वातीत्यादिष्वपि द्रव्याभिप्रायेण प्रयोगः । यदि स्वतन्त्र-द्रव्यं तमः तदा तद्गत्यागत्यनुविधानं कथमित्यत्राह—छायावदिति । यथाऽयस्कान्तस्थितिगत्यनुविधानं पृथग्द्रव्यस्याप्ययसो दृश्यते तथात्रापि स्यात्; यथादृष्टि स्वभावव्यवस्थापनात् । ननु पार्थिवत्वरूपवत्त्वे स्पर्शवत्त्वव्याप्ते । न च ध्वान्ते स्पर्श उपलभ्येत! अतस्ते उभे तस्य न स्त इत्यत्राह—स्पर्शाख्यातिरिति । तमस्स्पर्शस्यायोग्यत्वादित्यभिप्रायेण नीलत्वसाम्याच्च हरिशिलालोक-**

## आनन्ददायिनी

अन्यथा श्वैत्ये पीतिमत्वाद्यारोप(त्वाद्युपलम्भ)प्रसङ्गात् । नचेष्टापत्तिः! रूपप्रकारकत्वाभावप्रसङ्गात् । न च धर्मिणोऽपि भानात् पीतरूपस्यापि प्रकारता! तथाऽपि तमःप्रतीतौ नैल्यप्रकारतानुपपत्तेः । कदाचित् क्रियायामपि रूपत्वाद्यारोपप्रसङ्गे गच्छत्यपि स्वस्मिन् गमनाभावप्रतीति-प्रसङ्गः । न च नीलरूपस्यैवारोपात्तत्प्रकारताप्रतीति (तीतेरुपपत्ति ) ! प्राप्तिः! तथा सति तथा आश्रयस्यैव प्रतीतिसंभवेना(वेतथा)रोपकल्पना-योगादि(नानुपपत्तेरि)ति भावः । ननु गन्धो वातीतिवदत्रापि चटुल-(लत्वादि)धीस्स्यादित्यत्राह - गन्धेति । गन्धशब्दस्य द्रव्यपरत्वेन तत्रापि द्रव्य एव चटुलत्वधीरित्यर्थः । छायायाः द्रव्यत्वादन्यगत्यनुविधानं युक्तमित्यत्राह—यथेति । तमस्स्पर्शस्येति —इन्द्रनीलप्रभावदनुद्भूत-

## तत्वमुक्ताकलापः

**वत्तत्र चाक्ष्णोः नालोकोऽर्थ्यः ससिद्धाञ्जननयन-**

## सर्वार्थसिद्धिः

दृष्टान्तः । यन्नीलं तदालोकसहकृतचक्षुर्ग्राह्यम् । तमश्च न तथा । ततश्चाक्षुषप्रत्ययाभावे नीलत्वाभिमान इत्यत्राह—तत्रचेति । आलोकोपलब्धावालोकान्तरं न सहकारि ; तथाऽत्र स्यात् ; विषयस्य सतस्तत्र सहकारित्वमिति चेत् ; अथापि वस्तुभेदे वैरूप्यं सिद्धम् । एवं ध्वान्तेऽप्यालोकनैरपेक्ष्यं स्यात् । अलङ्घनीयानिदर्शनान्तरमाह—ससिद्धाञ्जनेति । अञ्जनविशेषसहकृतं हि चक्षुर-

## आनन्ददायिनी

स्पर्शं तम इति अस्पर्शत्वासिद्धेरित्यर्थः । चाक्षुषेति—यद्यपि तत्प्रतीतिरपि चाक्षुषीति न चाक्षुषप्रतीतिसामान्याभावस्संभवति ; विशेषाभावश्चेत् सर्वदा तमः प्रतीतिप्रसङ्गः ; तथाप्यालोकाभाव आरोपसहकारीति तमश्चाक्षुषप्रत्यया(चाक्षुषप्रतीत्यतिरिक्तचाक्षुषप्रत्यया)भावे तथा(तदा)रोप इति भाव(इतिकेचित्) इत्याहुः । वस्तुभेद इति—सर्वत्र विषयातिरिक्तालोकसापेक्षत्वानियमेऽपि तेजसि वैरूप्यमङ्गीक्रियते ; त(द्व)त्पार्थिवत्वेऽपि वैरूप्यमि(प्यमस्त्वि)त्यर्थः । यद्वा–(केचित्तु–)वस्तुभेद तमसः पार्थिवविशेषत्वानङ्गीकारेऽपि नीलरूपस्यालोकासहकृतचक्षुर्ग्राह्यत्वरूपं वैरूप्यं सिद्धमिति लाघवात् पृथिव्यन्तर्भावोऽस्त्वित्यर्थः(इत्याहुः)। यदुक्तं चाक्षुषप्रत्ययाभावेऽपि नीलत्वा(नीलिमास्तित्वा)भिमान इति ; तदयुक्तम् ; ज्ञानस्य तदभावस्य वा चाक्षुषत्वायोगात् । बाधकाभावे(च) आरोपकल्पनायोगाच्च । आलोकासहकृतचक्षुर्ग्राह्यत्वं च तमसो न पार्थिवत्वविरोधीत्याह—अञ्जनविशेषसहकृतामिति । नीलाद्यध्यासहेतु-

## तत्वमुक्ताकलापः

**दिवाभीतदृष्ट्यादिनीतेः ॥ ६० ॥**

## सर्वार्थसिद्धिः

न्धतमसेऽपि पदार्थान् दर्शयति ; तथेहापि स्यात् । तत्र सह-कार्यन्तरप्रभावादिति चेत् ; अत्राप्यालोकाभावस्य सहकारिणः प्रभावादित्यङ्गीकुरुष्व । यथा च किंचित् बहलालोकग्राह्यं किंचित् मन्दालोकेनापि ; तथा किंचिदालोकग्राह्यं किंचिन्न तथेति यथा-दर्शनं नियमः ; दृक्स्वभावाच्च । यथा दिवाभीतादिदृष्टेरालोकनै-रपेक्ष्यं तथा दृश्यस्वभावादिहापीति किं नेष्यते ? अस्त्वेवम् ! तथाऽप्यालोकमध्ये किं नोपलभ्यते ? इति चेत् ; आलोकना-श्यत्वादिति केचित् । उत्सारितत्वादित्यन्ये । मध्यन्दिनोल्काप्रका-शादिवदभिभवादित्यपरे ।

## आनन्ददायिनी

त्वेन आलोकाभावस्यासहकारित्वं तथाऽपि वाच्यम् ; तथा च लाघवानु-रोधात् तमोग्रहे सह(तत्सह)कारि भवत्वित्यर्थः । ननु विषयव्यञ्जकालो-(ञ्जकस्यालो)कस्याभावे कथं चक्षुषा ग्रहः ? तत्र तस्य सहकारि-त्वादित्यत आह—यथेति । आलोकस्य सहकारित्वेऽपि विषयभेदेन वैषम्यदर्शनेन नैकरूप्यं सर्वत्रेति भावः । ननु तथाऽपि सर्वत्र चाक्षुषज्ञाने आलोकमात्रस्य न व्यभिचार इत्यत्राह—दृक्स्वभावादिति । अस्त्वेवमिति — तम(सा)सो विरोधाभावेन सत्त्वाविरोधादित्यर्थः । आलोकेति—यथा दीपो वातविनाश्यः तथा अन्धकार अलोकनाश्य इत्यर्थः । अभिभवादिति—स्वावच्छेदेनालोकस्तमोज्ञानप्रतिबन्धक-इत्यर्थः । ननु तत्वरत्नकरो 'आलोकाभावस्तम इति काश्यपीयाः ।

## सर्वार्थसिद्धिः

अद्रव्यत्वादिपक्षाणामत्रासंभवसिद्धये ।
आद्यमेव तमो ध्वान्तमिति केचिदुपाचरन् ॥

किञ्च तेजस इव तमसोऽपि शरीरत्वाम्नानादालोकमध्ये तमस्सृष्टिवचनादेकस्मिन् काले तमस्तेजःप्रलयपाठाच्चास्य द्रव्य-

## आनन्ददायिनी

नीलभानरूपस्मृतिप्रमोष इति प्राभाकराः । द्रव्यान्तरमिति कौमारिलाः । प्रधानतत्वमेव तम इति तत्वविदः' इत्युपक्रम्य प्राथमिकमतद्वयमथन-पूर्वकम् ;—

अत्र तत्वविदः प्राहुः स्थूलसूक्ष्मात्मना स्थिता ।
दैवी गुणमयी माया बाह्यन्तरतमो(मयी)मता ॥

इत्युक्तम्; तत्कथं पार्थिवत्वं भवद्भिरुच्यते? इत्यत्राह—अद्रव्यत्वादि-पक्षाणामिति । आदिशब्देनालोकाभाव(पक्ष)परिग्रहः । अद्रव्यत्वादिनि-रासाय प्राकृतत्वात् प्रकृतित्वोक्तिरित्यर्थः । तत्र हेतुमाह—किंच तेजस इति । 'यस्य तमश्शरीरम्' इति शरीरत्वोक्तेः 'तमस्ससर्ज दिवसे' इत्यादिना भारतादौ आलोकदशायामेव तमस्सृष्टेश्श्रवणात् तेजसा सह तमसोऽपि प्रलयवचनात्त(चने त)दभावत्वाभावावगमाच्च द्रव्यत्वं प्राकृतत्वं च सिद्धमित्यर्थः । ननु 'नासदासीन्नो सदासीत्तदानीम्' तम आसीत्तमसा गूढमग्रे प्रकेतम्' 'यदा तमस्तन्न दिवा न रात्रिः' 'तमः परे देवे' आसीदिदं तमोभूतम्' इति श्रुतिस्मृतिवचनानि प्रकृतेस्तमस्त्वं वदन्तीति चेत्; (न) प्रकृतेः रूपवत्त्वाभावेन अस्मदादिचाक्षुषतमस्त्वा-संभवात्तस्याः प्रकृतेरतीन्द्रियत्वोक्तेः (क्तेश्च) तत्र तमश्शब्द उपचारा-च्छक्त्यन्तराद्वेति दृश्यमानतमसः प्राकृतत्वमेवेति भावः । ननु तमसो द्रव्यत्वे तत्वान्तरत्वापत्तिः; क्लृप्तेष्वन्तर्भावे महदादिषु वा(दिष्वेवा)न्तर्भा

## सर्वार्थसिद्धिः

त्वप्राकृतत्वसिद्धौ रूपवत्त्वेन वायुपर्यन्तव्यपोहः । [illegible] वह्निजलव्यावृत्तिस्सिध्येत् । 'यत्कृष्णं तदन्नस्य' इति श्रुत्यनुसाराच्च । तदिदं तमः परब्रह्माच्छादकाविद्यानिदर्शनतया विषयावारकं कैश्चिदुक्तम् ; तदसत् ;

तमोव्यवहितालोकस्थितनानार्थदर्शनात् ।
दृग्गतेरविरुद्धस्य दृश्यच्छादकता कथम् ? ॥
अतो मर्त्यादिदृष्टीनां दृश्यसंबन्धमात्रतः ।
दर्शनप्रतिघातित्वं स्वभावात्तमसि स्थितम् ॥

## आनन्ददायिनी

वोऽस्तु ! कथं तस्य पार्थिवत्वमित्यत्राह—रूपवत्त्वेनेत्यादिना । वह्निजलव्यावृत्तत्वेऽपि पार्थिवत्वे किं प्रमाणमित्यत्राह—यत्कृष्णामिति । प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्तु-(वस्त्वन्तर)पूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् इत्यनुमानेन अज्ञानसाधनं दूषयितुमनुभाषते—तदिदमिति । हेतुमाह—तमोव्यवहितेति ननु व्यवधायकस्य कथं नेन्द्रिय(दृष्टि)वृत्तिप्रतिबन्धकत्वमित्यत्राह—दृग्गतेरविरुद्धस्येति । आच्छादकत्वे दृग्गतिविघातप्रसङ्ग इति भावः । ननु मनुष्यादिदृग्गतिप्रति(गतिदि)घातकत्वाभावे कथमन्धकारे दृग्गतवस्तुग्रहाभाव इत्यत्राह—अत इति । दृशो दृश्यसम्बन्धेऽपि चाक्षुषधीप्रतिबन्धकत्वस्ये(त्वं तस्ये)त्यर्थः । वस्तुतस्तमोऽतिरिक्तचाक्षुषप्रत्यक्षे आलोकस्य सहकारित्वात् तदभावान्न तत्प्रत्य(न तत्र प्रत्य)क्षमि(क्षत्वमि)ति भावः ॥ ६० ॥

तमसः पार्थिवत्वम्

---

## तत्वमुक्ताकलापः

**नालोकाभावमात्रं तिमिरं अविरतं नीलमित्येव दृष्टेः नैल्यं त्वारोपितं चेत् कथमिव न भवेत् क्वापि कस्यापि बाधः ।**

## सर्वार्थसिद्धिः

ये त्वाहुः—आलोकाभाव एवालोकविरोधित्वलक्षणसमानधर्मस्मारितनैल्योपरक्तो नीलं तम इति गृह्यते । नञुपश्लेषरहितशब्दवाच्यत्वं तु प्रलयवादिशब्दन्यायेन स्यादिति ; तान् प्रतिवक्ति—नालोकेति । अबाधितं नीलोपलम्भं हेतुमाह—अविरतमिति । आरोपितं नीलरूपत्वं नाभावत्वविरोधीत्यभिप्रायेणाशङ्कते—नैल्यं त्विति । आरोपस्य कालभेदेन पुरुषभेदेन वा बाधव्याप्तिमभिप्रेत्याह—कथमिवेति । अविरतमिति सूचितमेतेन व्यञ्जितम् । ननु तमो न नीलं असत्यालोके चक्षुषा प्रतीयमानत्वात् इति बाध इति चेन्न ; दृष्टन्तासिद्धेः । आलोकाभाव

## आनन्ददायिनी

आक्षेपसङ्गत्या न्यायमतमनूद्य दूषयतीत्याह—ये त्वाहुरिति । अलोकवैधर्म्यलक्षणधर्मस्मारितमित्यर्थः । केचित्तु—(यद्वा)आलोकशब्दः आलोकवपर इत्याहुः । नन्वभावत्वे नञुपश्लिष्टपदबोध्यत्वं न स्यादित्यत्राह—नञुपश्लेषेति । प्रलयस्सर्वकार्य(वि)नाशो ह्यभावरूपः । अविरतपदतात्पर्यमाह—अबाधितेति । बाधितत्वे कदाचिन्नीलान्यत्वेनापि प्रती(तेः)त्य अविरतत्वायोगादिति भावः । तथाचायं प्रयोगः—न तम आलोकाभावः अबाधितनीलबुद्धिविषयत्वात् सम्मतवदिति । प्रत्यक्षबाधविरहेऽपि यौक्तिकबाधेन हेत्वसिद्धिमाशङ्कते—नन्विति । व्याप्यत्वासिद्धिमाह—दृष्टान्तेति ।

## सर्वार्थसिद्धिः

एव दृष्टान्त इति चेन्न; त्वत्पक्षे पक्षदृष्टान्तभेदाभावात्; अस्मन्मते तु भावातिरिक्ताभावासिद्धेः। आलोकाभावे दिवा-भीतादिचक्षुर्ग्राह्यैर्नीलैर्व्यभिचाराच्च। दृग्वैषम्यवत् दृश्यवैषम्यं च व्यवस्थापकं स्यादित्युक्तम्। अतोऽस्मदादिविशेषणेऽप्यनि-स्तारः। तमोधर्मभूतनैल्यादिदृष्टान्तस्तु तदभावसाधने विरुद्धः। आरोपितनैल्यादिदृष्टान्तस्तु शुक्तिरूप्यशशशृङ्गादिवदनादेयः। अनारोपितं तु रत्येवालोके चक्षुषा गृह्यते। तथाऽपि भ्रान्ति-दशायां गृह्यमाणारोपाभावेऽपि चाक्षुषभ्रान्तिविषयत्वादेवायं हेतुस्सिद्ध इति चेन्न; तमसि नैल्यारोपसिद्धिमन्तरेणास्य हेतो-रनुत्थानात्। भवति हि बाधादृष्टान्तलाभः! तेन च मिथस्संश्रयः। अस्पर्शत्वादिबाधकान्तरं तु निरस्तम्। अत्र नीलमित्येवेत्य-

## आनन्ददायिनी

पक्षभिन्नस्यैव दृष्टान्तत्वादिति भावः। अस्मन्मत इति। तथा च चाक्षुष द्रव्यस्य रूपवत्त्वात् तस्यैव तमसोऽन्यस्य वा दृष्टान्तत्वादि(त्यर्थः)ति भावः। अ(त)तोऽस्मदादीति—असत्यालोके(आलोकाभावेपि)अस्मदा-दिचक्षुर्ग्राह्यत्वादित्युक्तोरि(त्युक्तेपी)त्यर्थः। दृष्ट(ष्टि) वैषम्यानुरोधेनेव दृश्यवैषम्यानुसारेणाऽपि सङ्कोचसम्भवादिति भावः। तमोनैल्यमसदेव किंचित्? उत सदेव? नाद्य इत्याह—आरोपितेति। तथात्वे अतिप्रसङ्ग इति भावः। न द्वितीय इत्याह—अनारोपितं त्विति। तथाचासिद्ध्य-साधारण्ये इति भावः। ननु बाधाभावेऽपि तमः प्रतीतौ विषयस्य रूपस्य नी(ल)रूपत्वाद्दृष्टान्तत्वसम्भवान्नोक्तदोष इति चेन्न? तथात्वे प्रत्यक्षस्य बलवत्तया बाधप्रसङ्गात्। ननु तमो न रूपवत् अस्पर्शत्वादित्यादिना बाधात् न मिथस्संश्रय इति तत्राह—अस्पर्शत्वादीति। इन्द्रनील-

## तत्वमुक्ताकलापः

**आरोपे चात्र नैल्यं न भवति नियतं भास्वरान्यत्व-**

## सर्वार्थसिद्धिः

वधारणतात्पर्यभेदसिद्धं दूषणान्तरमाह—आरोपे चेति । अयं भावः—आरोप एवात्र न संभवति; अभावस्य हि स्वरूपमेव हि भेदं मन्यसे। ततस्तद्ग्रहे वा कथमारोपः? एवं च ब्रूषे! आलोको हि भास्वरः! तद्विरोधी च तदभावः। कृष्णद्रव्यमपि भास्वरान्यत्वात्तथैव। अत आलोकविरोधित्वसाधर्म्यात् अकृष्णे कृष्णधर्माध्यास इति। एवं सति रक्तपीतादीनामपि तथात्वा-विशेषात् तत्र तदारोपः किं न स्यादिति। अत्र यदुक्तं काणादैः—'आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः' इति। तदयुक्तम्—आरोपे सतीत्यासिद्धेः। निमित्तस्य चाति-

## आनन्ददायिनी

प्रभादौ व्यभिचारादि(रस्स्यादि)ति भावः । अनुद्भूतस्पर्शवत्त्वकल्पने तमस्यपि तद्बाधकाभावात् । ननु भास्वरान्यत्वरूपसादृश्यस्य नीलद्रव्या-भावसाधारण्येनारोपहेतुत्वात् कथं नियतारोपाभाव इत्यत्राह—अयं भाव इति । अत्र मूलस्य—आरोपे च—आरोपपक्षे च अभावे नीलारोपो नियतं–नित्यं न भवत्येव–आरोप एव न सम्भवतीत्येकोऽर्थः । नियतं–नियमेन नीलरूपस्यैवारोपो न रक्तरूपस्येति नियमो न सम्भवतीति द्वितीयः । तदुभयमाह—आरोप एवात्रेत्यादिना । कथमारोप इति—अभावस्य ग्रहे तस्यैव विशेषदर्शनत्वात् तदग्रहे धर्मिज्ञानाभावान्नारोप इति भावः । आरोपनियमे तदुक्तं नियामकमाशङ्कते—अत्र यदुक्तमिति । तथाच न रक्ताद्यारोप इति भावः । निमित्तस्य चेति—एकत्रारोपे सति

## तत्वमुक्ताकलापः

**साम्यात् नात्रादृष्टं नियन्तृ प्रतिनियतगुणारोपक्लृप्तेर्गुरुत्वात् ॥ ६१ ॥**

## सर्वार्थसिद्धिः

प्रसङ्गिनोऽनुसरणायोगात् । यथा च रज्जौ सर्पाध्यासः तथा कदाचिदम्बुधाराद्यध्यासोऽपि किं न भवति ? सत्यां च सामग्र्यां कार्यानुत्पत्तिरिति न लौकिकमेतन्न च यौक्तिकम् ; यच्चोक्तम्— ‘अदृष्टादिकं चात्र नियामकमवसेयमिति’ तद्दूषयति—नात्रेति । विचित्रादृष्टभेदविषमिते जगति सर्वजन्तुसाधारणस्य दुरुपशमतावन्मात्रभ्रमहेतोरदृष्टविशेषस्य कल्पनेऽतिगौरवं स्यादित्यभिप्रायेणाह—प्रतिनियतेति ॥ ६१ ॥

## आनन्ददायिनी

तदनुसारेण कल्प्यस्य निमित्तस्यातिप्रसक्तत्वे अरोपापादनासम्भवात्; अन्यथा सर्वत्र प्रमेयत्वस्यैव निमित्तत्वकल्पनापत्त्या अवान्तरदोषादिकल्पनावैयर्थ्यादिति भावः । तदेवोपपादयति—यथा चेति । सादृश्यस्योभयारोपसाधारणत्वादिति भावः । किञ्चारोपसामग्र्यां सत्यामप्यारोपाभावः किं दृष्टः ? उत कल्प्यः ? इति विकल्प्य आद्यं दूषयति—सत्यां चेति । द्वितीयं दूषयति—नच यौक्तिकमिति । व्याप्त्यभावादिति भावः । ननु सत्यां सामग्र्यां कार्यानियम इति ; सत्यम् ; तत्रादृष्टविरहाच्चदारोपो नेत्याशङ्कते— यच्चोक्तमिति । विचित्रेति—सर्वेषामेकरूपादृष्टसत्त्वे मानाभावात् (दिति भावः।) अन्यत्र सर्वत्र तत एव कार्यसम्भवे दृष्टकारणविलोपप्रसङ्गश्चेति (भाव ) द्रष्टव्यम् ॥ ६१ ॥

## तत्वमुक्ताकलापः

ध्वान्तं तेजश्च नासीदिति मुनिभिरुपाख्यायि संवर्तवार्ताभावाभावौ निषेद्धुं तदुभयविधिवद्व्याहतत्वादशक्यम् । अन्तर्यन्तुश्च तेजस्सहपठिततमो

## सर्वार्थसिद्धिः

आलोकाभावस्यागमवैघट्यमाह—ध्वान्तमिति । अर्थोपादानमेतत्; शब्दस्तु 'नासीत्तमो ज्योतिरभून्न चान्यत्' इति । कथमस्य प्रकृताविरोधित्वम्? इत्यत्राह—भावाभावाविति । न हि कस्यचिदेकदैकत्र भावाभावविधिश्शक्यते! तद्वदुभय-

## आनन्ददायिनी

प्रसङ्गसंगतिमा(पूर्वसंगत्याऽऽ)ह—आलोकाभावस्येति । मूलस्यायमर्थः—मुनिभिः—पौराणिकैः 'नासीत्तमो ज्योतिरभून्न चान्यत्' इत्यत्र तमस्तेजश्च नासीदिति । संवर्तवार्ता—प्रलयवचनम् । एकस्मिन् काले भावाभावविधिवन्निषेधोऽप्यशक्यः । शक्यमिति विभक्तिप्रतिरूपकमव्ययमिति न विशेष्यनिघ्नतेति केचित् । अपरे तु—'निषेद्धुं व्याहतत्वादशक्यम्' इति भिन्नं वाक्यम् । तत्किमित्यपेक्षायां भावाभावावित्यपरं वाक्यम् । अत एव महाभाष्ये पस्पशायां श्वमांसादिभिरपि क्षुदुपहन्तुं शक्यमित्यत्र कैयटः—उपहन्तुं शक्यं इत्येकं वाक्यम् । तत्किमित्यपेक्षायां क्षुदित्यपरम्; तथा च सामान्ये नपुंसकत्वमेकवचनत्वं चेति वदन्ति । वस्तुतस्तु (अन्येतु—)—भावाभावाविति तुमुन्नन्तकर्म । कृदन्तत्वेऽप्यव्ययत्वान्न षष्ठी । तथा च तुमुन्नन्तार्थ एव प्रधानमिति तत्रैव विधेयाशक्यत्वान्वये भावाभावनिषेधनमशक्यमिति(वाक्यार्थः) पर्यवस्यति । तुमुनोऽव्ययत्वेन

## तत्वमुक्ताकलापः

देह इत्यामनन्ति स्याच्चाभावोऽपि भावान्तरमति-
मथने वक्ष्यमाणक्रमेण ॥ ६२ ॥

तिष्ठत्युर्वी भचक्रं पवनरयवशात् भ्राम्यती-
त्युक्तमाप्तैः

## सर्वार्थसिद्धिः

निषेधोऽप्यशक्यः । अन्तत उभयाविधिविश्रमणेन व्याघातादिति भावः ॥ ६२ ॥

तमस आलोकाभावमात्रत्वभङ्गः.

---

भूप्रसङ्गात्तद्भ्रमणादिपक्षं निराकर्तुं स्वपक्षं तावदाह—तिष्ठतीति—आप्तैः पुराणादिकर्तृभिः तदनुसारिभिश्च । आप्तैश्च

## आनन्ददायिनी

क्लीबत्वं चाशक्यमित्यस्योपपन्नमिति ध्येयम् । अन्तर्यन्तुः—अन्तर्यामिणः । देहैः 'यस्यात्मा शरीरम्' 'यस्य तमश्शरीरम्' इत्यादिभिः सहपठितो ध्वान्तो देह इत्यामनन्ति—निश्चिन्वन्ति । निर्बन्धेन तेजोऽभाव इति पक्षेऽपि भाव एव सः । तत्र हेतुः वक्ष्यमाणक्रमेणेति ॥ ६२ ॥

तमस आलोकाभावमात्रत्वभङ्गः

---

प्रसङ्गस्सङ्गतिरित्याह—भूप्रसङ्गादिति । तदनुसारिभिश्चेति ।

## सर्वार्थसिद्धि.

**तेषां 'हिरण्मयेन सविता रथेन' [1]*इत्यादिश्रुत्यनुसारात् । अस्मिन् पक्षे सर्वलोकोपलम्भस्वारस्यमस्ति [2]*नच गणितादि-**

## आनन्ददायिनी

आर्यभटादिभिश्चेत्यर्थः । हिरण्म(ण्य)येनेति–देव आयातीत्यागमनादिकं भचक्रभ्रमणानुगुणमिति भावः । उपलम्भश्च भूम्याः स्थिरतया भचक्रस्य गतिमत्त्वेनेत्याह—अस्मिन्निति । ज्योतिश्शास्त्रे चायं पक्षः स्वीकृत

## भावप्रकाशः

[1]*इत्यादिश्रुतीति—'आकाशे पृथिवी प्रतिष्ठिता' इत्यादिश्रुतय आदिशब्दार्थः । [2]*न च गणितादीति—आदिपदेन पदार्थेषु गुरुत्वस्य आन्दोलनस्य च भूभागभेदेन तारतम्यं गृह्यते । तत्र गणित-विरोधो नास्तीति आधुनिकपाश्चात्यग्रन्थेषु व्यक्तम्; तथाहि—

'Science and Hypothesis,' by H. Poincare, Translated by W. Greestreet, (1905) P. 117.

The affirmation 'the earth turns round' has no meaning, since it cannot be verified by experiment, . . . . . . . or, in other words, these two propositions "earth turns round," and "it is more convenient to suppose that the earth turns round" have one and the same meaning.

There is nothing more in one than in the other.

इति । भूर्भ्रमतीति वचो नार्थवत् । कुतः इति चेत्; तथात्वस्य दुर्निरूपत्वात् । 'भूर्भ्रमति' 'भूर्भ्रमतीति कल्पने लाघवम्' इति द्वे अपि प्रतिज्ञे समानार्थे । एकस्या अर्थादपरस्या अर्थे हि नास्त्यर्थातिशयः' इति च तदर्थः ॥

## सर्वार्थसिद्धिः

**विरोधः! [1]कक्षीकृतश्चायं पक्षः कार्तान्तिकैरपि । यथाऽऽहार्यभटः—**

**[2]*उदयास्तमयनिमित्तं नित्यप्रवहेण वायुना क्षिप्तः ।**
**लङ्कासमपश्चिमगो भपञ्जरस्सग्रहो भ्रमति ॥**

## आनन्ददायिनी

इत्याह—कक्षीकृतश्चायमिति । तदेवाह—यथेति । उदयास्तमयनिमित्तं उदयास्तमयार्थम् । लङ्कायाः पश्चिमगस्सग्रहः । भचक्रस्य हि लङ्काद्वीपस्थान् प्रति पश्चिमगतयोपलब्धिरिति सम्प्रदायः । भपञ्जरः—भचक्रम् । नित्यप्रवहेण—सदागतिमता । वायुना क्षिप्तः परिभ्रमतीत्यर्थः ।

## भावप्रकाशः

आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे ॥

इति भास्कराचार्यैः (शिरोमणिगोलाध्याये भुवनकोशे ६) भुवः आकर्षणशक्तिकथनेन साक्षनिरक्षप्रदेशतारतम्येन पदार्थाकर्षणशक्तितारतम्यसंभवेन पदार्थेषु गुरुत्वान्दोलनयोस्तारतम्यमुपपद्यत इति भावः ।
[1]* कार्तान्तिकैरपीति—अत्र कार्तान्तिकैरिति बहुवचनेन भुवः स्थिरत्वं बहूनां संमतमिति बोधितम् । आर्यभट्टस्य भूभ्रमणपक्ष एव संमत इत्युक्तिर्न युक्ता ; आर्यभट्टेनैव भचक्रभ्रमणपक्षस्यैव सिद्धान्तितत्वादित्यभिप्रायेण तदीयश्लोकमेवोदाहरति—[2]* उदयास्तमयेत्यादिना । अत्र भूभ्रमणानङ्गीकारे उदयास्तमया(रे अहोरात्रा)नुपपत्तिः भूभ्रमणवादिभिरुच्यते । तदयुक्तम्; प्रवहवायुना ग्रहाणां प्रत्यग्गत्यङ्गीकारेणोदया-

## भावप्रकाशः

स्तमयसंभवात् इति भूभ्रमणवादखण्डनाय उदयास्तमयनिमित्तमित्यादिश्लोकः प्रवृत्तः—

भचक्रं ध्रुवयोर्बद्धं आक्षिप्तं प्रवहानिलैः ।
पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥

(सू. सि. भूगोलाध्याये ७५)

मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति ।
बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ॥

(सू. सि. भूगोलाध्याये ३२)

इति ॥

जगदण्डखमध्यस्था महाभूतमयी क्षितिः ।
भावाय सर्वसत्वानां वृत्तगोळ इव स्थिता ॥

(वसिष्ठसिद्धान्ते)

इति ॥

वृत्ता चक्रवदचला नभस्यपारे विनिर्मिता धात्रा ।
पञ्चमहाभूतमयी तन्मध्ये मेरुरमराणाम् ॥

(पौलिशसिद्धान्ते)

इति च सूर्यवसिष्ठपौलिशसिद्धान्तवचनान्यवलम्ब्य—

वृत्तभपञ्जरमध्ये कक्ष्यापरिवेष्टितः खमध्यगतः ।
मृज्जलशिखिवायुमयो भूगोलस्सर्वतो वृत्तः ॥

(आर्यभ. गोल. ६ )

इति ॥

भानामधश्शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राः ।
तेषामधश्च भूमिः मेथीभूता खमध्यस्था ॥

(आर्यभ—कालक्रि १५ )

## सर्वार्थसिद्धिः

इति। कैश्चित् 'उत्ताना ह वै देवगवा वहन्ति' इत्यादिनिर्वहणाय

## आनन्ददायिनी

नित्यं त्रिलोकी भ्रमति श्रुतिवाक्यानुसारतः ।
अतो भचक्रं भ्रमति विपरीतं ग्रहान्वितम् ॥

इति गणितैकदेशिमतमनुवदति—कैश्चिदिति । भ्रमणेनोपर्यधोभावे देव-

## भावप्रकाशः

इति चोक्तम् । भानामधश्शनैश्चरेत्यादिश्लोकेन भुवः भ्रमणं न घटते ; अपि तु स्थैर्यमेव सिध्यतीत्ययमंशः उत्तरत्रोपपादयिष्यते । सर्वग्रह-भ्रमणं च—

कक्ष्याप्रतिमण्डलगाः भ्रमन्ति सर्वे ग्रहाः स्वचारेण ।
मन्दोच्चादनुलोमं प्रतिलोमं चैव शीघ्रोच्चात् ॥

इत्यत्रोक्तम् ॥

भूग्रहभानां गोलार्धानि स्वच्छायया विवर्णानि ।
अर्धानि यथासारं सूर्याभिमुखानि दीप्यन्ते ॥

इत्यत्र भुवः ग्रहेभ्यः पृथग्ग्रहणेन ग्रहत्वं नस्ति भुव इति सूचितम् । ग्रहशब्देन न भुवो ग्रहणम्—'पश्चाद्व्रजन्तोऽतिजवात्' इत्यादि सूर्य-सिद्धान्तोक्तषड्विधगतिमतामेव ग्रहत्वस्य ग्रन्थकृत्संमतेश्च । उदयास्त-मयानिमित्तमिति श्लोकः 'भूभगणभ्रमणसंस्थान' इत्यादिबृहत्संहिताव्या-ख्यानावसरे भट्टोत्पलेन भूभ्रमणवादनिरासार्थमुदाहृतः । अत्र भूभगण-भ्रमणसंस्थानेत्यादिमूलस्य भूमेः भगणस्य च भ्रमणसंस्थानाभिज्ञ इत्य-व्याख्याय भूमेस्संस्थानाभिज्ञः इति व्याख्यानात् 'युगरविभगणाः' इत्यादिगीतिकापादतृतीयश्लोके प्राग्गत्या भगणकथनं मिथ्याज्ञानसिद्ध-

## तत्त्वमुक्ताकलापः

**भ्रान्तैः क्लृप्तं त्रिलोकीभ्रमणमिह**

## सर्वार्थसिद्धिः

**त्रैलोक्यभ्रमणं स्वीकृतम् ; [1]*तदुपालभ्यते—भ्रान्तैरिति । यथा स्वयं भ्राम्यन्तो बालिशाः भुवं भ्राम्यन्तीमभिमन्यन्ते तथेदमिति भावः । [2]*यदि स्थिरतयैव दृष्टानां ग्रहनक्षत्राणां भ्रमणं कल्प्यते**

## आनन्ददायिनी

गवानामुत्तानतासम्भवादुत्तानत्वं भ्रमणे लिङ्गमिति भावः । यथा स्वयमिति—'उत्ताना ह वै' इत्यादेः 'प्रजापतिरात्मनो वपामुदक्खिदत्'

## भावप्रकाशः

तात्पर्येणेति सूचितम् । एतच्च अनुपदमेव स्फुटीभविष्यति । [1]*उपालभ्यत इति 'उत्ताना ह वै देवगवा' इत्यादौ उत्तानत्वादिप्रतीतिस्तु भुवो गोलाकारत्वेन स्थितेरिति ; 'भूमेः पिण्डः' इत्युपक्रम्य—

> यो यत्र तिष्ठत्यवनीं तलस्थां आत्मानमस्या उपरि स्थितं च ।
> स मन्यतेऽतः कुचतुर्थसंस्थाः मिथश्च ते तिर्यगिवामनन्ति ॥
> अधश्शिरस्काः कुदलान्तरस्थाः छायामनुष्या इव नीरतीरे ॥
>
> (शिरोमणि. गोला. भुवनको. १९–२०)

इत्यादावुपपादिता । 'युगरविभगणाः' इति श्लोके अविशेषेण ग्रहाणां भुवश्च प्राग्गतिकथनेऽपि भुवः प्राग्गतिकथनं मिथ्याज्ञानसिद्धतात्पर्येणेत्युक्तिरनुचितेति शङ्कते—[2]* यदि स्थिरतयेत्यादि । अत्र स्थिरत्वं गत्यभावः। स च नक्षत्राणां निर्व्यापारत्वात् स्वरसत एवोपपन्नः । ग्रहाणां तु प्रवहाधीनप्रत्यग्गतिमत्त्वेऽपि सा गतिरितराधीनेति उत्तरदेशसंयोगानुकूलो व्यापारोऽन्यनिष्ठः न स्वायत्त इति भावः । प्राग्गतिस्तु

## सर्वार्थसिद्धिः

**तदविशेषाद्भुवोऽपि कल्प्यतामिति चेन्न; [1]*अपेक्षितस्या[2]*न्यथैव सिद्धेः । अत्र 'अनुलोमगतिर्नौस्थः' इत्यादिषु[3]*स्थापितस्य**

## आनन्ददायिनी

इत्यादिवदर्थवादतयाऽन्यपरत्वादिति भावः । अपेक्षितस्येति—उदयास्तमयादेरित्यर्थः । यद्वा उत्तानादिवाक्यनिर्वाहस्येत्यर्थः । निर्वाहस्तूक्त एव ।

अनुलोमगतिर्नौस्थः यद्वज्जन्तुश्चरति भूमध्ये ।
नित्यं भ्राम्यति भूमिः नित्यप्रवहेण वायुना नुन्ना ॥

इति ज्योतिश्शास्त्रैकदेशिनां मतं;

निराधारा भूमिः नित्यमधःपातिनी यस्मात् ।

इति जैनमतं च दूषयितुमनुभाषते—अत्रानुलोमगतिरित्यादिना ।

## भावप्रकाशः

ग्रहाणां न दृश्यत एव । यथोक्तम्—'इदानीं ग्रहाणां पूर्वगतिमनुपलक्षितामपि दृष्टान्तेन दृढीकुर्वन्नाह—

यान्तो भचक्रे लघुपूर्वगत्या खेटास्तु तस्यापरशीघ्रगत्या ।
कुलालचक्रभ्रमिवामगत्या यान्तो न कीटा इव भान्ति यान्तः ॥
(शिरो. गोला. मध्य–वसना. ४)

इति । [1]* अपेक्षितस्येति— अयनसंक्रमऋतुभेदग्रहणादय इहापेक्षितशब्दार्थः । [2]* अन्यथैव—ग्रहाणां प्राग्गत्यङ्गीकारेणैवेत्यर्थः ॥

[3]* स्थापितस्येति—अनेकग्रहाणां प्राग्गत्यङ्गीकारे गौरवं एकस्या भुव एव भ्रमणाङ्गीकारे लाघवमित्यस्मिन् पक्षे युक्तिरुत्तरत्र शङ्कावसरेषु व्यक्तीभविष्यति ।

अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम् ॥

## सर्वार्थसिद्धिः

### भूभ्रमणवादस्य [1]*जैनोक्तस्य च भूपतनस्य भ्रान्तिकल्पि-

### भावप्रकाशः

इति च श्लोकः। 'युगरविभगणाः' 'प्राणेनैति कलां भूः' इत्यादिरादि-शब्दार्थः। सिद्धान्तशेखरे श्रीपतिश्च इमामेव कारिकां भूभ्रमणस्थापन-परतया व्याचकार—

नौस्थोऽनुलोमगमनादचलं यथा न चामन्यते चलति नैवमिलाभ्रमेण।
लङ्कासमापरगति प्रचलद्भचक्रमाभाति सुस्थिरमपीति वदन्ति केचित्॥

इति। अत्र अनुलोमगतिर्नौस्थः इत्यादिश्लोकोत्तरार्धे नौस्थः पश्यतीति पदद्वयानुषङ्गेण अचलानि भानि समपाश्चिमगानि पश्यतीति योजनया नौस्थानाभिषिक्तभूस्थः भचक्रं स्थिरमपि चलत्वेन जानातीति भावः॥

[1] * जैनोक्तस्येति—यद्यपि;

भपञ्जरस्य भ्रमणावलोकादाधारशून्या कुरिति प्रतीतिः।
खस्थं न दृष्टं च गुरु क्षमातः खेऽधः प्रयातीति वदन्ति बौद्धाः।

(शिरो-गोला भुवनकोश ७)

इत्यतो बौद्धैरपि भूपतनमुक्तमिति ज्ञायते; तथाऽपि तत्र अनुपपत्ति-परिहारपूर्वकं जैनैः व्यवस्था कृतेत्यवगम्यते; यथा—

द्वौ द्वौ रवीन्दू भगणौ च तद्वदेकान्तरौ तावुदयं व्रजेताम्।
यदब्रुवन्नेवमनम्बराद्याः॥

(शिरो-गो. भुवन ८)

इति। अतः बौद्धोक्तस्येत्यनुक्त्वा जैनोक्तस्येत्युक्तिः। श्रीपतिश्च स्पष्टमेव भूपतनं एतच्छ्लोकोक्तयुक्त्या जैनसंमतमित्याह सिद्धान्तशेखरे (टिप्पणे)—

अधः पतन्त्याः स्थितिरस्ति नोर्व्याः नभस्यनन्तेऽत्र वदन्ति जैनाः।

## तत्वमुक्ताकलापः

**तथा मेदिनीभ्रान्तिपातौ ।**

## सर्वार्थसिद्धिः

**तत्वमतिदिशति—[1]*तथेति । इषीकाप्रोतपात्रिकादिवत् स्वदेशं**

## भावप्रकाशः

द्वौद्वौ रवीन्दू द्विगुणां भसस्थां चतुर्विधस्तम्भनिभं च मेरुम् ॥
इति । [1]* तथेति—भ्रान्तैः क्लृप्ताविल्यर्थः । तदुक्तं गोलदीपिकायां परमेश्वरेण—

पूर्वाभिमुखं भ्रमति क्षोणी नास्ति भ्रमः खगर्क्षाणाम् ।
इति किल वदन्ति केचित् नाभिमतं तदपि चार्यभट्टस्य ॥

इति। 'अनुलोमगतिर्नौस्थः' इति कारिका चेत्थं विवृता तेनैव भट्टदीपिकायाम्—'भूमेः प्राग्गमनं नक्षत्राणां गत्यभावं च केचिदिच्छन्ति; तन्मिथ्याज्ञानवशादित्याह—अनुलोमगतिरित्यादि । यथा नौयानं कुर्वन् पुरुषः अनुलोमगतिः—स्वाभिमतां पश्चिमां दिशं गच्छन् । अचलम्—नद्या उभयपार्श्वगतमचलं वृक्षपर्वतादि वस्तु विलोमगं—प्राचीं दिशं गच्छदिव पश्यति; तथा भानि नक्षत्राणि लङ्कायां समपश्चिमगानि कर्तृभूतानि अचलानि—भूमिगतान्यचलवस्तूनि कर्मभूतानि विलोमगानीव—प्राचीं दिशं गच्छन्तीव पश्यन्ति । लङ्कादिविषुवद्देशेष्वेव नक्षत्रपञ्जरस्य समपश्चिमगत्वम् । एवं ताराणां मिथ्याज्ञानवशादुत्पन्नां प्रत्यग्गमनप्रतीतिमङ्गीकृत्य भूमेः प्राग्गतिरभिधीयते; परमार्थतस्तु स्थिरैव भूमिरित्यर्थः' इति ॥

सूर्यदेवयज्वाऽपि 'भचक्रपरिवर्तानां भूमावध्यासस्योपदेशकारणमाह—अनुलोमगतिरिति' इत्यवतार्य परमेश्वरवदेव व्याख्याय; 'एवं भचक्रस्यैव गत्यगमनं भूमेः प्राग्गतित्वेनाध्यस्याति न तु परमार्थतो भूमे-

## भावप्रकाशः

भ्रमणमस्तीति नवमं सूत्रम् - उदयास्तेत्यादि' इत्युदयास्तेत्यादिश्लोक-मवतारयामास ॥

यद्यपि श्रीपतिना इयं कारिका भूभ्रमणस्य तात्विकत्वपरतया व्यख्यातेव प्रतिभाति; तथाऽपि तेनैव आर्यभटश्लोकव्याख्याच्छायापन्न-स्ववाक्ये केचिदित्युक्त्या इयं व्याख्या केषां चित्संमता न तु स्वाभिमतेति सूचितम् । अत्रेदमवधेयम्—यद्यपि 'युगरविभगणाः; इति श्लोके उपक्रमे भुवो ग्रहाणां चाविशेषेण प्राग्गतिमत्त्वमभिहितम् । तत्र भुवः प्राग्गतिमत्त्वं मिथ्याज्ञानसिद्धं? आहोस्वित् प्रवहाधीनभपञ्जर-प्रत्यग्भ्रमणं मित्याज्ञानसिद्धमिति विचारे अनुलोमगतिर्नौस्थः इत्यस्य प्रथमकोटिपरत्वमेवोचितम् । 'भूग्रहभानां' इति पूर्वं भुवः ग्रहाणां चाविशेषेण दीप्तिमुक्त्वा अनन्तरं 'वृत्तभपञ्जरमध्ये' 'यद्वत्कदम्ब-पुष्पग्रन्थिः' इत्यादिश्लोकद्वयेन भूगोळस्वरूपमुपपादितम् । तत्र भुवः वृत्तभपञ्जरस्य च प्रसङ्गो वर्तते । तत्र 'भपञ्जरस्सग्रहो भ्रमति' इत्युत्तरश्लोके भपञ्जरपदोपादानेन 'वृत्तभपञ्जरमध्ये' इति श्लोकार्थ एव दृढीक्रियते इति स्फुटं प्रतीयते. अतः पूर्वश्लोकः भूगोल-स्वरूपविशेषनिर्णयार्थमेव प्रवृत्त इत्युभाभ्यामप्यङ्गीकरणीयम् । तत्र भूभ्रमणवादिना सुस्थिरस्य भपञ्जरस्य लङ्कासमपश्चिमगत्वेन चलत्वेन ज्ञानं मिथ्या इत्यर्थः प्राधान्येनोपपादनीयः । तत्र भूगोलस्वरूप-निर्णयश्च आर्थिक एव भवति न तु शाब्दः । पूर्वश्लोके मिथ्याज्ञान-विषयभूतार्थस्य उत्तरश्लोके भपञ्जरस्सग्रहो भ्रमतीति स्थापनेन तदपि मिथ्याज्ञानसिद्धमेवेति भवता वाच्यमिति सर्वलोकोपहासप्रसङ्गः। पश्यतीति पूर्वश्लोक उपादानात् पूर्वश्लोकमात्रं मिथ्याज्ञानपरमिति उत्तरश्लोके पश्य-तीति पदानुपादानेन तात्विकार्थ एवोत्तरश्लोकार्थ इत्यकामेनापि भव-ताऽपि स्वीकार्यम् । एवं च वृत्तभपञ्जरमध्ये इति श्लोके भूगोलस्सर्वतो

## भावप्रकाशः

वृत्तः इति भुवः प्रसक्तिर्वर्तते। तत्र भूः तिष्ठति चलति वेति संदेहे युगरविभगणा इति श्लोकार्थानुसन्धानेन भुवश्चलनस्यैव प्रतीतिः न तु स्थिरतायाः। चलनप्रतीतिमेव भ्रान्तिरूपामुपपादयितुं अनुलोमगतिर्नौस्थ इत्यादिकारिका प्रवृत्ता। अनन्तरं च सुस्थिरस्यैव भपञ्जरस्य चलनज्ञानं किं न स्यात्? इति शङ्कानिवृत्त्यर्थं 'भचक्रं ध्रुवयोर्बद्धम्' 'मध्ये समन्तादण्डस्य' इति पूर्वोदाहृतसूर्यसिद्धान्तश्लोकद्वयानुरोधेन भूगोलस्य स्थितेः; भचक्रस्य प्रवहानिलेन भ्रमणस्य—

उपरिष्टाद्भगोलोऽयं व्यक्षे पश्चान्मुखस्सदा।

(सू. सि. भूगोळाध्याये ५५)

इति सूर्यसिद्धान्तानुरोधेन लङ्कासमपश्चिमगत्वस्य च निर्णयेन तत्र भूगोलस्थितेः पूर्वश्लोकेन भपञ्जरस्थितेरुत्तरश्लोकेन स्वरूपविशेषनिर्णय इति सुस्पष्टं प्रतीयते। अतोऽत्र सुस्थिरस्य भपञ्जरस्य चलत्वेन ज्ञानं मिथ्येत्यार्यभटस्याशयवर्णनमयुक्तम्; 'मन्दामरेज्यभूपुत्र' इत्यादिसूर्यसिद्धान्तानुसारेण भानामधश्शनैश्चरेत्यादिना अत्र च ग्रहकक्ष्यावर्णनं भुवः स्थिरत्वं द्रढयति भ्रमणं चापाकरोतीत्युपरिष्टान्निरूपयिष्यते। लल्लाचार्येण—

वरवशेन कुशेशयजन्मनो न चलतीति वदन्ति मनीषिणः।

इति भुवोऽचलत्वोक्तेः; भुवः प्राग्गत्यङ्गीकारे दोषाणामभिधानाच्च। लल्लाचार्यश्च आर्यभटशिष्य इति 'तथाच तच्छिष्यो लल्लाचार्यः' इति कालक्रियापादस्थ १० मश्लोकव्याख्यानावसरे परमेश्वरेण भटदीपिकायां साधितम्। वराहमिहिरेणापि पञ्चसिद्धान्तिकायां—

पञ्चमहाभूतमयः तारागणपञ्जरे महीगोलः।
खेऽयस्कान्तान्तस्थो लोह इवावस्थितो वृत्तः॥

इति भुवः स्थिरत्वमभिधाय गतिमत्त्वे दोषाणामभिधानाच्च वराहमिहिरस्यापि भूस्थैर्यमेव प्राचीनसिद्धान्तानुसारेणाभिमतम्। अतोऽत्र सूर्य-

## सर्वार्थसिद्धिः

**मुञ्चन्ती द्रुततरमधरोत्तरवृत्त्या भूर्भ्रमति [1]*इति हि तद्भ्रान्तिपक्षः। [2]*अत्रोत्क्षिप्ताश्शिलादयः स्वदेशे तदासन्ने वा कथं निपतेयुः? नित्यं**

## आनन्ददायिनी

भूभ्रमणपक्षे दूषणमाह—तत्रोत्क्षिप्ता इति। यत्र स्थितेनोत्क्षेपः कृतः भ्रमणे सति तदन्यदेशस्यैव तदाकाशऋजुप्रदेशत्वात् तदन्यदेशे पतनं स्यात्। प्राग्देशपतनार्थं क्षिप्तस्य पाषाणादेः इषुयन्त्रक्षिप्तपाषाणादिवत्

## भावप्रकाशः

सिद्धान्तानुसार्यर्थ एव अनुलोमगतिर्नौस्थ इत्यत्र विवक्षित इति श्रीपतेराशयः। आचार्यपादाश्च लल्लवराहमिहिराचार्योक्तदिशा भुवः भ्रमणपक्षे दूषणमभिधास्यन्तः तथैव दूषणमभिदधानस्य श्रीपतेः स्वस्य च तदुक्तदिशैव अनुलोमगतिर्नौस्थः इत्यत्र सिद्धान्तानुसार्यर्थोऽभिमत इत्याशयं स्फुटतरमभिव्यञ्जयन्तीति।

पूर्वाभिमुखे भ्रमे भ्रुवः (धीवृद्धिदतन्त्रं मिथ्याज्ञाना. ४३)
भ्रमति भ्रमस्थितेव क्षितिरित्यपरे वदन्ति नोडुगणः।
(पञ्चसिद्धा १३–६)
पूर्वाभिमुखं भ्रमति क्षोणी नास्ति भ्रमः खगर्क्षाणाम्॥
(गोलदीपिका २७)

इत्यादिषूक्तं भूभ्रमणप्रकारं निर्दिशति—[1]*इति हि तद्भ्रान्तिपक्ष इति। अत्र भुवः भ्रमिवत् पार्श्वभ्रमणमप्युपस्कृतम्। [2]*शिलादय इति—उत्तरत्र शरविहङ्गादीनामपीत्यनुवादग्रन्थे शरस्यैव प्रथमग्रहणेन शरादय इति पाठस्स्यादिति प्रतिभाति; ज्योतिषग्रन्थेष्वपि शरस्यैव निर्देशाच्च।

## सर्वार्थसिद्धिः

च स्वदेशपश्चिमभाग एव तेषां[1]*निपातस्स्यात् [2]*उड्डीनाश्च पक्षिणो न कुलायमासीदेयुः। प्रत्यङ्मुखं च गच्छतां दुःखेनापि न संनि-

## आनन्ददायिनी

क्षेपः परभागे पातप्रसङ्गश्चेत्यर्थः। उड्डीनाश्चेति—तीव्रतरं भ्रमणेन प्रतिक्षणं कुलायादिपुरो धावन्ने(न्नि)वानुधावता दूरस्थ एव स्यादित्यर्थः। प्रत्यङ्मुखं पततामिति—यत्र पक्षी तत्र कुलायादेस्सन्निध्यसम्भवादिति भावः। प्राङ्मुखमिति—उद्देश्यदेशस्य पूर्वन्यायेन दवीयस्त्वादिति

## भावप्रकाशः

[1]* निपातस्स्यादिति। अयमर्थः—

इषवोऽभिनभस्समुज्झिताः निपतन्तस्स्युरपांपतेर्दिशि।

(धीवृ. तं मिथ्या ४२)

इत्यभिहितो लल्लाचार्येण। [2]* उड्डीनाश्चेति—

यदि च भ्रमति क्षमा तदा स्वकुलायं कथमाप्नुयुः खगाः?

इति तत्पूर्वार्धेन तेनैवोक्तोऽयमर्थः।

यद्येवं श्येनाद्याः न खात्पुनः स्वनिलयमुपेयुः।

इति 'भ्रमति भ्रमस्थितेव' इत्यादिश्लोकोत्तरार्धेनोक्तो वराहमिहिराचार्येणापि (पं. सि. १३-५)।

यद्येवमम्बरचरा विहगाः स्वनीड-

मासादयन्ति न खलु भ्रमणे धरित्र्याः।

इति श्रीपतिनापि (सिद्धान्तशेखरे)।

किञ्चाम्बुदा अपि न भूरिपयोमुचस्स्युः

देशस्य पूर्वगमनेन चिराय हन्त।

## सर्वार्थसिद्धिः

कृष्येरन् [1]*एकदेशस्थिते च वर्षति वलाहके [2]*मुहूर्तमात्रान्मही शतयोजना सिच्येत। अतिकुशलानामपि धन्विनां दक्षिणोत्तरदेशावस्थित [3]*स्थिरलक्ष्यवेधो न स्यात्। [4]*शरविहङ्गादीनामपि धरणीसममेव वायुना नोदनान्नोक्तप्रसङ्ग इति चेन्न [5]*तथाविधस्य

## आनन्ददायिनी

भावः। ननु शरविह(शरतर)ङ्गादि क्षिप्तं तीव्रतरेण वायुना नोदनात् यत्र स्वगन्तव्यदेशः तत्र गच्छतीति नैते दोषा इति शङ्कते—शरविहङ्गादीनामिति। तथाविधस्येति—तथाच पूर्वोक्तदोषास्स्युरिति भावः।

## भावप्रकाशः

इति सिद्धान्तशेखरे श्रीपत्युक्तं दूषणं विशदयति—*[1] एकदेशस्थिते चेत्यादि। *[2] मुहूर्तमात्रात् शतयोजनेत्यादि—

योजनशतानि भूमेः परिमाणं षोडश द्विगुणितानि।

(पं. सि. १३–१८)

इति द्विशतोत्तरत्रिसहस्रयोजनः परिधिरिति वराहमिहिरोक्त्या त्रिसहस्रयोजनः परिधिरित्यपि अन्येषां पक्षस्स्यात्; तत्पक्षानुसारेणाचार्यैरुक्तम्। *[3] लक्ष्यवेधो न स्यादिति— दैवज्ञविलासे—

प्रतिदिनमधः पतन्तीं प्राहुर्जैनाः नभस्यनन्तेऽस्मिन्।

इति अधःपतनं प्रस्तुत्य भ्रमणपक्षे पूर्वोक्तदूषणान्युपन्यस्य;

यद्यूर्ध्वगमा धात्री निश्चलपक्षेण वियति खचरेण।
संवृत्ता भवति तथा यदि मन्दं मन्दमुत्पतत्येषा॥

इति उत्पतनपक्षे एतद्दूषणमुक्तम्। एतावता ज्योतिषोक्तदूषणान्युपन्यस्तानि; अथ आधुनिककल्पकानां तदुक्तदूषणोद्धारं शङ्कते—[4]* शरविहङ्गादीनामपीति। तत्र भुवो भ्रमणं किं वायुना किं स्वत इति विकल्प्य प्रथमपक्षे दूषणमाह—[5]* तथाविधस्येति।

## सर्वार्थसिद्धिः

प्रबलमारुतस्यानुपलम्भनिरस्तत्वात्। सर्वेषां प्रत्यङ्मुखगतिप्रतिरोधप्रसङ्गाच्च। यो हि महापृथिवीं प्रभञ्जनः प्रसभमावर्तयति तं कथं लघीयांसो विहङ्गादयः प्रतिसरेयुः? किन्तु पृथिव्याः पूर्वमेव प्राङ्मुखं दूरमपनीयेरन्; किंच ज्योतिर्गणभ्रमणहेतुर्मारुतः शास्त्राभ्यनुज्ञानात् प्रत्यक्षविरोधाभावाच्च संगृह्यते। भूभ्रमणहेतुस्त्वसौ

## आनन्ददायिनी

तदङ्गीकारे बाधकमप्याह—सर्वेषामिति। आकाशसंचारिणामित्यर्थः। तदेवोपपादयति—यो हीति। किञ्च भूभ्रमणे कारणाभावमप्याह—किञ्चेति। शास्त्रदृष्टविरुद्धकल्पनेऽपि भुव एव तादृशभ्रमणसामर्थ्यं

## भावप्रकाशः

भूवायुरावह इह प्रवहस्तदूर्ध्व-
स्स्यादुद्वहस्तदनु संवहसंज्ञकश्च।
अन्यस्ततोऽपि सुवहः परिपूर्वकोऽस्मात्
बाह्यः परावह इमे पवनाः प्रसिद्धाः॥
(गोलाध्या. भुवन. १)

भूमेः बहिर्द्वादशयोजनानि भूवायुरत्राम्बुदविद्युदाद्यम्।
(गोलाध्या. भु. २)

इति शास्त्रेणास्माभिर्भूमेर्बहिर्वायुविशेषा अङ्गीक्रियन्ते; कल्पकेन तु भुवो भ्रमणं कल्पनेनैव बोधनीयम्; वायुविशेषस्य तु प्रत्यक्षेण कियद्दूरमुपलब्धिर्वर्तते। ततस्तत्प्राबल्यं तूपलम्भेन न निश्चेतुं शक्यत इति

## सर्वार्थसिद्धिः

**शास्त्रोपलम्भविरोधान्न कल्प्यः। [1]*भुव एव वायुवददृष्टवशात्तादृश-भ्रमणोपपत्तेः। स्यादेवम्! किंनाच्छिन्नम्? इति चेन्न; [2]*उपलम्भा-नुसारस्य छिन्नत्वात्। अत एवानन्तताराग्रहभ्रमणकल्पनादेक-**

## आनन्ददायिनी

कल्प्यतां किं तादृशवायुनेत्याह—भुव एवेति। किं नश्छिन्नमिति—भूभ्रमणस्याभीष्टस्य सिद्धत्वादिति भावः। उपलम्भेति—भुवः स्थैर्यस्यो-पलम्भादित्यर्थः। अत एवेति–उपलम्भविरोधादेवेत्यर्थः। ननु तर्हि भचक्र-

## भावप्रकाशः

भावः। स्वत एव भ्रमतीति द्वितीयपक्षमुत्थापयति—[1]*भुव एवेत्यादि। तद्दूषयति—[2]* उपलम्भानुसारस्येति। भूमेर्बहिः प्रबलवायुविशेषकल्प-नेन पूर्वोक्तदूषणपरिहाराङ्गीकारे उपलम्भस्वारस्यं छिन्नमेवेति भावः। अयमाशयः—सग्रहभपञ्जरभ्रमणं प्रत्यक्षतास्सिद्धम्। भूगोलभ्रमणं तु न प्रत्यक्षम्। अपि तु काल्पनिकमेव। तत्र दूषणप्रसक्तौ भूगोलस्थपृथिवी-भागस्य वायुमन्तरा भ्रमणस्य प्रत्यक्षतास्सिद्धत्वेऽपि भोगोलस्य स्वभाव-विशेषाद्भ्रमणामित्यपरा कल्पना। पक्ष्यादीनां नोदनहेतुवायुविशेषप्राबल्य-कल्पनेन पूर्वोक्तदूषणपरिहारेऽपि तादृशप्राबल्यमनुपलब्धमिति तदपि कल्पनीयम्। किंच भुवः स्वभावविशेषाद्भ्रमणकल्पकेन वायुविशेषमन्त-रेण स्वभावविशेषेण पूर्वोक्तदूषणानां परिहारसंभवात् वायुविशेषो वा कुतः परिकल्पद्यः? किंच स्वभावविशेषोक्तिः प्रत्यक्षासिद्ध एवार्थे प्रामा-णिकानां न तु काल्पनिकेऽर्थे; भुवस्तु अचलत्वमेव प्रत्यक्षसिद्धम्। तदेव स्वभावतः। यथोक्तं भास्करेण–'मरुच्चलो भूरचला स्वभावतः' इति। अतस्सर्वस्यापि परिकल्पनया भुवः अचलत्वोपलम्भे भ्रान्तित्वकल्पन-

## भावप्रकाशः

मयुक्तम् । उदयास्तमयादौ ग्रहाणां स्थूलतया दर्शनं उच्चस्थितिदशायां किंचित्सूक्ष्मतया दर्शनमनुभवसिद्धम्। नक्षत्राणां तु न तथा। भूभ्रमणपक्षे उभयोरप्युदयास्तपूर्वकभ्रमणाभावेन नक्षत्राणामपि ग्रहवदेव स्थौल्यां सौक्ष्म्यविशेषदर्शनं वा; नक्षत्राणामिव ग्रहाणामपि स्थौल्यसौक्ष्मय-विशेषदर्शनं वा स्यात् । अस्मन्मते तु ग्रहाणां भ्रमणं नक्षत्राण-त्वभ्रमणमिति ग्रहाणां क्षितिजसंनिध्यसंनिधिभ्यां स्थौल्यसौक्ष्मयदर्शन-योरुपपत्तिः । तदुक्तं श्रीपतिना—

> वसुन्धरागोळनिरुद्धधामा दूरस्थितोऽयं सुखदृश्यबिम्बः ।
> महीजवृत्तोपगतो विवस्वान् अतो महान् भात्यरुणो विरश्मिः ॥
> (सिद्धान्तशे)

इति । भास्करेणापि—

> उच्चस्थितो व्योमचरस्सुदूरे नीचस्थितस्स्यान्निकटे धरित्र्याः ।
> अतोऽणुबिम्बः पृथुलश्च भाति भानोस्तथाऽऽसन्नसुदूरवर्ती ॥
> (शिरोमणि—गोळा, छेद्यका—२२)

उदयास्तमयनिमित्तमित्यादिना सग्रहभपञ्जरभ्रमणवादिनः अर्यभटस्य भूभ्रमणपक्षे इदं न युज्यत इति विवक्षितम् । एवं—

> भानामधश्शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राः ।
> तेषामधश्च भूमिः मेथीभूता खमध्यस्था ॥

इति अर्यभटीयग्रहकक्ष्यावचने मेथीभूतेत्यनेन भूमेःस्थिरत्वं प्रतिज्ञातम् । तत्र च उक्तग्रहकक्ष्याक्रमो मूलम् । भूभ्रमणवादिभिस्तु नैवं कक्ष्याक्रम उच्यते इति । एवम्—

> मन्दादधःक्रमेण स्युः चतुर्था दिवसाधिपाः ।
> वर्षाधिपतयस्तद्वत् तृतीयाश्च प्रकीर्तिताः ॥

## भावप्रकाशः

ऊर्ध्वक्रमेण शशिनो मासानामधिपाः स्मृताः ।
होरेशास्सूर्यतनयादधोऽधः क्रमशस्तथा ॥

(सू. सि. भूगोला. ७८–७९)

इतीदं कारिकाद्वयं रङ्गनाथदैवज्ञेन विवृतम्—

शनेः सकाशादधः कक्ष्याक्रमेण चतुर्थसङ्ख्याका ग्रहाः दिनाधिपतयो वारेश्वरा भवन्ति । यथा शनिरविचन्द्रभौमबुधगुरुशुक्राः इति तत्क्रमः । वर्षस्य षष्ट्यधिकशतत्रयदिनात्मकस्य स्वामिनः तद्वत् मन्दादधःक्रमेण तृतीयसङ्ख्याका ग्रहा उक्ताः । चस्समुच्चयार्थे । तत्क्रमश्च यथा—शनिभौमशुक्रचन्द्रगुरुसूर्यबुधा इति चन्द्रात्सकाशात् ऊर्ध्वकक्षाक्रमेण ग्रहा मासानां त्रिंशद्दिनात्मकानां स्वामिनः कथिताः । तत्क्रमश्च—चन्द्रबुधशुक्ररविभौमगुरुशनयः इति । शनेस्सकाशादधःक्रमशः अधः क्रमेण होरेशाः इति ॥

एवं उक्तकक्ष्याक्रमाङ्गीकारे राश्याधिपत्योपपत्तिरपि । अयमर्थः स्सारावल्यां सम्यगुपपादितः (३-१०)=

द्वादशमण्डलभगणस्तस्यार्धे सिंहतो रविर्नाथः ।
कर्कटकात्प्रतिलोमं शशी तथाऽन्येऽपि तद्दानात् ॥

इति । भपञ्जरस्सग्रहो भ्रमतीत्यत्र भगोलीयक्रान्तिवृत्तान्तर्गतराश्याधिपत्यं ग्रहाणां उक्तकक्ष्यामनुसृत्य भ्रमणाङ्गीकारे उपपद्यते । भूभ्रमणपक्षे तु नोपपद्यत इति गूढाभिसन्धिः । तत्प्रकटनं प्रथमत एव कृतम् । उपलम्भानुसारस्येत्यत्र तदेतत्सर्वमाभिप्रेतम् ।

त्रिलोकीशब्दार्थश्च ज्यौतिषिकैरेवमुक्तः, यथा सूर्यसिद्धान्तानुसारिणा भास्कराचार्येण—

भूर्लोकाख्यो दक्षिणो व्यक्षदेशात् तस्मात्सौम्योऽयं भुवः स्वश्च मेरुः ।

## तत्वमुक्ताकलापः

**तद्भ्रान्तौ प्राक्प्रतीचोः प्रसजति पतने प्रत्रिणोस्ता-**

## सर्वार्थसिद्धिः

**भ्रमकल्पनं वरमित्ययुक्तम्; ताराभ्रमणादेरागमिकस्याकल्प्य-त्वाच्च। तदेतत्सर्वमाभिप्रेत्याह—तद्भ्रान्तौ इति ॥**

## आनन्ददायिनी

भ्रमणमपि न स्यादित्यत्राह—ताराभ्रमणादेरिति। इदमुपलक्षणम्—तारादे-र्विदेशप्राप्तिश्च दृश्यत इति भ्रमणलिङ्गं तत्रास्ति; न च भूभ्रमणे लिङ्गं वास्तीति भावः। ननु तारादेः देशान्तरस्थतया दर्शनं न तल्लिङ्गं भवितुमर्हति; भूभ्रमणेन द्रष्टुः विप्रकर्षमात्रादपि तत्प्रतीतेरिति चेन्न; तारादेर्देशान्तरस्थताज्ञानं तत्रैव गतिमनुमापयति। परामर्शस्य स्वविषय-समानाधिकरणस्यै(णतयै)वानुमापकत्वात्। स्थिरस्य पर्वतादेर्निकट-दृष्टस्य दूरे दृष्टिस्तु न पर्वतस्य गतिमनुमापयति; तत्र द्रष्टुर्गतिमत्त्वस्य प्रत्यक्षदृष्टत्वेन अन्यथासिद्धत्वात् न च तारादेरनेकस्य भ्रमणकल्पना-गौरवम्; चक्रस्यैकस्यैव भ्रमणकल्पनादिति भावः। तद्भ्रान्ताविति

## भावप्रकाशः

इति। तत्रैव जम्बूद्वीपादिकमुक्तम्—

> भूमेरर्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्याः।
>
> अर्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः॥

इति। एवं वर्षादिविभागोऽपि भुवर्लोक एवोपपादितः। प्लक्षादिद्वीप-विभागोऽपि उपपादितः। अयमेवार्थः दैवज्ञविलासे विस्तरेणोक्तः। पौराणिकी प्रक्रिया तु श्रीविष्णुपुराणादौ द्रष्टव्या।

## तत्वमुक्ताकलापः

**रतम्यम् । पाते गुर्व्यास्तु तस्याः प्रलघु दिवि समुत्क्षिप्तमेनां न यायात् ॥ ६३ ॥**

## सर्वार्थसिद्धिः

[1]*भूपतने दोषमाह—पाते इति । अयं भावः—पातो हि भुवः न तावदुपलम्भागमाभ्यम्! तयोरिह तद्विपरीतत्वात् । नाप्यनुमानतः गुरुत्वात्पतनस्य प्रतिबन्धके निरोधोपपत्तेः ।

## आनन्ददायिनी

मूलस्य प्राक्प्रतीचोः पत्रिणोः पतने तारतम्यं—व्यत्यासः प्रसजति—प्राक्पततः पश्चिमत्वं प्रत्यक्पततः प्राक्त्वं प्रसजतीत्यर्थः । ननु पतनस्य प्रामाणिकत्वे दोषः कथञ्चित्परिहर्तव्य इत्यत्राह—अयं भाव इति । पतने प्रमाणाभावादिति भावः । नन्वनुमानमेव प्रमाणमित्याह—गुरुत्वात्पतनस्येति । गुरुत्वेऽपि दृढतरबद्धस्य पतनाभावाद्व्यभिचार इति भावः । प्रतिबन्धकाभावविशेषितं गुरुत्वं पतन-

## भावप्रकाशः

[1]*भूपतने इति—यद्यपि लल्लाचार्येण जैनसंमतपतनपक्ष इव उत्पतनपक्षेऽपि—

यदि गच्छति भूरधोमुखी गगने क्षिप्तमुपैति नो महीम् ।
यदि वोर्ध्वमुपैति सा तदा निकटः किं न भवेद्ध्रुपञ्जरः ॥

(शीष्यधी. तं. मिथ्या ३८)

इत्यनेन दोषं उक्तः; तत्र उत्पतनवादी को वा दार्शनिक इति न ज्ञायते;

## सर्वार्थसिद्धिः

**निरालम्बे निरवधौ नभसि नित्यं निपतन्तीमलब्धप्रतिष्ठां भुवं कः प्रतिरुन्ध्यादिति चेन्न; 'वासुदेवस्य वीर्येण विधृतानि' इत्यादिना तत्सिद्धेः। भूपतने चोत्क्षिप्ताश्शिलादयो न कदाचिद्भुवं प्राप्नुयुः। गौरवप्रकर्षकाष्ठाभूताद्भूमण्डलादतिलघीयसां रजःप्रभृ-**

## आनन्ददायिनी

लिङ्गमिति चोदयति—निरालम्बे इति। निरवधित्वं—सन्ततपतनहेतुः। तथा च सर्वदा निरालम्बत्वे सति गुरुत्वात् सन्ततपतनमनुमीयत इत्यर्थः। हेत्वसिद्धिमाह —वासुदेवस्येति—

वासुदेवस्य वीर्येण विधृतानि महात्मनः।

इति विष्णुपुराणादौ भूम्यादेर्विधृतत्वप्रतीतेरित्यर्थः। प्रमाणाभावमुक्त्वा बाधकतर्कमप्याह— भूपतने चेति। उत्क्षिप्तशिलादेः पतनेन भूप्रदेशप्राप्तिसमयेऽन्धकूपादौ प्रथमपतितशिला(तल)वत् भुवोऽतिवेगेनाधःपातात् पश्चात्पतच्छिलायाः प्राक्पतच्छिलाप्राप्त्यभाववत् भूप्राप्तिरेव कदाऽपि न स्यादिति भावः। ननु प्रथमं पतत्तृणादितः पश्चात्क्षिप्तपाषाणादिकं पतनकाल एव वेगातिशयात्प्राप्तभुवद्दृष्टमित्यत्राह—गौरवप्रकर्षेति। नन्वत्यन्तगुरुभूतस्यापि पोतस्य जलधेः पतनं मन्दं दृश्यते; वालुकायास्तु लघीयस्याः शीघ्रं दृश्यत इति कथमपहास्यता? इत्यत्राह—

## भावप्रकाशः

अतस्सपक्षो बुद्ध्या परिकल्पितस्स्यात्। तत्र पतनपक्षोक्तदूषणैरेव उत्पतनपक्षेऽपि दोषस्सूह इति तात्पर्येण भास्करादिभिरुत्पतनपक्षे दोषो नोक्त इति भावेनाचार्यैरपि स पक्षो नोपन्यस्तः॥

## सर्वार्थसिद्धिः

तीनामधिकपतनकल्पनं चापहास्यम्। पोतवालुकादिन्यायस्त्विह दुर्वचः उपष्टम्भकादिविशेषस्यानभ्युपगमात् । तत्कल्पने च तस्याप्यन्यत्कल्प्यं इत्यनवस्थानात् । वायुविशेषस्योपष्टम्भकत्वकल्पने तेनैव नित्यमपतनामिति किं न रोचते ? तदिह युक्तिमात्रशरणानां निराधारापि [1]*स्वभावादेव तिष्ठति भूमिः ।

## आनन्ददायिनी

पोतवालुकेति । तत्र युक्तं गुरुतरस्यापि पोतस्य पृथुतया जलेन प्रतिबन्धात् पतने वेगाभावः; न चात्र तथा प्रतिबन्ध इति भावः । नन्वत्राप्युपष्टम्भकमस्त्वित्यत्राह—तत्कल्पने चेति । तथाच गौरवमिति भावः । ननु वायुविशेष उपष्टम्भकनिरपेक्ष उपष्टम्भको भवत्वित्यत्राह—वायुविशेषस्येति । वायुविशेषस्योपष्टम्भकस्य कल्पनापेक्षया स्वभावादवस्थानं कल्प्यताम्! लाघवात् इत्याह—तदिहेति । भवद्भिः किमिति

## भावप्रकाशः

[1]* स्वभावादेवेति—यथाऽऽह लघ्वार्यभटः — (महासिद्धान्त १६-४)—

अनिलाधाराः केचित् केचिल्लोका वसुन्धराधाराः ।
वसुधा नान्याधारा तिष्ठति गगने स्वशक्त्यैव ॥.

इति । भास्कराचार्यैरपि—(शिरोमणि. गोला. भुवनको २)

भूमेः पिण्डश्शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्ष्या-
वृत्तैर्वृत्तो वृतस्सन् मृदनिलसलिलव्योमतेजो मयोऽयम् ।
नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे
निष्ठं विश्वं च शश्वत्सदनुजमनुजादित्यदैत्यं समन्तात् ॥

## सर्वार्थसिद्धिः

**आगमानुविधायिनां तु सर्वाधारेण ब्रह्मणा [1]*सोपधानं [2]*निरुपधानं च विधृतेति। अत एव पृथिव्याधारास्थिरतरकर्परक्लृप्तिः [3]*नि-**

## आनन्ददायिनी

नाभ्युपगम्यते? इत्यत्राह--आगमानुविधायिनामिति । सोपधानं--कूर्मदिग्गजनागराजादिशरीरद्वारकम्; सङ्कल्पमात्रेण च धृतिरित्यर्थः । ये तु शैवाः—

सामुद्राम्भसि विन्यस्तकर्परस्था तु मेदिनी ।
संक्षोभं सा तु नायाति तरङ्गावर्तसंकुला ॥

इत्याहुः; तन्मतमनुवदति--अत एवेत्यादिना ।

## भावप्रकाशः

इति । [1]*सोपधानमिति—आदिशेषकमठादितात्पर्येण कटाहबहिरावरणतात्पर्येण च । [2]*निरुपधानमिति । 'वासुदेवः परं ब्रह्म' इत्यारभ्य संकर्षणानिरुद्धादिसृष्टिमभिधाय—

बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ।
मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति ॥

इति सूर्यसिद्धान्ते उपसंहृतम् ।

[3]* निरस्तेति—अयं पक्षो भास्करेणापि निरस्तः—

मूर्तो धर्ता चेद्धरित्र्यास्ततोन्यः तस्याप्यन्योऽस्यैवमत्रानवस्था ।
अन्त्ये कल्प्या चेत् किमाद्ये स्वशक्तिः किं नो भूमेः साष्टमूर्तेश्च मूर्तिः? ॥

## सर्वार्थसिद्धिः

रस्ता। कर्परस्यापि निराधारस्य स्थित्यनुपपत्तेः। चतुरुदधिसंक्षोभसहत्वस्य पृथिव्यामेव कल्पयितव्यत्वात्। [1]*येच पतनोत्पतनस्वभावभूतचतुष्टयमयत्वान्न पतति नोत्पतति च भूपिण्ड इत्याहुः; तेषामन्यूनानतिरिक्ततादृशावस्थानोचितपरिमाणैर्भूतैरारब्धः परिदृश्यमानमृच्छिलादिविलक्षणश्चागत्याऽन्य एव भूपिण्ड इत्यादिकल्पना केवलमूहमात्रसिद्धा। [2]*अन्ये दक्षिणोत्तरध्रुव-

## आनन्ददायिनी

दूषणमाह— कर्परस्यापीति। बाधकं परिहरति—चतुरुदधीति। ये चेति—वायुतेजसोरुत्पतनस्वभावत्वात् भूजलयोः पतनस्वभावत्वात् परस्परकार्यप्रतिबन्धेनावस्थानमित्यर्थः। तेषामिति—दृश्यमानस्य भूपिण्डस्य पृथिवीभूयस्त्वेन भूतान्तरावयवसमत्वादिति भावः।

'उभयोर्भूम्ना ध्रुवयोः विधृतेयमयस्कान्तनित्या भूः।

इति ज्योतिर्मतमनूद्य दूषयति—अन्ये इत्यादिना। मरीचिसिद्धान्तं

## भावप्रकाशः

[1]*ये चेति—अयं पक्षः उदाहृतज्यौतिषिकग्रन्थेषु नोपलभ्यते।
[2]*अन्ये इति—लल्लवराहमिहिरादयः; यथा—

मध्येऽयस्कान्तानां यथास्थितोऽयोगुडः खमध्यस्थः।
तद्वदनाधारोऽपि हि सर्वाधारो महीगोळः॥

(धीवृद्धिदतन्त्रं भूगोला. २)

इति।

यद्वत्कदम्बपुष्पग्रन्थिः प्रचितः समन्ततः कुसुमैः।
तद्वाद्धि सर्वसत्वैः जलजैः स्थलजैश्च भूगोळः॥

(आर्यभ. गो. ७)

## सर्वार्थसिद्धिः

योरयस्कान्तसमाधिं भूगोळे चायस्समाधिमारोपयन्ति; तेऽपि कल्पनागौरवोपहताः। भूगोळस्यैव हि तादृशशक्तिकल्पनं युक्तम्! न तु दवीयसोरात्मस्थितिनिर्वाहसापेक्षयोर्ध्रुवयोः। [1]*केचिद्भूगोळघनमध्यदेश एव सर्वेषामधोऽधोदेशः। तदभिमुखदत्तचरण एव [illegible]रस्सर्वो जन्तुवर्गः। भूमिस्तु तदाश्रिता नानाकेसर-

## आनन्ददायिनी

दूषयति—केचिदित्यादिना। भूगोळस्य पिण्डस्य मध्यदेशः कठिनीभूतपिण्डाकारेण परितश्च घनीभूतो भूगोळो मध्यस्थसौरमण्डलकसौरप्रभान्यायेन वर्तते। तन्मध्यस्थकठिनप्रदेशन्यस्तचरणास्तदभिमुखाश्च सर्वे जन्तवो वर्तन्ते। अत एव सर्वेषामुपर्यधोभावबुद्धिः नरामराणां भवति। भूलोकादयश्च तदाश्रिताः। तथाच कदम्बग्रन्थिः केसरपरिवृत इव कठिनीभूतभूगोळमध्यदेशो जन्तुवर्ग (लोक) परिवृतो भवति। जन्तूनामपि पततां पतनमपि भूगोळमध्यभूतकठिनप्रदेशाभिमुखमेव। तेषां च भूम्यंशभूतानां न तत्र भूमध्यभागे प्रवेशः। काठिन्येन निबिड-

## भावप्रकाशः

स्वर्मेरुः स्थलमध्ये नरको बडबानलश्च जलमध्ये।
अमरमरा मन्यन्ते परस्परमधास्स्थितान् नियतम्॥
(आर्यभ. गो. १२)

तरुनगनगरनरासुरसुरैरयं केसरैरिव समन्तात्।
भूगोलः कादम्बो मधुकरीभिरिव सर्वतः प्रथितः॥
(धीवृद्धिदतन्त्रं—भूगोला. ६)

इति आर्यभटलल्लाद्युक्तिमभिप्रेत्याह—[1]*केचिदित्यादि।

## सर्वार्थसिद्धिः

परिवृतकदम्बकुसुमग्रन्थिवत् मक्षिकावृतमधुगोळवच्च तिष्ठति । अमरा नरा(मरा)श्च परस्परमधस्स्थितान् मन्यन्ते । पतनं च सर्वेषां भूगोळमध्यदेशाभिमुखमेव । पृथिव्यंशास्तु अवकाशालाभान्न तत्र प्रविशन्ति । अतो महापृथिव्या न कदाचित्पतनम् ; तामपेक्ष्य कस्यचिदधोदेशस्याभावादिति । [1]*तदेतत् भुवोऽधस्तादुपरि च लोकानुपदिशद्भिश्शास्त्रैरुपरुध्येत । यत्तु—

पातालदेशाः क्षितिगोळमध्ये सप्तोपदिष्टास्तलपूर्वकास्ते ।

इति ; यदपि—

मेरुर्योजनमात्रः प्रभाकरो हिमवता परिक्षिप्तः ।
नन्दनवनस्य मध्ये रत्नमयस्सर्वतो वृत्तः ॥

## आनन्ददायिनी

तया परिसरप्रदेश इवावकाशाभावादित्यर्थः । अत इति—यतोऽवकाशे नास्ति महापृथिव्याः ततो न पतनमित्यर्थः । अवकाशाभावे हेतुः— तामपेक्ष्येति । यथा भवतां प्रकृतिरध उपरि (तः) च व्यापिनी ततोऽतिरिक्तप्रदेशो न ; तथा भुवः सर्वत इत्यर्थः । भूगोळमध्य एव ज्योतिश्शास्त्रे पातालादय उपदिष्टा इति पक्षान्तरेऽपि शास्त्रविरोधस्समान इत्याह—यत्त्विति ।

## भावप्रकाशः

स्वर्मेरुःस्थलमध्ये इत्यादौ महरादिलोकानामनुक्तेः अधस्तनपातालानामनुक्तेश्च नेदं युक्तमित्यभिप्रत्याह—

[1]*तदेतदित्यादि ।

## सर्वार्थसिद्धिः

**इत्यादिः ; [1]*तदिदं गणितविसंवादाभावेऽपि [2]*शास्त्रान्तरविरुद्धं न कल्प्यं नचोपदिष्टमिति श्रद्धातव्यम् ॥ ६३ ॥**

**भूभ्रमणादिवादभङ्गः.**

## आनन्ददायिनी

तदिदमिति—तस्यान्यपरत्वेन [3]*लोकोपदेशपरत्वाभावादित्यर्थः ॥ ६३ ॥

भूभ्रमणादिवादभङ्गः.

## भावप्रकाशः

[1]*तदिदमित्यादि—गोलमध्ये पातालादिलोकानां स्थितिकथन-मात्रेण भुवोऽधस्तात् पातालादिलोकानां स्थितिः विष्णुपुराणाद्युक्ता नैवोपपादिता । अधस्तात् स्थित्यनुपपादनेऽपि गोलमध्ये पातालादिलो-कानां स्थित्यङ्गीकारे को विरोध इति चेत्; तत्र प्रत्यक्षाभावेन शब्द-प्रमाणानुरोधेन तत्कल्पने स्वेच्छया कल्पनानवकाशात् पातालदेशा इत्यादिरयुक्तेति । एवं मेरुर्योजनमात्र इत्युक्तिरप्ययुक्तैव ; तत्र विष्णु-पुराणाद्युक्तिविरोधात् ज्यौतिषकप्रक्रियामनुसृत्य वासिष्ठसूर्यसिद्धान्ता-द्युक्तरीत्यैव वक्तव्यतया प्रकृते दक्षिणमेरोरकथनेन तत्कथनेऽप्यानुकूल्य-विरहात् । दक्षिणमेरुश्चैतदसंमत इति परमेश्वरवाक्यादवगम्यते । यथाऽऽह गोलदीपिकायाम्—

केचिद्वदन्ति भूमेरूर्ध्वं चाधः प्रविष्ट इति मेरुः ।
आर्यभटेनात्रोक्तं भूगोलात्तस्य मानमूर्ध्वगतम् ॥

इति विष्णुचित्ताचार्यैश्च ‘ तदन्तरपुटास्सप्त ’ इत्यादिपुराणवचनोदाहरणेन सूर्यसिद्धान्ताद्युक्ता प्रक्रियाऽनुसृता भवति ; ‘ पुराणकारस्य हि वैराग्योत्पा-दने भगवन्माहात्म्यज्ञापने च तात्पर्यात् न लोकसंख्यागणिते त्वत्यादरः ’ इति च तैरुक्तम् । [2]*शास्त्रान्तराविरुद्धामिति—तदविरुद्धा तु प्रक्रिया

## भावप्रकाशः

यथा पातालविषये—

तदन्तरपुटास्सप्त नागासुरसमाश्रयाः ।
दिव्यौषधिरसोपेताः रम्याः पातालभूमयः ॥
(सूर्यसि. भूगोला. ३३)

इति ।

भूगोलान्तः पुटे सप्त रम्याः पातालभूमयः ।
तत्र नागासुरास्सिद्धाः निवसन्ति द्विजोत्तम ॥
(वासिष्ठासि. ११. ९२)

इति च । अत्र श्रीविष्णुपुराणादौ पातालादौ सूर्यप्रभा वर्तते आतपस्तु नास्तीत्युक्तम् । पातालदेशानां भूविवररूपतया तदुपपद्यते । न भानुकरसंचारः' इत्यादिवासिष्ठसिद्धान्तोक्तिरपि सूर्यस्याधिकप्रकाशाभावाभिप्राया । नागमण्यादिभिः प्रकाशोक्तिरपि सूर्यप्रकाशादप्यधिकप्रकाशसद्भावाभिप्राया । मेरुविषये तु दैवज्ञविलासे लक्ष्मणयज्वना—

तदिलावृतस्य मध्ये मेरुनगो वेद (८४) योजनोत्सेधः ।

इत्यादिना विष्णुपुराणोक्तचतुरशीतियोजनप्रमाणमनुसृत्य तत्र सहस्रांशानादरेण योजनपरिमाणमुक्तम् [3]* लोकानुपादिशद्भिरिति—महरादिलोकाः ज्यौतिषिकैरप्युक्ताः; यथा लघुवासिष्ठे—

स्वर्लोको मेरुरेव स्यात् खे महश्च ततो जनः ।
ततस्तपः ततस्सत्य उक्ता लोकाश्चतुर्दश ॥

इति । अयमेवार्थः महासिद्धान्तसिद्धान्तशिरोमणिदैवज्ञविलासादिषूपपादितः । शास्त्रान्तरविरुद्धकल्पना न युक्तेत्युक्तं ब्रह्मगुप्तेनापि । यथा कृतादियुगचरणमानसाम्यविषये—

युगपादान्यार्यभटश्चत्वारि समानि कृतयुगादीनि ।
यदभिहितवान् न तेषां स्मृत्युक्तसमानमेकमपि ॥
(ब्रां. सि. मध्यमां)

## भावप्रकाशः

इति । यथा वा युगलक्षणविषये तत्रैव—

यद्युगवधिर्महायुगमुक्तं श्रीषेणविष्णुचन्द्राद्यैः ।
तत् स्थूलं दृग्लिप्ताः महायुगादौ ग्रहेषु यतः ॥
कुदिनादौ स्मृतिषूक्तं ग्रहभोत्पत्तिः दिनक्षये प्रलयः ।
तान्यतिबहूनि यस्मान्महायुगेऽतोऽप्रसिद्धमिदम् ॥

(ब्रां. सि. मध्यमां ५६)

इति । यथा वा उपरागविषये तेनैव—

यदि राहुः प्राग्भागादिन्दुं छादयति किं तथा नार्कम्? ।
स्थित्यर्धं महदिन्दोः यथा तथा किं न सूर्यस्य? ॥
किं प्रतिविषयं सूर्यो राहुश्चान्यो यतो रविग्रहणे ।
ग्रासान्यत्वं न ततो राहुकृतं ग्रहणमर्केन्द्वोः ॥
एवं वराहमिहिरश्रीषेणार्यभटविष्णुचन्द्राद्यैः ।
लोकविरुद्धमभिहितं वेदस्मृतिसंहिताबाह्यम् ॥
यद्येवं ग्रहणफलं गर्गाद्यैस्संहितासु यदभिहितम् ।
तदभावे होमजपस्नानादीनां फलाभावः ॥
राहुकृतं ग्रहणद्वयमागोपालाङ्गनादिसिद्धमिदम् ।
बहुफलमिदमपि सिद्धं जपहोमस्नानफलमत्र ॥
स्मृतिषूक्तं न स्नानं राहोरन्यत्र दर्शनाद्रात्रौ ।
राहुग्रस्ते सूर्ये सर्वं गङ्गासमं तोयम् ॥
स्वर्भानुरासुरिरिनं तमसा विव्याध वेदवाक्यमिदम् ।
श्रुतिसंहितास्मृतीनां भवति यथैक्यं तदुक्तिरतः ॥

इति । वराहमिहिराचार्यैरपि ग्रहणविषये (बृहत्सं. राहुचार. १४–१५)

'यदि मूर्तो भविचारी' इत्यादिना 'राहुरकारणम्' इत्यन्तेन

## सर्वार्थसिद्धिः

*[1] भूपरिधिकल्पनादिषु वैदिकशास्त्रद्वयविरोधं परिहर्तु-

## आनन्ददायिनी

प्रसङ्गस्सङ्गतिरित्याह—भूपरिधीति । भूपरिधिः—भूगोळमि-

## भावप्रकाशः

पूर्वपक्षयित्वा—

स्वयं समागत्य महासुरोयम् स्वयम्भुवस्तत्र वरप्रदानात् ।

उपैति तोषं जपहोमदानस्नानादि गृह्णन् हि विधुन्तुदाख्यः ॥

इति वृद्धवसिष्ठसिद्धान्तमूलकम्—

योऽसावसुरो राहुस्तस्य वरो ब्रह्मणा दत्तः ।

आप्यायनमुपरागे दत्तहुतांशेन ते भविता ॥

तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः ।

याम्योत्तरा शशिगतिःगणितेऽप्युपचर्यते तेन ॥

इति वेदस्मृतिसंहितानुगुण्येनैव समाहितम् । एवं लल्लाचार्येणापि—

(धीवृ. मिथ्या २७)

ग्रहणे कमलासनानुभावात् हुतदत्तांशभुजोऽस्य सन्निधानम् ।

यदतः स्मृतिवेदसंहितासु ग्रहणं राहुकृतं गतं प्रसिद्धम् ॥

इति । एवं भास्कराचार्येणापि—

राहुः कुभामण्डलगश्शशाङ्कं शशाङ्कगश्छादयतीनबिम्बम् ।

तमोमयश्शम्भुवरप्रदानात् सर्वागमानामविरुद्धमेतत् ॥

अत्र शम्भुः ब्रह्मेति स्वेनैव व्याख्यातमपि ।

[1]* भूपरिधीति—भूपरिधिर्द्विविधः मध्यमः (निरक्षदेशीयः) स्फुट(स्वस्वदेशीय)श्चेति। तत्र स्वदेशीयश्च प्रतिदेशमक्षांशभेदेन भिद्यते।

## तत्वमुक्ताकलापः

ज्योतिश्शास्त्रं पुराणाद्यपि न हि निगमग्राह्य-

## सर्वार्थसिद्धिः

माह—ज्योतिरिति। निगमग्राह्यमिति हेतुगर्भम्। यद्युभयबाधोऽन्यतरबाधो वा; न तत्र बाधितस्य वेदोपकारकत्वं स्यादिति भावः। कथं वा विरुद्धयोस्साकल्येन प्रामाण्यम्? इत्यत्राह—

## आनन्ददायिनी

त्यन्ये। भुवो मर्यादेत्यपरे। पूर्वोक्तन्यायेन ज्योतिश्शास्त्रपुराणयोर्विरोधादिति भावः। ननु तत्र कस्यचिद्बाधोऽस्त्वित्यत्राह—अन्यतरबाध इति। न तत्रेति—तथाच विद्यास्थानेषु परिगणनविरोध इति भावः।

## भावप्रकाशः

अक्षश्च ध्रुवोन्नतिः। मध्यमभूपरिधिस्तु एकरूप एव वाच्यः। अन्यथा शृङ्गोन्नत्यादेर्व्यत्यासस्स्यात्। तदुक्तं भास्कराचार्यैः (शिरो. गोला भुवनकोश १६)—

शृङ्गोन्नतिग्रहयुतिग्रहणोदयास्त-
च्छायादिकं परिधिना घटतेऽमुना हि!।

इति। अत्र यद्यपि—सूर्यसिद्धान्तरीत्या भूपरिधिमानं ५०५९ योजनानि; आर्यभटरीत्या ४७१२; लल्लाचार्यरीत्या ३३००; बराहमिहिररीत्या ३२००; ब्रह्मगुप्तरीत्या ४९६७ (सूक्ष्मम्); भास्कररीत्या ४९६७; परमेश्वररीत्या ३२९९ इति तत्तन्मतभेदेन मानवैषम्यं ज्ञायते; तथाऽपि अङ्गुलमानभेदेन सर्वमुपपद्यत इति विभावनीयम्।

## तत्वमुक्ताकलापः

**मन्योन्यबाध्यम् विद्यास्थानं तु सर्वं प्रतिनियत-निजोपक्रियांशे**

## सर्वार्थसिद्धिः

विद्यास्थानमिति । *[2] येनयेनोपकारेण दश विद्यास्थानानि वेदै-रुपजीव्यन्ते तत्रांशे विरोधाभावात् प्रामाण्यं प्रतिष्ठितमित्यर्थः ।

## आनन्ददायिनी

येनयेनेति—ज्योतिश्शास्त्रं कालनिर्णायकत्वेनोपकरोतीति तत्र कृत्स्नं प्रमाणम्; पुराणादीनि तत्वांशादिनिर्णायकत्वेनेति तत्र प्रमाणम्; विरोधाभावादिति भावः । ननु विरोधस्थले कथं निर्वाहः? इत्य-

## भावप्रकाशः

[2]* येन येनेति—ज्यौतिषस्य वेदोक्तकर्मानुष्ठानोपयुक्तकाल-निर्णायकत्वेनोपकारकत्वम्; यथोक्तं लगधेन—

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः ।
यस्मादतः कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान् ॥

इति । पुराणस्य तु—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

(महा. आदि. १ अ)

इत्युक्तदिशा वेदोपबृंहणेनोपकारकत्वम् । यद्यपि नारदीयसंहितायाम्—

ब्रह्माचार्यो वसिष्ठोऽत्रिः मनुः पौलस्त्यलोमशौ ।
मरीचिरङ्गिरा व्यासो नारदश्शौनको भृगुः ॥
च्यवनो यवनो गर्गः कश्यपश्च पराशरः ।
अष्टादशैते गम्भीराः ज्योतिश्शास्त्रप्रवर्तकाः ॥

## तत्वमुक्ताकलापः

**प्रमाणम् । तात्पर्यं तर्कणीयं तदिह बहुविदा**

## सर्वार्थसिद्धिः

**अंशान्तरे कथमित्यत्राह—तात्पर्यमिति। न ह्यन्यपरवाक्यैरापात-प्रतीतार्थस्थापनम्! यत्र च तात्पर्यं तत्र च न विरोध इति**

## आनन्ददायिनी

त्राह—न ह्यन्यपरेति। तत्रान्यपरवाक्यानुसारेण नयनमित्यर्थः; तथा च सर्वमपि स्वतात्पर्यांशे बाधाभावात् प्रमाणमिति भावः। पुराणेष्वेवा-न्योऽन्यं यदि विरोधः तथा ज्योतिश्शास्त्रेषु च यदि विरोधः तदा कथम्? इत्याशङ्क्य तत्तन्निर्णायक ऋषिवचनानुसारेण निर्णयः

## भावप्रकाशः

इत्यष्टादश सिद्धान्ता अभिहिताः; तथाऽपि कश्यपसंहितायां सूर्यारुण-संवादे—

> पैतामहं च सौरं च वासिष्ठं पौलिशं तथा ।
> रोमकं चेति गणितं पञ्चकं परमाद्भुतम् ॥

इत्युपक्रम्य—

> रोमकं रोमकायोक्तं मया यवनजातिषु ।
> जातेन ब्रह्मणश्शापात् तथा दुर्यवनस्य च ॥

इत्यन्तग्रन्थसंदर्भेण पञ्चानां सिद्धान्तानां उत्कर्षबोधनाभिप्राये-णाह—

## सर्वार्थसिद्धिः

भावः । ननु ज्योतिरागमे *[3] पञ्च सिद्धान्ताः प्रवृत्ताः । पुराणे-

## आनन्ददायिनी

कार्योऽन्यथा विकल्प इत्यभिप्रायेणाह—नन्वित्यादिना । यदि तत्वां-

## भावप्रकाशः

[1]* पञ्च सिद्धान्ता इति । अत एव वराहमिहिरेणापि पञ्चसिद्धा न्तारम्भे—

पौलिशरोमकवासिष्ठसौरपैतामहास्तु सिद्धान्ताः ।
पञ्चभ्यो द्वावाद्यौ व्याख्यातौ लाटदेवेन ॥
पौलिशकृतः स्फुटोऽसौ तस्यासन्नस्तु रोमकः प्रोक्तः ।
स्पष्टतरस्सावित्रः परिशेषौ दूरविभ्रष्टौ ॥

इत्युक्तम् । अत्र परिशेषयोः दूरविभ्रंशोक्तिः बीजसंस्काराकरणतात्पर्येण-यथोक्तम्—ब्रह्मगुप्तेन—(ब्राह्म. सि. मध्यमा २)

ब्रह्मोक्तं ग्रहगणितं महता कालेन यत् खीलीभूतम् ।
अभिधीयते स्फुटं तत् विष्णुसुतब्रह्मगुप्तेन ॥
तद्भ्रंशे प्रतिदिनमेवं विज्ञाय धीमता यत्नः ।
कार्यस्तस्मिन् यस्मिन् दृग्गणितैक्यं सदा भवति ॥

(तन्त्रपरीक्षा. ६०)

इति । एवं भास्कराचार्यैरपि; (शिरो. गोला. गोलबं १७ श्लोक-वासनायाम्)

'यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामति-मन्तो ब्रह्मगुप्तादीनां समानधर्माण एवोत्पद्यन्ते; ते च तदुपलब्ध्यनु-सारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति । अत एवायं गणितस्कन्धो

## तत्वमुक्ताकलापः

**भूपरिध्यादिभेदैः दुर्ज्ञानं सर्वथा यन्मुनिभिरपि परैस्तत्र तूदासितव्यम् ॥ ६४ ॥**

## सर्वार्थसिद्धिः

ष्वप्येवं मतभेदा दृढाः । तत्रान्यतमप्रतिक्षेपे मुनयोऽपि यदि मुह्यन्ति किं कर्तव्यमित्यत्राह—दुर्ज्ञानमिति । परैः—ऋषिव्यतिरिक्तैरस्मदादिभिरित्यर्थः ॥ ६४ ॥

भूपरिध्यादिविषयप्रमाणेषु परस्परविरोधपरिहारः.

---

## आनन्ददायिनी

शविरोधो दुष्परिहरः तदा कल्पभेदेन विकल्पः । यदि कालांशे विरोधः तदा देशभेदेनेति भावः ॥ ६४ ॥

भूपरिध्यादिविषयप्रमाणेषु परस्परविरोधपरिहारः.

---

## भावप्रकाशः

महामतिभिः धृतस्सन् अनाद्यन्तेऽपि काले खिलत्वं न याति ' इति । एतेन दृग्गणितैक्यसंपादकसंस्कारं कर्तुमक्षमाणामाधुनिकानां सिद्धाप्तेष्वविश्वासकथनमनुचितमिति बोधितम् । अत एव सिद्धान्तभेदेऽपि अयननिवृत्तौ प्रत्यक्षं सममण्डललेखासंप्रयोगाभ्युदितांशकानां छायाजलयन्त्रदृग्गणितसाम्येन प्रतिपादनकुशलो दैवज्ञ इत्युक्तं वराहमिहिराचार्यैः ॥ ६४ ॥

## तत्वमुक्ताकलापः

सूर्यावृत्त्याद्युपाधिव्यतिकरवशतः

## सर्वार्थसिद्धिः

उद्दिष्टलक्षितेषु त्रिगुणानन्तरं कालः परीक्ष्यते। तत्र 'अपरस्मिन् परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि' इति परोक्तेरानुमानिकः काल इति मन्वानः सांख्यसौगतचार्वाकवाश्रितः कश्चित् कालं निह्नुते—सूर्येति। आदिशब्देन विभुद्रव्यान्तरं उपाधिबुद्धिविशेषाश्च संगृह्यन्ते। स्थविरयुवादिषु परत्वापरत्वनिर्वाहाय तत्कारणभूतबुद्धिविशेषविषयसूर्यपरिस्पन्दप्रकर्षनिकर्षादिघटकतया कालः कल्प्यते; तत्र संप्रतिपन्नैराकाशादिभिरेव तत्तदुपाधिव्यतिकरितैः उपादिभिरेव वा बुद्धिसन्निकर्षघटितैः तादृशोपाधिबुद्धिभिरेव वाऽपेक्षितसिद्धौ किमिह तद्-

## आनन्ददायिनी

अवसरसंगतिमाह—उद्दिष्टेति। प्राच्यमव्यक्तकालावित्यत्रेत्यर्थः। उद्दिष्टलक्षितेति स्नातानुलिप्तवत् पूर्वकालेति समासः। परत्वापरत्वादिलिङ्गैः कालस्यानुमेयत्वं नैयायिकैरुक्तं दूषयितुमनुभाषते—तत्रापरस्मिन्निति। सांख्यादीनां कालतत्वं न वस्त्वन्तरम्; किं तु क्लृप्तैरेवोपाधिभिस्तद्व्यवहार इति मतम्; तदाह—सांख्येति। विभुद्रव्यान्तरमाकाशादि। उपाधिबुद्धिविशेषः—सूर्यावर्तादिगोचरबुद्धिविशेषः। क्लृप्तैरन्यथासिद्ध्या न कालोऽतिरिक्तः कल्प्य इत्यत्राह—स्थविरयुवादिष्विति। उपाधिभिरेवेति— बुद्धिसन्निकर्षघटितैः बुद्धिविषयतया सन्निकृष्टैरुपाधिभिर्वा। उपाधिबुद्धिभिर्वेति—विशेषणविशेष्यभाव-

## तत्वमुक्ताकलापः

**कालतास्त्वम्बरादेः अन्यस्मिन्नन्यधर्मोपनयननि-**

## सर्वार्थसिद्धिः

**तिरिक्तकल्पनया ? यद्यतिप्रसङ्गभयात् बुद्धिविशेषसंबन्धानादरेण कालोऽन्यः कल्प्यते तथाऽप्यतिप्रसङ्गस्तदवस्थः। यथादर्शनं व्यवस्था च समानेति भावः। कालता - परत्वादिनिर्वाहकते-त्यर्थः। अत्र दिङ्निरूपणे दर्शितमतिप्रसङ्गं तद्वदेव परिहरति— अन्यस्मिन्निति। शास्त्रोक्तं न लाघवतर्कबाध्यमित्यभिप्रायेणाह—**

## आनन्ददायिनी

भेदाभ्यां भेदः। पूर्वत्र तपनावृत्तेरतीतत्वाद्बुद्धिविषयतयेदानीन्तन-परत्वादिजनकत्वं वाच्यम्। उत्तरत्र बुद्धेस्साक्षादेव सन्निधिरिति ध्येयम्। ननु बुद्ध्यादीनामनेकेषां परत्वादिप्रयोजकत्वे गौरवम्; यून्यपि बुद्धि-विशेषसंघटितोपाध्यादिभिः परत्वादेर्जननापत्त्या अतिप्रसङ्गश्चेत्याशङ्क्य अतिरिक्तकालकल्पनेऽपि प्रसङ्गस्समानः; यूनि(कालेन)सूर्यावर्तबाहुल्यो-(ल्यस्यो) पनयसंभवात्। यदि दर्शनादिना कथञ्चित्परिहारः सोप्युपाधिपक्षे समान इत्याह—यद्यतिप्रसङ्गेति। कालस्य पूर्वपक्षिणाभ्युपगमे कथं कालताभ्युपगम इत्यत्राह—कालतेति। आदिशब्देन क्षणलवादिव्यव-हारनिर्वाहकत्वम्। नन्वाकाशादिविभुद्रव्यस्य स्थविरादौ सूर्यगत्युपनाय-यत्वे अन्यधर्मोपनायकत्वाविशेषात् काशीस्थेन जपाया रक्तिम्ना सेतुस्थ-(सेतुगत)स्फटिकोपरागप्रसङ्ग इत्यत्राह—अत्र दिङ्निरूपणे इति। दर्श-नानुरोधेन व्यवस्थेति तत्रोक्तमनुसन्धेयम्। शास्त्रोक्तमिति—कल्प्यत्व एव लाघवतर्कावतार इति भावः। ननु कालस्वरूपस्य शास्त्रोक्तिमात्रादति-

## तत्वमुक्ताकलापः

**यमः प्राग्वदत्रेति चेन्न। कल्पान्तेऽप्येककालः प्रकृतिपुरुषयोर्ब्रह्मणो रूपमन्यत् निर्दिष्टोऽनाद्यनन्तो मुनिभिरिति ततः कार्यता चास्य भग्ना ॥६५॥**

## सर्वार्थसिद्धिः

नेति। कथं शास्त्रे तदुक्तिरित्यत्राह—कल्पान्तेऽपीति। उक्तं हि वैष्णवे पुराणे 'विष्णोः स्वरूपात्परतोदिते द्वे' इत्यारभ्य 'रूपान्तरं तद्द्विज कालसंज्ञम्' इति। कार्यभूताकाशाद्यन्तर्भावश्चानेन भग्न इत्यनेन व्यनक्ति—तत इति। एतेन 'त्रिविधा प्रकृतिः कालः परमाकाशोऽव्यक्तमिति' केषांचित् कल्पनाऽपि निरस्ता। ननु जैननिराकरणे कालस्य त्वित्यादिना भाष्येण कालो निराकृत इव भाति! मैवम्; सर्वप्रतिपत्तिषु तत्तत्पदार्थविशेषणतया सर्वलोकानुभूतस्य न बौद्धादिभिर्नास्तित्वं वक्तुं शक्यम्; न त्वया पृथक्तदस्तित्वं साध्यम्; कालोऽस्तीत्यादिपृथग्व्यवहारस्तु पृथक्सिद्धविशेषणानां निष्कृष्टव्यवहारवदिति तन्निर्धारणे तात्पर्यात्।

## आनन्ददायिनी

रिक्तत्वे दिशोऽपि तथात्वापत्तिरित्याशङ्कते—कथमिति। कार्यवर्गाभावकाले इति प्रलये उक्तत्वान्न कालस्य दिक्समतेति भावः। एतेनेति—परमात्मनः प्रकृतिजीवौ रूपद्वयं(परमात्मनः)स्वरूपाद्विलक्षणमुक्त्वा ततोऽपि विलक्षणं रूपान्तरं तद्द्विज कालसंज्ञमित्युक्तत्वादित्यर्थः। नन्विति—'नैकस्मिन्नसंभवात्' इत्यधिकरणे कालस्य विशेषणतयैव प्रतीतेः तस्य

## तत्वमुक्ताकलापः

### कालोऽस्मीति स्वगीता कथयति भगवान् काल

## सर्वार्थसिद्धिः

**अन्यथा शास्त्रैः स्वग्रन्थान्तरैः संप्रदायैश्च विरोधस्स्यादिति ॥६५**

आकाशाद्यतिरिक्तकालसिद्धिः

---

एवमपि कालस्य परमात्मव्यतिरिक्तत्वं न सिध्यति; रूपान्तरमिति स्वरूपविवक्षोपपत्तेः तत्स्वरूपैक्ये प्रमाणसद्भावाच्च इत्यभिप्रायेणाह—काल इति। स्वशब्दोऽत्र परमात्मविषयः। गीयते हि 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' इत्यादि! तद्वत् 'अनादिर्भगवान् कालः' इति पराशरेणोक्तमपि ख्यापयति— कथयतीति। आप्तवर्यत्वमस्य 'देवतापारमार्थ्यं च' इत्यादिभिस्सिद्धम्। नित्यविभुना परमात्मनैव त्रैकालिकसार्वत्रिक-

## आनन्ददायिनी

पृथगस्तित्वनास्तित्वादयो न वक्तव्या इति भाष्येण कालासत्त्वप्रतीतेरिति भावः। भाष्यस्य तात्पर्यवर्णनहेतुमाह—अन्यथेति ॥ ६५ ॥

आकाशाद्यतिरिक्तकालसिद्धिः

---

आक्षेपसंगतिमाह—एवमपीति। रूपान्तरमिति यद्यप्यन्तरशब्दो भेदकोऽस्ति; विष्णो रूपमित्यादिषष्ठीवन्नेतुं शक्यमिति भावः। एवं नयने हेतुमाह—तत्स्वरूपैक्ये इति। कालोऽस्मीत्यादिप्रमाणसद्भावादिति भावः। 'अनादिर्भगवान्' इत्यत्र भगवान्—परं ब्रह्म। सिद्धमिति—विष्णुपुराण एवेत्यर्थः। ननु परमात्मव्यतिरिक्तकालाभावे क्षणलवपरत्वादिव्यवहारः कथम्? इत्यत्राह—नित्यविभुनेति।

## तत्वमुक्ताकलापः

**इत्याप्तवर्यो हेतुस्सर्वस्य नित्यो विभुरपि च परः किं परेणेति चेन्न। कालान्तर्यामितादेस्स खलु**

## सर्वार्थसिद्धिः

सर्वव्यवहारसिद्धिमभिप्रेत्याह—हेतुरिति । तदतिरिक्तकाल-कल्पनस्य निरर्थकत्वमाह—किं परेणेति । रूपान्तरमित्यत्र क्लिष्टगतिरयुक्तेत्यभिप्रायेण प्रतिवक्ति—नेति । कालेऽपि सामानाधिकरण्यं तत्तत्पदार्थान्तरेष्विव निर्वहतीत्याह—कालान्तर्यामितादेरिति । आदिशब्देन कालाभिमानिरूपसंग्रहः । सन्ति हि जीवमनोऽहङ्काराभिमाननियतानुबन्धानि संकर्षणादि-रूपाणि! तद्वदिहापि स्यात् । 'को भवानुग्ररूपः' इति

## आनन्ददायिनी

किं परेणेति—परमात्मनः परेणातिरिक्तेन कालेनेत्यर्थः। क्लिष्टगतिरिति—रूपान्तरमिति भेदकशब्दस्य कथञ्चिन्नयनमित्यर्थः । इदमुपलक्षणं अन्तरशब्दवैयर्थ्यं च । नन्वभेदसाधकप्रमाणसत्त्वे क्लिष्टगतिरपि युक्ते-त्यत्राह—कालेऽपीति । तत्राश्वत्थाद्यचेतनसामानाधिकरण्यस्यापि प्रति-पादनेन प्रकरणस्य विभूतिप्रतिपादनपरत्वेनाभेदप्रतिपादनपरत्वाभावा-दित्यर्थः । काले कालशरीरकत्वेन सामानाधिकरण्यमुक्त्वा कालाभिमानि-देवतात्वेनापि सामानाधिकरण्यमाह—आदिशब्देनेति । जीवादीनां संकर्षणप्रद्युम्नानिरुद्धादिरूपमभिमानि तद्वत्कालाभिमानि रूपान्तरमपि संभवतीत्यर्थः । वस्तुतः(केचित्तु)संकर्षणस्यैव कालाभिमानित्वमिति (वदन्ति)भावः। संकर्षणस्यैव कालाभिमानित्वे हेतुमाह—को भवानिति। उग्ररूपः—तीक्ष्णरूप इत्यन्ये । केचित्तु उग्ररूपः—क्रुद्धरूप इत्यर्थ

## तत्वमुक्ताकलापः

**समुदितः संप्रतीते तु भेदे साधर्म्यं नैक्यहेतुः स हि तदितरवद्घोषितस्तद्विभूतिः ॥ ६६ ॥**

## सर्वार्थसिद्धिः

प्रश्नसंघटनाच्च । सर्वकार्यहेतुत्वनित्यत्वविभुत्वैः तदैक्यसाधनं निरस्यति—संप्रतीते त्विति । वस्त्वन्तर इव भेदकण्ठोक्तिं व्यनक्ति—स हीति । 'ब्रह्मा दक्षादयः कालः' इत्यादिभिरिति शेषः । विष्णुमन्वादयः कालः इत्यत्र विष्णुशब्दोऽवतारपरः । तस्य तद्विभूतित्वं च तादृशरूपेण ॥ ६६ ॥

कालस्येश्वरैक्यशङ्कापरिहारः.

---

## आनन्ददायिनी

माहुः । संकर्षणस्यैव रुद्राभिमानित्वाच्च । अभिमानिद्वारा सामानाधिकरण्ये प्रश्नोपपत्तिः । कालः परमात्माभिन्नः सर्वकार्यहेतुत्वात् परमात्मवत् व्यतिरेकेण घटवच्च । नित्यत्वाद्विभुत्वाद्वेत्यादि परमात्माभेदसाधकान्यागमबाधितानीत्याह—सर्वकार्येति । नित्यत्वं विभुत्वं च जीवादौ व्यभिचारीति ध्येयम् । ब्रह्मादक्षादय इति—यद्यपि चेतनदेवताभिस्सह पाठत् कालो यमोऽत्रेति वक्तुं शक्यम्; तथाऽपि कालशब्दाभिधेयस्य ततो भिन्नत्वं सिद्धम् । यमादीनां कालशब्दवाच्यत्वं च तदभिमानितया । तथा च तस्य भेदे तदभिमा(न्यस्य)नस्य सुतरां भेदस्सिध्यतीति भावः । नन्वत्रापि कालशब्दः परब्रह्मपर एवास्तु न च विभुत्वानुपपत्तिः; विष्णुर्मन्वादय इत्यत्र विष्णुवदुपपत्तेरित्यत्राह—विष्णुर्मन्वादय इति । तादृशरूपेणेति—उपेन्द्राभिधानतादृशविग्रहरूपेणेत्यर्थः ॥ ६६ ॥

कालस्येश्वरैक्यशङ्कानिरासः

---

## तत्वमुक्ताकलापः

**कालस्योत्पत्तितः प्राक् परमपि च लयात्**
**कालनास्तित्ववादी स्वोक्तिव्याघातभग्नो न वदति**

## सर्वार्थसिद्धिः

ये तु महदादिवत् कालतत्वमुत्पत्तिनाशवदिति तन्त्रानुसारिणो वदन्ति; तान् प्रतिक्षिपति—कालस्येति। उत्पत्तेः पूर्वं नाशतः पश्चाच्च कालो नास्तीति वदन् किं तत्र पूर्वशब्दस्य पश्चाच्छब्दस्य च निरर्थकत्वं मन्यते सार्थकत्वं वा? पूर्वत्र निरर्थकनिग्रहस्थानापत्तिः। उत्तरत्र कालस्यैव तदर्थत्वात् तत्र कालनिषेधे स्ववचनविरोधः। अथ काले कालो नास्तीत्यविरोधं मन्येत तर्हि सृष्टिप्रलयमध्यकालेऽपि कालाभावात् तत्रापि कालनास्तितां ब्रूयादिति कथं कालसिद्धिः? गत्यभावान्मौनमाश्रित्य यः पूर्वं पश्चाच्च नास्तीति न ब्रूयात्; तदाऽस्मन्मतं न निषेध-

## आनन्ददायिनी

प्रसङ्गसंगतिमाह—ये तु महदादिवदिति। तन्त्रान्तरानुसारिणः—योगमतानुसारिणः। कालस्यैव तदर्थत्वादिति—पूर्वपश्चाच्छब्दार्थतया काल(र्थत्वातदर्थ)मभ्युपगम्य तत्र तन्निषे(धे)धव्याघात इति भावः। अथेति—अभेदे आधाराधेयभावाभावात् काले स्वस्य वृत्त्यभावात् घटे घटनिषेधवदविरोध इति भावः। सृष्टिप्रलयमध्ये इति—तथाच कालतत्वमेव न स्यात् सर्वदा तस्यासत्त्वादित्यर्थः। गत्यभावादिति—व्याघातस्य परिहाराभावादित्यर्थः। तदेति—कालस्य निषेधासम्भवान्नासौ बाध इति भावः। को वदेदित्यस्य प्रकृतवादिपरत्वे निर्धारणार्थकिंशब्दानुपपत्तिं

## तत्वमुक्ताकलापः

**यदि तत्को वदेत्कालसृष्टिम्?। आप्तस्तत्सृष्टिवाद-स्तदुपधिपरिणत्यादिभिस्सार्थकस्स्यात् नो चेत् तत्रापि पूर्वापरवचनहतिर्दुर्निवारप्रसङ्गा ॥ ६७ ॥**

## सर्वार्थसिद्धिः

तीति नास्माभिरुत्तरं देयम्। अथ पार्श्वस्थो यदि कश्चिद्ब्रवीति; तस्याप्युक्तदोषस्सम इत्यभिप्रायेणाह—तत्को वदेदिति। 'सदेव सोम्येदमग्र आसीत्, 'नासदासीन्नो सदासीत्तदानीम्' इत्यादि-श्रुतिविरोधश्चात्राभिप्रेतः। 'विद्याकालौ भवत्कृतौ' इत्यादिषु कालोत्पत्तिवचनं कथमित्यत्राह—आप्त इति। आप्तवाक्यस्थ इत्यर्थः। यथा निमेषादिसंवत्सरान्तजनिश्रुतिः पक्षमासादिव्याग्मापायिताप्रत्याख्यातिश्च उपाधीनां तत्संयोगादिपरिणतीनां तदभिमानिदेवतानां वा सृष्ट्या अर्थवती तथाऽसावित्यर्थः। अन्यथा तत्रापि विरोधमाह—नो चेदिति। पूर्वापरवचनहतिः—

## आनन्ददायिनी

मत्वाऽऽह—अथ पार्श्वस्थ इति। श्रुतिविरोधश्चेति—सदेव सौम्य' इत्यत्र 'तम आसीत्' इत्यादौ च अग्रशब्दस्य सृष्टिप्राक्कालवाचित्वेन तेन विरोधः। नासदासीदित्यादौ तदानीमित्यनेन विरोध इत्यर्थः। यथेति— 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः। अहोरात्रे मासाश्च संवत्सरा अजायन्त' इत्यादिश्रुतयः। पक्षो गतः मासो गतः आगतश्चेत्यादिलौकिकव्यवहाराश्च। कालोत्पत्तिवादि-नाऽपि सृष्टिप्रलयमध्ये कालस्यैकत्वेऽपि तदुपाध्यादिकमादाय यथा

## तत्वमुक्ताकलापः

**कालोऽध्यक्षावसेयः**

## सर्वार्थसिद्धिः

पूर्वं परं च कालो नास्तीति वचनस्य बाध इत्यर्थः । अथवा पूर्वापरकालविरोधः । प्रलयादिकालमनूद्य हि प्रकृतिविकारास्सर्वे सृष्टिवाक्येषु प्रतिपाद्यन्ते ॥

कालोपश्लिष्टवेषेण ह्यभूदस्ति भविष्यतीन् ।
प्रयुञ्जतेऽर्थभेदेषु सदा चास्तिमनेहसः ॥ ६७ ॥

कालोत्पत्तिवादनिरासः.

---

नीरूप(द्रव्य)स्यापि प्रत्यक्षत्वसंभवः प्रागेव साधित इति कृत्वा कालप्रत्यक्षत्वं लोकोपलब्ध्या नियमयति—काल इति।

## आनन्ददायिनी

निर्वाहणीयास्तथेत्यर्थः । यद्यप्यत्र स्वारसिकार्थे बाधाभावादभिमानि देवतोपाध्युत्पत्त्या निर्वाहो न शक्य इति न्यायसिद्धाञ्जनविरोध इव; तथाऽपि अत्र मायिवत् स्वरूपेणोत्पत्तिर्निषिध्यते न तु कलामुहूर्तादिरूपेण परिणाम इति न विरोध इति ध्येयम् । पूर्वापरेत्यस्य तद्ग्रन्थपूर्वापरवाक्यपरत्वे स्वारस्यादाह—अथवेति । तथाच यथाश्रुतस्वीकारे विरोध इति भावः । ननु कालस्यानुत्पत्तिविनाशत्वे अभूदस्ति भविष्यतीति काले अतीतत्वादिव्यवहारः कथं स्यादित्यत्राह—कालोपश्लिष्टवेषेणेति । कालोपश्लिष्टवेशेण पदर्थानामेवात्ययादिविषयता न कालस्य; स तु पदार्थात्ययादिष्वपि स(सन्नेव)हैव व्यवह्रियते इत्यर्थः ॥ ६७ ॥

कालोत्पत्तिवादनिरासः

---

कालसद्भावे प्रत्यक्षमपि प्रमाणमित्याह—नीरूपस्येति । यद्यपि

## तत्वमुक्ताकलापः

**क्षणलवदिवसाद्यंशतोऽर्थान् विशिंषन् साक्षाद्धी-**
**स्तत्तदर्थेष्विव भवति हि नः क्वापि कालान्वयेऽपि ।**

## सर्वार्थसिद्धिः

अवसीयमानप्रकारमाह—क्षणेति । क्षणमयं तिष्ठतीत्यादिप्रकारेण तत्तदर्थविशेषणतयाऽवसीयत इति यावत् । अभिज्ञायां क्षणरूपेण प्रत्यभिज्ञायां दिवसादिरूपेण चेति विभागः । अनुमीयमानो विशिंष्यादित्यत्राह—साक्षादिति । प्रत्यक्षप्रतीतौ विशेषणतया दृश्यमानस्य कालस्यानुमेयत्वे तत्तत्पदार्थानामपि सौत्रान्तिको-

## आनन्ददायिनी

क्षणस्य प्रत्यक्षत्वमस्ति अयं घट इति; तथाऽपि दिवसादीनां (दीनामपि) न पदार्थविशेषणतया प्रत्यक्षत्वमित्यत्राह—अभिज्ञायां क्षणरूपेणेति । सोऽयमिति प्रत्यभिज्ञायां पूर्वदिवसेऽनुभूतोऽयमित्यादिना विशेषणत्वादित्यर्थः । प्रत्यक्षप्रतीताविति—ननु दिवसादीनामतीतानां संस्कारसन्निधापितानां प्रत्यक्षत्वं वाच्यम्; न च दिवसादयः प्रागभिज्ञयाऽनुभूताः ! तथात्वेऽभिज्ञायामित्याद्युक्तिविरोधात् । किञ्च दिवसादिकालस्य प्रत्यक्षत्वेऽपि न दिवसाद्युपाधीनां प्रत्यक्षत्वम्; तेषां तपनावृत्त्याद्यात्मनां युगपत्सन्निकर्षाभावेन प्रत्यक्षत्वाभावात् । अतोऽनुमेयस्यैव कालस्य विशेषणत्वमिति चेत्; अत्राहुः—कालस्वरूपं प्रत्यक्षमित्यत्र न विवादः । यथा प्रत्यक्षसामग्री वर्तमानकालं (कालस्वरूपं) गृह्णाति तथा तदुपाधिमपि; अन्यथा कालसम्बन्धमात्रग्रहेऽपि (ग्रह-

## तत्वमुक्ताकलापः

**तत्संयोगाः परत्वादय इति च ततोऽप्येष नैवानुमेयो**

## सर्वार्थसिद्धिः

क्तनयादा॰ मानिकत्वं प्रसज्यत इति भावः। नचासावनुमातुं शक्य इत्याह—तत्संयोगा इति। कालमनभ्युपगच्छतां बुद्धिविशेषसंघटितसूर्यावृत्त्याद्युपाधिभिरेव वैशिष्ट्यं वस्तूनां परत्वादि; अभ्युपगच्छतां तु तत्तदुपहितकालसंयोगाः। न च तदातिरिक्तं दृष्टं कल्प्यं वा! इत्यद्रव्यसरे स्थापयिष्यते। कालस्यानुमेयत्वेऽ-

## आनन्ददायिनी

मात्रेऽपि) काले विशेषरूपोपाध्यग्रहणात् घटादेर्वर्तमानतया सन्देहस्स्यात्। तथा प्रत्यभिज्ञासामग्र्यपि पूर्वसंस्कारसहिता प्रागनुभूतमासादिकालोपाधिरूपतपनपरिस्पन्दादिकमप्यसन्निकृष्टमावेदयति। तस्यास्तथास्वभावात्। न चातिप्रसङ्गः; प्राक्तनानुभवक्षणावधिकस्वक्षणपर्यन्तकालोपाध्युपनायकत्वे तदभावात्। अत एव सन्निकर्षाभावादित्याद्यपास्तम्। न चानुमानात्काल(नात्तादृशकाल)धीः। तस्य प्रत्यक्षागोचरत्वे सामान्यतो विशेषतो वा व्याप्तग्राहकत्वात्। त(अ)थाप्यनुमाने पदार्थमात्र एव तथाऽनुमानसंभवेन सौत्रान्तिकमतावतारप्रसङ्ग इति न तदुपहितकालप्रत्यक्षत्वानुपपत्तिरिति। तत्र हेतुमाह—न चेति। तथाचोपाधिसंयोगाद्यतिरिक्तं तज्जन्यं वा परत्वं न दृष्टं न कल्प्यं च कल्पकाभावात्। तथाच कालानुमानं न संभवतीत्यर्थः। परत्वापरत्वयोरतिरिक्तगुणत्वात् कथं तयोरुपाध्यादियोगमात्रत्वमित्यत्राह—अद्रव्यसरे इति। लोकव्यवहारविषयो न स्यादिति—लिङ्ग-

## तत्वमुक्ताकलापः

**नो चेन्न क्वापि लोकव्यवहृतिविषयोऽव्यक्तवत्स्याद-नेहा ॥ ६८ ॥**

## सर्वार्थसिद्धिः

निष्टं प्रसञ्जयति—नोचेदिति। न हि परत्वापरत्वादिभिः कश्चित् कालोऽस्तीत्यनुमाय तद्विशिष्टतया पदार्थान् व्यवहरन्ति लौकिकाः। अतःकालोऽप्यव्यक्तवत् शास्त्रैकवेद्य इति तद्वदेव लोकव्यवहारविषयो न स्यादित्यर्थः। नन्वस्मदादिप्रत्यक्षमप्रत्यभिज्ञारूपं वर्तमानमात्रविषयमिति सर्वसंमतम्; अतोऽस्य पूर्वापरकालविशिष्टविषयत्वमसंभवि; पूर्वापरव्यतिरिक्तं तु वर्तमानं न पश्यामः। अतः कथं कालप्रत्यक्षत्वम्? इत्थम्; किं भवान् वर्तमानाधियमेव नानुभवति? सतीमपि वा निर्विषयाम्? सविषयामपि वा कल्पितविषयाम्? न प्रथमः; इदं पश्यामीत्यादिव्यवहारोच्छेदप्रसङ्गात्। अत एव न द्वितीयः; अस्वविषयधियां त्वनभ्युपगमाच्च।

## आनन्ददायिनी

प्रतिसन्धानाभावात्तद्व्याप्तिग्रहासंभवादित्यर्थः। बौद्धश्शङ्कते—नन्विति। अतोऽस्येति—पूर्वापरयोस्तदा सत्त्वाभावे सन्निकर्षाभावादिति भावः। नन्वस्तु वर्तमानस्य कालस्य प्रत्यक्षत्वमित्यभिप्रायेणाह—पूर्वापरव्यतिरिक्तं त्विति। ग्रहणक्षणावधिकस्य पूर्वत्वादागामित्वाच्च ततोऽतिरिक्तस्य मध्यवर्तिनः कालस्याभावादित्यर्थः। वर्तमानधियमिति—वर्तमानकालविशिष्टविषयामित्यर्थः। अत एवेति—इदं पश्यामीति कालविशिष्टस्य धीविषयत्वानुभवविरोधादेवेत्यर्थः। दूषणान्तरमाह—अस्व-

## सर्वार्थसिद्धिः

**न तृतीयः; क्वचित्सिद्धस्यैवान्यत्र कल्प्यत्वात्; तथा च तत्सिध्येत्। रूपादिषु दृष्टं वर्तमानत्वं काले कल्प्यतामिति चेन्न; क्षणिकरूपादिसंततावपि पूर्वापरातिरिक्तवर्तमानत्वस्य त्वया दुर्वचत्वात्। अन्यथा कालेऽपि तदुपपत्तेः। कालमनिच्छतश्च ते काले कथं कल्पना? निरधिष्ठानासौ कल्पनेति चेन्न; ईदृशकल्पनाभ्युपगमे मध्यमा(माध्यामिका)गमप्रवेशप्रसङ्गात्। स्थिरवादे तु रूपादिष्विव केनचिद्रूपेण कालेऽपि वर्तमानत्वं सिद्धम्।**

## आनन्ददायिनी

विषयेति। स्वविषयधीरात्मा; आत्मातिरिक्तधीमात्रस्य निर्विषयत्वानभ्युपगमात्; अन्यथा विश्वमात्रस्य निह्नवप्रसङ्गादिति भावः। केचित्तु—सविषयकत्वाद्धियां त्वदनभ्युपगमाच्चेति पाठान्तरम्; तदा सविषयत्वनियमात् त्वन्मतविरोधाच्चेत्यर्थ इत्याहुः। क्वचिदिति—अन्यत्रसिद्धरजतादेश्शुक्तावारोपदर्शनादित्यर्थः। तथाचेति—वर्तमानकालस्सिद्ध्येदित्यर्थः। ननु वर्तमानत्वं न कालस्वरूपं किं तु रूपादिवत् कश्चिद्धर्मः। स काले आरोप्यताम्! तावता न वर्तमानकालसिद्धिरिति शङ्कते—रूपादिष्विति। क्षणिकेति—केषां चित् क्षणानां पूर्वत्वात् केषाञ्चिद्रूपादिक्षणानां परत्वात् न रूपादावपि वर्तमानता संभवतीत्यर्थः। अन्यथेति—रूपादिक्षणा(ण)विशेषादित्यर्थः। कालमनिच्छत इति—रूपादिक्षणातिरेकेण तैः कालक्षणानभ्युपगमादित्यर्थः। मध्यमागमेति—माध्यमिकमतप्रवेशप्रसङ्ग इत्यर्थः। ननु सर्वत्र वर्तमानत्वं मा भून्नाम! तथा कालस्यापि क्षणिकत्वात् पूर्वापरकालव्यतिरिक्तः कालो न स्यादित्यत्राह—स्थिरवादे इति। सर्वस्यापि स्थिरत्वस्य साधितत्वेन

## सर्वार्थसिद्धिः

ननु रूपादीनां वर्तमानकालसंबन्धो वर्तमानत्वम्! नासौ कालस्य स्यात्; मैवम्—त्वयैव कालस्य वर्तमानत्वेन रूपादिवर्तमानत्व-निर्वाहात्।

वर्तमाननिषेधे च भवित्री विश्वनिह्नुतिः।
न ह्यतीतं भविष्यद्वा प्रत्यक्षविषयोऽस्ति नः॥
वर्तमानभ्रमश्चात्र तत एव न सिध्यति।
पौर्वापर्यातिरिक्ता तु दुस्त्यजा वर्तमानता॥

## आनन्ददायिनी

रूपादाविव काले वर्तमानत्वं युक्तमित्यर्थः। नन्वस्तु कालः स्थिरः क्षणिको वा! तावतापि न रूपादिवद्वर्तमानता संभवति वर्तमानत्वं हि वर्तमानकालसंयोगित्वम्। न च वर्तमानकाले वर्तमानकालसंबन्धः! स्वस्य स्वेन योगासंभवात्; नापि कालान्तरेण अनवस्थाप्रसङ्गादिति शङ्कते—नन्विति। मैवमिति—रूपादीनां वर्तमानत्वं न कालसंबन्धमात्रे भाति अतीतादेरपि वर्तमानत्वप्रसङ्गात्। किं तु वर्तमानकालसंबन्धेन; तथाच कालस्य वर्तमानत्वं सिद्धम्। न चानवस्थादिदोषः स्वपरनिर्वाहकत्वादिति भावः। ननु रूपादीनामपि वर्तमानता मा भूत्! का नो हानिः? इत्यत्राह—वर्तमाननिषेधे इति। तत्र हेतुमाह—अतीतमिति। सर्वस्यापि वर्तमानतया प्रत्यक्षप्रतीतेरित्यर्थः। नन्वतीतादिकमेव प्रत्यक्षविषयः। तत्र वर्तमानतया भ्रान्तिरेवेत्यत्राह—वर्तमानभ्रमश्चेति। अप्रसिद्ध-वर्तमानत्वस्याभावादेवेत्यर्थ इत्यन्ये। केचित्तु—अतीतानागतयोरिन्द्रियसन्निकर्षाभावेन अप्रत्यक्षत्वादेव वर्तमानतया भ्रमश्च न संभवतीत्यर्थ इत्याहुः। ननु पौर्वापर्यमेव क्षणानां वर्तमानता; तदुभयसमुदायस्य न समुदायापेक्षयाऽन्यत्वमित्यत्राह—पौर्वापर्येति। अत्र हेतुमाह—

## सर्वार्थसिद्धिः

अतीतागामिधीरेव वर्तमानमतिर्यदि ।
भूतभाविसमस्ताप्तया न शोकादिसमुद्भवः ॥
पूर्वापरत्वसंभेदे वर्तमानमतिर्यदि ।
त्रिकालस्थेऽपि तात्सिद्धेः क्वातीतागामिता भवेत् ॥
प्रारब्धश्चासमाप्तश्च वर्तमानो य उच्यते ।
व्यापारसमुदायोऽसौ विवक्षितफलावधिः ॥

## आनन्ददायिनी

अतीतेति । पौर्वापर्यं नाम अतीतागामित्वमेव । तद्धिय एव वर्तमान-बुद्धित्वे भूतभविष्यत्सर्ववस्तूनामप्यबाधितवर्तमानविषयत्वेन सर्वस्वस्त्री-पुत्रादीनामतीतानामागामिनामपि वर्तमानबुद्ध्या तदत्ययप्राप्तिनिमित्त-कश्शोकः कस्यापि न स्यादित्यर्थः । ननु पूर्वत्वापरत्वयोस्समाहारो वर्तमानत्वं न तु पूर्वत्वपश्चात्त्वमात्रम् । तथा च अतीतस्य केवलं पूर्वत्वादागामिनश्चागामित्वान्न दोष इत्यत्राह—पूर्वापरत्वसंभेदे इति । तथाच सति सर्वस्यापि किञ्चिदपेक्षया पूर्वत्वात्परत्वाच्च तत्संभेदस्य सर्वत्रापि सत्त्वेन अतीतादेरपि वर्तमानत्वप्रसङ्गस्तदवस्थः । ननु पूर्वा-परत्वसभेदो न यत्किंचिदपेक्षया किं तु स्वापेक्षयैव विवक्षितः । स एव वर्तमानता । प्रारब्धापरिसमाप्त इति शाब्दैश्चोक्तः । अतो नातिप्रसङ्ग इत्यत्राह—प्रारब्धश्चेति । तत्र दूषणं वक्तुं शाब्दोक्तं तत्स्वरूपमाह—व्यापारसमुदाय इति । तत्रापि नैकस्य प्रारब्धत्वमसमाप्तत्वं च । अपि त्वेकफलावच्छिन्नस्य कस्यचिद्व्यापारसमुदायस्य । तत्र कस्यचिद्भूतत्वं कस्याचिद्भावित्वमेव । तथाच फलोत्पत्तिपर्यन्तस्य समुदायस्य तदवयव-भूतत्वभावित्वाभ्यामुपचारात्प्रारब्धापरिसमाप्तत्वमुच्यत इति न कुत्रापि

## सर्वार्थसिद्धिः

तत्रापि क्षणभेदेन नष्टत्वादिविकल्पतः ।
वैवक्षिकमिहान्यश्च वर्तमानत्वमक्षतम् ॥

ननु सतो विनाशप्रागभाव एव वर्तमानत्वम्। तद्विशिष्टेषु पदार्थेषु दृश्यमानेषु किं सतो वाऽसतो वाकालस्य दृश्यमानतया? मैवम्; कालासत्त्वपक्षस्य निरस्तत्वात् । तत्सत्त्वे तु तत्साध्यानां पूर्वापरयुगपदादिव्यवहारविशेषाणां तत्प्रतीतिपूर्वकत्वस्य स्वरसप्राप्तत्वात् । किंच अत्र सत इति वर्तमानत्वविवक्षायां किं

## आनन्ददायिनी

त्वदुक्तस्य संभव इति भावः । इदं च शब्दसाधुत्वनिमित्तं वर्तमानत्वं शाब्दैर्विवक्षितमिति न तस्यातीतादिसाधारणस्य प्रत्यक्षविषयतासंभव इत्याह—वैवक्षिकमिति । अन्यथा अतीतागामित्वाविशेषात् भूतभाविसमस्तस्यापि तथा धीप्रसङ्ग इति प्रागुक्तदोषानतिवृत्तिरिति भावः । ननु सतो विनाशप्रागभाववत्ता(वत्तया) वर्तमानता । तद्रूपेणैव प्रत्यक्षविषयत्वात् । तदतिरिक्तस्य (कालस्य) विषयत्वाभावात्त (वात्काल) स्य सत्त्वमस्तु मा वा किं (मावा क्रिया) प्रत्यक्षत्वं साध्यते? इति शङ्कते—नन्विति । मैवमिति—किं कालमात्रस्यापह्नवः? उत वर्तमानकालस्येति विकल्पमभिप्रेत्य आद्य आह—कालासत्त्वपक्षस्येति । कालाभावे भूतादिव्यवहारो न स्यादिति प्रागेव निरस्तत्वादित्यर्थः । तत्सत्त्वे त्विति—तत एव सर्वव्यवहारस्य स्वरसतास्सिद्धत्वेन क्लिष्टकल्पनाया अन्याय्यत्वादिति भावः । द्वितीयं दूषयति—किञ्चेति । तत्र किं सत इति वर्तमानत्वं विवक्षितम्? उत प्रमाणसिद्धपदार्थस्वरूपमात्रत्वम्? आद्ये आह—अत्र सत इति । तथा च विनाशप्रागभावोपश्लेषो व्यर्थः

## सर्वार्थसिद्धिः

विनाशप्रागभावोपश्लेषेण? वर्तमानत्वमेव वर्तमानत्वमित्युक्तं स्यात्। अथ प्रमाणासिद्धत्वादिरूपं सत्त्वं तदाऽपि विनाशस्य प्रागभावः प्रतियोगिस्वरूपमेवेति तेन रूपेण योगिभिर्गृह्यमाणं त्रैकालिकमपि वर्तमानं स्यात्। अतोऽन्यदेव वर्तमानत्वम्। तच्च कालोपश्लेषणैव गृह्यते। वर्तमानकालोपाधिसंबन्ध एव वस्तूनां वर्तमानत्वमित्यपि न वाच्यम् उपाधौ तदभावादवर्तमानत्वप्रसङ्गात्। उपाधिभिरेव सर्वव्यवहारनिर्णये किमप्रत्यक्षकालकल्पनया? ॥६८॥

कालप्रत्यक्षत्वम्.

---

यदि नित्य एकः कालः! तस्य कथं परिच्छिन्नानेकस्व-

## आनन्ददायिनी

आत्माश्रयश्चेति भावः। द्वितीयं दूषयति---अथेति। ननु वर्तमानकालस्योपाधिर्यस्तत्संबन्ध एव वर्तमानताऽस्तु किं कालविशेषकल्पनयेत्यत आह---वर्तमानकाल इति। वर्तमानकालोपाधेः स्वेन संबन्धाभावाद्वर्तमानव्यवहारो न स्यादिति भावः। उपाधिभिरिति---न चेष्टापत्तिः! कालस्यागमिकत्वेन श्रुत्या च पूर्वं साधितत्वादिति भावः ॥६८॥

कालप्रत्यक्षत्वम्.

---

आक्षेपसंगतिमाह---यदीति। परिच्छिन्नेति---क्षणादिरूपेण

## तत्वमुक्ताकलापः

कालस्योपाधिभेदात् कतिचिदभिदधत्यब्दमासादिभेदं तत्तद्रूपेण कालः परिणमत इति प्राहु-

## सर्वार्थसिद्धिः

रूपत्वम्? इत्यत्र प्रसिद्धं पक्षमाह—कालस्येति। आदिशब्देन भूतभविष्यत्त्वादेरपि संग्रहः। नित्यस्यापि कालस्य द्रव्यान्तराणामिवावस्थाभेदैस्सर्वं स्यात्; अवस्थाश्चात्रोपाधिसंबन्धमात्ररूपा इति लघीयान् पक्षः। पक्षान्तरमाह—तत्तद्रूपेणेति। यादवप्रकाशैरभ्युपगतोऽयं पक्षः। 'कालोऽनाद्यनन्तोऽजस्रपरिणामी मुहूर्ताहोरात्रादिविभागयुक् सर्वेषां परिणामस्पन्दहेतुः' इति वचनात्। अयं भावः—क्षणरूप एव कालस्य सर्वदा परि-

## आनन्ददायिनी

परिच्छेदः न तु देशपरिच्छेद इति भावः। प्रसिद्धमिति—उपाधिपरिच्छेदस्य काणादादितन्त्रसिद्धत्वादिति भावः। आदिशब्देन वर्तमानत्वादिसंग्रहः। द्रव्यान्तराणामिवेति। तन्त्वादीनां पटाद्यवस्थाभेदेनेवेत्यर्थः। लघीयान् पक्ष इति—अतिरिक्तपरिणामपक्षेऽप्यावश्यकत्वाल्लघुतरत्वमस्येति भावः। यादवप्रकाशवचनमुदाहरति—कालोऽनाद्यनन्त इतीति केचित्। श्रुतिवाक्यमित्यन्ये। परिणामपक्षे क्षणलवादिव्यापिपरिणामो न स्यात्। युगपत्परिणामद्वयस्य विरुद्धत्वात्। न चेष्टापत्तिः। संवत्सरादिपरिणामकाले क्षणादिपरिणामाभावेन तद्व्यवहाराभावप्रसङ्गादित्यत्राह—अयं भाव इति। क्षणरूप एवेति—तथा च परिणामान्तरस्यानभ्युपगमात् क्षणादिव्यवहारविरोधोऽपि नास्ति मास-

## सर्वार्थसिद्धिः

णामः। तत्संख्याप्रकर्षतारतम्यान्मुहूर्तादिविभागः। अत(तत)एव चाब्दादीनामाद्यन्तमध्यमाद्युत्पत्तिक्षणविकल्पचोद्यं निस्तीर्णम्। प्रतिपुरुषमिष्टक्षणारम्भेणाब्दादिगणनापि युक्तैव। अत्र च स्वतः क्षणादिभेदानभ्युपगमे कथमुपाधिभिरपि भेदस्स्यात्? तेषां

## आनन्ददायिनी

संवत्सरादिव्यवहारश्च तत्तत्संख्याप्रकर्षतारतम्याद्युज्यत इति भावः। एतेन अब्दादिपरिणामो द्वादशमासादिपरिणामव्यापकः किमादिमासप्रथमदिवस उत्पद्यते? उत मध्यमासमध्यदिवसे? यद्वा अन्त्यमासान्त्यदिवसे? नाद्यः; आदावेवोत्पन्नत्वे तस्मिन्नेव दिवसे मासादिषु संवत्सरव्यवहारप्रसङ्गः। किं च क्षणे संवत्सरादिपरिणामो वर्तते न वा? तत्र वृत्तौ क्षण एव संवत्सरस्स्यात्। तत्रावृत्तौ ततोऽतिरिक्तकाले संवत्सरव्यवहारो न स्यात्। न च तदोत्पन्नसंवत्सररूपपरिणामो द्वादशमासपर्यन्तस्थायी(ति)तावता परिसमाप्यत इति नैकदिवसादौ व्यवहारप्रसङ्ग इति वाच्यम्; तथात्वे व्यासज्यवृत्तिता स्यात्। तथाच तावद्दिवसानामभावात् केवलकालमात्रप्रतीतिर्न स्यात्। न च पूर्व(पूर्व)दिवसानुसन्धानपूर्वकान्त्यदिवसप्रतीतिकाले प्रतीयत इति वाच्यम्; तथात्वे तावद्दिवसपरिणामस्यैव संवत्सरत्वोपपत्तौ तदतिरिक्तपरिणामकल्पने प्रमाणाभावात्। अत एव न द्वितीयतृतीयावपीति संवत्सराद्युत्पत्तिरनुपपन्नेति शङ्कापि निरस्तेत्याह—<u>अत एवेति</u>। क्षणसङ्ख्याप्रकर्षविशेषस्यैवाब्दादित्वादित्यर्थः। क्षणपरिणामे सर्वप्रत्ययं प्रमाणयति—<u>प्रतिपुरुषमिति</u>। इष्टः—प्रमाणेनाभ्युपगतः। ननु क्षणादिप्रतीतिरप्युपाधिभिरस्तु किंपरिणामेनेत्यत आह—<u>अत्र चेत्यादि</u>। तदेवोपपादयति—<u>तेषामिति</u>। तथाच कालमात्रस्य क्षणोपाध्यवच्छिन्नत्वात् सङ्ख्यापरि-

## सर्वार्थसिद्धिः

कालमात्रेण संबन्धे तद्विशेषकत्वायोगात् । तदंशेन संबन्धे तु स्वत एव कालांशभेदसिद्धेः । ननु कालविकारेष्वपि कालस्यैकदेश-संबन्धविकल्पदोषस्समानः । विकारान्तरेण भेदेऽनवस्थाप्रसङ्गश्चेति चेन्न ; आश्रयैकदेशवृत्तिगुणादिन्यायेन निर्वाहादिति । अयं परिहार उपाधिसंबन्धमात्रपक्षेऽप्यविशिष्ट इत्यन्ये मन्यन्ते ।

स्पन्दसंततिसिद्ध्यर्थं कालस्याणुत्वकल्पनम् ।
आशावसानतोकानां दुराशामात्रजृम्भितम् ॥

## आनन्ददायिनी

माणाद्यवच्छिन्नघटस्येव भेदो न स्यादित्यर्थः । स्वत एवेति—स्वतोऽशाभावे औपाधिकस्याप्यसम्भवादिति भावः । नन्विति—उपाधिपक्ष एव ज्यायानित्यर्थः । आश्रयैकदेशेति—स्वपरनिर्वाहकतया कालभेदकत्वमिति भावः । ननु परिणामपक्षे क्षणपरिणामस्य क्षणिकत्वावश्यम्भावात् क्षणिकत्वानुमाने(साध्याप्रसिद्ध्या)व्याप्यत्वासिद्ध्युद्भावनं न स्यात् । नचोपाधिपक्षेऽप्ययं दोषः! क्षणोपाधीनां क्षणिकत्वाभावस्योपपादितत्वादित्यस्वरसादुपाधिपक्षमुपक्षिपति—अयं परिहार इति । कालसम्बन्धप्रकर्षः परत्वम् । तन्न्यूनत्वमपरत्वम् । सम्बन्धश्च संयोगः । स च क्रियाधीनः । क्रिया च विभुत्वेऽनुपपन्ना । तथाच न तन्निबन्धनसंयोगादिसम्भवः । न च कालस्य निष्क्रियत्वे(यस्या)प्यन्यस्य परिच्छिन्नत्वात् तत्क्रियातस्संयोग इति वाच्यम्; तथाऽपि प्रथमसंयोगानन्तरं निष्क्रियस्य स्थिरस्य तत्प्रकर्षायोगात् । विभुनश्च द्रव्यस्य संयोगमात्रस्याभावात् । तथाच परत्वादेरसम्भवप्रसङ्गात् । अणुः कालः स्पन्दसंततिसिद्ध्यर्थमङ्गीकरणीय इति जैनपक्षमनुभाषते—स्पन्देति । स्पन्दसंततिः—परत्वापरत्वहेतुक्रियासंततिः । आशावसानाः—दिगम्बराः ।

## तत्वमुक्ताकलापः

रेके तदा तु । ये तत्रोपाधयस्स्युस्त इह परिणतिं

## सर्वार्थसिद्धिः

क्रियासंततिवत्काले परिणामपरम्परा ।
किं न स्यात्स्वप्रकर्षाद्यैः परत्वादिप्रसाधिका ? ॥
एकाश्रयाक्रियासंख्या काल इत्याप्तभाषितम् ।
कालोपाधिविशेषाणां सर्वेषामुपलक्षणम् ॥

अत्र परिणतिपक्षमनूद्य तत्राप्युपाधिव्याप्तिमाह—तदा त्विति

## आनन्ददायिनी

क्रियासंततिवदिति—यथा क्रियाप्रकर्षः कालनिष्ठः परत्वादिहेतुः तथा विभुत्वेऽपि कालस्य तन्निष्ठः परिणामपरम्पराप्रकर्षः परत्वादिहेतुरस्तु ! तथाच परत्वादेरन्यथाऽप्युपपत्तेः न तदर्थमणुत्वं कल्प्यम् । यद्वा कालसम्बन्धप्रकर्षो न परत्वं तन्न्यूनता वा अपरत्वम्; अपि तु परिणामपरम्पराप्रकर्षावच्छिन्नकालयोगः परत्वं तन्न्यूनतावच्छिन्नतद्योऽगोऽपरत्वम् । योगश्च न संयोगः; अपि तु आधराधेयभा(व इति)वादिरूपसम्बन्धविशेष इति न तदर्थं कालस्याणुत्वं कल्प्यमिति भावः । नन्वणुत्वविभुत्वयोरन्यतरनिर्णयः कथम्? इति चेत्; लाघवैनैकत्वनिर्णयेन; अन्यथा समस्तदेशवर्तिनां कालयोगे कल्प्यमाने अनन्तकालकल्पनाप्रसङ्गेन गौरवप्रसङ्गात् । ननु—

एकाश्रयक्रियासङ्ख्या कालस्तस्य तु मानतः ।

इति ज्योतिश्शास्त्रे परिस्पन्दसंततेरेव कालत्वाभिधानात् तद्विरुद्धोक्तिर्विरुद्धेत्यत आह—एकाश्रयेति । एकः तपनादिः । तत्क्रियासङ्ख्या कालोपाधिरित्यर्थः । नन्वेवं परिणामाद्युपाध्यङ्गीकारविरोध इत्यत्राह—सर्वेषामिति । ननु क्रियासंख्यैव कालोऽस्तु किमर्थं तदुपाधित्वमङ्गीकर-

## तत्त्वमुक्ताकलापः

**प्राप्नुयुस्सानुबन्धाः नित्यो व्यापी च तादृक्परिणति-भिरसौ सर्वकार्ये निमित्तम् ॥ ६१ ॥**

## सर्वार्थसिद्धिः

अनुबन्धाः—ऋतुलिङ्गादयः। आनन्तर्यनियमादुत्तरोत्तरकार्याणामुपाधिमूलत्वं च सिद्धम्। ऋतुलिङ्गादीनां तु न कालकार्यहेतुनियमः। ये तु शैवादयः कालमनित्यमव्यापिनं परिमितकार्यहेतुं च प्राहुः; तान् प्रत्याह—नित्य इति। क्षणाद्यंशस्यागन्तुकत्वेऽपि स्वरूपतो नित्यः। नित्यत्वं चात्र प्रध्वंसविरह-

## आनन्ददायिनी

णीयमिति चेत्; मैवम्; क्रियादीनां कालत्वे पौर्वापर्यव्यवस्थाया अभावेन सर्वेषां यौगपद्यप्रसङ्गात्। ननु परिणतिपक्षे उपाध्यभावात् कथं तदात्वित्यादिना उपाधिरुच्यते? इत्यत्राह—परिणतिपक्षमनूद्येति। ननु तत्पक्षस्यानुपाधिपक्षत्वात्कथमुपाधिसम्बन्ध इत्याशङ्क्य परिणामस्यापि कादाचित्कतया सामग्रीसापेक्षतया तासामेवोपाधित्वादित्यत्राह—तत्रापीति। ननु ऋतुलिङ्गादिकमेव कालव्यवहारहेतुरस्त्वि(लोपाधिरस्त्वि)त्यत्राह—ऋतुलिङ्गादीनामिति। व्यभिचारित्वमित्यर्थः। ये तु शैवादय इति—क्षणलवादिभिन्नस्य पूर्वोत्तरकालेष्वभा(कालेऽभा)वादनित्यत्वमव्यापित्वं च। अत एव न सर्वहेतुत्वमिति भावः। क्षणाद्यंशस्येति—क्षणलवादीनामौपाधिकत्वपरिणामाभ्यामुपपन्नत्वादिति भावः। ननु नित्यत्वं हि सर्वकालसम्बन्धः। स च कालस्य कालान्तराभावान्न सम्भवतीत्यत्राह—नित्यत्वं चेति। प्रागभावाप्रतियोगिनः कालस्येत्यर्थः। ननु सर्वस्याप्येक-

## सर्वार्थसिद्धिः

मात्रम् । न तु सर्वदा सत्ता; कालान्तराभावात् । व्यापित्वं तु क्षणतोऽपि स्यात् । सार्वत्रिकाणामपि केषांचिद्यौगपद्यसिद्धेः । नित्यत्वे प्रागेव प्रमाणं दर्शितम् । व्याप्तिश्च—

कालं स पचते तत्र न कालस्तत्र वै प्रभुः ।

इत्यादिभिस्सिद्धा । त्रिगुणविभूतिवत् कालप्रतिनियतविकारास्तत्र न सन्तीत्यर्थः । स्वविकाराणामुपादानतयाऽन्येषां निमित्ततया वाऽस्य सर्वहेतुत्वं 'कालः पचति भूतानि' इत्यादिभिर्गम्यते । तदपि सर्वत्र सन्निहितस्य । ननु 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' 'सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिष्वेकस्य सर्वव्यापकत्वं श्रूयते । अतस्तद्व्याप्यकालस्य कथं विभुत्वम्? इत्थम्—न हि न्यूनदेशवर्तित्वमेव व्याप्यत्वम् । तथा सति समव्याप्तिभङ्गप्रसङ्गात् । तर्हि तद्वदन्योन्यव्याप्यत्वमिह स्यादिति चेत्; किमत्रानिष्टम्? परस्परप्रवेश्यत्वाद्यनभ्युपगमात् । द्वयोरपि सर्वसंयोगित्वे विवादाभावात् । अतो यत्र कालस्तत्र

## आनन्ददायिनी

क्षणसम्बन्धो न सम्भवत्यतीतादेस्संबन्धायोगादित्यत्राह—सार्वत्रिकाणामपीति । तत्काले वर्तमानानामित्यर्थः । ननूक्तेन प्रमाणेन नित्यविभूतौ कालाभाव एव प्रतीयत इत्यत्राह—त्रिगुणविभूतिवदिति । 'कालं स पचते' इत्यंशेन कालसत्त्वप्रतीतेरिति भावः । हेतुत्वबलादपि व्यापित्वं सिद्धमित्याह—तदपि सर्वत्रेति । ननु सन्निधानाभावेऽपि कारणत्वमस्तु को दोषः? इति चेन्न; अतिप्रसङ्गाभावाय कारणसन्निधानस्यापेक्षितत्वात् । विभुत्वे श्रुतिविरोधं शङ्कते—नन्विति । परिहरति—इत्थमिति । द्वयोरपीति—विभुनाऽपि संयोगसम्भवादिति भावः । अत इति—यत्र कालसम्बन्धस्तत्र परमात्मसम्बन्ध इत्यर्थः । अन्यार्थं चेदं

## सर्वार्थसिद्धिः

सर्वत्र परमात्मास्तीति तस्य कालव्यापकत्वम्। इदं च तस्य धर्मभूतज्ञानेऽपि द्रष्टव्यम्। 'परमात्मनः स्वरूपैकदेशे विश्वं व्यवस्थितम्' इत्येतदपि तादृशव्यतिरिक्तविषयम्। अन्यथा तस्य ज्ञानानन्दत्वादेरप्येकदेशित्वप्रसङ्गात्। न चैवं सति सर्वजीवानां व्यापित्वेऽप्यविरोधस्स्यादिति वाच्यम्; अणुत्वश्रुत्या तत्प्रतिषेधादिति। ननु कालतो देशतो व्यतिरेकग्रहणस्याशक्यत्वान्नित्यविभूनां कारणत्वमेव न सिध्यति; कुतस्सर्वकारणत्वम्; इत्यनुयोगश्च धर्मिग्राहकेणैव निरस्तः। अस्ति हि लोकेऽप्युपदेशतोऽपि तत्तद्वस्तुषु कारणत्वग्रहणम्! अथ स्यात्; नियतपूर्वसत्त्वं कारणत्वम्। नियमश्चास्मिन् सत्येवेदं भवतीत्येवं रूपः। तत्रावधारणासिद्धोऽन्यदा नास्तीत्ययमर्थो नित्येषु च विभुष्व-

## आनन्ददायिनी

वक्तव्यमित्याह—इदं चेति। धर्मभूतज्ञानस्य विभुत्वादिति भावः। ननु—

तस्य स्वरूपैकदेशे विश्वमेतद्व्यवस्थितम्।
तस्यायुतायुतांशांशे विश्वशक्तिरवस्थिता॥

इति वचनविरोधस्स्यादित्यत्राह—परमात्मन इति। विश्वशक्तिः—विश्वमित्यर्थः। अन्यथेति। ज्ञानस्य प्रादेशिकत्वे क (किं)चित्प्रदेशे जडत्वप्रसङ्गादिति भावः। ननु व्याप्यत्वान्यथानुपपत्त्या जीवाणु(वान्य)त्वं न स्यादित्यत्राह—न चैवमिति। ग्राहकाभावेन ग्राह्याभावं शङ्कते—नन्विति। असिद्ध्या परिहरति—निरस्त इति। असिद्धिमेवोपपादयति—धर्मिग्रहण इति। ननूपदेशो योग्यताविरहान्न बोधक इति शङ्कते—अथेत्यादिना। ग्राह्यस्य बाधादिति भावः। तर्कस्वरूपमाह—

## तत्वमुक्ताकलापः

वायुर्दोधूयते यद्यदयमुडुगणो बम्भ्रमीति द्रुतं
खे तेजो जाज्वल्यते यद्यदपि जलनिधिर्माधवीं

## सर्वार्थसिद्धिः

ग्रहण इति; मैवम्; प्रसङ्गतोऽपि नियमासिद्धेः। तथा हि—इदं सर्वकारणमिति बोधयतामयमाशयः—यद्येतन्न स्यात् सर्वं नोत्पद्यते; अतस्सर्वोत्पत्तिप्रयोजकमेतदिति। न पुनर्यदा यत्रेदं नास्ति तदा तत्र सर्वं नास्तीति व्याप्तिः। अतस्सुष्ठूक्तं नित्यव्यापिनः कालस्य सर्वकार्यहेतुत्वम् ॥ ६९ ॥

कालस्यावच्छेदप्रकारविभुत्वसर्वहेतुत्वानि.

---

प्रकृतचिन्तावर्गस्य परब्रह्मवैभवव्यञ्जकतया सार्थकत्वं प्रथयति—वायुरिति। माधवीं—पृथिवीम्। 'मेघोदयस्सा-

## आनन्ददायिनी

तथा हीति। आरोपितेनाभावेनापादनसम्भवादिति भावः। न पुनरिति व्याप्तिरिति—तथा व्यतिरेकव्याप्तिसत्त्वं नापेक्षितमिति भावः ॥ ६९ ॥

कालस्यावच्छेदप्रकारविभुत्वसर्वकार्यहेतुत्वानि.

---

उत्तरश्लोकस्य तत्वानिरूपकत्वादसाङ्गत्यमाशङ्क्य संगतिमाह—प्रकृत(ति)चिन्तावर्गस्येति ॥ ७० ॥

## तत्वमुक्ताकलापः

दोधवीति । भूर्यद्वा बोभवीति स्थिरचरधृतये तच्च तादृक्च सर्वं स्वायत्ताशेषसत्तास्थितियतनपरब्रह्म-लीलोर्मिचक्रम् ॥ ७० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
तत्वमुक्ताकलापे जडद्रव्यसरः प्रथमः ॥

---

## सर्वार्थसिद्धिः

गरसान्निवृत्तिः' इत्यादिसूक्तं स्मारयति—तच्च तादृक्चेति—यतनं—व्यापारः । सुग्रहमन्यत् ॥ ७० ॥

सर्वतत्वस्थितिप्रवृत्तीनां ईश्वरेच्छायत्तत्वम्
इति श्री[1]*कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्री-
मद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु सर्वार्थ-
सिद्धौ जडद्रव्यसरः प्रथमः ॥

---

## आनन्ददायिनी

तुरगवदनशक्त्या बृंहिताश्चर्यशक्तिः
कविकथकमृगेन्द्रो वेङ्कटाचार्यवर्यः ।

## भावप्रकाशः

[1]*कवितार्किकसिंहस्येति—खण्डनकारा हि कवितार्किकचक्र-वर्तिनः । आचार्याश्च कवितार्किकसिंहाः । खण्डनकारा हि कविसंमतं

## आनन्ददायिनी

अधिहृदयगुहं मे वासमासाद्य नित्यम्
व्यलिखदखिलमर्थं ह्याद्यमुक्तासरस्य ॥

इति कौ(कु)शिककुलजलनिधिसुधाकरस्य निगमान्त(निगमशिखरपर)-
विद्याकुमुदिनीसंमोद(दिनीनिशा)करस्य वेदान्ताचार्यस्य भागि-
नेयेन वत्सकुलतिलक(वत्सकुलकलशजलधिकौस्तुभ) श्री-
नृसिंहगुरुतनयेन नृसिंहदेवेन विरचितायां सर्वा-
र्थसिद्धिव्याख्यायां आनन्ददायिन्यां जड-
द्रव्यसरः प्रथमः ॥

## भावप्रकाशः

प्राचीनमेव पन्थानमनुरुन्धानाः कविचक्रवर्तिनः काणादाक्षपाददर्शने निरवशेषमेवाकुलीकृत्य जगतोऽनिर्वचनीयत्वं स्थापयामासुः । आचार्याश्च जैमिनिव्यासाशयानुरोधेन तद्दर्शनपरिष्करणेन जगतस्सत्यतां प्रत्यनैषुः । तत्र सर्वार्थसिद्धिः परमतनिरसनप्रधाना । न्यायपरिशुद्धिन्यायसिद्धाञ्जने तु स्वमतस्थापनप्रधाने इति विवेकः ।

स्वतन्त्रस्तन्त्रेषु क्व च निगमचूडागुरुमणिः
क्व नाधीती शास्त्रे क्वचिदपि यथावन्मितमतिः ।
स्वयं पङ्गोर्मूर्ध्नि प्रबलतरगङ्गाझरसमो
दृढाभक्तावस्मिन् गुरुवरकटाक्षः प्रपतति ॥

इति श्री लक्ष्मीहयग्रीव दिव्यपादुकासेवक श्रीमदभिनव रङ्गनाथ
ब्रह्मतन्त्र परकाल यतिकृते लघुनि सर्वार्थसिद्धिटिप्पणे
भावप्रकाशे जडद्रव्यसरः प्रथमः

# आनन्ददायिन्यां पाठभेदाः

| पृ. | पं. | |
|---|---|---|
| 3 | 11 | तस्य अगाधतया दुरधिगमतामा |
| | 12 | प्रचयगमनादिप्रयोजकं |
| | 13 | प्राप्तं इष्टगुरु प्रकाशनरूपं |
| | 14 | शिक्षार्थं पद्येन निवध्नाति |
| 7 | 16 | प्रारिप्सितानुपयुक्तमि |
| | 19 | नाशास्यः |
| 8 | 13 | वदतः |
| 10 | 8 | जनितानुस्मृति |
| 11 | 5 | योगविद्यायाः सर्वविद्यापरत्व |
| 13 | 11 | स च एकशेषप्रसङ्गेन न युक्त इत्य |
| | 14 | तथा च न वीप्साद्वन्द्वौ |
| 14 | 18 | त्वोक्तिरनुपयुक्तेत्य |
| 15 | 17 | भावेनार्थगतत्व |
| 16 | 11 | सौकर्यायोद्देशादात्मानात्मविभागः क्रियत इति भाव |
| | 13 | प्रसिद्धावसाधारण्याभावादित्यत्राह I |
| | | प्रसिद्धावसाधारण्याभावेऽप्यनुगतव्यवहारप्रयोजक-त्वेन लक्षणत्वोक्तिरित्याह II |
| 17 | 10 | भेद एव विषयविषयिभाव इति भाव इत्याहुः |
| 18 | 15-16 | द्रव्यादीनामेव निरूपणीयत्वात् |
| | 17-18 | धर्मवत्त्वमात्रं अभावरूपधर्मवति रूपादावतिव्याप्तं |
| 19 | 9 | धर्मिणा सहैव वर्तते |
| | 10 | तथा शक्तिरपि सहजत्वात् |
| 20 | 8-9 | अन्यतरकर्मजसंयोगोऽस्तीत्याह |
| 22 | 15 | इत्यादिसूत्रभाष्यादिभिरुपासनापरतयौपाधिकत्वमुक्त |

| पृ. | पं. | |
|---|---|---|
| 24 | 5 | चक्षुराद्येकैकेन्द्रियग्राह्यास्त एव पृथिव्यादित्वेन व्यव ह्रियन्ते रूपरसगन्धस्पर्शशब्दाः पञ्चेति वात्सी-पुत्रानुसारिणो वैभाषिका वदन्ति |
| | 11 | ग्राह्यत्वरूपग्राहकभेद |
| | 12 | ग्राह्या इति ग्राह्यभेद इति वाच्यम् ; तथा सति सर्वेषां भेदेन शब्दोऽपि तदन्योऽस्तु ! किंच रूपवत् सर्व-स्याप्यन्यतमत्वोपपत्तौ चतुर्धा कल्पनानुपपत्तेः । नच पञ्चा |
| | 14 | तथापि ग्राहकभेदस्यावश्यकत्वादेक एव धर्मी भवतु न तु ग्राह्यभेद इति वाच्यम्; तथा सति अन्ध-स्यापि रूपग्रहणप्रसङ्गात् । तथा च ग्राह्यैक्येऽपि व्यञ्जकभेदात् मुखे मलिनत्वदीर्घत्वादिव्यवहार-वत् धर्मिण्येव रूपत्वादिव्यवहारोऽस्तु धर्मा न सन्तीत्याहुः |
| | 19 | इत्यवगन्तव्यमित्याहुः |
| 25 | 10 | रूपादय इत्युपक्रमात् |
| | 14 | वात्सी—वैभाषिकमाता |
| 26 | 7 | प्रमाणानन्यथासिद्धिं |
| 27 | 10 | कस्यचिदिन्द्रियस्यो |
| | 11-13 | (पूर्वापरेत्यादि+भावः इत्यन्तस्थाने) पूर्वापरकाला-दिति भावः |
| 28 | 10-11 | इयं शङ्का उभयावस्थधर्म्यङ्गीकारप्रसङ्गेन धर्म्यनङ्गी-कारभ . . . माश्रित्याह—न स्यादिति |
| 29 | 4 | व्याप्तिशैथिल्यापातात् |
| 30 | 13 | संहतस्वरूपं |
| 32 | 13 | इति संघातस्वीकारात् |
| 33 | 12 | रूपस्याङ्गीकारात् |
| | 15 | रग्रहणे नैरन्तर्यस्यापि |
| 34 | 12 | प्रसङ्गात् । प्रत्यभिज्ञा तु तदनुमितविषयत्वेनाभ्युप-गन्तव्या |

| पृ. | पं. | |
|---|---|---|
| 34 | 15 | मात्रत्वेन |
| | 17-18 | (एतेनेत्यादि+आहुरित्यन्तं) पुस्तकान्तरे न दृश्यते |
| | 22 | इति भावत्कं वचनं। तथा च |
| 35 | 10-11 | तस्यापि रूपादिलक्षणत्वेन |
| | 12 | संघातापेक्षायामनवस्थेत्यर्थः |
| | 12-13 | (तथाच+भावः इत्यन्तं) कोशान्तरे न दृश्यते |
| | 14 | रूपरससंघातावच्छेदेन. |
| 37 | 11 | एवं द्वित्रिस्वभावभाग्भिः I |
| | | द्वित्रिचतुस्स्वभावभाग्भिः II |
| | 21 | भेदग्रहेणारोपासंभवा |
| 39 | 12 | नापि पित्तविवर्तत्वं तस्य |
| 40 | 13 | न हि विरोधमात्रेण |
| 42 | 8 | यथा पुटपाकाभ्यासेन |
| | 19 | केचित्तु सर्वार्थसिद्धिमेवं व्याचख्युः— |
| | 23 | तत्र हेतुः तदिहेति |
| | 24 | ङ्गीकारेणायं बाध्यत इति बाध्यबाधकभाव |
| 45 | 16 | तथा दृष्टे नियमाच्चेति |
| 46 | 10 | कात्स्न्येंन तज्ज्ञानादज्ञाताकाराभावान्न भ्रमः |
| | 20 | समये शतदूषण्यां प्रपञ्चयिष्यते तत्रानुसन्धेयम् |
| 47 | 8 | भास्करीयैः कौमारिलैश्च इति केचित् |
| 49 | 13 | अन्वयव्यतिरेकबलात् प्रत्यक्षादिप्रमाणबलाच्च |
| 50 | 21-22 | किंश्चेति अयं भेदः |
| | 22 | ग्राह्यभेदाध्यासहेतुः उत सत्तयेति |
| 52 | 17 | चक्षुरादीनामपि दोषत्वे |
| | 20 | ग्राहकेन्द्रियभेदस्य |
| | 22 | बुद्धिष्वेवेति—योगाचार |
| 53 | 18-19 | गृह्यते ; अल्पावयवप्रवेशकृतमेव |
| | 21 | तृणादिवस्तुन्यनुकूलत्वं कल्प्यत इति |
| 56 | 8 | मिथ्यात्वं साधयितुं शक्यमित्यत्राह |
| | 12 | स्यैकत्वाद्धि तदभिन्न |

| पृ. | पं. | |
|---|---|---|
| 60 | 13 | अत्र पुस्तकान्तरे प्रत्यभिज्ञाश्लोक एव च न प्रमाणोपन्यासः। उक्तरीत्या प्रत्यभिज्ञोपपादनात् ; 'क्षीणानि चक्षुरादीनि+वर्णप्रत्यवभासनात्' इति बौद्धपठितप्रमाणदूषणं निरस्तं द्रष्टव्यम्, इत्यन्तं पाठान्तरं पूर्वश्लोकव्याख्यागततया ज्ञायते ; द्रष्टव्यं इत्यतः ॥ ८ ॥ इतिश्लोकसंख्यादर्शनात्। ततश्च—'ननु धर्मो निर्धर्मकश्चेदित्यादिना धर्मस्य सधर्मकत्वं प्रतिपाद्यत इति प्रतीयते ; तदनुपपन्नं द्रव्यस्यैव साधनीयत्वात् तस्य च पूर्वमेव साधितत्वत्। इत्याशङ्क्य परोक्तदूषणनिरासाभावे साधितमप्यसाधितप्रायमित्याह—एवमिति' इत्युत्तरश्लोकव्याख्याऽवतारिकास्ति |
| 62 | 6 | नन्विति। हेतुधर्मस्य धूमवत्त्वस्य साध्यधर्मस्य अग्निमत्त्वस्य तदाश्रयस्य च पर्वतस्यावश्यम्भावादित्यर्थः |
| | 7 | हेतुबिन्द्वाख्यो बौद्धग्रन्थविशेषः |
| 63 | 5 | साध्यधर्मविशिष्टो धर्मी पक्षः। तद्धर्मो धूमादिः |
| | 8 | व्याप्तः। स त्रिविधः कार्यस्वभावानुपलब्धिभेदेन |
| 64 | 13 | ननु धर्मो निर्धर्मकश्चेदित्यत्र धर्मस्सधर्मको न वेति विकल्पः। तत्र कोटिप्रसिद्ध्यप्रसिद्धिभ्यां व्याघात इत्यत्राह— |
| 66 | 15 | ननु प्रमेयत्ववत् सकलधर्मवर्ति |
| | ,, | धर्मत्वं स्वयमेव |
| | 16 | अन्यथा तस्यैकस्य सकल |
| 67 | 10 | निर्धर्मकत्वस्वीकार इति |
| 69 | 8 | क्वचिदपि धर्मान्तरेण |
| 70 | 8-9 | शब्दे च इदन्त्वेन |
| | 9 | निर्देशात् |
| 72 | 10 | मादाय स्वलक्षणस्यैव निर्धर्मकस्य वाच्यत्वं भवेदिति अवाच्यत्वासिद्धान्तविरोधोऽपीति भावः |

| पृ. | पं. | |
|---|---|---|
| 73 | 7 | दनं निर्धर्मकशब्दवाच्ये तदवाच्यत्वप्रतिपादनात् ज्ञानमात्र |
| 76 | 15 | नन्वेवमपि जातिगुणक्रियादिशब्देषु का गतिः? धर्म्युपस्थापकाभावेन तस्य धर्मी कथं विशेषः?। तत्र चेत् स्वयं विशेषः स एव सर्वत्रास्तु इत्यस्वरसादाह---निष्कर्षप्रयोगेष्विति |
| 77 | 10 | ननु पुनरपि धर्मधर्मिभावानुपपत्तिमाशङ्क्य समाधानमयुक्तं पूर्वमेव समाहितत्वादित्याशङ्क्य. |
| 78 | 8 | पाभावविषयतया |
| | 11 | तया अभावो निश्चीयतां |
| | 13 | रभावमवस्थाप्याभावेन सत्त्वं विरुणद्धीत्यत्राह— |
| 82 | 14 | अन्यतरपरित्यागो वा परिशेषो वा स्यादिति |
| 83 | 12 | स्वविशिष्टवृत्तित्वं तव विरुद्धव्याप्तिकं |
| 84 | 8 | नन्विति प्रश्नोपलक्षणम् |
| 89 | 22 | दूषणस्य स्वव्याघातकत्वमेव दर्शयति |
| 91 | 18 | विप्रतिपत्तिनिरासात्तत्र |
| 92 | 18 | वा बाह्येन्द्रियग्राह्यत्वे तन्त्रम् |
| 93 | 15 | न तत्परिपन्थीति भावः |
| | 17 | प्राबल्योपपादकमविशे |
| 97 | 16 | विषयत्वेन व्यवहारः तद्वदपि |
| 99 | 6 | तस्याध्यवसायादेः शास्त्रेषु तद्धर्मतया व्यपदेशः कथमित्यत्राह |
| | 13 | त्वाद्यैरप्रत्यक्षधर्मैश्शास्त्रवेद्यत्वं सिद्धम् |
| | 17-20 | न्यायादिति भावः। ननु प्रकृत्यादीनामप्रत्यक्षत्वे |
| 100 | 8 | तेषु सर्वतत्वकारणत्वं प्रकृतिलक्षणम् |
| 105 | 12 | प्रतीतेस्तत्तद्गुणै |
| | 15 | इत्यभेदव्यवहार |
| 108 | 24 | साध्यते आहोस्वित् सर्वगुणवृत्तिसर्वजातिमद्गुणत्वं |
| 112 | 4 | तत्रेति अत्र महदादि सकारणकमित्येव साध्यम् |
| 117 | 13 | रन्यथासिद्धकादाचित्क (रन्यथासिद्धार्थकादाचित्क) |

| पृ. | पं. | |
|---|---|---|
| 331 | 12-13 | तर्हि ऐक्यबुद्धिः व्यवहारश्च कथमित्यत्राह—निरन्तरोत्पन्नेति |
| | 14 | ऐक्यरूपसामानाधिकरण्यबोधभेद इत्यर्थः । बाधकाभावे समानाधिकरणव्यवहारहेतोर्बोधस्य समानाधिकरणत्वनियमादित्यर्थः |
| 332 | 12-13 | ननु स्मृतिविषयस्य दृशिकर्मभेदाग्रहादुभयकर्मविशिष्टकर्मत्वव्यवहार इति |
| 335 | 18 | ननु विनिगमकाभावात् संस्कारस्यैव प्राधान्यमस्तु ततश्च तज्जन्यतया केवलं स्मृतित्वमेवास्त्विति शङ्कां परिहरति—अत एवेति |
| 337 | 16 | तद्द्वारा चानुपयुक्तत्वादित्यर्थः |
| 338 | 11-13 | ल्यब्लोपे पञ्चमी । ननु ज्ञानं स्वसमानकालिकत्वेन |
| | 17-18 | यथा प्राभाकरपक्षे भ्रमस्थलीयरजतस्मृतिः |
| 342 | 9-10 | सहशब्दस्य साहित्यार्थकतया तदुपरि भावप्रत्ययासांगत्यमाशङ्क्याह— |
| | 12 | तस्य भावस्साह्यमिति वा स्वार्थिको वेति न दोषः तदेवाह— |
| 348 | 15 | चत्वारः प्रत्यया हेतव इत्यङ्गीकृतमित्यर्थः |
| 361 | 15 | संकोचो युक्त इत्यधिकविषयस्य संकोचरूपबाधो युक्तः प्रत्यक्षे हि रजत भ्रमस्य |
| 369 | 9 | प्रयोगे हेत्वसिद्ध्या ध्वंसो हेतुनिरपेक्षः |
| | 10 | प्रयोगस्य तन्मतानुसारेणोहः कर्तव्यः |
| 372 | 12-13 | मूलस्यायमर्थ इत्यादि क्षणिकमिति इत्यन्तं पङ्क्तिद्वयं पुस्तकान्तरे नास्ति |
| 373 | 14 | जन्यत्वाभावादिति भावः |
| 381 | 15 | ननु क्षणिकवादे पाकविक्षेपादिवासना |
| 398 | 17 | सान्वयविनाशसाधनस्य द्रव्यनित्यताव्यवस्थापनार्थस्य कथमत्र सङ्गतिरित्याशङ्क्य प्रसङ्गसङ्गतिरित्याह—इह चेति |
| | 17-18 | ननु क्षणिकत्वसाधनं बाधितं द्रव्यस्वरूपस्य निर- |

पृ. पं.

न्वयविनाशाभावादित्याशङ्क्य सौगतैर्निरन्वयविनाशस्साधितः तं प्रतिक्षिपतीत्याह—इहेतीति केचिदाहुः

398-18, 399-17 प्रतिसङ्ख्यानिरोधः—प्रत्यक्षतया स्फुटमुपलभ्यमानः पटादेः प्रध्वंसः। अप्रतिसङ्ख्यानिरोधः स्फुटतरप्रकाशरहिताः पूर्वदीपादिनाशादयः अत्र परोक्तं संवादयति–स निरन्वयेति। स्स्यादिति। धर्मो धर्मी वा पूर्वसञ्जातभागो वा यद्भावेन

408 17-20 न स्यात्। द्वितीयेऽनवस्था। सम्बन्धस्यासम्बद्धत्वे तन्मूलक

412 14-16 कार्योत्पादे विलम्बाभावादिति भावः। किं कारणमात्रस्य

415 18 कारणनियमो न सिध्येत् पूर्वत्वाविशेषादित्यर्थः.

416 19-20 तथा सत्यनियतोमृत्पिण्डान्तरजन्यः घटः पटो वा.

422 5 तथाच सत एव कारणत्वं नासत इत्यर्थः। तदुक्तमन्यदपि

424 7 अन्तर्भावितेति खण्डने एवं व्याख्यातम्—अन्तर्भूतं सत्त्वं यदि कारणत्वं तदा स्वविशिष्टे स्ववृत्तिरंशतः स्वाश्रयत्वमापादयति। विशिष्टस्यार्थान्तरत्वेऽपि स्वस्मिन् स्ववृत्तित्वव्यतिरेकवत् स्वविशिष्टे स्ववृत्तित्वव्यतिरेकनियमदर्शनात् न सैव सत्ता तस्मिन्। अन्यस्यास्तस्या विशिष्टवृत्तित्वाभ्युपगमे तामनिवेश्य कारणमभ्युपगन्तुः सर्वथैवासत् कारणं पर्यवस्यति। अपरापरसत्तानि[illegible]सानमेव। न च सत्ताभेदानन्त्यमस्त्येवेत्यपि पादप्रसारिकानिस्ताराय। सत्ताभेद हि सद्बुद्धिव्यवहारानुगमार्थलङ्घिनः प्रथममपि सत्ता न स्यादिति वृद्धिमिष्टवतो मूलमपि ते नष्टमिति हा कष्टतरम्। न च स्वरूपानु(रूपसत्तोप)गमाय स्वस्ति! भिन्नानप्यनुगतबुद्ध्याद्याधा-

पृ. पं.

नपदेऽभिषिञ्चता त्वया हि जातिमात्राय जलाञ्जलिर्विर्तीयेत । माभूदनुगतिः स्वरूपसत्त्वस्येति वदन् तद्धर्मिणीं कारणतां कथमनुगमयितासीति। अयं भावः—स नानात्वायोगादन्तर्भावित . . . . कारणं सत्त्वविशिष्टं कारणं चेत् सत्त्वस्यापि कारणकोटिप्रवेश इति यावत्। तथा सति असतस्सत्त्वे विशिष्टे वा स्वात्मनि स्ववृत्तेर्विरोधेन सत्त्वाभावादसतः कारणत्वमायातमित्यर्थः। नान्तर्भावितेति—सत्त्वाविशिष्टस्य कारणत्वं चेत् ततस्तस्मादसतः कारणत्वं स्पष्टमित्यर्थः

443 17-19 व्यवस्थाप्यमिति भावः। तत्र युक्तिमाह—

444 14 इत्यर्थः। तत्र हेतुमाह—ओषधीर्लोमानीति। न हि लोमान्यौषधानि! न वा तेषां तत्र लयः। अनपियद्भिः—लयमप्राप्नुवाद्भिः ॥ ३५॥

453 18-20 इत्यादि सांख्यसप्तत्या दशानां बाह्यत्वोक्तौ परिशिष्य त्रिविधस्याभ्यन्तरत्वं सिध्यतीति भावः। वाचनिकमपि त्रित्वं सप्तत्युक्तमित्याह—अन्तःकरणमिति

458 9-459-11 ननु यथा इन्द्रियाणि तन्मात्रेष्विति पाठो यथा मनसः पाठः तथा सव? बुद्ध्यादेः पाठः। अहङ्कारस्य महतश्च पाठो महतोऽहङ्कार इति न शक्यं तैर्बुद्ध्यादेरिन्द्रियत्वस्यानभ्युपगमात् वस्तुत इति इन्द्रियाणां सृष्टिप्रतिपादकोपबृंहणेषु इन्द्रियाणि दशैकंच इति परिगणना चक्षुश्श्रोत्रेत्यादि विशेषकीर्तनाच्च महदहङ्कारयोस्तत्वभूतयोः पाठसत्त्वेऽपि तयोस्सद्वारकाद्वारकेन्द्रियोत्पादकयोः करणत्वाभावाच्च न तद्बलादप्यन्तःकरणभेदासिद्धिः इन्द्रियादिष्वनन्तर्गतचित्तस्य नत्वान्तरत्वापाताच्च। नन्वयमेवाहङ्कार

पृ. पं.

इति भाष्ये अहङ्कारस्योत्कृष्टजनावमाननरूपकरणत्वोक्तेः मनोऽतिरिक्तमप्यन्तःकरणमभिमतमित्यत्राह—अयमेव त्विति । अ . . . नार्थमन्तः करणस्य बुद्धिविशेषहेतुत्वं भवतीत्यर्थः । तत्र हेतुः-अन्वारुह्येति

467 9 ननु कारिकायामिन्द्रियमात्रस्य सूक्ष्मत्वसाधनमयुक्तम् सर्वत्र विभुत्वप्रतिपत्त्यभावादित्यत्राह—तदिहेति

467-20, 468-14 तमुत्क्रामन्तमिति—उत्क्रान्तिश्शरीराद्बहिर्निगमनम् । विशेषतो दृश्यत इति—विशेषतोऽणुत्वं श्रुत्या प्रतिपाद्यते इत्यर्थः । दृश्यते त्वित्यादि श्रौतव्यवहारानुरोधेन दृशिप्रयोगः । ननु मध्यमपरिमाणसाधकाभावादणुत्वमित्यत्राह —तथा सतीति

468 22-23 अन्यथा—अत्यन्ताणुत्वाङ्गीकारे । मध्यमपरिमाणे इयमन्यथानुपपत्तिः प्रमाणमिति भावः । मनसस्त्विति

469 12 परोक्तम्—गौतमोक्तं मनसो लिङ्गं अणुत्वेपि लिङ्गमित्यर्थः

17 क्रमिकधीवदिति । यद्वा रूपधीर्न रसधीजन्मसमानकालिकजन्मा रूपगोचरजन्यसाक्षात्कारत्वात् संमतवदिति प्रत्येकं वाऽनुमानमित्यर्थः

470 18 साधीय इति—शरीर एव स्थानान्तरसंचारिणोऽवयवत्वं न संभवति । शरीरावयवस्य यथास्थानत्वात् । तथा च तस्यैव मनस्त्वोपपत्तेस्ततोऽतिरिक्तस्य कल्पनं व्यर्थमित्यर्थः

23 त्पत्तिप्रसङ्ग इत्यर्थः । गौरवं चेति

471 18 रित्यर्थः । यद्वा आप्यायकभूतानां यो विसर्पः स एव तदिन्द्रियस्य वृत्तिरित्यर्थ इत्याह—चारैरिति

पृ. पं.

471-19, 472-12 पपन्नं । नैयायिकरीत्या प्राप्तेर्वक्तुं शक्यत्वे किमर्थश्च वृत्त्यङ्गीकार इत्यत्राह—यद्यपीति । चक्षुराततमिति—इन्द्रियाणामेव विकासश्रवणादिति भावः । परमाणुत्वे तु तत्तदवयवत्वेन विकासो न स्यादिति हृदयम् । ननु आगमिक

472-12, 473-16 बाधाभावादित्यनेकहेतुगत्यङ्गीकारस्सूच्यते ; तथाचापसिद्धान्त इत्यत्राह–नयनरश्मीति । भाष्ये इति—अणवश्चेति सूत्रभाष्ये इत्यर्थः । अत्रेति—उत्क्रमणशब्दस्य क्रियापूर्वकदेशान्तरसंयोगपरस्य देशान्तरसंयोगमात्रे सङ्कोचकाभावादिति भावः । न च विनिगमकाभावः ! अनन्त्यश्रुतेः कालपरिच्छेदाभावस्येन्द्रियोत्पत्तिश्रुतिबाधेन देशपरिच्छेदाभावपरतया सङ्कोचकस्यावश्यकत्वात् । अनन्तशब्दस्य बहुव्रीहिसमासत्वेन लक्षणायामन्यपरत्वस्य स्वतः प्राप्तत्वाच्चोत्क्रान्तिश्रुतितो जघन्यत्वात् । उत्क्रान्तिश्रुतौ तु तदभावान्न सङ्कोच इत्याहुः । मनष्षष्ठानीन्द्रियाणीत्यादिभिः इन्द्रियव्यष्टिसमष्टिगतागतिश्रवणादिन्द्रियत्वं कर्मेन्द्रियाणां नास्ति । तथा च प्रतिशरीरमुत्पत्तिव्यष्टिसमष्टिभावाभावशङ्का । यद्वा—उत्क्रान्तिप्रकरणे मनष्षष्ठानीति ज्ञानेन्द्रियाणामेवोक्ताः । कर्मेन्द्रियेषु प्रतिशरीरमुत्पत्त्यादिशङ्का ; उभयत्र परिहरति–न्यूनसङ्ख्येति ॥३९॥ आक्षेपसंगतिमाह—

477 20-22 मया भिन्नमिति क्रियादिसंयोगान्तयौगपद्याभिमानवद्यौगपद्याभिमानो ज्ञानेष्वित्यर्थः.

478 14-17 ङ्गीकारादित्यर्थः । प्रतिबन्दिं परिहरति—न देहान्तरादाविति

20 त्यर्थः । बुद्धिसन्तानवैषम्यमाह—ननु व्याप्तिरिति ननु बुद्धिसंतानादि

| पृ. | पं. | |
|---|---|---|
| 478 | 21 | चक्षुरादिवृत्तेरपित्व(वृत्तेस्त्व)याऽपिप्रत्यक्षत्वानङ्गीकाराद्याग्निकल्पनस्यानुपलम्भबाधादिति भावः। योग्येति |
| 486 | 13 | निष्क्रमणेति। गौरवमेवोपपादयति—अनिष्क्रान्तमेवेति |
| 489 | 19 | शब्दग्रह इति नियतप्रवेशनियमाभावादित्यर्थः; अन्यथा . . . |
| 490 | 21-22 | बुद्ध्यन्तरमेवोपपादयति—दूरस्थता समानेति - पश्चात्सन्निहितापेक्षया पश्चात् दूरगतस्येत्यर्थः I. बुद्ध्यन्तरमेवोपपादयति—दूरस्थता तादृशेति। पश्चात्ससन्निहितापेक्षया दूरस्थस्य पश्चाद्ग्रह इत्यर्थः II. |
| 491 | 16 | विरोध इति चेत् समुदायरूपधर्म्यतिवर्तित्वस्य विवक्षितत्वादिति भावः |
| | 22 | भिघातरूपसंक्षोभो दृश्यते; स न स्यात्. |
| 496 | 16 | ननु वियति विरला चन्द्रिकेत्यत्र विरलसंस्थानश्चन्द्रिकावयवसंघो वियच्छब्दार्थः। तत्र चन्द्रिकाप्रतीतिर्वने वृक्षप्रतीतिन्यायेन स्यादित्यत्राह—वैरल्यदर्शनमपीति |
| 502 | 16 | त्राह भाष्ये इति। ननु प्रत्ययस्यापरोक्ष्यमसिद्धं; गगनस्येन्द्रियग्राह्यत्वसंदेह तत्प्रत्ययस्यापि प्रत्यक्षत्वसंदेह एवेत्यत्राह—अयं भाव इति |
| 503 | 16 | यद्यात्मनो रूपसंवलितत्वाच्चाक्षुषत्वमापद्यते; तदा- . . . |
| | 17 | परिमाणादेस्त्वया प्रत्यक्षत्वोक्तौ रस . . . |
| | 18 | पादनं समानम्; यदि कथंचित्समाधानं तदप्यत्र समानमित्यर्थः |
| 512 | 14 | वमित्यर्थः। आद्ये विकल्पे तुच्छत्वमेव निस्स्वभावत्वमुतान्यान्निस्स्वभावत्वम्? इति विकल्पं मनसि कृत्वाऽऽद्ये सिद्धसाधनमिति दूषणं मनसि |

पृ. पं.

निधाय द्वितीयेऽपि किं तुच्छत्वमेव निस्स्वभावत्वं उत तदन्यकाले निस्स्वभावत्वमिति विकल्पे द्वितीयस्य सिद्धसाधनग्रासात्प्रथमं दूषयति—न प्रथम इति

536-18, 537-15 तिरिक्ततत्वान्तरत्वं तथा दिगुपाधीनामपि तत्तद्देशरूपक्लृप्ततत्वान्तर्भाव इति भावः। नैताव

538 16 दिङ्निरूपणस्य संगतिर्नास्तीति शङ्कायां परपक्षे आकाशस्य विभुत्वात् तत्प्रतिक्षेपेऽप्यवश्यकर्तव्ये निराससौकर्यार्थं दिङ्निरूपणमिति वदन्ति। स्वरूपे संदेहाभावात् तत्प्रसङ्गेन तत्र विशेषं निरूपयतीत्याह—आकाशे इति

542 16-17 मेक इत्यात्मग्रहणे व्यभिचाराभावात् कथं व्याप्तिभङ्ग इत्यत्राह—आत्मनीति

543 11 प्रसङ्गसङ्गत्याऽऽह–अथेति। राजसमहान् प्राण इति—'राजसमहान् प्राणो देहं धत्ते वाय्वधिष्ठाता' इति सांख्याः . . त्वमुपलक्षणम् एवं वायुमात्र स्यापि प्राणत्वमाकाशादिभूतपञ्चकरजःऽ-प्रकृतिकत्वं चाहुः; तानपि प्रतिवक्तुमित्यर्थः

544 15 भावात् नामानुशासनस्य यौगिकत्वे जगतो जगद्वायुरित्यादेरनन्वयप्रसङ्गेनास्याश्वकर्णादिवत्

547 21 अयं चार्थ इति। . . वायुमात्रं क्रियावचनप्राण इत्ययमर्थ इत्यर्थः। नन्वविशेषः

548 10 मित्यर्थः। सूत्रकार एवामुमर्थं समर्थितवानित्याह—प्राणशब्दश्च साधारण इति। इन्द्रियाणां प्राणस्य च साधारण इत्यर्थः। इन्द्रियत्वमेव

17 ख्यवृत्त्या किमेकशब्दमुख्यप्रयोगविषयत्वं विवक्षितमुतैकशक्त्या प्रयोगविषयत्वमिति विकल्प्य

553 17 प्रभानिरूपणस्य सङ्गतिं दर्शयन् ज्ञानद्रव्ययोरात्मधर्मभूतज्ञानयोर्धर्मधर्मिभावासिद्धये दृष्टान्तार्थं प्रयोजकमाह—अथात्रेति। तेनात्मनो

| पृ. | पं. | |
|---|---|---|
| 555 | 16 | इति शास्त्रम्। आदि शब्देन सौरादिसंग्रहः। नन्विति |
| 557 | 13 | त्यपरे। स्वोक्तस्य भाष्यविरुद्धतां परिहरति—मतान्तरासिद्धामिति। तथैव—प्रतिहत्यैव। प्रतिबिम्बेति—परावृत्त्य ग्रहणार्थमिति भावः। तदे-तदिति |
| | 15 | त्यर्थः। तर्हि प्रभायाः स्वरूपं कीदृशमित्यत्राह—अत इति। विशीर्णावयवं तेज इत्यर्थः |
| | 17 | व्यस्य अवयवविशरणे सर्वत्र |
| | 18 | पलम्भस्तथाऽवयवविशरणाभावेऽपि भविष्यती-त्यर्थः। किरणगतीति |
| 559 | 15 | संभवात् तेजसो दिवस . . . त्यस्य विनाशेऽपि |
| | 17 | धर्मिणः स्थिरत्वस्थले प्रभाया उत्पत्त्यविरोधाच्च पूर्वोक्तपक्ष एवाचार्याणां मत इति ध्येयम् ॥५७॥ |
| 569 | 17 | प्रसङ्गः। न चेष्टापत्तिः अनुन्मत्तस्यानुभवविरो-धात्। न च नील |
| | 21 | छायाया इव द्रव्यत्वे अन्यगत्यनुविधानानुपपत्ति-रित्यत्राह—यथेति |
| 570 | 23 | अञ्जनविशेषसहकृतामिति। अत्रापीति–नीलाद्यध्या-सहेतुत्वेनालोका |
| 571-23, 572-12 | | इत्यर्थः। ननु पूर्वैः कैश्चित् प्रकृतिरेव तम इत्यु-क्तम्! तत्कथं पार्थिवत्वं भवद्भिरुच्यते इत्य-त्राह—अद्रव्यत्वादिपक्षाणामिति |
| 573 | 15 | तमोव्यवहितेति। ननु व्यवहितस्य ग्रहणे कथं नाच्छादकत्वमित्यत्राह—दृग्गतेरविरुद्धस्येति। |

———

# सर्वार्थसिद्ध्याद्युदाहृतप्रमाणवचनसूची

## प्रमाणसूचीशेषः